# काशीविद्यासुधानिधिः



# THE PANDIT.

A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE,

DEVOTED TO

SANSKRIT LITERATURE.



NEW SERIES.



VOL. V.



BENARES:

PRINTED AND PUBLISHED BY THE PROPRIETORS,

E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS.



1883.



# INDEX TO VOLUME V. NEW SERIES.



॥ श्रीः ॥

# कैवल्यरत्नस्य भूमिका

इह खलु निखिलभारतीयास्तिकजनानां मूर्द्धाभिषिक्तं धर्मे स्वतः प्रमाणं श्रुतिः । तन्मूलतयैव स्मृतिपुराणोपपुराणादीनां पठनपाठनादिप्रचाराणोचरतया ऽनुपलभ्यमानश्रुतीः स्वोत्कटतपःप्रभावजन्यातीन्द्रियदर्शनसामर्थ्येन संस्मृत्य तदर्थानुवादरूपेण महर्षिभिर्मनुव्यासवाल्मीक्यादिभिः प्रणीतानां प्रामाण्यं निष्कम्पं स्वीकृत्य चिरमवयवश उपलभ्यमानायामपि श्रुतौ निर्विवादं वर्णाश्रमधर्ममनुतिष्ठन्ति स्म वृद्धाः सुकृतिनः ।

परं तु यदा प्रभृति कलेरुत्तरोत्तरमुपचयवशेन नास्तिकयवनादीनां श्रुतिप्रामाण्यानङ्गीकर्तृपुरुषाणां भारतीभूमावुपचयो ऽभूत्ततः प्रभृति सांप्रतिकास्तिकजनानां दुर्दैववशात् स्मृतिपुराणादीनां पठनपाठनादिप्रचारस्य लुप्ततया दुर्वृत्तैरात्मंभरिभिः पुराणादिपुस्तकानां भ्रंशिततया च पुराणोपपुराणां यथार्थपाठानामुच्छेदप्रवणतया शास्त्रपथानुवर्तिनो विद्वांसो ऽपि व्यामुमुत्तवो[1]ऽभूवन् किंपुनरिन्द्रियतर्पणपरायणा धर्मकत्रुकिनः । एवमादिप्रकारैरास्तिकधर्मलोपप्रवणं विभाव्य तत्र भवान् परमकारुणिकः श्रीमद्वासुदेवब्रह्मानमुनिः श्रुतिस्मृतिपुराणेतिहासादिभ्यः सारमुद्धृत्योपपुराणानां प्रक्षिप्तैर्ग्रन्थांशैरप्रामाण्यशङ्कां केषांचिदंशानां पोषेण न्यूनतां च परिहर्तुं सकलाद्यत्वीयमन्दबुद्धिजनोपकाराय कैवल्यरत्ननामकं ग्रन्थरत्नं रचयामास । अत्र ग्रन्थे तेषां तेषामुपपुराणानां श्रुत्यादिप्रमाणोपबृंहितं परिमाणं स्थलविशेषाः क्वचित्क्वचिदध्यायश्लोकादिपरिमाणं च प्रदर्श्यते । यद्यप्येतस्य पुस्तकं महता

(१) व्यामोहशङ्किताः ।

परिश्रमेण मथुरापुर्यां निवसतः श्रीयुतमाखनमिश्रस्य पुस्तकालयादेक-मेव लब्धमथापि तस्य प्राचीनतरत्वेन शुद्धतरत्वेन च तत्रैव विश्वस्य मत्समवर्तिनामुत्तरेषां चास्तिकजनानां श्रेयःसम्पत्तये सुविख्याते काशीविद्यासुधानिधिनामके मासिकपत्रे श्रीमतः काशिकराजकीय-संस्कृतप्रधानपाठशालाध्यक्षस्य डाक्तर जि, थिबोसाहिबाभिधप्रभु-वरस्यानुज्ञया एनं ग्रन्थरत्नं मुद्रयितुमुपक्रमे । गायामि च धन्य-वादान् वाराणसेयप्रधानसंस्कृतपाठशालायां साहित्यप्रधानाध्याप-कस्य पण्डितवरगङ्गाधरशास्त्रिणो यस्यानेकस्थलेषु पुस्तकस्याति-प्राचीनतया विलुप्तप्रायाक्षरत्वेन तदंशस्य सुनिपुणविचारपुरःसरमूहने पूरणे चोदारं साहाय्यमवलम्बे ।

अभ्यर्थये च परेशं धीमतः चोदक्षेपविचारदक्षान् महोत्सा-हिनः सुकृतिनो निरामयायुष्मतः कुर्याद् येभ्यो विलुप्तकल्पानां पर-मोपकारकशास्त्ररत्नानामुद्धारात्मा महान् लाभो मुहुरतितरामाशा-स्यतइति । शम् ॥

सं० १९३६
मार्ग० शु० १० ।

काशिकराजकीयसंस्कृतप्रधानपाठशालायां
सरस्वतीभवनाधिकारी धर्माधिकारी
ढुण्ढिराजशास्त्री ।

---

॥ श्रीमहागणपतये नमः ॥

# ॥ कैवल्यरत्नम् ॥

विज्ञानमानन्दमनन्तमेकं सत्यं स्वयंवेदनमात्मतत्त्वम् ।
समस्तवेदान्तसमन्वयाप्तं ब्रह्म प्रपद्ये प्रविलीनभेदम् ॥ १ ॥
श्रुतिस्मृतिपुराणेषु सेतिहासेषु मोक्षदः ।
सारः समुद्धृतः पूर्वं ग्रन्थेऽद्वैतप्रकाशके ॥ २ ॥

अधुनोपपुराणेषु स यत्नोद्ध्रियते मया ।
सारः कैवल्यरत्नेऽस्मिन् ग्रन्थे कैवल्यरत्नदः ॥ ३ ॥
वासुदेवः सर्वमिति ज्ञानान्मोक्षो यतस्ततः ।
वासुदेवज्ञानमुनिस्तल्लाभे यतते भृशम् ॥ ४ ॥
ननु नोपपुराणानि लोके दृष्टचराणि नः ।
नापि श्रुतचराण्येषां मानता कथमत्र वः ॥ ५ ॥
वराको हि भवानत्र पुराणाभ्यासवर्तनात् ।
दृश्यते श्रूयतेऽस्माभिः पुराणं मानवादिकम् ॥ ६ ॥
स्कान्दे षड्संहिते तत्र या चान्या सौरसंहिता ।
मानवादिपुराणं तु तत्रानुक्रम्यते स्फुटम् ॥ ७ ॥

तस्यां संहितायाम् ।

मुनीनां वचनं श्रुत्वा सूतः पौराणिकोत्तमः ।
वक्तुमारभते देवं नमस्कृत्य पिनाकिनम् ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
भविष्यं नारदीयं च मार्कण्डेयसमाह्वयम् ॥
आग्नेयं ब्रह्मवैवर्तं लैङ्गं वाराहसंज्ञकम् ।
स्कान्दं च वामनं चैव कौर्मं मात्स्यं च गारुडम् ॥
ब्रह्माण्डं चेति पुण्योऽयं पुराणानामनुक्रमः ।
अन्यान्युपपुराणानि कथितानि महर्षिभिः ॥
अष्टादश पुराणानि श्रुत्वा सङ्क्षेपतः ।
तेषामनुक्रमं वक्ष्ये सर्वपापविशोधकम् ॥
आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।
स्कान्दसंज्ञं-कुमारेण कथितं तदनन्तरम् ॥
चतुर्थं शिवधर्माख्यं पुराणं नन्दिनेरितम् ।

ततो दूर्वाससा प्रोक्तं नारदीयं ततः परम् ॥
कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं च ततः पुण्यं वरुणाख्यं ततः परम् ॥
ततः कालीपुराणाख्यं कालकण्ठं च नामतः ।
ततो वासिष्ठलैङ्गाख्यं नाम्ना माहेश्वरं च तत् ॥
ततः साम्बपुराणाख्यंससूक्ष्ममिति चेरितम् ।
ततः सौरपुराणाख्यं सावित्रमिति चेरितम् ॥
पराशरं च मारीचं भार्गवं मुनिपुङ्गवाः ।
सर्वाण्युपपुराणानि ब्रह्मज्ञानकराणि वै ॥
स्कान्दमद्याभिवक्ष्यामि लक्षग्रन्थविनिर्मितम् ।

एवं प्रधानपुराणेषु तेषामुपपुराणानामनुक्रमणीदर्शनाद्वेदाविरुद्धं मानवाख्युपपुराणमस्माकं प्रमाणमेव नारसिंहपुराणवद् नारदीयाद्युपस्मृतिवच्च । तत्र मानवोपपुराणमेवमवतरति ।

मनुमात्मनि विश्रान्तं संपूर्णं गलितक्रियम् ॥
सर्वशास्त्रार्थतत्त्वज्ञं महाकारुणिकोत्तमम् ।
एकदा मुनयः सर्वे प्रसन्ना नियतव्रताः ॥
प्रोचुः परमया भक्त्या परिपूर्णमनोरथाः ।

मुनयः ऊचुः ।

भवता सर्ववेदानामर्थः संक्षिप्य दर्शितः ॥
पुरा लोकोपकाराय धर्म्मशास्त्रात्मनैव तु ।
इदानीं सर्ववेदान्तैः प्रतिपाद्यं परं पदम् ॥
ज्ञानं तद्विषयं साक्षात्तदङ्गान्यखिलानि वा ।
ज्ञानाधिकारिणं साक्षाज्ज्ञानस्यैव फलं तथा ॥
अन्यच्चापेक्षितं सर्व्वं ब्रूहि नः संग्रहेण तु ।

इत्येवं मुनिभिः प्रोक्तं निशम्य भगवान्मनुः ॥
अतीव प्रीतिमापन्नो भाषितुं ह्युपचक्रमे ।

श्रीभगवानुवाच ।

शृणुध्वं मुनयः सर्वे भवद्भिः परिभाषितम् ॥
पुरा सत्यवतीसूनुर्व्यासः सर्वार्थवित्तमः ।
महादेवप्रसादेन कृतपुण्यवशेन च ॥
विस्तरेण पुराणेषु बभाषे करुणानिधिः ।
अहमप्याज्ञया शंभोः श्रद्धया परया सह ॥
तत्सर्वं मुनिभिः सार्द्धं पुरा नुश्रुतवांस्ततः ।
देवदेवो महादेवः साम्बश्चन्द्रकलाधरः ॥
मुनीन्द्रानपि मामीशस्तदर्थं संग्रहेण तु ।
यथेष्टं यूयमप्यत्र वदतेत्यास्तिकोत्तमाः ॥
आज्ञां चकार सर्व्वज्ञस्तत्प्रसादबलेन तु ।
मुनिभिश्च मया योऽर्थः प्रोक्तः सम्यक् पृथक् पृथक् ॥
तानि चोपपुराणानीत्युक्तानि ब्रह्मवादिभिः ।
मयोक्तं मानवं नाम पुराणं सर्वशोभनम् ॥
केवलं वेदवाक्येन ग्रथितं ग्रन्थरूपतः ।
इदं त्रैवर्णिकैः पाठ्यं नेतरैरपि मानवैः ॥
ब्राह्मणैस्तु विशेषेण विशेषेण मुमुक्षुभिः ।
इदं पुराणमभ्यस्य क्रमाद्वेदान्तविद्भवेत् ॥
अतः सर्वप्रयत्नेन श्रोतव्यं ब्राह्मणैरिदम् ।

एवमाद्याध्यायत्रयानन्तरम् । श्रीभगवानुवाच ।

अथातः संप्रवक्ष्यामि ज्ञानं ब्रह्मैकगोचरम् ॥
पुमानस्योदयेनैव मुच्यते भवबन्धनात् ।

ज्ञानं तावन्निराकारं मुनीन्द्राः स्वयमेव तु ॥
तथापि विषयाकारं भजते न हि संशयः ।
सामग्री यन्मुखं विप्रा विज्ञानस्य प्रवर्त्तते ॥
तज्जन्यं तमुखं ज्ञानं विषयस्तस्य तत्खलु ।
प्रत्यक्षादिप्रमाणानि पञ्चानात्मोन्मुखानि यत् ॥
अतस्तैरात्मभूतं तद् ब्रह्म ज्ञातुं न शक्यते ।
धर्माधर्मात्मकं कर्म्म चोदनालक्षणां त्वयि ॥
अनात्मैव ततः साक्षाद् ब्रह्मवेदान्तवाक्यगम् ।
सर्ववेदान्तवाक्यानि ब्रह्मैकविषयाणि वै ॥
नार्थान्तरपराण्येव सुसूक्ष्मं परिपश्यताम् ।
सृष्ट्यादिश्रुतयः सर्वाश्चेतनं वस्तुकारणम् ॥
प्रवदन्ति न चैवान्यच्चेतनं ब्रह्म वस्तु वै ।
देवतिर्यङ्मनुष्यादिचेतनानामपि द्विजाः ॥
सृष्टिस्थित्यादिकर्तृत्वं श्रुतं दृष्टमपि द्विजाः ।
ब्रह्मादीनां हि तत्तेषां स हि कर्त्तेति हि श्रुतिः ॥
अन्तर्यामितया तेषां स्थितं तद् ब्रह्मचेतनम् ।
इति चाहमिति श्रेष्ठा ब्राह्मण्यं वैदिकं परम् ॥
वस्तुगत्या भिदा तेषां ब्रह्मणो नैव विद्यते ।
उपाधिना भिदा तस्मात्कारणं ब्रह्म नापरम् ॥
विकारजातं सकलं वाचारम्भणवाक्यतः ।
अमृतं नैव तत्सत्यं कारणं तस्य केवला ॥
मृत्तिकेवेति सत्यत्वं कारणस्यैव हि द्विजाः ।
श्रुत्या निर्द्धारितं तस्मात्सत्यंकारणमेवहि ॥

अतः सृष्ट्यादिवाक्यानि समस्तानि मुनीश्वराः ।
स्रष्टृभावाभिधानेन द्वारेणैव तु वस्तुतः ॥
एकब्रह्मपराण्येव सदा नान्यपराणि वै ।
उपासनापरत्वेन यानि वाक्यानि सत्तमाः ॥
वेदान्तेषु च विद्यन्ते तेषु किं चित्परात्मनः ।
विद्यायाः साधनं साक्षाद्विधत्ते व्यवधानतः ॥
क्रममुक्तिपरं किं चित्किं चिद्भोगपरं तथा ।
किं चित्क्रमेण विद्याया विधत्ते साधनं बुधाः ॥
केवलं सुखभोगैकपरं वाक्याद्द्विजर्षभाः ।
केवलं कर्मभागस्थं वेदान्ता ब्रह्मगामिनः ॥
महावाक्यस्य शेषं हि वाक्यं यत्तदवान्तरम् ।
एकवाक्यतया स्थित्वा द्वयं विज्ञानसाधनम् ॥
प्रत्यग्ब्रह्मैक्यरूपा या वृत्तिः पूर्णा विजायते ।
शब्दलक्षणसामग्र्या मानसी सुदृढा भृशम् ॥
तस्यां च द्रव्यभूतस्तु प्रत्यगात्मा स्वयंप्रभः ।
तस्य स्वरूपभूतेन ब्रह्मरूपेण केवलम् ॥
स्वयं तस्यामभिव्यक्तस्तद्रूपेण मुनीश्वराः ।
ब्रह्मविद्यासमाख्यःसदज्ञानं चित्प्रकाशितम् ॥
प्रतीत्या केवलं सिद्धं दिवाभीतान्धकारवत् ।
अभूतं वस्तुगत्यैव स्वात्मना ग्रसते स्वयम् ॥
स्वात्मनाऽज्ञाततत्कार्यं प्रधानस्य स्वयंबुधाः ।
स्वपूर्णं ब्रह्मरूपेण स्वयमेवावशिष्यते ॥
शमादिविधया सर्वे विज्ञानाङ्गविधायकाः ।

विज्ञानकारणस्यैव विधिः श्रोतव्य इत्ययम् ॥
तत्र तावन्मुनिश्रेष्ठाः श्रवणं नाम केवलम् ।
उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः ॥
सर्ववेदान्तवाक्यानामाचार्यमुखतः प्रियात् ।
वाक्यानुग्राहकन्यायशीलनं मननं भवेत् ॥
निदिध्यासनमैकाग्र्यं श्रवणे मनने ऽपि च ।
निदिध्यासनसंज्ञं च मननं सद्वयं बुधाः ॥
फलोपकारमङ्गं स्यात्तेनासंभावना तथा ।
विपरीता च निर्मूलं प्रविनश्यति सत्तमाः ॥
मुमुक्षुः शांतिदान्त्यादिसाधनैः सकलैर्युतः ।
ब्रह्मविद्याधिकारी स्यान्मुख्यः सत्यमुदीरितम् ॥
मानान्तरानवष्टब्धे धर्मे धर्मश्रुतिर्यथा ।
बुद्धिमुत्पादयत्येवं वेदान्तो ऽपि परात्मनि ॥
फलसाधनरूपेण पुरुषार्थतया वृषः ।
केवलं वेदविच्छ्रेष्ठा वेदेन प्रतिपाद्यते ॥
भूमानन्दं परं ब्रह्म स्वयमेव फलं महत् ।
पुरुषार्थतया ऽतस्तद्वेदान्तैः प्रतिपाद्यते ॥
अज्ञानबाधनं कृत्यं वेदान्तस्य न चेतरत् ।
अज्ञातमिव हे विप्रा ब्रह्मत्वं प्रत्यगात्मनः ॥
दृग्रूपः प्रत्यगात्मा यो देहादिभ्यः पृथक् स्थितः ।
त्वमहंशब्दलक्ष्यार्थः सच्चिदानन्दलक्षणः ॥
जाग्रत्स्वप्नसुषुप्तीनां साक्षीभूतः स्वयं प्रभुः ।
तस्यैव बोधकं वाक्यमवान्तरमितीरितम् ॥
माया तत्कार्यरूपस्य विचित्राशेषवस्तुनः ।

पृथग्भूतं बुधास्तस्य स्वप्रकाशेन भासकम् ॥
सच्चिदानन्दमद्वैतं यद् ब्रह्म ध्रुवमक्रियम् ।
तस्यैव बोधकं वाक्यमप्यवान्तरमीरितम् ॥
द्वयोर्वास्तवमेकत्वमहावाक्यार्थ ईरितः ।
तस्यैव बोधकं वाक्यं महावाक्यं च नेतरत् ॥
एवंरूपावभासस्तु स्वानुभूत्येकगोचरः ।
यद् न सिद्ध्यति विप्रेन्द्रास्तद्धि विज्ञानमैश्वरम् ॥
एवंरूपं तु विज्ञानं मूर्तिध्यानप्रसादतः ।
परतत्त्वस्य सर्वेषां जायते नान्यसाधनात् ॥
सर्व्वोपनिषदामर्थस्त्वाद्यो नास्त्येव संशयः ।
रोचते ऽयं प्रसादेन शिवस्यैव हि देहिनः ॥
संग्रहेण मया प्रोक्तं विज्ञानं ब्रह्मगोचरम् ।
अश्रद्दधानस्य दातव्यं न देयं यस्य कस्य चित् ॥

॥ इति चतुर्थोऽध्यायः ॥ (शेषमग्रे)

## सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 644. VOL. IV.)

मू० ॥ ऐश्वर्यवर्णनमतिस्फुटमेव कृत्वा
नेतीत्यवादि बहुशः श्रुतिभिः प्रयत्नात् ॥
सत्यादिवस्तुनि पुनर्न तथाऽस्ति पूर्व-
मुक्त्वा निषेधनमितीह विशेषयुक्तिः ॥ १६३ ॥

टी० ॥ तदेव विवृणोति । ऐश्वर्यवर्णनमिति । किमैश्वर्यशब्देनाऽनुभवादिगतनिरतिशयत्वादिविशेषः कथ्यते । किं वा स्वातन्त्र्येण निखिलजगत्सर्जनपालनादिव्यापारः । आद्येऽस्मदिष्ट एव ज्ञानादिपदैरेव निरतिश-

यज्ज्ञानादेर्लक्षितत्वेन पदान्तरेणाऽपि तस्य प्रतिपाद्यत्वात् । न द्वितीयः, यतः सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिः स न साधुना कर्मणा भूयान्नो एवाऽसाधुना कनीयानेष सर्वेश्वर इत्यादिवचनेन ऐश्वर्यं निरङ्कुशं तस्योक्त्वा, स एष नेतिनेत्यात्मेति श्रुतिरेव तत्प्रतिषेधति । एवमन्तर्यामि ब्राह्मणेऽपि यः पृथिव्यां तिष्ठन्नित्यादिना बहुप्रकारेण तस्य निखिलजगन्नियन्तृत्वरूपमैश्वर्यमुपवर्ण्य अन्तोऽतोन्यदार्तमिति तत्प्रतिषेधति । एवं मूर्तामूर्तब्राह्मणेऽपि पञ्चमहाभूतवासनात्मकतद्रूपाण्युक्त्वा अथात आदेशो नेतिनेतीति श्रुतिस्तात्पर्येणाऽपवदति । तदिदमाह । बहुशइति । ततः श्रुतिभिरेव तस्य निराकृतत्वाच्च तदनुभवादिवदात्मरूपतया श्रुतिप्रतिपाद्यम् । सत्यादिवस्तुनि तु न तथा पूर्वं प्रतिपाद्य निषेधनमस्तीत्यस्ति तयोर्महान्विशेषः । अतः सत्यादिकमेवात्मरूपमिति भावः ॥ १९३ ॥

मू० ॥ शब्दस्य लाक्षणिकमुख्यविभागभिन्ना
वृत्तिर्हि लौकिकवचस्युपलब्धपूर्वा ॥
यस्माद्दतो न घटते यदि मुख्यवृत्ति-
राश्रीयतामिह गिरश्चरमाऽपि वृत्तिः ॥ १९४ ॥

टी० ॥ ननु विचारेण शुद्धोपस्थितिमन्तरेण तत्र लक्षणाऽनवतारात्साऽवश्यं वाच्या । एवं च तत्र सत्यादिपदानां शक्तिरेवास्तु किं लक्षणयेति चेन्न । सर्वपदस्य तत्र शक्तौ पदान्तरवैयर्थ्यादिदोषप्रसङ्गात् । किं च लक्षणापरिहारार्थं तत्र शक्तिः कल्पनीया । उत तत्प्रतीतये । नाद्यः । तथा सति लोकप्रसिद्धवृत्त्यन्तरविलोपप्रसङ्गात्स चाऽन्याय्य इत्यभिप्रेत्याह । शब्दस्येति । उपलब्धपूर्वा, पूर्वं निश्चिता । साऽप्येवं सति न स्यात्तीरादावपि गङ्गाऽऽदिपदस्यैव शक्तिप्रसङ्गो यस्मादतो मुख्यत्वनिर्वाहाय लक्ष्ये न शक्तिः । कल्पनीयेति शेषः । न द्वितीयः । प्रथमक्लृप्तशक्त्यनुरोधेन मुख्यार्थाऽसंभवे लोक इव लक्षणया तत्प्रतीत्युपपत्तेरित्याह । न घटते यदीति ॥ १९४ ॥

मू० ॥ तस्मादखण्डमवबोधयितुं समर्थो
वेदान्तभूमिगतशब्दसमन्वयोऽत: ॥

संसर्गलक्षणमपास्य विरोधहेतो-
र्वाक्यार्थमद्वयमखण्डमिहाऽऽश्रयस्व ॥ १६५ ॥

टी० ॥ ननु सर्वेषां पदानां यद्येकप्रातिपदिकाऽर्थे लक्षणा तर्ह्येकपदादेव तत्प्रतीतिसंभवाल्लक्षणापक्षेऽपि पदान्तरं व्यर्थमिति शङ्कां निराकुर्वन्नुपसंहरति । तस्मादिति । शब्दसमन्वयो वाक्यम् । लक्षणायां हि सर्वमपि पदमर्थवदेव, अन्यथा यदेव पदं न प्रयुज्येत ब्रह्मणस्तदर्थात्मताकारसंशयो न निवर्त्तेत तदभेदस्याऽन्यतोऽनवगमात् । एवं तदा लक्षणावीजान्वयानुपपत्तिप्रतिसंधानाभावात् लक्षणापि न स्यात् । न ह्येकपदप्रयोगेऽपि क्व चिल्लक्षणावतरतीति न शक्तिसाम्यमिति भावः । फलितमाह । अतः संसर्गलक्षणमिति तादात्म्यलक्षणमित्यर्थः । विरोधहेतोः सत्यादिपदवाच्याऽभेदविरोधादित्यर्थः । इह ब्रह्मवाक्ये ॥ १६५ ॥

मू० ॥ सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेष विशेषणेतरतया पश्चाद्विरोधोद्भवः ॥
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डाऽऽत्मके
वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभिः ॥ १६६ ॥

टी० ॥ वेदान्तानामखण्डाऽर्थप्रतिपादनक्रममाह । सामानाधिकरण्यमिति । सामानाधिकरण्यादीनामुत्तरश्लोके संबन्धिनः स्पष्टं निर्देक्ष्यन्ते । अत्र ब्रह्मवाक्ये । सामानाधिकरण्याऽख्योऽन्वयः । प्राथम्यभाक् प्रथमं भवति । पश्चाद्विशेषणेतरतया विशेषणविशेष्यभावेनाभेदेनेति यावत् । एषः अन्वयो भवति । पश्चात्तत्र विरोधोद्भवः विरोधस्फूर्तिः । ततः विरोध उत्पन्ने जाते । एकरसकेऽखण्डात्मके वस्तुनि लक्षणया वृत्तिर्भवति । ततो वाक्यार्थधीर्भवतीत्यखण्डाऽर्थप्रतिपत्तिक्रमः सूरिभिर्ज्ञेय इत्यर्थः ॥ १६६ ॥

मू० ॥ सामानाधिकरण्यमत्र पदयोर्न्नैयस्तदीयाऽर्थयोः
संबन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः ॥
संबन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-
रेतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु ॥ १६७ ॥

टी० ॥ ननु कस्य सामानाधिकरण्याऽन्वयः. कस्य वा विशेषणता-ऽऽदिरित्याकाङ्क्षायामाह । सामानाधिकरण्यमत्र पदयोरिति । सामानाधिकरण्यं संबन्धः पदयोर्ज्ञेयः । पदयोरिति द्विवचनं तत्त्वमस्यभिप्रायं बहूनामप्युपलक्षणम् । अपर्यायपदानामेकार्थवृत्तित्वं सामानाधिकरण्याऽन्वय इति पदानामेव स इत्यर्थः । विशेषणेतरतया तु संबन्धस्तत्त्वंपदार्थयोः, तत्त्वमादिवाक्यश्रवणाऽनन्तरं हि तदर्थयोरहं ब्रह्मेतिविशिष्टाऽभेदो ज्ञायते अन्यथा सामानाऽधिकरण्याऽयोगात् । एतच्चोद्भिदा यजेतेत्यत्रोद्भिद्यागपदयोरप्यस्ति सामानाधिकरण्यं न चाऽखण्डाऽर्थतेति तद्व्यावृत्तय उक्तम् । तथापि नीलमुत्पलमित्यादौ नाखण्डाऽर्थता तत्राऽऽह । ताभ्यां सहेति । अत्र विरोधोद्भवे सतीति द्रष्टव्यम् । अन्यथा लक्षणानवतारात् । तत्त्वंपदार्थाभ्यां विशेषणविशेष्याभ्यामस्यात्मनो लक्ष्यलक्षणतया संबन्धो विधेयः * । लक्ष्यं शुद्धात्मस्वरूपं लक्षको वाच्योऽर्थः । एतच्च पदार्थलक्षणापक्षमादायोक्तम् । उपसंहरति । एवमिति । अर्थपदान्यर्थप्रतिपत्तिसाधनानि बुद्धिपदवीमारोहणीयानि बुद्धौ धारणीयानि । तुरवधारणे नैव विस्मर्तव्यानीत्यर्थः । यत्तु जीवपरयोरंशांऽशिभावेन शरीरतदवयवयोर्दीर्घबाहुर्देवदत्त इतिवत्कार्यकारणभावेन वा मृद्घट इतिवदभेदप्रतीत्युपपत्तेर्न विरोधोद्भवो न वा लक्षणेति क्वाखण्डाऽर्थतेति तन्न । न जायते म्रियते इत्यादिनिखिलविकारनिषेधश्रुतेः, अन्यथा जीवस्याऽपि घटादिवन्नाशप्रसंगात् निष्कलं निष्क्रियमित्यादिश्रुतेश्च न वस्तुतोंऽशांऽशिता, अन्यथा तदंशिनो ब्रह्मणो देवदत्तवत्साऽवयवतयाऽनित्यत्वाऽऽपत्तिः । अतोत्यन्ताऽभेद एव पदार्थयोर्वाक्यार्थो वक्तव्योऽस्ति तत्र चाऽस्त्येव विरोध इति कथं न लक्षणा कथं वा वाक्यस्य नाऽखण्डाऽर्थतेति । इदमिहाचार्याभिप्रेतम् । तत्त्वंपदयोरपर्याययोः समानविभक्तिकयोः परस्पराकाङ्क्षयोरर्थान्तराऽसंभवादेकार्थवृत्तित्वं वक्तव्यमिति प्रथममधिकारिणानुसंधेयं, ततस्तद्बलात्तदर्थयोरत्यन्ताऽभेदः अन्यथा तयोः सामानाधिकरण्याऽयोगादिति चाऽनुसंधेयं, ततस्तत्र विरो-

* विज्ञेयः ॥ पा० २ ॥

धेऽपि प्रतिसंधेयः, तदनंतरं नेदं वाक्यं प्रमत्तगीतं वाक्यान्तरतुल्यत्वाच्चाऽप्यदृष्टार्थं तदध्ययनं दृष्टे संभवति तदयोगादिति विचारयतो लोकसिद्धमर्यादया पदद्वयलक्षणया तत्त्वमितिवाक्यमखण्डमेव ब्रह्म प्रतिपादयेत् । एवं सत्यज्ञानादिवाक्यमपीति ॥ १९७ ॥

मू० ॥ निःसंधिबन्धनमिदं चिदचित्स्वरूपं
संकीर्णमन्तरपरिस्फुरणेन शून्यम् ॥
आचित्तशुद्धिफलतः स्फुरितोपपत्तेः
शब्दाऽर्थसंगतिमिहैव तु गृह्णतेऽज्ञाः ॥ १९८ ॥

टी० ॥ ननु भवतु लक्षणया वाक्यस्याऽखण्डाऽर्थता तथापि जहदजहल्लक्षणेति न सम्यगिव, शबले संगतौ हि सा स्यात्सा चाऽनुपपन्ना लाघवादेकत्रैवांशे शक्तेर्न्याय्यत्वादन्यथा गौरवात्तत्र यद्यप्यात्मांशे सा न संभवत्युक्तदोषादनात्मांशे तु शक्तौ न किं चिद्बाधकमित्याशङ्क्य संगतिग्रहवेलायां लाघवाद्यनवताराच्छबलव्युत्पत्तौ न किं चिद्बाधकमस्तीति वक्तुमुपस्थित्यनुरोधेन शबले संगतिग्रहमाह । निःसंधिबन्धनमिति । इदं चिदचित्स्वरूपम् । आचित्तशुद्धिफलतः । आङ्मर्यादायां चित्तशुद्धिफलरूपायाः स्फुरितोपपत्तेरुपपत्तिस्फुरणपर्यन्तम् । अन्तरपरिस्फुरणेन शून्यं स्फुटभेदज्ञानशून्यम् । निःसंधिबन्धनं तादात्म्यरहितं तत्र हि भेदसहिष्णुरीषद्भेदोऽस्तीति संधिबन्धनपदसूचितस्य तस्यात्रनिषेधात् । अतः संकीर्णमध्यस्ताऽत्यन्तिकाऽभेदेन प्रतीयमानं भवतीति शेषः । ततः किं तत्राऽऽह । शब्दाऽर्थसंगतिमिति । इह शबले । अज्ञाः भागद्वयविवेकशून्याः । ज्ञाते हि संगतिग्रहः । ज्ञानं च प्राक् शबलस्यैव न तु तदंशयोः स्पष्टमीषद्वा विविच्य संगतिग्रहसमये ग्रहणमस्ति, इति शबल एव संगतिग्रह इति भावः ॥ १९८ ॥

मू० ॥ शब्दार्थसंगतिविदामथ सत्त्वशुद्धेरुत्पन्नतर्कदृढलोहशलाकया तु ॥
दृश्यं दृशं च निपुणं द्वयमन्तरेण
निश्छिद्रया दृगदृशोः क्रियते विभागः ॥ १९९ ॥

टी० ॥ नन्वहंकारादेर्दृश्यत्वात्तस्य स्वाऽतिरिक्तद्रष्टृकत्वनियमात्त-द्रष्टा ततोऽन्यस्तस्माच्च दृश्यमन्यदिति कथं तस्य विवेकग्रहाऽसंभवः, एव महंकारस्य कामाद्याश्रयत्वादपि दृग्रूपाद्द्रष्टुरन्यत्वं द्रष्टुरसंगस्य दृश्याऽऽश्रयत्वाऽयोगादित्यतोऽपि तद्विवेकः संभवतीति कथं तत्र संगतिग्रहो न भवेदिति चेत्, सत्यमयं विवेकोपायः, परं त्वयमहमादिशब्दाऽर्थसंगतिं जानतः समयान्तरेऽन्तःकरणशुद्धौ सत्यां मुमुक्षोरात्मविचारे प्रवृत्तेऽवतरति नतु प्रागन्यथा वादिनामहंकाराद्यात्मत्वभ्रमो न स्यात्ततस्तत्पूर्वकालीनसंगतिग्रहः शबलगोचर एवेत्याह । शब्दार्थेति । अथ संगतिग्रहानन्तरं समयान्तरे। सत्त्वमन्तःकरणम् । उत्पन्नतर्कदृढलोहशलाकया, उत्पन्नो यो वर्णितस्तर्कः स एव दृढलोहशलाका, यथा दृढलोहशलाका नीरन्ध्रसंसृष्टपाषाणादीन्वियोजयति । एवं दुर्विवेकचिदचिद्रूपाऽहंकारग्रन्थेर्विवेचनादबाधाच्चाऽयं तर्को दृढलोहशलाकेत्युक्तः । तया दृश्यं दृशं च द्वयमन्तरेण दृग्दृश्ययोर्द्वयोर्मध्ये निक्षिप्तया निवेशितया दृग्दृश्यविभागविषयतया प्रयुक्तयेति यावत् । दृग्दृशोरात्मानात्मनोर्विभागः क्रियते ज्ञायते । ततस्तत्पूर्वमेव शबले संगतिग्रहात्तांशमात्रं तद्गोचरः, अन्यथा प्राक्संगतिसंवेदनमन्तरेण विचारस्याऽनवताराद्विवेकग्रह एव न स्यादिति भावः ॥ १९९ ॥

मू० ॥ शुद्ध्युत्थतर्कजनितं चिदचिद्विभागं
प्राप्य स्थिताः पुनरिमां गिरमुद्गिरन्ति ॥
सत्यादिशब्दगण एष तु तत्र तत्र
व्युत्पत्तिमान् शबलवस्तुनि नो दृशीति ॥ २०० ॥

टी० ॥ ननु प्रागविवेकग्रहाऽभावे कथं शब्दाऽर्थस्य शबलत्वसिद्धिरित्याशङ्क्य समयान्तरे तद्विवेकादेव प्रागविवेककृतशबल एव संगतिग्रहात्स एव शब्दाऽर्थ इति निश्चीयत इत्याह । शुद्ध्युत्थतर्केति । अन्तः करणशुद्ध्यनन्तरं प्रवृत्ततर्केण जनितं चिदचिद्विभागं तद्विभागनिश्चयमुद्गिरन्ति वदन्ति । तामेवगिरं दर्शयति। सत्यादीति। अहमादेरप्युपलक्षणम् । दृशि शुद्धात्मनि । नो नेत्यर्थः ॥ २०० ॥

मू० ॥ एकत्र शक्तिग्रहणोपपत्ता-
वनेकक्लृप्तिः क्रियते किमर्थम् ॥
इत्येतदेवं सति नाऽस्ति चोद्यं
पुराऽस्य पुंसः परमाविवेकात् ॥ २०१ ॥

टी० ॥ एवं सति यदुक्तं लाघवादेकत्रैव शक्तिर्न तु शबले गौरवादिति तदप्यसाधु, पूर्वं केवलोपस्थित्यभावेन लाघवादेरनवतारादित्यभिप्रेत्य तदनुवादपूर्वकमाह । एकत्रेति । अनेकक्लृप्तिः । अनेकाऽऽत्मके शबले क्लृप्तिः । शब्दशक्तेरिति शेषः । पुरा संगतिग्रहसमये । अस्याधिकारिणः । परमाविवेकात् । अत्यन्तमविवेकात् ॥ २०१ ॥

मू० ॥ अत्राह वाच्यशबलाऽन्वितवस्तुनीयं
तद्वर्त्मना भवति लाक्षणिकी प्रवृत्तिः ॥
किं वा तदन्वितविलक्षणवस्तुनि स्या-
च्छब्दस्य नोभयमपि प्रतिभाति युक्तम् ॥ २०२ ॥

टी० ॥ पूर्वं मानान्तराऽधिगतगोचरगामिनी स्याच्छब्दस्य लाक्षणिकवृत्तिरिति प्रलाप इत्यादिश्लोकेन वाच्याऽर्थसंबन्धितया मानान्तराऽधिगते लक्षणा वाच्या आत्मा च न तथेति न लक्षणासंभव इत्याशङ्क्य तथाधिगतिमात्रं लक्ष्यस्यापेक्षितं न तु मानान्तरेणापि, अधिगतिमात्रं चाऽऽत्मन्यपि संभवतीति निरस्ता, इदानीं प्रकारान्तरेणा अखण्डवाक्यार्थं दूषयितुं किं लाक्षणिकशब्दजन्यज्ञाने लक्ष्यं वाच्यार्थसंबन्धित्वेन विषयो भवति, केवलस्वरूपेण वेति विकल्पयति । अत्राहेति । लाक्षणिकी प्रवृत्तिर्लक्षणाजन्यशाब्दज्ञानमित्यर्थः । तदन्वितविलक्षणवस्तुनीति । शबलान्विताद्विलक्षणं यद्वस्तु तस्मिन् शबलाऽनन्वितवस्तुमात्र इत्यर्थः । शब्दस्य लाक्षणिकी प्रवृत्तिरिति संबन्धः । उभयत्रापि दूषणं संभावयति । नोभयमिति ॥ २०२ ॥

मू० ॥ संबन्धिरूपं यदि वस्तु लक्ष्य-
मखण्डवाक्याऽर्थमतिः कुतस्त्या ॥

अनन्वितं वस्तु पदार्थलक्ष्यं
न लक्ष्यते कुत्र चिदत्र लोके ॥ २०३ ॥

टी० ॥ दूषणमेवाह । संबन्धिरूपमिति । वाच्यार्थसंबन्धित्वविशिष्टमित्यर्थः । लोके हि गङ्गापदादिना तीरादि स्वार्थसंबन्धित्वेनैव लक्ष्यते, अन्यथा तत्र ततो नियमेन प्रवृत्त्यनुपपत्तेः, एवमिहाऽपि तत्त्वमादिवाक्यजन्यं ज्ञानं शबलाऽन्वितत्वेन यदि ब्रह्म विषयीकुर्यात्तह्यखण्डाऽर्थता तस्य कुतो भवेत् । द्वितीये तु नायं दोषः, परं तु तदेव न सिद्ध्यति लोके तथाऽदर्शनादन्यथा समुद्रतीरादेरपि गङ्गाशब्दात्प्रतीतिप्रसङ्ग इति भावः ॥ २०३ ॥ :: ॥

मू० ॥ पूर्वक्षणे भवति वाच्यपदार्थभाग-
भागित्वसंगतिरिहात्मनि निर्विभागे ॥
मोहोपदर्शितवपुर्घटते ततोऽस्मि-
ञ्छब्दस्य लाक्षणिकवृत्तिरदोषदुष्टा ॥ २०४ ॥

टी० ॥ सिद्धान्ती द्वितीयपक्षमादाय समाधत्ते । पूर्वक्षणेति । वाक्यार्थप्रतीतेः पूर्वकाल इत्यर्थः । इह निर्विभागे आत्मनि । मोहोपदर्शितवपुः, मोहेनोपदर्शितं वपुः स्वरूपं यस्याः संगतेः सा तथा । वाच्यपदार्थभागभागित्वसंगतिः, तत्प्रतीतिरिति यावत् । पूर्वक्षणेऽपेक्षिता भवतीति संबन्धः । लक्षणायाः प्रागेव लक्ष्यस्य वाच्याऽर्थसंबन्धित्वेन ज्ञानमपेक्षितमन्यथा तया तदुपस्थित्यसंभवात्र तु लाक्षणिकशब्दजन्यज्ञानेऽपि तत्तथा प्रतीयते मानाऽभावात्किं तु स्वस्वरूपेणैव* । लोकेऽपि तीराऽऽदेः केवलस्याऽपि गङ्गादिपदादुपस्थितिः । न चैवमतिप्रसंगः पूर्वक्षणभाविना वाच्याऽर्थसंबन्धज्ञानेनैव नियततीराद्युपस्थितिसंभवेनाऽन्यत्र तदसंभवात् । न हि समुद्रतीरादि तथोपस्थितं भवति । ततो ब्रह्मणि लक्षणयाऽखण्डाऽर्थप्रतीतिरुपपद्यत इति भावः । निर्विभागात्मनि कथं भागभागित्वमिति शङ्कां निराकर्तुं मोहेत्युक्तम् ॥ २०४ ॥

* स्वरूपेणैव ॥ पा० २ ॥

मू० ॥ संबन्धिता भवति लाक्षणिकप्रवृत्तेः
सर्वत्र कारणमितीदमभीष्टमेव ॥
संबन्धिता करणमेव तु लाक्षणिक्या
बुद्धेरनिष्टमिह तद्व्यभिचारदृष्टेः ॥ २०५ ॥

टी० ॥ उक्तमेवार्थं सोपपत्तिकं प्रपञ्चयति । संबन्धितेति । संबन्धिताज्ञानमित्यर्थः । सर्वत्र लोके वेदे च संबन्धिताकारणं वाच्यार्थसंबन्धिताकारत्वं कुतोऽनिष्टमित्यत आह । तद्व्यभिचारेति । तस्य संबन्धिताकारत्वस्य सर्वत्र लाक्षणिकपदजन्यज्ञाने ऽभावादित्यर्थः कुत्र तदभाव इति चेदुक्तमेव गङ्गापदजन्यज्ञानस्य शुद्धनीरविषयत्वेन तज्ज्ञाने गङ्गासंबन्धिताऽऽकारत्वाभावान्नियमेन वाच्यविशिष्टस्यैव लक्ष्यत्वे तात्पर्यगौरवप्रसङ्गात् १०५ ॥

मू० ॥ यत्रैष काक इदमेव तु देवदत्त-
वेश्मेति लाक्षणिकवृत्तिरिहाऽभ्युपेता ॥
काकास्पदत्वमवधीर्य तथापि वेश्म-
मात्राकृतिर्भवति लाक्षणिकी तु बुद्धिः ॥ २०६ ॥

टी० ॥ व्यभिचारस्थलान्तरमाह । यत्रैष इति । देवदत्तगृहं किमिति पृच्छन्तं प्रति कश्चिदाह । यत्रैष काकस्तिष्ठति । इदमेव देवदत्तवेश्मेति । तत्र किं काकाऽधिकरणत्वविशिष्टं देवदत्तगृहमिति वाक्याऽर्थ उत तदुपलक्षितम् अन्त्य आह । लाक्षणिकेति । अभ्युपेता सर्वैरिति शेषः । ततः किं तत्राह । काकास्पदत्वमिति । काकाधिकरणत्वमित्यर्थः । तथापि काकास्पदत्वमिति संबन्धः । तस्माद्धि वाक्याद्गृहविशेषमात्रमेव देवदत्तीयत्वेन प्रतीयते न तु काकाऽधिकरणत्वाकारेण । निर्गतेऽपि काके तद्बुद्धिदर्शनात् । एतेन प्रथमपक्षोऽपि निरस्तः विशिष्टस्य देवदत्तीयगृहत्वे काकाऽपसरणे गृहैकदेशभङ्गबुद्धिप्रसङ्गश्चेति ॥ २०६ ॥

(शेषमग्रे)

## ॥ अथ चित्सुखी ॥

### ॥ तत्र प्रथमपरिच्छेदावशेषः ॥

(*Continued from page* 608. VOL. IV.)

न चरमः, यागस्य स्वर्गं प्रति साधनत्वाभाव इव करणत्वाभावेऽपि स्वर्गसाधनीभूतनियोगं प्रति करणत्वादेव स्वर्गकामिकृतिव्याप्यत्वोपपत्तेः ।

यागादेः फलं प्रत्यकरणत्वे तत्कामिनस्तत्र कथं प्रवृत्तिरिति चेत्, साधनत्वाभावेऽपि तत्र तस्य प्रवृत्तिरनुपपन्नेति तुल्यम् ।

किंच साधनत्वाभावे तद्विशेषरूपकरणत्वमपि न स्यात्, "साधकतमं करण"मिति पाणिनिस्मरणात् ।

अथ परोद्दिष्टकृतिव्याप्यत्वं करणत्वं तेन साधनत्वाभावेऽपि करणता किं न स्यादिति चेत्, तर्हि नियोगस्यापि परोद्दिष्टकृतिव्याप्यतया करणत्वप्रसङ्गः, तस्यापि स्वर्गादिफलोद्देशेन प्रवृत्तकृतिव्याप्यत्वात् ।

अथ साक्षादिति विशेषणाददोषः, मैवम्, इतिकर्तव्यस्य प्रयाजादेरङ्गजातस्य धात्वर्थतया साक्षात्कृतिव्याप्यत्वेन करणत्वप्रसङ्गात् । उभयोः साधनत्वाविशेषे करणेतिकर्तव्यतालक्षणो विभागो न सिध्येदिति चेत्, न, तत्रापि नियोगसाधने यागे तदितिकर्तव्येषु च करणत्वा * विशेषाद्विभागानुपपत्तेस्तुल्यत्वात् ।

न च करणांशे रागतः प्रवृत्तिरितिकर्तव्येषु तु विधित इति विभागो युक्तः, सेतिकर्तव्यताकस्यैव करणतया तत्र रागतः प्रवृत्तावितिकर्तव्येष्वपि रागतः प्रवृत्तेरवर्जनीयत्वात्, तथा लोके दृष्टत्वात्, एतेन श्येनाग्नीषोमीयवैषम्यमप्यपास्तम्, श्येनवदग्नीषोमीयेऽपि रागतः प्रवृत्तेः समानत्वात् ।

न च प्रथमतो नियोगेनैव संबद्धेतिकर्तव्यता पश्चात् तत्प्रयुक्ता फलेन संबध्यते यागस्य तु फलं प्रति करणीभूतस्यैव नियोगेन पश्चात् संबन्ध इति वैषम्यम्, वाक्यग्रहणदशायां प्राकरणिकसकलपदार्थानाम-

*—त्वसाधनत्वा—इति पा० ।

विशेषेण नियोगसंबद्धानां तद्वशादेव परस्परसंबन्धस्य पाष्ठिकस्याङ्गीकारात्, फलं प्रति करणत्वस्य विध्याक्षेप[1]लक्षणोपादानाधीनतया तत्प्रतिपत्तेर्विशिष्टनियोगप्रतीत्युत्तरकालीनत्वात् ।

कथं चैवं "श्येनेनाभिचरन् यजेते"ति विधौ जायति रागतः प्रवृत्तौ निषेधानुप्रवेशादधर्मता स्यात्, न हि विधिसंस्पृष्टे निषेधः प्रवर्तमानोऽनर्थतां बोधयितुमीष्टे तथा सति षोडशिग्रहणस्यापि "नातिरात्रे षोडशिनं गृह्णाती"ति निषेधादनर्थत्वप्रसङ्गात्, उक्तं हि भट्टाचार्यैः,

यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशम् ।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥

इति ।

ननु विधेर्हि विधो व्यापारो भावार्थफलयोः साध्यसाधनसंबन्धबोधो भावार्थानुष्ठानबोधश्चेति, तत्रैव चानुष्ठानबोधो यत्र भावार्थेऽन्यतो न प्रवृत्तिः, श्येनादौ च फलोपायत्वेऽधिगते रागत एव प्रवृत्त्युपपत्तेर्नानुष्ठापकत्वम्, ततश्च निषेधप्रवेशाच्छ्येनादेरनर्थत्वमिति चेत्, न, उक्तोत्तरत्वात् । उक्तं हि, "सेतिकर्तव्यस्यैव करणत्वात् तत्र रागतः प्रवृत्ताविति-कर्तव्येऽपि तत एव प्रवृत्तौ श्येनवदग्नीषोमीयस्यापीतिकर्तव्यस्यानर्थता प्रसज्येते"ति ।

नन्व"भिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहती"ति प्रायश्चित्तविधानादनर्थता निश्चीयत इति चेत्, मैवम्, नैमित्तिकत्वेनाप्यस्योपपत्तेः, यथा "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदे"दित्यनृतवदनविधानानन्तरं "तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजे"रिति नैमित्तिकत्वेन सारस्वतश्चरुनिर्वापो विधीयते न त्वनृतवदनजनितपापनिर्हरणाय, अनृतवदने कामतोऽप्रवृत्तेर्विधित एव तत्र प्रवृत्त्यङ्गीकारात्, एवमत्रापि ।

तदेवं नित्यकाम्यवैषम्यस्य वक्तुमशक्यत्वान्नित्यवत् काम्येऽपि

---

१ फलकामिकर्तिव्याप्यत्वानुपपत्तिलक्षणाद्धि यागफलयोः संबन्धोऽभिप्रेयते, आक्षेपश्च विषयनियोक्तृविशिष्टनियोगप्रतीत्या, अतोऽपीतरप्राकरणिकवचियोगेनैव विषयभूतयागस्य प्रथमसंबन्धो वक्तव्य इति ।

नियोगस्य फलसाधनकल्पना निष्प्रामाणिका पुरुषार्थत्वे नियोगस्य स्वर्गसाधनताभ्युपगमानर्थताप्रसङ्गात् ।

न च स्वर्गादिसाधनत्वे नियोगस्य प्राधान्यमपि संभवति, स्वर्गादिसुखशेषत्वात् ।

न च स्वर्गानुकूल * नियोज्यसिद्धये स्वर्गादिकं साधयतो नियोगस्य स्वामिवत् प्राधान्यानुपघातः, दृष्टान्तवैषम्यात्, द्वौ हि तत्र स्वामिभृत्ययोः प्रयत्नौ स्वार्थोद्देशेन प्रवृत्तौ परस्परमुपकुर्वाते, न तथेह नियोगस्य चेतनता येन स्वकीयप्रयत्नेन स्वर्गमात्मार्थतया आक्षिपेत्, प्रत्युत गर्भदासस्थानीयो नियोज्यः, स एव स्वर्गाय प्रवृत्तो नियोगमेव स्वर्गशेषतया स्वीकुर्यात् ।

न च स्वर्गादिसुखस्यान्यार्थता, स्वभाववैपरीत्यापत्तेः, यदर्थं सर्वं यच्च नान्यार्थं तत् सुखमिति हि सुखस्य लक्षणमाचक्षते, तत् कथमन्यशेषता स्वर्गादिसुखस्य भवेत् ।

न चालौकिकत्वेऽपि नियोगस्य यूपाहवनीयादिवत् पदान्तरसमभिव्याहारात् संबन्धग्रहणम्, तत्र यूपाहवनीयादेर्यूपं तक्षतीत्यादिप्रसिद्धपदसमभिव्याहारान्यथानुपपत्तिगम्यत्ववद्वाच्ययोगस्यार्थापत्तिगम्यत्वानङ्गीकारात्, अङ्गीकारे वाऽपूर्वत्वव्याघातात् ।

यत्तु लिङादेः क्रियातिरिक्तकार्याभिधायित्वानुमानं तत् प्रत्यनुमानपराहतत्वादसाधनम्, तथाहि ।

विवादाध्यासिताः शब्दाः क्रियाकार्याभिधायिनः ।
कार्यप्रत्ययहेतुत्वादानयेत्यादिशब्दवत् ॥ २२ ॥

इष्टसाधनवादिनो वेदान्तिनः प्रति साध्यविकलत्वाच्च लौकिकलिङादिशब्दानामपि श्रेयःसाधनबोधकत्वाभ्युपगमात्, व्यापकानुपलब्धिपराहतत्वाच्च ।

तथाहि तदभिधायकत्वं तत्र संगतिग्रहणेन व्याप्तम्, तच्च मानान्तरानधिगतादपूर्वाद्व्यावर्तमानं लिङादीनां तदभिधायकतां व्यावर्तयति ।

*—स्वानुकूलेति पा० ।

न च क्रियातिरिक्तकार्यानभिधाने 'स्वर्गकामो यजेत' इत्यादिशास्त्रस्याप्रामाण्यप्रसङ्गः, क्रियाया एवापूर्वावान्तरव्यापारायाः परमेश्वरप्रसादावान्तरव्यापाराया वा फलसाधनत्वोपपत्तेः प्रदर्शितत्वात् ।

तदेवं विधिवाक्यानामपि सिद्धार्थबोधकत्वाद्विधिसंस्पर्शविधुराणां सत्यज्ञानादिवाक्यानामखण्डैकरसब्रह्मलक्षणसिद्धार्थबोधकत्वं सुतरां सिध्यतीति सिद्धम् ।

ननु कथं वेदान्तानामखण्डार्थत्वम्, तस्य निर्वक्तुमशक्यत्वात्, तत्र प्रमाणासंभवाच्च ।

तथाहि किमिदमखण्डार्थत्वम्, किं निर्विशेषवस्तुपरत्वम्, उत निर्भेदार्थनिष्ठत्वम्, आहोस्विदपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वम्, अथवा तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं संसर्गागोचरप्रमाजनकत्वं वा ।

नाद्यः, विकल्पासहत्वात् । तथाहि पदानां निर्विशेषवस्तुपर्यवसायित्वमभिधायकतया वा लक्षकतया वा स्यात् ।

न प्रथमः, तस्यात्यन्तमप्रसिद्धतया संबन्धाग्रहणेन पदानां तत्पर्यवसायित्वासंभवेन लक्षणस्यासंभवित्वप्रसङ्गात् ।

नापि द्वितीयः, अप्रसिद्धत्वादेवाभिधेयाविनाभावस्य लक्षणाहेतोरसंभवेन प्राचीनदोषानुषङ्गप्रसङ्गात् ।

न चाभिधेयाविनाभावं विनापि गरमभ्यवहरेत्यादिगिरामिव वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिका, अत्यन्ताप्रसिद्धत्वेन गगनारविन्दादेरिव लक्ष्यत्वानुपपत्तेः ।

अथ निर्भेदवस्तुपरत्वम्, तदपि न, निर्भेदत्वस्यानिरुक्तेः, तथाहि निर्भेदत्वं नाम किं भेदाभावविशिष्टत्वम्, उत भेदाभावोपलक्षितत्वम् ।

नाद्यः, तत्परत्वे वाक्यस्य निर्घटं भूतलमितिवत् संसृष्टार्थत्वप्रसङ्गात् ।

न द्वितीयः, तत्रापि संसृष्टार्थत्वस्यानतिवृत्तेः । तथाहि भेदस्य योऽभावस्तेनोपलक्षणेनोपलक्षितवस्तुपरत्वे कथं न संसृष्टार्थता ।

वस्तुमात्रमेव तत्र प्रतिपाद्यं भेदाभावस्तु द्वारमिति चेत्, तथापि नाखण्डार्थता, उपलक्ष्यमाणस्य स्वेतरेभ्यो व्यावृत्तत्वेन प्रतीतावखण्डार्थत्वासंभवात्, अप्रतीतौ चानुपलक्षकत्वादेवोपलक्षणस्य वैयर्थ्यप्रसङ्गात् ।

नापि तृतीयः, शीतोष्णस्पर्शवन्तौ पयःपावकावित्यत्रापर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वेऽप्यखण्डार्थत्वादर्शनात् ।

नापि चतुर्थः, तथा सत्येकेनैव तत्प्रतिपत्तेः पदान्तरप्रयोगस्य वैयर्थ्येन लक्षणस्यासंभवित्वापातात् ।

व्यवच्छेद्यभेदादवैयर्थ्यमिति चेत्, न, तदनिरुक्तेः । तथाहि किं व्यवच्छेद्यानां व्यावृत्तयः पदैः प्रतिपाद्यन्ते· अथवा तद्विशिष्टम्· आहोस्वित् तदुपलक्षितं स्वरूपमात्रं वा ।

तत्र न प्रथमद्वितीयौ, तथा सति संसृष्टार्थत्वेनाखण्डार्थत्वानुपपत्तेः ।

नापि तृतीयः, तत्राप्यन्यतो व्यावृत्तस्य प्रतिपादने प्राचीनदोषानुषङ्गात्, स्वरूपमात्रप्रतिपादने च पदान्तरप्रयोगवैयर्थ्यस्य दर्शितत्वात् ।

नापि पञ्चमः, तथात्वस्यात्यन्तादृष्टचरत्वेन लक्षणस्यासंभवित्वात् ।

ननु प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्येषु दृष्टं संसर्गागोचरप्रमितिजनकत्वमिति चेत्, मैवम्, लक्षणवाक्यैरपि लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तत्वेन प्रतिपादनात्, तत्तच्छब्दैर्व्यवहर्तव्यत्वेन प्रतिपादनाद्वा लक्षणवाक्यानामपि संसृष्टार्थत्वानतिवृत्तेः ।

ननु सोऽयं देवदत्त इत्यादिषु देवदत्तगतभेदभ्रमव्युदासेन तत्स्वरूपमात्रपर्यवसायित्वमपर्यायशब्दानां दृष्टमिति चेत्, मैवम्, तत्रापि परोक्षदेशकालोपलक्षितस्यैतद्देशकालविशिष्टत्वप्रतिपादकतया संसृष्टार्थत्वानतिवृत्तेः, तावतैव च भेदभ्रमव्युदासादुभयपदलक्षणाभ्युपगमे गौरवप्रसङ्गाच्च ।

तदेवं नाखण्डार्थत्वनिरुक्तिः, नापि तत्र प्रमाणम् ।

प्रकृष्टः प्रकाश इति वाक्यार्थश्चन्द्रप्रातिपदिकमात्रार्थस्तत्प्रश्नोत्तरार्थत्वाद् यन्नैवं तन्नैवं यथा वाक्यान्तरार्थ इति व्यतिरेक्यनुमानमस्तीति चेन्नैवम्, विकल्पासहत्वात् ।

तथाहि चन्द्रप्रातिपदिकमात्रार्थोऽन्यत्र प्रसिद्धो न वा ।

आद्ये तत्र हेतोर्वृत्तावन्वयव्यतिरेकितया केवलव्यतिरेकित्वव्याघातः, अवृत्तौ तु सत्यपि सपक्षे तत्र हेतोरवृत्तेरसाधारणानैकान्तिकता ।

द्वितीये पुनरप्रसिद्धविशेषणतैव, अन्वयव्यतिरेकितायां च यो यत्प्रश्नोत्तरार्थः स तत्प्रातिपदिकमात्रार्थ इति व्याप्तिरभ्युपेया, तथा च त्वत्करे कति वराटका इति प्रश्नस्य पाणौ पञ्च वराटका इति प्रतिवचने व्यभिचारः ।

न च· अथ विमतमखण्डार्थं लक्षणवाक्यत्वात् पृथुबुध्नोदराकारः कुम्भ इति वाक्यवदित्यनुमानं मानम्, लक्षणवाक्यानामप्युक्तप्रकारेण संसृष्टार्थपरतया दृष्टान्तस्य साध्यविकलत्वात् ।

तदेवं लक्षणप्रमाणयोरभावान्नाखण्डार्थत्वं शब्दानाम्, विवादाध्यासितं पदार्थसंसर्गप्रतीतिजनकं वाक्यत्वाद्गवानयनादिवाक्यवत् ।

न च जरद्गवादिवाक्ये व्यभिचारः, तस्य वाक्याभासत्वात्, आकाङ्क्षासंनिधियोग्यतावन्ति पदानि वाक्यमिति हि वाक्यविदः ।

न च खं छिद्रमित्यादौ व्यभिचारः, तस्यापि लक्षणवाक्यत्वेन लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तिप्रतिपादनपरत्वेनाखण्डार्थत्वाभावात् ।

न च विपक्षे बाधकतर्काभावः, संसर्गप्रतीत्यजनकत्वे वाक्यत्वाभावप्रसङ्गस्यैव बाधकत्वात् ।

तदेवं नाखण्डार्थता वेदान्तानामिति ।

अत्राभिदध्महे, न तावल्लक्षणासंभवः, यतः ।

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत् प्रातिपदिकार्थता ॥ २३ ॥

अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वमखण्डार्थता ।

न चेदमसंभवि लक्षणम्, प्रकृष्टप्रकाशादिवाक्येषु तत्सद्भावात् ।

न च लक्षणवाक्यमपि संसृष्टार्थं लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तिवैशिष्ट्यप्रतिपादनपरत्वात् तत्तच्छब्दैर्व्यवहर्तव्यत्वप्रतिपादनाद्वेति युक्तम्, विकल्पासहत्वात् ।

किं प्रकृष्टप्रकाशादिवाक्यं साक्षादन्यतो व्यावृत्तिं प्रतिपादयति किं वा स्वरूपप्रतिपादनेनार्थात् ।

नाद्यः, व्यावृत्तिप्रतिपादकशब्दाभावात् ।

नापि द्वितीयः, नान्तरीयकतया सिध्यतोऽर्थस्य शब्दार्थत्वाभावात्, 'यश्चार्थादर्थो न स चोदनार्थ' इति न्यायात्, अन्यथा गामानयेत्यादिवाक्येष्वश्वाद्यानयनव्यावृत्तेरपि वाक्यार्थत्वप्रसङ्गात् ।

नन्वयं चन्द्र इति व्यवहर्तव्यः प्रकृष्टत्वे सति प्रकाशत्वाद् यन्नैवं न तदेवं यथा नक्षत्रादि · न तथा चायं तस्मान्न तथेति केवलव्यतिरेकितया लक्षणवाक्यं पर्यवस्यति तथा च कथमखण्डार्थता चन्द्र इति व्यवहर्तव्यतालक्षणधर्मवैशिष्ट्यप्रतिपादनपरत्वादिति चेत्, मैवम्, चन्द्रतया व्यवहर्तव्य इति किं चन्द्ररूपार्थविशेषितो व्यवहारः कर्तव्य उत चन्द्रशब्दमात्रविशेषितो व्यवहारः ।

आद्ये चन्द्रविशिष्टं व्यवहारं यदि नाज्ञासीत् तदा लक्षणवाक्यादपि विषयविशेषितकर्तव्यतां तस्य कथमधिगच्छेत्, न ह्यविदिताग्निरनुमानादप्यग्निसंबन्धमधिगमयितुं शक्यः, अथाधिगतवांस्तदा लक्षणवाक्यरूपमनुमानं निष्प्रयोजनम्, ज्ञातस्यैव ज्ञापनात् ।

अथ सामान्यतो जानात्यस्ति कश्चिद्विषयश्चन्द्रव्यवहारस्येति विशेषतस्तु न जानातीत्युच्येत तथापि किं सामान्यतो व्यवहारस्य निमित्तवत्तां जानाति किं वा व्यवहारविशेषस्य ।

आद्ये प्रकृतानुपयोगः, व्यवहारविशेषस्य विचार्यमाणत्वात् ।

द्वितीये चन्द्रलक्षणार्थविशेषापरिज्ञाने तद्विशिष्टव्यवहार एव विज्ञातुमशक्यः, ज्ञाते च लक्षणवाक्यवैयर्थ्यमित्युक्तम्।

नापि द्वितीयः, लक्षणं विनापि गवादिशब्दानामिव वृद्धव्यवहारादेव वाच्यवाचकसंबन्धग्रहोपपत्तेः।

पूर्वं प्रतिपन्न एव वाच्यवाचकभावो लक्षणवाक्येन स्मार्यत इति चेत्, न, अवगतसंबन्धस्य तच्छब्दादेव संबन्धस्मरणोपपत्तौ लक्षणाभिधानवैयर्थ्यात्, अवगतसंबन्धस्यापि शब्दस्य लक्षणवाक्यादेव संबन्धस्मरणनियमे लक्षणवाक्यस्थपदानामपि प्रत्येकं लक्षणवाक्यैः संबन्धस्मरणप्रसङ्गादनवस्था दुरवस्था स्यात्, तस्माद्गवानयनादिवाक्यवदाप्तोपदेशकतयैव लक्षणवाक्यमवबोधकम्, तच्च सर्वं स्वरूपमात्रपर्यवसायि· अर्थात् पुनरन्यतो व्यावृत्तिः फलतीति युक्तम्।

नन्वेवमपि नैतल्लक्षणम्· अप्राप्तयोः प्राप्तिः संयोगो नित्यः संबन्धः समवाय इत्येवमादिसंबन्धप्रतिपादकलक्षणवाक्येष्वव्याप्तेस्तेषां संसर्गगोचरप्रमितिजनकत्वादिति चेत्, मैवम्, तेषामपि स्वस्वपदस्मारितपदार्थानामन्योन्यसंसर्गागोचरप्रमितिजनकत्वात्, संसर्गागोचरप्रमितिजनकत्वशब्देन चास्यैवार्थस्य विवक्षितत्वात्, नाप्यतिव्याप्तिः, ससर्गप्रमितिजनकेषु गवानयनादिवाक्येषु लक्षणाभावात्।

यद्वा· अपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वमखण्डार्थता।

न चैवं पदान्तरवैयर्थ्यम्, व्यावर्त्यभेदादर्थवत्त्वोपपत्तेः, तथाहि लोके प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकृष्टपदेनाप्रकृष्टखद्योतादेः प्रकाशपदेनाप्रकाशात्मकप्रकृष्टसंतमसादेश्च व्यवच्छेदेन बुभुत्सितश्चन्द्रप्रातिपदिकमात्रार्थः प्रतिपाद्यते, अन्यथा वक्तुरबुभुत्सितमर्थं प्रतिपादयतोऽनवधेयवचनत्वप्रसङ्गात्।

न च व्यावृत्तिपरत्वे व्यावृत्तिमत्परत्वे वा संसृष्टार्थत्वं स्वरूपमात्रपरत्वे च पदान्तरवैयर्थ्यमिति वाच्यम्, व्यावृत्तिद्वारा पदानां स्वरूपमात्रपर्यवसायित्वाङ्गीकारात्, व्यावर्त्यभेदेनावैयर्थ्याच्च, तथावेदेऽपि· "सत्यं

ज्ञानमनन्तं ब्रह्मे"त्यादौ सत्यज्ञानानन्दानन्तात्मशब्दा अनृतजडदुःखान्तवस्त्वानात्मत्वभ्रान्तिनिवृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्ति ।

न चैवमनेकाकारविज्ञानजनकत्वात् पदानां लक्ष्यस्य ब्रह्मणोऽनेकाकारत्वप्रसङ्गः, लक्षणासमये भिन्नाकारविज्ञानजनकानामपि पदानां तत्तद्भ्रान्तिनिवृत्तिमात्रप्रयोजकतया लक्ष्ये ब्रह्ममात्रे तात्पर्येण पर्यवसानात्, एवं च तत्तच्छब्दजन्यविज्ञानानां तत्तद्भिन्नाकारसमर्पणानान्तरीयकतया तत्तद्विरोध्याकारनिवर्तकत्वाद्वाक्यस्याखण्डार्थत्वसिद्धिः । उक्तं चैतत् सुरेश्वराचार्यैः ।

"प्रतिपद्य पदार्थं हि विरोधात् तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत् पदात् ॥ १ ॥
शब्दात् प्रतीयते तावत् संगतिर्धर्मधर्मिणोः ।
मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः ॥ २ ॥
तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रणाल्या * च परिशिष्टौ विशेषणम् ॥ ३ ॥
तद्विरोध्यर्थसंत्यागः सामर्थ्यात् स्यान्न शब्दतः" ।
इति ।

न च गुणगुण्यादिभावप्रतिपादनेऽपि तत्तद्विरोध्याकारनिवृत्त्युपपत्तेः कथमखण्डैकरसत्वसिद्धिरिति वाच्यम्, ब्रह्मशब्दार्थमात्रस्यैव बुभुत्सितत्वात्, सर्वतोऽनवच्छिन्नवस्तुप्रतिपादनपरब्रह्मानन्तशब्दाभ्यां विरोधाच्च, "एकधैवानुद्रष्टव्यम्," "एकमेवाद्वितीय"मित्याद्येकरसत्वप्रतिपादकवाक्यविरोधाच्च, "नेह नानास्ति किंचने"त्यनेकरसत्वप्रतिषेधाच्च ।

न चाप्रसिद्धत्वाद्ब्रह्मणो लक्ष्यत्वासंभवः, प्रत्यगात्मतया स्वतः सामान्येन प्रसिद्धत्वात् ।

न च तथात्वे लक्षणवैयर्थ्यम्, लक्षणस्य विशेषाकारसमर्पणार्थत्वात्, अन्यथा गन्धवती पृथिवी नित्यज्ञानाधार ईश्वर इत्यादिलक्षणानामपि लक्ष्यस्याप्रसिद्धत्वप्रसिद्धत्वयोर्वैयर्थ्यापातात् ।

* सर्वत्र प्रणाड्या० इत्यपि पा० ।

एतेन सोऽयं देवदत्त इत्यत्रापि तत्कालोपलक्षितस्यैतत्कालवैशिष्ट्यं प्रतिपाद्यत इत्येतन्निरस्तम्, देवदत्तस्वरूपमात्रस्यैव बुभुत्सितत्वात्, एतत्कालवैशिष्ट्यस्य दृष्टत्वेनाबुभुत्सितत्वात् ।

न च पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यप्रतिपादनेऽपि भेदभ्रमनिरासः सिध्यतीति वाच्यम्, एतत्कालविशिष्टस्य पूर्वकालसंबन्धासंभवेन तदुपलक्षितत्वस्यासंभवात्, तयोरभेदप्रतिपादनत्वस्याशक्यत्वात् ।

ननु तथापि पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यसंभवात् संभवत्येव तयोरभेदप्रतिपादनमिति चेत्, मैवम्, विकल्पासहत्वात् ।

किं पूर्वकालोपलक्षितस्यैतत्कालविशिष्टेनाभेदः प्रतिपाद्यत इत्युच्यते किं वा पूर्वकालोपलक्षिते वर्तमानकालवैशिष्ट्यलक्षणधर्मप्रतिपादनेनार्थादभेदः सिध्यतीति ।

नाद्यः, विशिष्टाविशिष्टस्वरूपयोरभेदासंभवात्, तथा सति वर्तमानकालविशिष्टस्य पूर्वमपि सद्भावप्रसङ्गात् ।

नापि द्वितीयः, साक्षादेवाभेदप्रतिपादने संभवति परंपरया तत्प्रतिपादनाश्रयणस्यायुक्तत्वात् ।

उभयपदलक्षणाश्रयणे कल्पनागौरवात् तथाश्रीयत इति चेत्, मैवम्, अत्रापि परंपरया अभेदप्रतिपादनात्, साक्षादभेदप्रतिपादने बुद्धिलाघवस्य दर्शितत्वात् ।

तथापि विनिगमनायां को हेतुरिति चेत्, बुभुत्सितार्थस्य साक्षात् प्रतिपादनलाभ एवेति ब्रूमः । उक्तं च प्रतिज्ञावचनस्य साधनाङ्गत्वमाचक्षाणेनाचार्यवाचस्पतिना "अनित्यं शब्दं बुभुत्समानाया नित्यः शब्द इत्यनुक्त्वा यदेव किंचिदुच्यते यत् कृतकं तदनित्यमिति वा कृतकश्च शब्द इति वा तत् सर्वमसंबद्धबुद्ध्या न प्रत्येति प्रतिवादी"ति ।

एतेनोभयपदलक्षणास्वीकारे गौरवदोषो निरस्तो वेदितव्यः, बुभुत्सितार्थप्रतिपादनप्रयोजनतया गौरवस्यैवोचितत्वात्, "प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपी"ति न्यायात् ।

तदेवमखण्डार्थत्वे न लक्षणासंभवः, नापि प्रमाणासंभवः, तथाहि ।

सत्यज्ञानादिगीरेतत्संसर्गव्यतिरेकिणि ।
अर्थे प्रमाणं मानत्वान्नयनादिप्रमाणवत् ॥ २४ ॥

सत्यादिवाक्यमेतत्पदार्थसंसर्गातिरिक्तेऽर्थे प्रमाणं प्रमाणत्वाच्चक्षुरादिवत्, विपक्षे चैकरसत्वप्रतिपादकश्रुतीनामुदाहृतानामप्रामाण्यप्रसङ्गः, बुभुत्सिते ब्रह्मणि प्रमाण्याभावप्रसङ्गश्च बाधकस्तर्क उन्नेयः ।

यत्तु वाक्यत्वाद्गवानयनादिवाक्यवत् संसर्गपरत्वानुमानं तदेकरसत्वप्रतिपादकश्रुतिविरोधात् कालात्ययापदिष्टम्, उक्तनीत्या च संसर्गप्रतीतिजनकत्वाभावेऽपि वाक्यत्वोपपत्तेः संदिग्धव्यतिरेको हेतुः, 'आकाङ्क्षासंनिधियोग्यतावन्ति पदानि वाक्य'मिति हि वाक्यविदः, न तु संसर्गप्रमितिजनकान्यपीति, विशेषणस्य वैयर्थ्यात्, आचार्यशबरस्वामिना च 'शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञान'मित्येतावत एव लक्षणस्याभिधानात्, प्रातिपदिकमात्रार्थप्रश्नोत्तरत्वानुपपत्तिश्च लौकिकवैदिकलक्षणवाक्यानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वे प्रमाणम्, प्रदर्शिता च तत्रानुपपत्तिः, "अबुभुत्सितार्थप्रतिपादनेऽनवधेयवचनत्वप्रसक्ति" रिति ।

तदेवमशेषोपनिषदामखण्डैकरसे ब्रह्मणि स्वतः सिद्धमेव प्रामाण्यमिति सिद्धम् ।

ननु किमिदं प्रामाण्यस्य स्वतस्त्वम् ।

न तावत् स्वत एव जन्म, स्वस्य स्वहेतुकत्वविरोधात् ।

( शेषमग्रे )

---

॥ श्रीः ॥

## श्रौतपदार्थनिर्वचनम् ।

### १ इष्टिप्रकरणम् ।

*(Continued from page 644. Vol. IV.)*

३२३ ततः पत्नी वेदशिरसा मन्त्रेण स्वनाभिं स्पृशति एतत् वेदशिरःकरणकनाभ्यालम्भनमित्युच्यते ॥

३२४ बौधायनसूत्रपठितत्वादध्वर्युः आश्वलायनसूत्रपठितत्वात् होता वा पत्न्याः कटौ आग्नीध्रेण पूर्वं निबद्धं योक्त्रं मन्त्रेण स्वस्वसूत्रपठितेन विमुञ्चति एतत्पत्नीयोक्त्रविमोचनमित्युच्यते ॥

३२५ ततः पूर्ववत् होताध्वर्युर्वा तद्योक्त्रं पत्न्यञ्जलौ निधाय तस्मिन् जलमानयति मन्त्रेण पत्नी तु तेन जलेन स्वमुखमार्जनं बाह्याङ्गे करोति इदं मुखविमार्जनमित्युच्यते ॥

३२७ ततो गार्हपत्यं परिषेचयित्वा चतस्रः समिधो मन्त्रैः आधापयित्वा पुनः परिषेचयति एतत् उत्तरगार्हपत्यसमिदाधानमित्युच्यते ॥

३२८ ततः पत्नी तूष्णीं यथागतं तीर्थेन विहाराद्बहिर्निष्क्रामति एतत् पत्नीनिष्क्रमणमित्युच्यते ॥

३२९ अध्वर्युः उत्तरेण गार्हपत्यं प्राङागत्य आज्यस्थाल्याज्येन ध्रुवां मन्त्रेण पूरयति यजमानोऽपि तं मन्त्रं पठति एतत् ध्रुवाप्यायनमित्युच्यते ॥

३३० ततो यजमानः स्वभागं ब्रह्मणा प्राशित्रहरणस्य पश्चात् कुशेषु वेद्यां स्थापितं मन्त्रेण प्राश्नाति एतद्यजमानभागप्राशनमित्युच्यते ॥

३३१ ततोऽध्वर्युः आहवनीये आज्यस्थाल्याज्येन स्रुवेण देवदेवताकया ऋचा एकामाहुतिं हुत्वा तथैव अत्याद्यरैर्यजुर्मन्त्रैर्नवाहुतीर्हुत्वा चतसृभिर्व्याहृतिभिश्चतस्र आहुतीर्हुत्वा द्वाभ्यामग्नीवरुणदेवताकाभ्यां ऋग्भ्यां हुत्वा द्वाभ्यामृग्भ्यां अयसेऽग्नये हुत्वा देवदेवताकया एकया ऋचा हुत्वा एकया ऋचा अग्नये स्विष्टकृते हुत्वा प्रजापतिदेवताकया एकया ऋचा जुहोति अयं होमः अध्वर्युकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३३२ ततो वेद्यास्तृतसर्वबर्हिर्मुष्टिभ्यः प्रत्येकं किंचित्किंचित् गृहीत्वा ध्रुवायां मन्त्रेण समज्य मन्त्रेणाहवनीये प्रक्षिपति तदेतद्बर्हिरेकदेशानुप्रहरणमित्युच्यते ॥

३३३ तत उत्थाय दक्षिणं पादं वेदिमध्ये निधाय ध्रुवया मन्त्रेण जुहोति सो ऽयं समिष्टयजुर्होम इत्युच्यते ॥

३३४ येन मन्त्रेण जुहोति स मन्त्रः समिष्टयजुरित्युच्यते ॥

३३५ ततः प्रणीतापात्रं वेद्यां निधाय यजमानं मन्त्रं वाचयति ततो ऽध्वर्युयजमानौ प्रतिदिशं मन्त्रेण प्राच्यां दक्षिणस्यामित्यादिमन्त्रेण दक्षिणस्यां ततो ऽप उपस्पृश्य प्रतीच्यामित्यादिमन्त्रेण प्रतीच्यां उदीच्यामित्यादिमन्त्रेणोदीच्यां ततो ऽध्वर्युः प्रणीताजलशेषं वेद्यां मन्त्रेण प्रक्षिपति एतत्प्रणीताप्रणयननिनयनमित्युच्यते ॥

३३६ होता तु पूर्वोक्तपत्नीयोक्त्रविमोचनानन्तरमेव तद्योक्त्रं गृहीत्वा गार्हपत्यस्य पश्चात् द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि वेदतृणानि निधाय अग्निहोत्रहवणीं जलपूर्णां तस्योपरि निधाय वेदतृणैरभिमृश्य पत्नीं मन्त्रं वाचयति ततः प्रतिदिशमुदकमूर्ध्वं सिञ्चन् तथैवोदकमूर्ध्वं सिञ्चतीं पत्नीं मन्त्रं वाचयति तदेतदुदकोदुञ्चनमित्युच्यते ॥

३३७ ततः एकया ऋचा एकेन यजुर्मन्त्रेण च अग्निहोत्रहवणीगतेन जलेन दर्भैः होता पत्नी च आत्मानं मार्जयते ततो यजुर्मन्त्रेण उभौ निर्ऋतिदिशि जलं सिञ्चतः ततो होता वेदतृणानामधस्तात् कृतायां पत्न्यञ्जलौ तथाकृते स्वसव्यहस्ते च दक्षिणहस्तेन अग्निहोत्रहवणीमादाय तज्जलं सर्वं प्रक्षिपति तदेतदग्निहोत्रहवणीजलनिनयनमित्युच्यते ॥

३३८ होता वेदतृणानि अग्रभागे दक्षिणहस्तेन धृत्वा तन्तुशब्दवता मन्त्रेण गार्हपत्यादारभ्याहवनीयपर्यन्तं अविच्छिन्नं स्तृणाति एतत् वेदस्तरणमित्युच्यते ॥

३३९ तत आहवनीयस्य वायव्यदेशे तिष्ठन् आज्यस्थाल्याज्येन स्रुवेण त्रिभिर्ऋङ्मन्त्रैः प्रत्येकं हुत्वा तिसृभिर्व्याहृतिभिश्च प्रत्येकं हुत्वा समस्तव्याहृतिमन्त्रेण जुहोति अयं सप्ताहुतिहोमः होतृकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३४० ततस्तत्रैव तिष्ठन् एकया ऋचा आहवनीयमुपतिष्ठते ततस्तीर्थेन निष्क्रामति सा ऋक् होतृकर्मणां मध्ये चरमकर्मकरणत्वात् संस्थाजप इत्युच्यते ॥

३४१ ब्रह्मा तु प्रणीताप्रणयननिनयनानन्तरं होतृवत् तत्रैव तिष्ठन् आहवनीये सप्ताहुतीर्हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रामति अयं होमो ब्रह्मकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३४२ एतद्धोमानन्तरं यजमान उत्थाय प्राङ्मुखो भूत्वा स्वस्थानादारभ्य त्रिभिर्यजुर्मन्त्रैः प्रत्येकं दक्षिणेन पदा द्वाभ्यां पादाभ्यां उड्डीय वा प्राचीं दिशं गच्छति तत्रैव स्थित्वा एकं यजुर्मन्त्रं पठति एतत्कर्म विष्णुक्रमक्रमणमित्युच्यते ॥

३४३ ते च मन्त्रा विष्णुक्रमपदवाच्या भवन्ति ॥

३४४ ततस्तत्रैव तिष्ठन् मन्त्रेणाहवनीयमुपतिष्ठते एतदाहवनीयोपस्थानमित्युच्यते ॥

३४५ ततो बहिर्निष्क्रम्य तत्रैव वा तिष्ठन् मन्त्रेणादित्यमुपतिष्ठते एतदादित्योपस्थानमित्युच्यते ॥

३४६ ततो द्विषन्तं ध्यायन् मन्त्रेण दर्भेणात्मानं मार्जयते एत-
द्दात्ममार्जनमित्युच्यते ॥

३४७ ततो दर्भं निरस्याप उपस्पृश्य स्वहृदयं मन्त्रेणाभिमृशति तदे-
तत् हृदयाभिमर्शनमित्युच्यते ॥

३४८ ततोऽप उपस्पृश्य उदङ्मुखः सन् मन्त्रेण प्रदक्षिणमावृत्य
मन्त्रेणापसव्यमावर्तते एतद्यजमानावर्तनमित्युच्यते ॥

३४९ तत उपविश्याहवनीये मन्त्रेण समिधमाधाय मन्त्रेणाहवनीय-
मुपस्थाय स्वायतन एव तिष्ठन् द्वाभ्यामृग्भ्यां एकेन यजुर्मन्त्रेण
च गार्हपत्यमुपतिष्ठते तस्मिन् यजुर्मन्त्रे तु मह्यमितिपदानन्तरं
स्वनाम शर्मपदघटितं चतुर्थ्यन्तं उक्त्वा ज्योतिष्मतीमित्यादिम-
न्त्रशेषं ब्रूयात् ततो यावन्तो यजमानस्य पुत्राः तावतां ज्येष्ठा-
नुक्रमेण प्रत्येकं स्वनामवत् चतुर्थ्यन्तमुक्त्वा ज्योतिष्मतीमित्या-
दिमन्त्रशेषं उक्त्वा अन्त तन्तवे इतिचतुर्थ्यन्तमुक्त्वा ज्योतिष्म-
तीमित्यादि ब्रूयात् एतद्यजमानकर्तृकगार्हपत्योपस्थानमित्यु-
च्यते ॥

३५० तत एकं यजुर्मन्त्रं पठति स यज्ञसमाप्तौ पठ्यमानत्वात् यज्ञ-
विमोक इत्युच्यते ॥

३५१ ततः पूर्ववनिरःपवित्रमप आचम्य आहवनीयं परिषिच्य
समन्त्रकं चतस्रः समिध आधाय पुनः परिषिञ्चति अयमुत्तरा-
हवनीयपरिषेक इत्युच्यते ॥

३५२ तत एकामृचं जपति सा ऋक् यज्ञस्य पुनरालम्भ इत्युच्यते ॥

३५३ ततः प्रागुदीय गोपदवतीमृचं जपति अयं गोमतीजप इत्यु-
च्यते ॥

२५४ ततो ब्राह्मणभोजनाय आत्मानं बोधायनसूत्रोक्तमार्गेण प्रैष्यति सो ऽयमात्मसंप्रैष इत्युच्यते ॥

२५५ उक्तान्यैष्टिकपदार्थानां नामानि इदानीमाधानसंबन्धिनां पदार्थानां नामान्युच्यन्ते तत्र गार्हपत्यदक्षिणाग्न्याहवनीयनामकानां त्रयाणामग्नीनां तत्तदायतनेषु स्वस्वसूत्रोक्तविधिना स्थापनं अग्न्याधानमाधानमिति चोच्यते ॥

२५६ समस्तपातकनिबर्हणार्थं आधानाधिकारसिद्ध्यर्थं आधानात्प्राक् स्थण्डिलकरणाद्यग्निप्रतिष्ठापनान्तं कृत्वा आघारहोमानन्तरं गायत्रीमन्त्रेण सवित्रे चरुं हुत्वा स्विष्टकृदर्थं अवदाय अन्तःपरिधि सादयित्वा एकविंशत्यृचस्य यद्देवा इत्यादिकस्य प्रथमानुवाकस्य एकैकया ऋचा आज्याहुतीर्हुत्वा त्रयोदशर्चस्य यददीव्यमित्यादिकस्य द्वितीयानुवाकस्य एकैकयर्चा तथैव हुत्वा सप्तदशर्चस्य आयुष्टे इत्याद्यनुवाकस्य ऋग्भिस्तथैव हुत्वा सिंहे व्याघ्र इत्यादिकस्याष्टर्चस्यानुवाकस्य ऋग्भिस्तथैव हुत्वा समित्पाणिर्यजमानः स्वायतने तिष्ठन् वैश्वानरायेत्यादिकेन द्वादशर्चेनानुवाकेनाग्निमुपस्थाय त्रयोदश समिध आधाय एकया ऋचा हुत्वा स्विष्टकृदादिहोमशेषं समाप्य वरं दत्त्वा अग्नेः पुरस्तात् अश्वत्थपर्णेषु हुतशेषं निदध्यात् । अयं होमः पापतारतम्यानुसारेण संवत्सरं मासं चतुर्विंशतिदिनानि षट् दिनानि त्रीणि दिनानि वा क्रियते । अस्य होमस्य अमावास्यायां पौर्णमास्यां वा आरम्भः यावन्ति होमदिनानि तावत्सु दिनेषु स्त्रीसंगममांसभक्षणपर्यङ्कशयनासत्यभाषणवर्जनं अयं कूश्माण्डपदेन श्रुत्यादिषु प्रसिद्धः ॥

३५० अथान्यो होमः तत्र पूर्वोक्ते गृह्यं अग्निं प्रतिष्ठाप्य आधारहोमान्तं कृत्वा गायत्र्या सवित्रे चरुणा हुत्वा अग्ने नयेति षडृचेनानुवाकेन प्रत्यृचं चरुणा हुत्वा सहस्रशीर्षेत्यष्टादशर्चेनानुवाकेन प्रत्यृचं हुत्वा अग्नेर्मन्व इति द्वाविंशत्यृचेनानुवाकेन तथैव हुत्वा या वामिन्द्रेति चतसृभिर्ऋग्भिस्तथैव हुत्वा यो वामिन्द्रेत्यष्टाभिर्ऋग्भिस्तथैव हुत्वा पवमानः सुवरिति सप्तदशर्चेनानुवाकेन तथैव हुत्वा यद्देवा इति विंशत्यृचेनानुवाकेन तथैव हुत्वा वैश्वानरो न इत्यष्टाभिर्ऋग्भिस्तथैव हुत्वा चतसृभिर्व्याहृतिभिः प्रत्येकं हुत्वा स्विष्टकृदादिहोमशेषं समापयेत् । ततो जलपूर्णं पात्रं गृहीत्वा नैर्ऋतीं दिशं गत्वा चतुष्पथे गोमयेनोपलिप्य तत्रोपविश्य जलपात्रं पुरस्तान्निधाय तस्य जले आत्मनः प्रतिबिम्बं अवेक्षमाणो मन्त्रान् जपेत् । ते च मन्त्राः सिंहे म इत्यादयस्त्रिसप्ततिसंख्याकाः । ततस्तत्पात्रगतं जलं नैर्ऋत्यां दिशि स्ववैरिणो यस्यां दिशि निवसन्ति तस्यां वा दिशि मन्त्रेण निनयति । ततस्तत्पात्रं तस्यामेव दिशि परास्य पृष्ठतोऽनवेक्षमाणः सन् यथागतमागत्य हस्तौ पादौ प्रक्षाल्य आचमनं कुर्यात् । एवमेकाहं त्र्यहं सप्ताहं पञ्चदश दिनानि एकं मासं मासद्वयं षण्मासं संवत्सरं वा शक्त्यनुसारेण कुर्यात् कर्मान्ते ब्राह्मणान् पायसान्नेन भोजयेत् गोहिरण्यादि च ब्राह्मणेभ्यो दद्यात् अयं होमः आधानाधिकारसंपादकसमस्तपापक्षयकरः अथ च सर्वकर्मानुष्ठानाधिकारसंपादकः सोऽयं गणहोम इत्युच्यते ॥

३५८ मृदा निर्मितं समचतुरस्रं प्रतिदिशं अष्टादशाङ्गुलविस्तृतं होमानुसारेण ततो ऽधिकं वा न तु ततो न्यूनं चतुरङ्गुलोच्चं मध्योन्नतं स्थण्डिलमित्युच्यते ॥

३५९ दक्षिणात्वेन दीयमानं धेनुसुवर्णादिकं व्रियते ऽनेनेति करणव्युत्पत्त्या वर इत्युच्यते ॥

३६० आधानात्पूर्वेद्युर्दिने नान्दीश्राद्धं क्रियते यत्र सत्यवसुसंज्ञका विश्वेदेवाः तिलकार्यं यवैरेव क्रियते पैतृकमपि कर्म सव्येनैव क्रियते विश्वेषां देवानां पूजनानन्तरं मातृपितामहीप्रपितामह्य इज्यन्ते ततः पितृपितामहप्रपितामहाः ततो मातामहमातुः-पितामहमातुःप्रपितामहाः सपत्नीकाः दर्भास्तु ऋजवो ऽमूलाः साग्राः पितृकार्ये ऽपि भवन्ति ब्राह्मणाश्च पितृस्थाने ऽपि युग्मा भवन्ति द्राक्षाः आमलकीफलानि च दक्षिणात्वेन दीयन्ते पितृणां नामगोत्रोच्चारणं नैव क्रियते किंतु तस्य स्थाने सर्वत्र नान्दीमुखा इत्युच्यते सर्वत्र मन्त्रान्ते वृद्धिरिति पदमुच्चार्यते तद् नान्दीश्राद्धं वृद्धिश्राद्धमिति चोच्यते ॥

३६१ आधानात्पूर्वेद्युर्दिने रात्रौ उदकशान्तिः प्रतिसरबन्धश्च क्रियते शुचिर्भूत्वा कर्म आधानाङ्गभूतत्वेन संकल्प्य गोमयेन गोचर्ममात्रं स्थलं उपलिप्य दर्भेण यज्ञियकाष्ठेन वा तूष्णीं भूमिमुद्धृत्य जलेन तूष्णीमवोक्ष्य तत्र पञ्चप्रस्थपरिमितव्रीहीणां तन्दुलानां वा स्थण्डिलं कृत्वा स्थण्डिलमध्ये प्रतीचीमारभ्य प्राचीपर्यन्तं मन्त्रेण दर्भेण लेखां कृत्वा स्थण्डिलोपरि दक्षिणभागे मन्त्रेण पूर्ववल्लेखां कृत्वा उत्तरभागे तथैव लेखां कृत्वा स्थण्डिलमध्ये दक्षिणां दिशमारभ्य उदीचीपर्यन्तं लेखां कृत्वा ऽप उपस्पृश्य

नैर्ऋतीं दिशमारभ्य वायवीपर्यन्तं लेखां मन्त्रेण कृत्वा आग्नेयीमारभ्य ऐशानीपर्यन्तं लेखां मन्त्रेण कृत्वा लेखाकरणं दर्भं यज्ञियकाष्ठं वा व्याहृतिमन्त्रेण उत्तरस्यां दिशि निरस्य स्थण्डिलाद्बहिः उत्तरतः प्रागग्रान् दर्भानास्तीर्य तेषु प्रोक्षणीमुदकुम्भं पञ्चप्रस्थयवपूर्णकांस्यपात्रे सूत्रद्वयं च सादयित्वा सर्वाणि पात्राणि दर्भैः प्रच्छाद्य पवित्रं तूष्णीं कृत्वा प्रोक्षणीपात्रमुत्तानं कृत्वा तत्र उदगग्रं पवित्रं निधाय उदकमानीय तूष्णीं त्रिरुत्पूय प्रोक्षणीं पवित्रेण प्रोक्ष्य उदकुम्भमुत्तानं कृत्वा पवित्रेण प्रोक्ष्य कांस्यपात्रस्थसूत्रद्वयं च प्रोक्ष्य उदकुम्भं सुगन्धिद्रव्येण गुग्गुल्वादिना धूपयित्वा स्थण्डिलोपरि प्रागग्रान् दर्भानास्तीर्य गन्धोदकेनाक्षतपुष्पैः फलैश्चावकीर्य तत्रोदकुम्भं निधाय तस्योपरि पवित्रमुदगग्रं निधाय उदकुम्भे उदकं मन्त्रेण पूरयति। उदकुम्भे गायत्रीमन्त्रेण यवाक्षततन्दुलानोप्य उदकुम्भस्य समन्तात् व्याहृतिमन्त्रेण पुष्पदूर्वाफलान्यवकीर्य उदकुम्भं दूर्वादर्भैः प्रच्छाद्य उदकुम्भस्य पुरस्तात् उदगग्रान् दर्भान् मन्त्रेण परिस्तीर्य दक्षिणतो व्याहृतिमन्त्रेण प्रागग्रान् पश्चिमतः उदगग्रान् मन्त्रेण उत्तरतः प्रागग्रान् मन्त्रेण परिस्तीर्य चतुरो ब्राह्मणान् चतसृषु पूर्वादिदिक्षु जपकर्तॄन् वृत्वा यजमानो ब्राह्मणाश्च दर्भहस्ताः दर्भाग्रैः कुम्भं स्पृशन्तो जपन्ति, शं न इत्यृचं गायत्रीं पच्छो ऽर्द्धर्चशः सर्वां च ततो वेदादीन् चतुरः ततः कृणुष्वेति सूक्तं रक्षोघ्नं मद्रे चिदित्यर्धर्चं इन्द्रो दधीच इत्यनुवाकं यत इन्द्रेति द्वे ऋचौ महां इन्द्रेति द्वे ऋचौ ऽग्नेत्वाः पुरःसद इति पञ्चपर्यायान् अग्नये रक्षोघ्ने इति पञ्च अ-

ग्निरायुष्मानिति पञ्च या वामिन्द्रेति चतस्रः यो वामिन्द्रेत्यष्टौ अग्ने यशस्विन्निति चतस्रः हिरण्यवर्णाः शुचय इति चतस्रः ऋताषाडृतेत्यनुवाकं नमो अस्तु सर्पेभ्य इति चतस्रः अयं पुरो हरीति पञ्च पर्यायान् आशुः शिशान इत्यनुवाकं शं च मइत्यनुवाकं ममाग्ने वर्च इत्यनुवाकं अग्नेर्मन्व इत्यनुवाकं समीची नामासीति षट् पर्यायान् हेतयो नाम स्थेत्यनुवाकं शतायुधायेति पञ्च भूतं भव्यं भविष्यदित्यनुवाकं चक्षुषो हेतिरित्यारभ्य भ्रातृव्यं पातयामीत्यन्तं प्राणो रक्षतीत्यनुवाकं सिंहे व्याघ्र इत्यनुवाकं अहमस्मीत्यनुवाकं ता सूर्या इत्यनुवाकं अग्निर्नः पात्वित्यनुवाकं ऋध्यास्मेत्यनुवाकं नवो नव इत्यनुवाकं अग्नये इत्यादीनुपहोममन्त्रान् दधिक्राव्ण इत्यृचं आपो हि ष्ठेत्यृचं यच्चिद्धि त इत्यृचं इमं म इत्यृचं पावमानीः उदुत्तममिति सूक्तं परि णो रुद्रस्येति सूक्तं ब्रह्म जज्ञानमिति ब्रह्मसूक्तं विष्णोर्नु कमिति विष्णुसूक्तं जातवेदस इति सूक्तं हिरण्यवर्णामिति श्रीसूक्तं तच्छंयोरित्यनुवाकं नमो ब्रह्मण इति मन्त्रं त्रिवारं जपन्ति ततः प्रणवेनोदकुम्भमुत्थाप्य प्रणवं त्रिरुच्चार्य पुनरुदकुम्भं तत्रैव स्थापयित्वा वृता ब्राह्मणाः सपत्नीकं यजमानं उदकुम्भोदकेन दर्भाग्रैः व्याहृतिभिः प्रोक्षन्ति इदं सर्वं कर्म उदकशान्तिरित्युच्यते ॥

३६२ अथ ब्राह्मणाः सूत्रद्वयमादाय नागेशं वासुकिं तत्र ध्यात्वाच्यम्बकमन्त्रेण त्रिवारं ऊर्ध्वं भस्मना सूत्रद्वयमालिप्य अग्निरायुष्मानिति मन्त्रेण यजमानस्य दक्षिणहस्तं गृहीत्वा बृहत्सामेति मन्त्रेण एकं सूत्रमपरं सूत्रं पत्न्या वामहस्ते बध्नीयुः बन्धनस्था-

ने यो ब्रह्मणेति मन्त्रेण भस्मना रक्षां कुर्युः यजमानः पूर्वस्यां दिशि जपकर्त्रे ब्राह्मणाय हिरण्यं दद्यात् दक्षिणस्यां दिशि जपकर्त्रे रजतं पश्चिमदिशि जपकर्त्रे कांस्यं उत्तरस्यां दिशि जपकर्त्रे वस्त्रं दद्यात् इदं कर्म प्रतिसरबन्ध इत्युच्यते ॥

३६३ बध्यमानं सूत्रद्वयं प्रतिसरपदवाच्यम् ॥

३६४ ततः प्रातःकाले एकां वंशतिदर्भाणां त्रीणि पिञ्जूलानि कृत्वा एकेन पिञ्जूलेन कण्ठमारभ्य मुखपर्यन्तं मार्जयेत् द्वितीयेन नाभिमारभ्य कण्ठपर्यन्तं मार्जयेत् तृतीयेन नाभेरधस्तात् गुल्फपर्यन्तं मार्जयेत् ततः पिञ्जूलानि प्रोक्ष्य उदीच्यां दिशि परित्यजेत् ततोऽप उपस्पृशति एतत्कर्म पवनमित्युच्यते ॥

३६५ सप्तानां दर्भाणां स्तबकः पिञ्जूलमित्युच्यते ॥

३६६ ततः आपो हि ष्ठेति तिसृभिर्ऋग्भिः प्रत्यृचं जलमाचामेत् एतत् मन्त्राचमनमित्युच्यते ॥

३६७ तत आत्मानं मन्त्रैर्मार्जयते ते च मन्त्राः दधिक्राव्ण इत्येका, यत्किं चेदमित्येका, कितवास इत्येका, हिरण्यवर्णा इति चतस्रः, पवमानः सुवरित्यनुवाकः, कया न इति तिस्रः, तरत्समन्दीति चतस्रः, समस्तव्याहृतिः, शं नो देवीरित्येका, एवं पत्न्यपि पवनादि कुर्यात् इदं मन्त्रमार्जनं मन्त्रप्रोक्षणमिति चोच्यते ॥

( शेषमग्रे )

॥ ओम् ॥

श्रीपतञ्जलये नमः ॥

# योगवार्तिकभूमिका ॥

अथ धर्मार्थकाममोक्षाणां नित्यनिरामयानन्दरूपत्वान्मोक्षस्यैव परमपुरुषार्थत्वं श्रुतिस्मृतिपुराणादिभिः प्रतिपाद्यते । स च स्वरूपमात्रेणावस्थानमेवेति च । तच्च नित्यसिद्धमपि स्वरूपं प्रकृतितो विविच्य ग्रहीतुमसमर्थानामविवेकिनामसिद्धवद्भाति । यतस्ते प्रकृतिगुणैराकुलेक्षणाः सन्त आत्मानं कर्तृत्वभोक्तृत्वादिभिर्विविधैः परधर्मैरेव प्रतिपद्यन्ते । न तान् शतान्यपि श्रुतिस्मृतियुक्तीनामात्मतत्त्वं ग्राहयितुं पारयन्ति । तानेवंविधान् विमर्शमात्रेणात्मस्वरूपमात्रमवगन्तुमशक्यं मन्यमानांस्तद्दूरणयोग्येनैवोपायान्तरेणोद्दिधीर्षुर्भगवान् पतञ्जलिः साङ्गोपाङ्गं योगमनुशासतीं चतुष्पादीं प्रणिनाय । तस्याश्चातिसङ्क्षिप्ततया समग्रशास्त्रप्रमेयग्रहणासमर्थान् जनानुपचिकीर्षुः परमकारुणिको भगवान् व्यासदेवो भाष्यमारचयांचकार । तदपि निगूढार्थातिप्रौढसङ्क्षिप्तोक्तिनिबद्धतया जनानां दुर्बोधमालोक्यानायासतो यावत्तदभिप्रायावगतये सकलतन्त्रस्वतन्त्रधिषणैः सांख्यप्रवचनभाष्यकारैर्विज्ञानभिक्षुभिः सविस्तरप्राञ्जलोक्तिमयं योगवार्तिकं नाम तस्य व्याख्यानमुपनिबबन्धे । तमिमं ग्रन्थं यथार्थभाष्यतात्पर्यप्रदर्शकं विविधशङ्कासमाधिघटितं परापरमतखण्डनमण्डनमण्डितं सांख्यसिद्धान्तातिव्युत्पादकं सकलविपश्चिज्जनविनोदकं चालोच्य काशिकराजकीयप्रधानपाठशालायां प्रधानाध्यक्षैः श्रीमद्डाक्तर जी, थिबो साहबैः सांख्याचार्यपरीक्षाविषयवर्गे सन्निवेशितमपि पुस्तकदौर्लभ्याद्वैपुल्येन पठनपाठनाद्यगोचरीभूतमिवालक्ष्य तत्पुस्तकवैपुल्यसंपत्तये तस्य मुद्रणमेव श्रेयो मन्यमानैरस्मन्महाशयैः पण्डितपत्रे तन्मुद्रणायाबां प्रावर्त्त्यावहि । ततश्चावामेकं पुरातनं वार्त्तिकपुस्तकमपरे च द्वे नवीने ग्रन्थान्तरे कथं चित्संपाद्य तैश्च महता परिश्रमेण पाठशाला-

पुस्तकं संशोध्य तत्रतत्र यथासम्भवमिलितान् पाठभेदान् प्रदर्शयन्तौ तन्मुद्रणमारभावहे। प्रार्थयावहे चादौ श्रीजगदीश्वरमावयोरिष्टसाधनेन परिश्रमं सफलीकर्तुं विदुषश्चास्मत्प्रमादतो यत्र कुत्रापि पतितानि स्खलितानि नौ बोधयितुम् ॥

१ जानुअरी १८८३ ईस्वी — रामकृष्णशास्त्री केशवशास्त्री च

॥ श्रीगणेशाय नमः ॥

॥ श्रीमद्रामकृष्णाभ्यां नमः ॥

यश्चिन्मात्ररसोऽपि नित्यविमलोपाधेर्गुणैरीश्वरो
हेयैः क्लेशमुखैर्गुणैर्विरहितो मुक्तः सदा निर्गुणः ॥
सोऽस्मान् बुद्धिगुणैः स्वयं निगडितान् स्वांशान् कृपासागरो
दीनान्मोचयतु प्रभुर्गुणमयं पाशं दहन् लीलया ॥ १ ॥
श्रीपातञ्जलभाष्यदुग्धजलधिर्विज्ञानरत्नाकरो
वेदव्यासमुनीन्द्रबुद्धिखनितो योगीन्द्रपेयामृतः ॥
भूदेवैरमृतं तदद्य मथितुं विज्ञानविच्चेरिह
श्रीमद्वार्त्तिकमन्दरो गुरुतरो मन्थानदण्डोऽर्प्यते ॥ २ ॥
सर्ववेदार्थसारोऽत्र वेदव्यासेन भाषितः ।
योगभाष्यमिषेणातो मुमुक्षूणामिदं गतिः ॥ ३ ॥
गङ्गाद्याः सरितो यद्वदब्धेरंशेषु संस्थिताः ।
सांख्यादिदर्शनान्येवमस्यैवांशेषु कृत्स्नशः ॥ ४ ॥

निर्विघ्नग्रन्थसमाप्तये योगप्रवर्त्तकमनन्तमीश्वरं स्मरन् शिष्याणां शास्त्रग्रहणानुष्ठानादावप्यप्रतिबन्धं तत एव प्रार्थयते । यस्त्यक्त्वेति । यः स्वस्यात्मरूपं शेषाख्यं त्यक्त्वा स्वांशैस्ततो विभक्तो भूत्वा लोकानुग्रहार्थं स-

त्वरामादिरूपेणाविर्भवति स वो युष्मान् शिष्यान् पालयेत् शास्त्रार्थग्रह-णादिप्रतिबन्धं निवारयत्वित्यर्थः। शेषं सुगमम् ॥ १॥ "अध्यात्मयोगाधिगमेन मत्वा देवं धीरो हर्षशोकौ जहाति" "यतो निर्विषयस्यास्य मनसो मुक्तिरि-ष्यते। अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा" "तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम्। एतद् ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तर" इत्यादिश्रुतिषु, "मुक्तिर्योगात्तथा योगः सम्यग्ज्ञानान्महीयते। तपस्विभ्योऽधिको योगी ज्ञा-निभ्यो ऽपि मतोऽधिक" इत्यादिस्मृतिषु च योगो मोक्षहेतुतया विहितः, तत्र योगः किंस्वरूपः किमुपायः केन वा द्वारेण ज्ञानमोक्षयोः कारणमित्यादिकं मु-मुक्षूणां विविदिषितं भवति, ब्रह्ममीमांसासांख्यादिषु च ज्ञानमेव विचा-रितं बाहुल्येन ज्ञानसाधनमात्रस्तु योगः सङ्क्षेपतः, ज्ञानजन्ययोगस्तु सङ्क्षेपतो ऽपि तेषु नोक्तोऽतोऽतिविस्तरेण द्विविधं योगं प्रतिपिपादयिषुर्भगवान् पतञ्जलिः शिष्यावधानायादौ योगानुशासनं शास्त्रमारभ्यतया प्रतिज्ञात-वान् ॥

## अथ योगानुशासनम् ॥ १ ॥

तदिदं सूत्रमारभ्य समग्रं शास्त्रं सर्वलोकहिताय भगवान् बाद-रायणो व्याचष्टे। अथेत्ययमधिकारार्थ इत्यादिना। अधिकारशब्दो योग-रूढतया आरम्भणएव मुख्य इति शास्त्रस्याधिकार्यत्वं मुख्यमेवास्ति। यत्र चार्थस्याधिकार्यत्वमुच्यते यथा अथैष ज्योतिरित्यादौ तत्राधिकार्य-शास्त्रविषयतया गौणं तदित्याशयः। एतेन शास्त्रस्यानधिकार्यत्वम-निरूप्यत्वादित्यपास्तं प्रकृतभाष्यविरोधादिति। प्रश्नाद्यर्थकत्वमथशब्दस्य किं कुत्रापि नास्तीत्याशङ्कानिरासायोक्तमयमिति। अधिकारार्थोऽधिकार-वाचक इत्यर्थः। अथशब्दस्य चोच्चारणमात्रेण मङ्गलत्वमपि बोध्यम्। शिष्ट-स्य शासनमनुशासनं तेन शास्त्रस्य गुरुमूलकतया सूत्रकारेण प्रामाण्यं दर्शितं "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन" इति योगियाज्ञवल्क्येन हिर-ण्यगर्भस्यादिगुरुत्वबोधनादिति। सूत्रवाक्यार्थमुपसंहरति, योगस्यानुशासनं शास्त्रमधिकृतं वेदितव्यमिति। शिष्यैरिति शेषः। वेदितव्यमितिपूरणेन सूत्रस्य शिष्यावधानार्थकत्वं सूचितं, योगस्य च फलं सूत्रभाष्ययोः स्थानेस्थाने

वक्ष्यमाणं मयोत्तरसूत्रावतारिकायामपि सङ्क्षेपादुच्यते । योगलक्षणपरतया द्वितीयसूत्रमवतारयिष्यति । तत्र युजसमाधाविति योगलक्षणस्य प्रसिद्धत्वा-ल्लक्षणान्तराकाङ्क्षैव नास्तीत्याशङ्क्य तस्यातिव्याप्तत्वेनादावपाकरोति । योगः समाधिः स च सार्वभौमश्चित्तस्य धर्म इति । युज समाधावित्यनुशास-नतः प्रसिद्धो योगः समाधिः चित्तवृत्तिनिरोधः स च सार्वभौमः सर्वासु व-क्ष्यमाणासु क्षिप्ताद्यवस्थासु साधारणश्चित्तस्य धर्मः स्वाभाविकः जलस्य द्रवत्ववत्, क्षिप्ताद्यवस्थायामपि हि यत्किंचिद्वृत्तिनिरोधोऽस्त्येवेति तथा चालक्ष्यास्ववस्थासु तल्लक्षणमतिव्याप्तमिति शेषः । कास्ताः सर्वाः चित्तभू-मय इत्याकाङ्क्षायामाह । क्षिप्तमित्यादि । क्षिप्तं रजसा विषयेष्वेव वृत्तिमत् । मूढं तमसा निद्रादिवृत्तिमत् । क्षिप्ताद्विशिष्टं विक्षिप्तं सत्त्वाधिक्येन समा-दधदपि चित्तं रजोमात्रयान्तरान्तरा विषयान्तरवृत्तिमत् । एकस्मिन्नेव विषये अग्रं शिखा यस्य चित्तदीपस्येत्येकाग्रं विशुद्धसत्त्वतयैकस्मिन्नेव विषये वक्ष्य-माणावधीकृतकालपर्यन्तमचञ्चलं निवातस्थदीपवत् । तथा च क्षिप्तादि-त्रयेऽपि किंचिदैकाग्र्यसत्त्वेऽपि तत्र नातिप्रसङ्गः । निरुद्धं च निरुद्धसकलवृत्तिकं संस्कारमात्रशेषमित्यर्थः । रजोधर्मस्य रागादेः प्रतिघातादेव लोकानां तमो-धर्मो विषादादिर्दृश्यत इति क्षिप्तात्पूर्वं मूढस्योपन्यासः । उक्तातिव्याप्तिं प्रतिपादयितुमुक्तभूमिषु लक्ष्यालक्ष्यविभागं करोति । तत्र विक्षिप्तइत्यादिना । तत्र तासु पञ्चसु मध्ये विक्षिप्ते चेतसि वर्त्तमानः समाधिरल्पो बहुल-विक्षेपशेषीभूतत्वान्न योगपक्षे योगमध्ये प्रविशति क्लेशहान्यहेतुत्वात् सुतरां तु क्षिप्तमूढयोश्चित्तयोर्वर्त्तमानौ समाध्यभ्यासावित्याशयः । अतो न क्षिप्तमूढभूम्योरलक्ष्यत्वाप्रतिपादनेन न्यूनतेति । विक्षिप्तमुखेनाद्यभूमित्र-यस्यालक्ष्यत्वमुक्त्वान्त्यभूमिद्वयमेव लक्ष्यमित्याह । यस्त्वेकाग्रइति । यस्तु समाधिरेकाग्रे चेतसि वर्त्तमानोऽर्थं ध्येयं वस्तु सद्भूतं परमार्थभूतं प्रकर्षेण द्योतयति साक्षात्कारयति ततश्च क्लेशानविद्यादीन् पञ्च क्षिणोति ततोऽपि च कारणोच्छेदाद्धर्माधर्मरूपाणि बन्धनानि बुद्धिपुरुषयोर्बन्धकारणानि श्ल-थयति अदृष्टोत्पादनाक्षमाणि करोति तथा निरोधमसंप्रज्ञातयोगमभिमुखं प्रत्यासन्नं करोति । परवैराग्यजननेनेति शेषः । स समाधिः संप्रज्ञातो योग

इति कथ्यत इत्यर्थः । सम्यक् प्रज्ञायते साक्षात्क्रियते ध्येयमस्मिन्निरोधविशेषरूपे योगइति संप्रज्ञातो योगः । यद्यपि समाधिशब्देनैकाग्रतातिशयरूपं निरोधद्वयरूपयोगद्वयस्याङ्गमेव परिभाषिष्यते तथापि योगद्वयमङ्गाङ्गिनोरभेदविवक्षयैव समाधिशब्देनोक्तमेवमुत्तरोत्तरसूत्रेऽपि बोध्यम् । स च संप्रज्ञातश्चतुर्विध इत्याह । स चेति । न च वितर्कानुगतादित्रिके साक्षात्कारजनकत्वादिकं साक्षान्नास्ति अविद्यालेशसंपर्कादिति वाच्यम् । सवितर्कादिक्रमेणैव साक्षात्कारवृद्ध्या चरमभूमिकायामृतंभरप्रज्ञोदयेन भूमिकाचतुष्टयएव साक्षात्कारसंबन्धादिति । निरुद्धभूमेरपि लक्ष्यत्वमाह । सर्ववृत्तीति । संप्रज्ञातकालीना साक्षात्काररूपिणी या वृत्तिः तस्या अपि वक्ष्यमाणपरवैराग्येण निरोधे जायमाने त्वसंप्रज्ञातयोग इत्यर्थः । वृत्तिनिरोधश्च चित्तस्य वृत्तिसंस्कारशेषावस्था अभावस्याधिकरणावस्थाविशेषमात्ररूपत्वात् निरुध्यन्तेऽस्यामवस्थायामिति व्युत्पत्तेर्वा, सा चावस्था संस्कारमात्रैः परिणामधारा । निरोधकाले संस्कारतारतम्यरूपस्यैव चित्तपरिणामस्य सूत्रभाष्याभ्यां वक्ष्यमाणत्वादिति । ननु वृत्तिनिरोधो वृत्त्यभावमात्रमेकाग्रताविशेषो वा निरोधस्याभावमात्रत्वे वक्ष्यमाणसंस्कारजनकत्वानुपपत्तेरेकाग्रतामात्ररूपत्वे समाधिरूपादङ्गात्संप्रज्ञाताच्च भेदानुपपत्तेः । "उल्काहस्तो यथा कश्चित् द्रव्यमालोक्य तास्त्यजेत् । बोधेन ज्ञानमालोक्य तथा बोधं परित्यजे"दित्यादिस्मृतिषु 'यावद्बुद्धि गतं क्षय'मिति पूर्वोक्तश्रुतौ चासंप्रज्ञातस्य सकलवृत्तिशून्यत्वश्रवणाच्च । ननु संप्रज्ञातासंप्रज्ञातयोर्योगयोर्निरोधरूपयोः किं प्रयोजनं 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्याते'रितिसूत्रेण योगाङ्गस्यैव ज्ञानहेतुताया वक्ष्यमाणत्वात् संप्रज्ञातयोगकाले ज्ञानस्योत्पत्तेरेव शास्त्रेष्ववगमात् न तु तद्धेतुतायाः, एककालकत्वेन हेतुहेतुमद्भावासंभवाच्च । अस्तु वा विषयान्तरसंचाराख्यप्रतिबन्धनिवृत्तिरूपतया ज्ञानहेतुत्वं संप्रज्ञातयोगस्य 'क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्ति'रित्यागामिसूत्राच्च न तु असंप्रज्ञातयोगस्यापि तस्य ज्ञानजन्यत्वात्, न च ज्ञानोत्पत्त्यनन्तरं मोक्षायान्यत्साधनमपेक्षणीयं 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इत्यादिश्रुतिभिरन्यनिरपेक्षज्ञानस्य मो-

त्तहेतुत्वसिद्धेरविद्याकामकर्मादिनिवृत्तौ हेत्वभावेन पुनः संसारानुपपत्तेश्च । अत्रोच्यते । ज्ञाने जाते ऽपि प्रारब्धकर्मणा देहधारणस्यावश्यकत्वेन तदानीमपि बाह्याभ्यन्तरवृत्तिभिर्यत् दुःखं न जायते एतदप्यन्ततो योगद्वयस्य फलमस्ति । तथाहि वक्ष्यति भाष्यकारः सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिका अत एताः सर्वा वृत्तयो निरोद्धव्या इति । किं च ज्ञानस्य यथा कर्मक्षयहेतुत्वमस्ति तथा योगस्यापि, "विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि । प्राप्नोति योगी योगाग्निदग्धकर्मचयोचिरात्" इत्यादिवाक्यशतेभ्यः । तथा च कर्मक्षयद्वारा ज्ञानस्येवासंप्रज्ञातयोगस्यापि मोक्षहेतुत्वं सिद्धं तत्र चासंप्रज्ञातयोगेनाखिलसंस्कारदाहकेन प्रारब्धकर्माप्यतिक्रम्यतइति ज्ञानाद्विशेषः । ज्ञानस्य हि प्रारब्धनाशकत्वे बाधिकास्ति 'तस्य तावदेव चिर'-मित्यादिश्रुतिर्जीवन्मुक्तिश्रुतिस्मृतयश्च । योगस्य प्रारब्धनाशकत्वे बाधकं नास्ति प्रत्युत दग्धकर्मचयोचिरादित्येव स्मर्यते, अतः प्रारब्धमपि कर्म कर्मविपाकोक्तप्रायश्चित्तादिवदेवातिक्रम्य झटिति मोचनमेव योगस्य फलम् । अन्यच्च योगद्वयेनाखिलसंस्कारक्षये भोगसंस्काराख्यसहकार्यभावात् प्रारब्धं कर्मापि यत्फलाक्षमं भवति इदमपि योगफलम् । तदुक्तं मोक्षधर्मे, 'नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बल'मिति । बलं प्रारब्धस्याप्यतिक्रमेण स्वेच्छया शीघ्रमोक्षहेतुः । अपि च वृत्तिनिरोधात्मको योग एव दुःखनिवृत्त्यात्मकमोक्षे साक्षाद्धेतुः पुरुषे दुःखस्य चित्तवृत्त्यौपाधिकत्वात् उपाधिनिवृत्तिश्चोपाधिकनिवृत्तौ चरमकारणमतो ज्ञानेन न योगस्यान्यथासिद्धिः ज्ञानवैराग्यकर्मक्षयादीनां वृत्तिनिरोधाख्यचरमकारणद्वारैव दुःखात्यन्तोच्छेदहेतुत्वात् वृत्त्यत्यन्तनिरोधस्तु चरमासंप्रज्ञाते भवति यत्र संस्कारस्यात्यन्तक्षयेण चित्तस्य विलयान्मोक्षो भवति । तथा च द्वारद्वारिभावेनापि ज्ञानस्येव संप्रज्ञातयोगस्यापि मोक्षहेतुत्वं सिद्ध,मसंप्रज्ञातयोगस्य च साक्षान्मोक्षहेतुत्वं 'तदा द्रष्टुः स्वरूपेऽवस्थान'मिति सूत्रकारः स्वयं वक्ष्यति 'मुक्तिर्हित्वान्यथाभावं स्वरूपेण व्यवस्थिति'रित्यादिवाक्यैरात्यन्तिकस्य स्वरूपावस्थानस्यैव मोक्षत्वादिति दिक् ॥ तदेवं चित्तभूमिषु लक्ष्यालक्ष्यविवेकपूर्वकं प्रसिद्धस्य योगलक्षणस्यातिव्याप्तिं प्रदर्श्य योगलक्षणाकाङ्क्षा उपपादिता, अतः

परं लक्षणपरतयोत्तरसूत्रमवतारयति । तस्य लक्षणाभिधित्सयेति । तस्य द्विविधस्य योगस्य, उक्तातिव्याप्तिनिराकरणान्यथानुपपत्त्या सूत्रद्वयेनैव लक्षणसमाप्तिर्भविष्यतीति सूचयितुमभिधित्सयेत्युक्तमन्यथा हि तस्य लक्षणसूत्रं प्रवर्त्तते इत्येतावन्मात्रमुच्येत ॥

## योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

चित्तमन्तःकरणसामान्यमेकस्यैवान्तःकरणस्य वृत्तिभेदमात्रेण चतुर्धात्र दर्शने विभागात् तस्य यावल्लक्ष्यमाणा वृत्तयस्तासां निरोधस्तासां लयाख्योऽधिकरणस्यैवावस्थाविशेषो ऽभावस्यास्मन्मते ऽधिकरणावस्थाविशेषरूपत्वात्, स योग इत्यर्थः । नन्विदं लक्षणं संप्रज्ञातस्याव्यापकं तत्र ध्येयाकारवृत्तिसत्त्वादित्याशङ्क्य भाष्यकार आह । सर्वशब्देति । सर्ववृत्तिनिरोध इत्यवचनादित्यर्थः । नन्वेवं पूर्वोक्तातिव्याप्तिःक्षिप्तादिष्वपि यत्किंचिद्वृत्तिनिरोधादिति चेन्न । तदा द्रष्टुः स्वरूपे ऽवस्थानमिति वक्ष्यमाणसूत्रसाहित्येनैवास्य लक्षणत्वात् । तथा च द्रष्टृस्वरूपावस्थितिहेतुश्चित्तवृत्तिनिरोधः क्षिप्ताद्यवस्थासु नास्तीति नातिव्याप्तिः, संप्रज्ञातस्य च स्वरूपावस्थितिहेतुत्वमसंप्रज्ञातद्वारास्त्येवेति । परे तु क्षिणोति च क्लेशानिति पूर्वभाष्यानुसारेण क्लेशकर्मादिपरिपन्थित्वं निरोधविशेषणं पूरणीयं तथाच क्लेशकर्मादिपरिपन्थित्वे सति चित्तवृत्तिनिरोधत्वं योगद्वयसाधारणं लक्षणमित्याहुः । अस्य च लक्षणस्य क्षिप्तादिभूमित्रये ऽतिव्याप्तिर्नास्तीत्यत्र हेतुं क्रमेण प्रतिपादयति । चित्तं हीत्यादिना । प्रख्या तत्त्वज्ञानमनेन सर्वे सात्त्विका गुणा उपलक्षिताः । प्रवृत्तिः कर्म, अनेन सर्वे राजसा गुणा ग्राह्याः । स्थितिर्वृत्त्याख्यगतिशून्यता निद्रेति यावत्, अनेन सर्वे तामसा गुणा ग्राह्याः ॥ एते क्रमात् सत्त्वरजस्तमआख्यानां द्रव्याणां धर्माः पराश्रितत्वात् रूपादिवद्गुणा इत्युच्यन्ते तदाश्रयास्तु सत्त्वादिद्रव्याणि रज्वारम्भकतन्तुवदेव गुणा इत्युच्यन्ते, तथाच प्रख्यादिस्वभावकत्वात् चित्तं त्रिगुणं सत्त्वादिगुणत्रयनिर्मितं रज्जुवदित्यर्थः । ततः किमित्यतआह । प्रख्यारूपं हीति । हिशब्दो वाक्यालङ्कारे अवधारणे वा । चित्तसत्त्वमिति चित्तस्य

सत्त्वप्राधान्यप्रतिपादनाय पुनरुक्तं, प्रख्यारूपमिति च तेजः सत्त्वव्यावर्त्तना-येोक्तं, तथा च प्रख्यास्वभावं चित्तरूपं सत्त्वं स्वोपसर्जनभूताभ्यां रजस्तमो-भ्यां संसर्गेण क्षिप्तावस्थायामणिमाद्यैश्वर्ये शब्दादिविषये चानुरक्तं भवती-त्यर्थः । अतः क्षिप्तावस्थस्य वृत्तिनिरोधस्य स्वरूपावस्थानाहेतुत्वात् रागादि-क्लेशापरिपन्थित्वाद्वा न तत्रातिव्याप्तिरिति भावः । क्षिप्तावस्थायामतिव्या-प्तिं परिहृत्य मूढावस्थायामपि तां परिहरति । तदेव तमसेति । उपगमुन्मुखं तत्प्रियमित्यर्थः । भावस्तु पूर्ववत् । विक्षिप्तावस्थायामतिव्याप्तिं परिहरति । तदेव प्रक्षीणेति । मोहस्तमोद्रव्यं कार्यकारणाभेदात् तदेव दर्पणस्य मलव-च्चित्तसत्त्वस्यावरणं प्रक्षीणं यत्र तत्प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानं सर्वविषयाकारवृत्तिमद् एवंभूतं हिरण्यगर्भादीनां चित्तं रजोलेशेन संभेदा-द्विक्षिप्तं सद् धर्मादिचतुष्टयप्रियं भवतीत्यर्थः । अत्रापि भावः पूर्ववदेव बोध्यः । अवस्थात्रयेतिव्याप्तिं परिहृत्य एकाग्रनिरुद्धावस्थयोर्लक्ष्ययोर्लक्षणं क्रमेण योजयति । तदेव रजोलेशेनेत्यादिना । विक्षेपहेतुना रजोलेशेनापि मलेनापेतमत एव स्वरूपप्रतिष्ठं स्वाभाविकेन रूपेण प्रसादादिना सम्य-गवस्थितं निर्मलदर्पणवत् अतश्च सत्त्वपुरुषयोर्बुद्ध्यात्मनोर्विवेकख्याति-मा तन्मात्रवृत्तिकं सत् धर्ममेघध्यानमात्रप्रियं भवति न तु क्लेशप्रियैश्वर्य-प्रियमित्यर्थः । धर्ममेघध्यानं किमित्याकाङ्क्षायामाह । तत्परमिति । तद्धर्ममे-घाख्यं ध्यानं परमं प्रसंख्यानं तत्त्वज्ञानं विवेकख्यातेरेव पराकाष्ठेति योगिनो वदन्तीत्यर्थः । तथा चेयमेकाग्रता सत्त्वपुरुषान्यताख्यातिरूपिणी द्रष्टृस्वरू-पावस्थाने हेतुः क्लेशकर्मादिपरिपन्थिनी चेति योगलक्षणाक्रान्तेतिभावः । धर्म-मेघसमाधिश्च सूत्रकारेणैव वक्ष्यते । यद्यप्यस्मितानुगत एव संप्रज्ञातयोगे सत्त्वपुरुषान्यताख्यातिरस्ति न वितर्कानुगतादौ तथाप्यनेनैव तेष्वपलक्ष-णीया एतदङ्गभूतत्वात्तेषामिति निरुद्धावस्थायामपि लक्षणं योजयन्नेव सकारणस्य निरोधस्य स्वरूपमाह । चितिशक्तिरित्यादिना । संप्रज्ञातकाले संसारहेतुत्वादिदोषदर्शनादेवेतरवृत्तिनिरोधो जातस्तस्माच्च सिद्धायां विवेकख्यातिनिष्ठायां विवेकख्यातेरप्यनात्मत्वसाक्षात्करणात् तत्फलसिद्धे-श्च तत्रापि वैराग्यं भवति ततः सर्ववृत्तिनिरोध इति प्रक्रिया । तत्र यादृशी

विवेकख्यातिनिष्ठा विवेकख्यातिवैराग्ये हेतुस्तामादौ दर्शयति। ख्यातिरितीत्यन्तेन। चितिशक्तिः पुरुषाख्या न परिणामिनी, पूर्वधर्मापाये धर्मान्तरोत्पत्तिः परिणामस्तद्रहिता कूटस्थनित्या परमार्थसत्येति यावत्। लोकेऽर्थप्रकाशनरूपे फलएव चैतन्यशब्दः प्रयुज्यते चैतन्यफलोपधानं च न सर्वदा सर्वपुरुषेस्तीत्याशयेन शक्तिपदोपादानं, तथाच शक्तिरूपेणावस्थिता चितिरित्यर्थः। चितिश्च न गुणः किं तु प्रकाशस्वरूपं द्रव्यमिति 'द्रष्टा दृशिमात्र' इति सूत्रे विस्तरतः प्रतिपादयिष्यामः। यतोऽपरिणामिनी अत एव चितिशक्तिरप्रतिसंक्रमाऽसंचारा, यथा बुद्धिर्विषयं गच्छति तद्ग्रहणार्थं नैवं चितिरक्रियत्वात्। अथ वा नास्ति प्रतिसंक्रमः सङ्गो विषयेषु यस्या इत्यप्रतिसंक्रमा निर्लेपेति यावत्। नन्वपरिणामित्वे चात्मनो विषयाकारत्वाभावात् कथंविषयस्फुरणं तत्राह। दर्शितविषया, दर्शितो बुद्ध्या निवेदितो विषयो यस्यै इति विग्रहः। विषयैः सह बुद्धिवृत्तिश्चितौ प्रतिबिम्बिता सती भासतइति भावः। वृत्तिसारूप्यमितरत्रेति सूत्रेचैतद्व्यक्तं भविष्यति। यतो ऽपरिणामिनी अतएव शुद्धानन्ता च सुखदुःखमोहाद्यात्मकाशुद्धिरहिता पूर्णा च, उक्ताशुद्धेः परिणामरूपत्वात् सक्रियस्यैव परिच्छिन्नत्वाच्चेति। इयं विवेकख्यातिः धर्मधर्म्यभेदात्तद्वती वृत्तिः सत्त्वगुणात्मिका सत्त्वगुणस्य कार्या अतश्चितिशक्तितो विपरीता परिणामिनी स्वयमेव विवेकाकारिणी प्रतिसंक्रमवती दीपशिखावत् विषयेषु सर्पणात्तथा जडा तथा सुखदुःखाद्यशुद्धिमती परिच्छिन्ना च इत्यतोऽनात्मत्वादिदोषदर्शनात् तत्फलसिद्धेश्च विवेकख्यात्यां विरक्तं प्रत्युत्पन्नालंप्रत्ययं चित्तं तामपि ख्यातिं निरुणद्धि आवृणोति विलापयतीति यावत्। परवैराग्येण हेतुना चित्तस्य सा वृत्तिः स्वयमेव विलीयते यथा निद्रादोषेण सुषुप्तौ जाग्रदादिवृत्तिरिति शर्करास्वादेनैव गुडदोषा अभिव्यज्यन्त इत्यतो विवेकख्यातेर्दोषदर्शने पुरुषगुणदर्शनमुपयुज्यत इति भावः। तथा यावद्वृत्तिदोषालिप्तत्वेन वृत्तिवैधर्म्येण वृत्तिभेदत आत्मा न दृश्यते तावद्दोषदर्शनेऽपि आत्मत्वभ्रमात् वृत्तिवैराग्यं न घटते आत्मत्वेनैव परमप्रियत्वात्, अत आत्मवृत्त्योरुभयोरेव गुणदोषाभ्यां विविच्य दर्शनं वृत्तिवैराग्ये हेतुरित्याशयः।

तदवस्थं निरोधावस्थं चित्तं संस्कारोपगं संस्कारमात्रानुसारि संस्कारमात्र-रूपेण प्रशान्तवाहि भवति सोयं प्रशान्तवाहिता स पूर्वोक्तो निर्बीजः समाधिः निरोधयोगो न किंचित्तत्र योगे ज्ञायते इति विग्रहेणासंप्रज्ञात-नामा चेति वाक्यार्थः असंप्रज्ञातयोगे चित्तबीजस्य संस्कारस्य तत्त्व-ज्ञानजन्यपर्यन्तस्याशेषतो दाहान्निर्बीजसंज्ञा तस्येति भावः। बीज-दाहादेव चास्य निरोधस्य स्वरूपावस्थितिहेतुतया क्लेशकर्मादिप-रिपन्थितया च लक्षणसङ्गतिरित्याशयः। सुषुप्तौ च निद्राख्यचि-त्तवृत्तिसत्त्वान्नासंप्रज्ञातलक्षणातिव्याप्तिस्तत्कालीनविरोधस्य क्लेशादिपरि-पन्थित्वाभावाच्च। एतेन यदाधुनिकवेदान्तिब्रुवा असंप्रज्ञातेऽपि निर्वि-कल्पमात्मज्ञानं स्वरूपसद्बुद्धिवृत्तिरूपं तिष्ठतीतिवदन्ति तदप्रामाणि-कत्वेनैतद्भाष्यविरोधेन चोपेक्षणीयम्। "युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि। तन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि संत्यजेदि"ति मार्कण्डेय-पुराणादौ ऐश्वरयोगेऽपि वृत्तिशून्यत्वावगमाच्च। निर्विकल्पं त्वात्मज्ञानं संप्रज्ञातकालएव भवति शब्दार्थज्ञानविकल्पशून्यस्य संप्रज्ञातकालीनज्ञान-स्यैव निर्विकल्पकत्वस्य लयस्य मानत्वात्। योगद्वयमुपसंहरति। द्विविध इति ननु चित्तवृत्तिनिरोधे कः पुरुषार्थ इत्याकाङ्क्षया योगलक्षणपूरणाय च प्रव-र्त्तमानं योगस्य फलप्रतिपादकं सूत्रमधिकप्रश्नमुखेनोत्थापयति प्रसङ्गादा-त्मनः कौटस्थ्यमपि प्रतिपादयितुम्। तदवस्थइति। ननु असंप्रज्ञातावस्थे चेतसि सति बुद्धिबोधात्मा बुद्धिविषयकबोधस्वरूपो बुद्धिसाक्षी पुरुषः किंस्वभावः केन रूपेण तिष्ठति किं व्युत्थानइव तदानीमपि प्रकाशरूप एव तिष्ठति वृत्त्याख्यदृश्याभावादेव तु न पश्यति अथवा काष्ठवदप्रकाश-रूप एव आत्मा तदा तिष्ठति व्युत्थानकाले तु निमित्तविशेषात् प्रकाश-रूपेण परिणमते किं वा दशात्रये दीपवत्पश्यतीत्यर्थः॥

(शेषमग्रे)

# ॥ माधवीयधातुवृत्तिः ॥

(Continued from page 624. Vol. IV.)

मुद हर्षे ॥ मोदते । मोदेते । मोदसे । मोदे । लघूपधत्वाद्गुणः । मुमुदे । मुमुदाते । मुमुदिषे । मुमुदिवहे । 'असंयोगाल्लिट्कि'दिति कित्त्वान्न गुणः । मोदिता । मोदिष्यते । मोदताम् । अमोदत । मोदेत । आशिषि । मोदिषीष्ट । अमोदिष्ट । अमोदिष्यत इत्यादि ॥ भावे मुद्यते । अमुद्यत । मुद्येत । अमोदि । शेषं कर्तृवत् ॥ मुमुदिषते, मुमोदिषते । 'रलो व्युपधाद्धलादेः संश्च' । रलन्ताद्धलादेरुकारेकारोपधात् परौ सेटौ क्त्वासनौ वा कितौ भवत इति कित्त्वपक्षे न गुणः । मुमुदिषां चक्रे । मुमोदिषां चक्रे इत्युदाहार्यम् ॥ मोमुद्यते । मोमुदां चक्रे । मोमुदितेत्यादि । अत्रार्धधातुके यलोपाल्लोपयोर्लघूपधगुणो न भवति । 'न धातुलोप आर्धधातुके'इति धात्वेकदेशलोपनिमित्तार्धधातुकनिमित्तयोर्गुणवृद्ध्योर्निषेधाद् अचः परस्मिन् पूर्वविधावित्यल्लोपस्य स्थानिवत्त्वाद्वा । मोमोत्ति । मोमुदीति । मोमुत्तः । मोमुदति । मोमोत्सि । मोमुदीषि । मोमोद्मि । मोमुदीमि । मोमुद्मः । यङ्लुको ऽनैमित्तिकत्वान्न धातुलोप इति निषेधो न भवति । ईटि तु 'नाभ्यस्तस्याचि पिति सार्वधातुके'इति निषेधः । मोमोदां चकार । मोमोदिता । मोमोदिष्यति । मोमोत्तु । मोमुत्तात् । मोमुदीतु । मोमुद्धि । हेरपित्त्वान्न गुणः । मोमुदानि । मोमुदाव । आटश्च जादिपित्सार्वधातुकत्वान्नाभ्यस्तेति गुणनिषेधः । लङीडभावपक्षे तिप्सिपोर्हल्ङ्यादिलोपे 'वावसान'इति पक्षे चर्त्वम् । सिपि तु 'दश्चे'ति वा रुत्वमपि । अमोमोत् । अमोमोद् । अमोमुत्ताम् । अमोमोत् । अमोमोद् । अमोमोः । अमोमुदम् । ईट्यमोमुदीत् । अमोमुदीः । मोमुद्यात् । आशिषि । मोमुद्यास्ताम् । यासुटो ङित्त्वकित्त्वाभ्यान्न गुणः । अमोमोदीत् सिज्लोपस्यासिद्धत्वाद्वा प्रत्ययलक्षणेन वा गुणः । अमोमोदिष्टाम् । हलन्तलक्षणा वृद्धिर्नेटीति निषिध्यते । अमोमोदिष्यदित्यादि । मोदयति । मोदयां चकारेत्यादि पूर्ववत् । लुङ्यमूमुदत् । 'दीर्घो लघो'रिति दीर्घः ।

मुदित्वा । मोदित्वा । उक्तः क्त्वविकल्पः । मुदितमनेन । मोदितमनेन । निष्ठेति भूते यः क्तः स तयोरेव कृत्येत्युक्तनियमादकर्मकादस्माद् भावे, प्रमुदितमनेन । प्रमोदितमनेन । प्रमुदितः । प्रमोदितः । अत्रादिक्रियालक्षणस्य भूतत्वाश्रये निष्ठेति क्तः । स चा'दिकर्मणि क्तः कर्त्तरि चे'ति भावकर्त्रोर्द्वयोरपि भवति । प्रमुदितवान् । प्रमोदितवान् । 'उदुपधाद्भावादिकर्मणोरन्यतरस्या'मिति सेटो निष्ठायाः पक्षे क्त्वनिषेधाद् गुणः । भावादिकर्मभ्यामन्यत्र मुदितो देवदत्तः मुदितवानित्येव । धौव्यार्थत्वात्कर्त्तरि क्तः । मुदितवानित्यत्रा'त्वसन्तस्य चाधातो'रित्यात्वं तस्याधातोरसन्तस्य चोपधायाः संबुद्धिवर्जिते सौ विहिताद्दीर्घादनन्तरं क्तवतोरुदित्त्वेन नुमि हल्ङ्यादिसंयोगान्तलोपौ । पूर्वं नुमि न दीर्घस्य प्रसङ्गः उपधाभावात् । न च संयोगान्तलोपादनन्तरमुपधात्वे भूतपूर्वगत्याऽत्वन्ताश्रयस्य दीर्घस्य प्रसङ्गः । नापि नान्तत्वेन सर्वनामस्थानइति दीर्घस्य । यतस्तयोः संयोगान्तलोपो ऽसिद्धः । मोदनः । युच् । मुत् । संपदादिभ्यः क्विबिति स्त्रियां क्विप् । मुदिरः । इषिमदीत्यादिना किरच् । मुद्गः । मुदिग्रोर्गग्गाविति गक् । क्त्वान्न गुणः । मुद्गेन संसृष्टं मौद्गम् । 'मुद्गादण्'इति तृतीयान्तादस्मात्संसृष्टेऽण् प्रत्ययः । मुद्रा । स्फायितञ्चीत्यादिना रक् । संसर्गार्थोयं चुरादौ ॥ १६ ॥

दद दाने ॥ किं चिदुद्दिश्यापुनर्ग्रहणाय स्वीयत्यागो दानम् । ददते । ददसे । ददे । ददहे । दददाते । दददिषे । ददहे । न शसददेत्येत्वाभ्यासलोपनिषेधः । ददिता । ददिष्यते । ददताम् । अददत । ददेत । आशिषि । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ कर्मणि । दद्यते । दद्यताम् । अदद्यत । दद्येत । अदादि, शेषं कर्तृवत् ॥ णिद- दिषते ॥ दादद्यते । दाददीति । दादत्ति । दादयते । शेषं मुदिवज्ज्ञेयम् ॥ १७ ॥

ष्वद स्वर्द आस्वादने ॥ संवरणइति क्षीरस्वामी । आस्वादनमनुभवः । अत्रायं सकर्मकः स्वदन्ति देवा उषा निहव्येति दर्शनात् । छान्दसं परस्मैपदम् । तथा स्वादनइति ण्यन्तेनार्थनिर्देशाच्च सकर्मकोऽयम् । यद्वक्ष्यति चुरादावास्वादने सकर्मक इति अस्यार्थ-

स्तत्र प्रपञ्चयिष्यते । यदायमभिकार्थो धातव इति रुचौ वर्त्तते तदाऽकर्मकः । श्राद्यः षोपदेशः । तदुक्तं भाष्ये । अजदन्त्यपराः सादयः षोपदेशाः स्मिङ्स्विदिस्वादिस्वञ्जिस्वपयश्चेति । प्रायेणाय-माङ्पूर्वः । आस्वदते रसम् । सस्वदितेत्यादि ददिवत् । रुच्यर्थत्वे खल्वपि । दधि स्वदते देवदत्ताय । 'रुच्यर्थानां प्रीयमाण' इति तर्प्यमाणा-स्यैषां प्रयोगे संप्रदानत्वाद्देवदत्ताच्चतुर्थी । अन्यकर्तृकोऽभिलाषो रुचि-रिति वृत्तिः । अत्र हरदत्तः । योऽभिलाषस्याश्रयः प्रीयमाणः ततोऽन्यक-र्तृक इत्यर्थः । कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्त्ता भवति । यावता यदाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्त्ता नेदं कर्तृलक्षणं किं तर्हि स्वातन्त्र्यमेव तच्च क्व चिद्वास्तवं क्व चिद्वैवक्षिकम् । तत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयद् दधि तत्र कर्त्तेति गीयतइति । अत्र 'सात्पदाद्योरिति' सातिप्रत्ययपदाद्योः सकारस्य षत्वनिषेधादिणः परत्वेपि न षत्वम् । कर्मादौ स्वद्यतइत्यादि, सिस्वदिषते 'स्तौतिण्योरेव षण्यभ्यासादि'ति नियमाच्च षत्वम् । अभ्यासस्यानिमित्तादुत्तरस्या'देशप्र-त्यययो'रिति षत्वं, कृतषत्वे सति यदि भवति स्तौतिण्यन्तानामेवेति सूत्रार्थः । सास्वद्यते । सास्वदीति । सास्वत्ति । स्वादयति । स्वादयते । असिस्वदत् । शेषं पूर्ववत् । ण्यन्तात्सनि स्तौतिण्योरेवेति नियमात् षत्वे प्राप्ते तदपवादः 'सः स्विदिस्वदिसहीनां चे'ति सकारो विधीयत-इति सिस्वादयिषतीति भवति । ये त्वमुं दन्त्यादिं पठन्ति । तेषामिदं सत्ववचनं कथमर्थवदिति तएव प्रष्टव्याः । स्वर्दते । सस्वर्दे इत्यादि स्व-दिवत् । अजदन्त्येति षोपदेशलक्षणं केवलदन्त्यविषयमिति दन्त्योष्ठपरोयं न षोपदेशः । अत एव दन्त्योष्ठपराः ष्विष्क्रादयः स्वदीत्यादिना पुनः पठ्यन्ते । स्वादुः । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युण्प्रत्ययः । स्वाद आस्वादनइत्यत्रैवार्थे ॥ १९ ॥

उर्द माने क्रीडायां च ॥ क्रीडायामकर्मकः । चकारादास्वादने । इह मानं सुखमिति संमतायाम् । ऊर्दते । ऊर्दां चक्रे । ऊर्दिता । ऊर्दिष्यते । ऊर्दताम् । और्दत । ऊर्देत । आशिषि । ऊर्दिषीष्ट । और्दिष्ट । और्दि-

ष्यते । 'उपधायां चे'ति धातोरुपधाभूतरेफात् पूर्वत्वादिको दीर्घः सर्वत्र । यथायोगं भावकर्मकर्मकर्तृष्वूर्द्यतइत्यादि । ऊर्दिदिषते । 'न न्द्राः संयोगादय' इति द्वितीयस्यैकाचो नदराणां संयोगादीनां द्विर्वचननिषेधादकारादिर्द्विरुच्यते । ऊर्दयति । और्दिदत् ॥ २० ॥

कुर्द खुर्द गुर्द गुद क्रीडायामेव ॥ अत्र कैयटपुरुषकारमैत्रेयादिषु तृतीयो न पठ्यते । संमतामोघाविस्तरचान्द्रेषु तु त्रयोपि पठ्यन्ते । गुदक्रीडा गुदविहार इति चरके । मैत्रेयकाश्यपौ गुद इत्यपि पृथक् धातुरिति । अत्रैवकारो धातूनामनेकार्थत्वे ज्ञापक इत्युक्तम् । स्फूर्जदीर्घोपदेशादुपधायां चेति दीर्घ एषां न इति चन्द्रः । मैत्रेयसंमतामोघाविस्तरकारादयस्तु दीर्घत्वमिच्छन्ति । कूर्दते । चुकूर्दे । कूर्दिता । कूर्दिष्यते । कूर्दताम् । अकूर्दत । कूर्देत । आशिषि । कूर्दिषीष्ट । अकूर्दिष्ट । भावे । कूर्द्यतइत्यादि ॥ चुकूर्दिषते । चोकूर्द्यते । चोकूर्त्ति । चोकूर्दीति । चोकूर्त्तः । चोकूर्दां चकार । चोकूर्दितेत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे 'वाऽवसान'इति चर्त्त्वविकल्पः । अचोकूर्दीत् । अचोकूर्त् । अचोकूर्द् । सिपि तु 'दश्चे'ति वा रुत्वमपि । अचोकूः ॥ चान्द्रेपि मते 'रो रि' लोपे ढ्रलोपइति दीर्घस्य विद्यमानत्वादत्र न विशेषः । कूर्दयति । अचुकूर्दत् । एवमितरयोरप्युदाहार्यम् । गुर्दः । गोदते । जुगुदे । गोदितेत्यादि । जुगुदिषते । जुगोदिषते । गुदित्वा, गोदित्वेत्यादि मुदिवन्नेयम् । गुदम् । इगुपधलक्षणः कः । गोद इति पचाद्यजिति मैत्रेयः ॥ २४ ॥

षूद क्षरणे ॥ क्षरणं निःसारणम् । अत्रायमकर्मकः । हिंसायामपि वर्त्तते मधुसूदन इति । अत्रायं सकर्मकः । ण्यन्तोयं संस्कारेपि वर्त्तते । अग्निर्हव्यं शमिता सूदयातीति । हव्यं हवनार्हं पशोर्हृदयादि शमिता शमित्रोग्निः सूदयाति संस्करोतीति । क्षरणस्वादुकरणनाशनार्थत्वमहोरात्राणि मरुतो विलिष्टं सूदन्त्वित्यत्राह भट्टभास्करः ॥ तथा हि अहोरात्राणि मरुतश्च तद्विलिष्टं विनाशितं विघृपं वा सूदयन्तु क्षारयन्तु यद्वुलिष्टं स्वादु कुर्वन्तु वा । यद्वा यद्विलिष्टं यागायोग्यं यद्विरूपं विशसितं तद्विनाशयन्त्विति । क्षरे तु तव विलिष्टं न्यूनं पूरयन्त्विति पूरणार्थत्वं दृश्यते । सूदते । सुषूदे । सूदि-

तेत्यादि । भावादौ सूद्यतइत्यादि । सुसूदिषते । स्तौतिनियमाच्च षत्वम् । सोसूद्यते । सोसूत्ति । सूदयति । सूदयते । असूषुदत् । णौ चङीति ह्रस्वत्वम् । सूदिता । 'सूददीपदीक्षश्चे'त्यनुदात्तेल्लक्षणस्य युचो निषेधात्तृन्नि'ति सामान्यस्ताच्छीलिकस्तृन् । मधुसूदनः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति ल्युः । क्षरति क्षारयति रसानिति च, सूदः पक्तुः पाचकश्च ॥ 'इगुपधज्ञाप्रीकिरः क' इति इगुपधत्वात् कर्त्तरि कः । अयं चुरादावपि ॥ २५ ॥

ह्राद अव्यक्ते शब्दे ॥ अव्यक्तशब्दो वाद्यादिघोषः । ह्रादते । जह्रादे । 'कुहोश्चु'रित्यभ्यासहकारस्यान्तरतम्यात् झकारश्चुत्वं तस्या'भ्यासे चर्चे'ति जस्त्वं जकारः । ह्रादितेत्यादि । भावे ह्राद्यतइत्यादि । अह्रादि । जिह्रादिषते । जाह्रद्यते । जाह्रादीति । जाह्रात्तीत्यादि, ह्रादयति । ह्रादयते । अजिह्रदत् । 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशा'मिति स्मरत्यादीनां चङ्परे णौ लघुनि धात्वक्षरे परइत्वापवादात्त्वविधानाज्, ज्ञापकादित्त्वविधौ येन नाव्यवधानं तेन व्यवहितेपि भवतीति नियमानाश्रयणादभ्यासस्येत्वम् । दीर्घस्तु न भवति संयोगपरत्वेनालघुत्वात् । ह्रदः । पचाद्यचि पृषोदरादित्वात् ह्रस्वः । महिकिह्रदो नाम वाहीकग्रामविशेषः । तत्र भवादिर्महिकिह्रदीयः 'कन्यापलदनगरग्रामह्रदोत्तरपदादि'ति शेषेर्थे छो 'वाहिकग्रामेभ्यश्चे'ति प्राप्तयोः ठञ्ञिठयोरपवादः । 'आयनेयीनीयियः फढखच्छघां प्रत्ययादीनामि'ति प्रत्ययादीनां फादीनां यथासंख्यमायन्नादिविधानात् छस्येयादेशः । छविधौ निपातनाद्वा ह्रस्वः ॥ २६ ॥

ह्लादी सुखे च ॥ चकारादव्यक्तशब्दे च । ह्लादतइत्यादि ह्रादिवत् । विशेषस्त्वीदित्वात् 'श्वीदितो निष्ठायामि'तीडभावो'ह्लादो निष्ठायामि'त्युपधाह्रस्वश्च'। तथा 'रदाभ्यां निष्ठा तो नः पूर्वस्य च द' इति निष्ठातकारस्य पूर्वदकारस्य च नकारः, आह्लन्नः । आह्लन्नवान् ॥ २७ ॥

स्वाद आस्वदने ॥ स्वादतइत्यादि स्वदिवत् । अषोपदेशत्वादसिस्वदद् इत्यादौ न षत्वम् । स्वदिना समानार्थोप्ययमाकारोपधसाम्यादिह पठितः ॥ अजदन्त्येति षोपदेशलक्षणे दन्त्यग्रहणेन केवलो दन्त्यो गृह्यते न तु दन्त्योष्ठ्योपीत्ययमषोपदेशः स्वादिवत् ॥ २८ ॥

पर्द कुत्सिते शब्दे ॥ रेफवद्दान्तः । संयोगान्तेषूर्दादिष्वयं न पठितः । शब्दविशेषार्थेन ह्रादादिनापि साम्यात् । स्वादित्वाकारवत्संयोगादित्वेन ह्रादानुरोधेन मध्ये पठितः । इह कुत्सितः शब्दो गुदरवः । तदाह केशवस्वामी कौते कर्दति पर्दते गुदरवइति । पर्दते । पपर्दे । पर्दिता । पर्दिष्यते । पर्दताम् । अपर्दत । पर्देत । पर्दिषीष्ट । अपर्दिष्ट । भावे पर्द्यतइत्यादि । पिपर्दिषते । पापर्द्यते । पापर्द्यते । पापर्दीति । पापर्त्तीत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे वा चर्त्वम् । सिपि तु पक्षे 'दश्चे'ति रुत्वं चोदाहार्यम् । पृदाकुः । पर्दीनित् संप्रसारणमल्लोपश्चेति काकुप्रत्ययो लोपः प्रसारणं च ॥२९॥

यती प्रयत्ने ॥ यतते । येते । येतिषे । एत्वाभ्यासलोपौ । यतिता । यतिष्यते । यतताम् । अयतत । यतेत । आशिषि यतिषीष्ट । अयतिष्ट । अयतिष्यत । भावे । यत्यतइत्यादि । यियतिषते । यायत्यते । यायतीति । यायत्तीत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे जश्त्वे वा चर्त्वम् । सिपि तु 'दश्चे'ति वा रुत्वमपि । यातयति । अयीयतत । यत्यम् । तकिशसियतिजनीनानामुपसंख्यानमि'ति भावे यत् ॥ आयत्तः । आयत्तवान्, ईदित्वात् 'श्वीदितो निष्ठायामि'तीडभावः । यत्नः । 'यजयाचयतविच्छप्रच्छरक्षो नङि'ति भावादौ नङ् । यतिः । इन् सर्वधातुभ्य इतीन् । यत निकारोपस्कारयोरिति चुरादौ ॥ ३० ॥

युतृ जुतृ भासने ॥ योतते । युयुते । योतितेत्यादि । भावे युत्यतइत्यादि । युयुतिषते । युयोतिषते । रलो व्युपधादिति वा कित्त्वम् । योयुत्यते । योयुतीति । योयोत्तीत्यादि । ईट्पक्षे नाभ्यस्तस्येति गुणनिषेधः । योतयति । अयुयोतत् । ऋदित्वान्नाग्लोपीत्युपधाह्रस्वनिषेधः । युतित्वा । योतित्वा । सन्वत्कित्त्वविकल्पः । उदुपधाद्भावादिकर्मणोरन्यतरस्यामिति निष्ठायां मुदिवत् कित्त्वविकल्प उदाहार्यः । युतितमनेन योतितमनेनेत्यादि । जोततइत्यादि । युतिवत् ॥ ३२ ॥

विथृ वेथृ याचने ॥ द्वितीयान्तौ । आद्यो धान्त इति कौशिकः । क्षीरस्वामिना त्वयं पक्षो दूषितः । वेथते । विविथे । 'असंयोगाल्लिट्किदि'ति कित्त्वाच्च गुणः । वेथिता । वेथिष्यते । वेथताम् । अवेथत । वेथेत । आशिषि । वेथिषीष्ट । अवेथिष्ट । अवेथिष्यत । विवेथिषते । विवेथि-

षते । वेविष्यते । वेविषीति । नाभ्यस्तस्येति गुणनिषेधः । वेवेत्ति । वेषयति । अविवेषत् । ऋदित्त्वान्नाग्लोपीत्युपधाह्रस्वनिषेधः । द्वितीयस्य विशेषो विवेषे, वेष्यते । विवेषिषते । वेवेष्यते । वेवेषीति । वेवेत्त इत्यादाव-गुणविषयएकारश्रवणम् । अस्य ऋदित्करणमुपधाह्रस्वनिवृत्त्यर्थम् । इमौ द्विकर्मकौ । दुह्यादित्वादप्रधाने कर्मणि लादयः । षष्ठी तु द्वितीयावदुभयत्र । गुणकर्मणि तु विकल्पेन अप्रधाने कृत्येनाभिहिते कर्तृकर्मणोर्नैव षष्ठी । सर्वमेतन्माधवीयावुपपादितं तत एवावगन्तव्यम् ॥ ३४ ॥

श्रथि शैथिल्ये ॥ शैथिल्यं विश्लिष्टता गाधता च । इदित्त्वं नुमर्थम् । अत एव किति नलोपाभावः । श्रन्थते । शश्रन्थे । श्रन्थिष्यते । श्रन्थिता । अश्रन्थत । श्रन्थेत । आशिषि । श्रन्थिषीष्ट । अश्रन्थिष्ट । अश्रन्थिष्यत । भावे । श्रन्थ्यतइत्यादि । शिश्रन्थिषते । शाश्रन्थ्यते । शाश्रन्थीति । शाश्रन्थि । 'खरि चे'ति चर्त्वं लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे चाशाश्रन् । श्रन्थयति । श्रन्थयते । अशश्रन्थत् । श्रन्था । 'गुरोश्च हल' इत्यकारः, 'ग्रयासश्रन्थो युजि'त्यत्र लाक्षणिकत्वान्नास्यग्रहः । प्रश्रथः । हिमश्रथः । 'अवोदैधोद्मप्रश्रथहिमश्रथा'इति घञि नलोपवृद्ध्यभावयोर्निपातनम् । गणान्तरपठितस्य वा निपातनम् । श्रन्थ विमोचनप्रतिहर्षयोरिति क्र्यादिः । श्रन्थ ग्रन्थ सन्दर्भइति च इमावाधृषीयावपि । श्रथ प्रयत्नइति चुरादिः । दौर्बल्ये क्रथादिराधृषीयो मोक्षणे ॥ ३५ ॥

ग्रथि कौटिल्ये ॥ कौटिल्यं शाठ्यं वक्रता वा । ग्रन्थतइत्यादि श्रन्थिवत् । अभ्यासकार्यविशेषः । केचिदिमावनिदितौ सानुषङ्गौ पठन्तः किति नलोपमिच्छन्ति । अत्र तरङ्गिणी इदित्त्वादनुनासिकलोपाभावः, श्रेथे ग्रेथे इत्युदाहरन् वृत्तिकारो भ्रान्त इति, अत्र वृत्तिकार इति धातुवृत्तिकृदुच्यते । तथा सानुषङ्गपाठः काशिकावृत्तिकारस्याप्यनभिमतः । यतः श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति लिटः कित्त्वविधौ श्रेथतुर्ग्रेथतुरिति परस्मैपदिनावेवोदाजहार । ग्रन्थ संदर्भइति क्र्यादौ युजादौ वा । ग्रन्थ बन्धनइति च युजादौ ॥ ३६ ॥

कत्थ श्लाघायाम् ॥ कत्थते । चकत्थे । कत्थितेत्यादि । कर्मणि कत्थ्यतइत्यादि, चिकत्थिषते । चाकत्थ्यते । चाकत्थीतीत्यादि पूर्ववत् ।

विकत्थी । 'वौ कषलसकत्थस्रम्भ' इति वावुपपदे तच्छीलादिषु घिनुण् । वासरूपेण युच्, विकत्थनः ॥ ३६ ॥ एधादय उदात्ता अनुदात्तेतः ॥

अथ तवर्गीयाः परस्मैपदिनः ॥ अत सातत्यगमने ॥ सातत्यगमनं सन्ततगमनम् । ग्राममतति । ग्रामादायाति । अतसि । अतामि । अतन्ती । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनी'ति कर्मणि द्वितीयाचतुर्थ्यौ । चेष्टायामिति वचनान्मनसाततिग्राममित्यत्र द्वितीयैव । अध्वन्यर्थग्रहणान्मार्गमततीत्यादावपि द्वितीयैव । आत । आततुः । आतिथ । आतिव । 'अत आदे'रित्यभ्यासादेर्दीर्घो लिटि । अतिता । अतिष्यति । अततु । आतत् । आटि वृद्धिः । अतेत् । आशिषि । अत्यात् । मा भवानतीत् । वदव्रजहलन्तस्येति वृद्धेर्नेटीति निषेधः । आतिष्यत् । कर्मणि अत्यते । आते । अतिता । अतिष्यते । अत्यताम् । आत्यत । अत्येत । आशिषि । अतिषीष्ट । आतिष्ट । आतिषाताम् । आतिषत । गत्यर्थानां कर्तृस्थक्रियत्वाच्च कर्मकर्त्तास्ति । कर्मव्यतिहारे तङस्य नास्ति 'न गतिहिंसार्थेभ्य' इति निषेधात् । व्यत्यततीत्यादि । अतिततिषति । आतयति देवदत्त ग्रामम् । गतिबुद्धीति प्रयोज्यस्य कर्मत्वम् । अतितो ग्रामम् । अतितो ग्रामः । अतितं देवदत्तेन, इदमेषामतितम् । गत्यर्थाकर्मकेति क्तोऽधिकरणे चेति योगद्वयेन कर्तृकर्मभावाधिकरणेषु क्तः । अक्त आसन्नः । इणभीकायाशल्पतिमर्त्तिभ्यः क्नि'ति कन् । आतिः गन्ता पक्षिविशेषश्च । 'अज्यतिभ्यां चे'तीणप्रत्ययः । पादाभ्यामततीति पदातिः । 'पादस्य पदाज्यातिगोपहतेष्वि' त्याज्यादिषूत्तरपदेषु पदादेशः । शोभनमततीति स्वातिः नक्षत्रं,स्वाती । सर्वतोक्तिन्नर्थादिति वा ङीष् । स्वात्यां जातो माणवकः स्वातिः । अत्र 'संधिवेलाद्यृतुनक्षत्रेभ्योऽणि'ति शैषिकोऽण्, यदा जातार्थे तदा तस्य 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुगि'ति लुकि लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । स्वातीति ङीषन्तस्य ग्रहणादङीषन्तादणो लुङ्नास्ति, तेन'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैजि'ति यथासंख्यादिह वकारात्पूर्वमैकारे वृद्धिनिषेधे च सैवात इति भवति ॥ (शेषमग्रे)

॥ श्रीः ॥

# कैवल्यरत्नम् ।

( *Continued from page* 9. VOL. V. )

पञ्चममतीत्य षष्ठे ऽध्याये ॥

श्रीभगवानुवाच ।

भूयो ऽपि ब्रह्मविद्यायाः साधनं प्रवदामि वः ।

विदुषामनुभूतिं च श्रद्धया शृणुतानघाः ॥

पुराश्वलायनः साक्षान्मुनिः सत्यपरायणः ।

भगवन्तं जगन्नाथमुपेत्य परमेष्ठिनम् ॥

उवाच लोकरक्षार्थं केवलं करुणाकरम् ।

अधीहि भगवन्विद्यां वरिष्ठामात्मगोचराम् ॥

यतिभिः परमां सांख्यैः सेव्यमानां मुदा सदा ।

अतीव गूढमज्ञानं ययापोह्याऽचिरान्नरः ॥

परात्परतरं पूर्णं याति स्वात्मतयात्मवित् ।

इत्युक्तो मुनिना तस्मै स होवाच पितामहः ॥

श्रद्धाभक्तिध्यानयोगादवेहि प्रत्यक्तत्वं ब्रह्मरूपं मुनीन्द्र ।

सत्यं प्रोक्तं कर्म्मणा पुत्रपौत्रैरर्थैरन्यैर्याति नैवात्मतत्त्वम् ॥

त्यागेनैषाममृतत्वं भजन्ते सन्तः पूर्वे ब्रह्मविज्ञाननिष्ठाः ।

ये चाप्यन्ये यतयः शुद्धसत्वास्ते संन्यासात्कर्म्मणां त्यागरूपात् ॥

योगादीशध्यानरूपाद्विशुद्धाद्वेदान्तार्थज्ञानतो निश्चितार्थाः ।

सर्व्वे ते ऽपि ब्रह्मलोकाह्वये ऽस्मिन् देहे विप्रा ब्रह्मलोके स्थिते वा ॥

अज्ञानाख्यस्यान्तकाले परस्य ब्रह्मानन्दादेव मायान्निमित्तात् ।

दुःखाकाराद्दृश्यभूतादशेषान्मुच्यन्ते वै ब्रह्मभूता द्विजेन्द्राः ॥
तस्माच्छीघ्रं ब्रह्मविज्ञानकामी शुद्धे देशे निर्मनुष्ये मुमुक्षुः ।
बध्वा सम्यक् स्वासनं दुःखहीनं शुद्धः प्रीतः शोकमोहादिहीनः ॥
अनन्तमव्यक्तमचिन्त्यरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।
तथादिमध्यान्तविहीनमद्वयं विभुं चिदानन्दमरूपमद्भुतम् ॥
उमासहायं परमेश्वरं विभुं तथा त्रिनेत्रं शशिशेखरं सितम् ।
उपवीतेन युतं शुचिस्मितं शितिकण्ठं च वलित्रयाङ्कितम् ॥
अखिलैराभरणैरलंकृतं प्रथिताभं परमं विचिन्तयेत् ।
इत्थं ध्यात्वा मुनिः साक्षात्साक्षिणं तमसः परम् ॥
भूतयोनिं पुरारातिं गच्छति स्वात्मविद्यया ।
यो ऽयं ध्येयतया प्रोक्तः शिवः साम्बः सनातनः ॥
ब्रह्मविद्यादिरूपेण विभक्त इव संस्थितः ।
स ब्रह्मा स शिवः सेन्द्रः सो ऽक्षरः परमः स्वराट् ॥
स एव विष्णुः स प्राणः स कालो ऽग्निः स चन्द्रमाः ।
स एव सर्व्वं यद्भूतं यच्च भव्यं सनातनम् ॥
ज्ञात्वा तं मृत्युमत्येति प्रत्यगात्मतयैव तु ।
अन्तरेण परिज्ञानं नान्यः पन्था विमुक्तये ॥
सर्वभूतस्थमात्मानं सत्तया स्वीयया तथा ।
स्वकीयेन प्रकाशेन स्वकीयेन सुखेन च ॥
स्वात्मन्यध्यस्तरूपेण सर्व्वभूतानि सत्तमाः ।
संपश्यन्परमं ब्रह्म याति नान्येन हेतुना ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनादेव पाशं दहति पण्डितः ॥

यो ऽयं विज्ञानमात्रेण ब्रह्म गच्छति चेतनः ।
सो ऽयं जीवसमाख्यस्तु ब्रह्मैव परमार्थतः ॥
व्यवहारदशायां तु मायया परमेश्वरः ।
पृथक्त्वेन तदा भाति जलपात्रैर्यथा रविः ॥
मायाऽविद्याबलादेव मोहितो जीवसंज्ञितः ।
पूर्वकर्मानुगुण्येन शरीरद्वयमास्थितः ॥
करोति सकलं कर्म भुङ्क्ते जाग्रति तत्फलम् ।
स्वप्ने चायं सुखं दुःखं भुङ्क्ते मायाविनिर्मितम् ॥
सुषुप्तिकाले मायायां विलीने सकले सति ।
तमसा मूलभूतेन ब्रह्मणा जीवसंज्ञितः ॥
अभिभूतः स्वचित्सत्यपरमानन्दलक्षणम् ।
कृतिरूपं विहायैतज्जगद्वासनया सह ॥
पुनश्च कर्म्मवेगेन स्वप्ने जाग्रति वा ऽवशम् ।
जीवो भुङ्क्ते सुखं दुःखं क्रमतो ऽक्रमतो ऽपि वा ॥
पुरक्षयान्वयः पुंसां कर्म्मणेत्यविवेकतः ।
प्रोक्तो बुद्ध्यनुसारेण मुनीन्द्रा न विवेकतः ॥
विवेकतः स्वयं जीवो न जीवः परदेवता ।
क्रीडा पुरक्षयप्राप्तिः स्वच्छन्दा परदेवता ॥
जाग्रदादित्रयं तद्वत्क्रीडा तत्प्राप्तिलक्षणा ।
द्वयं चेश्वरदृष्ट्योक्तं नैव शुद्धं दृशा मया ॥
शुद्धदृष्ट्या जगज्जीवश्चेश्वरः श्रुतयो गुरुः ।
सुखदुःखादिसंसारो न मुक्तिः संविदेव हि ॥
संविन्मात्रमिदं सर्वं सुसूक्ष्मं परिपश्यताम् ।
ज्ञानं सूक्ष्मविज्ञानं दुर्लभं सर्वदेहिनाम् ॥

संविन्मात्रमपि प्राज्ञाः केवलं सुनिरूपणे ।
विभाति विश्वरूपेण हेतुस्तत्र सुदुर्गमः ॥
विश्वरूपप्रतीत्येव विश्वसद्भाव आस्तिकाः ।
न प्रकारान्तरेणैव निर्णेयं पारमेश्वरी ॥
स्वकीयेश्वरभावेन क्रीडमानः पुरत्रये ।
अविवेकबलप्राप्तजीवत्ववपुषैव तु ॥
स्वकर्म्मफलभोक्तृत्वपदप्राप्तश्च यः पुमान् ।
ततो ज्ञानं जगच्चित्रं तस्य दृश्यं मुनीश्वराः ॥
तस्य दृश्यस्य सर्वस्य स एवाधार आत्मिकाः ।
सो ऽयमानन्दरूपश्च स्वयं संपूर्णचिद्घनः ॥
तदाद्ये परमे रूपे लयं याति पुरत्रयम् ।
यथायं जीवतापन्नः पुमान्सूक्ष्मनिरूपणे ॥
केवलं सच्चिदानन्दस्वरूपो नापरस्तथा ।
मायोपाधिवशेनैव जगतः कारणात्मना ॥
स्थितः सर्वेश्वरः सात्त्वात्सर्वज्ञत्वादिधर्मवान् ।
यतस्ततः प्रकृफणैवेदं जगत्सर्वं विजायते ॥
यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सर्वज्ञत्वादिसंयुक्तं तत्सुसूक्ष्मनिरूपणे ॥
नित्यजन्मविनिर्मुक्तं चिद्रूपं परमामृतम् ।
एवंरूपं तु यत्तत्त्वं तत्तत्त्वं परमार्थतः ॥
त्वमर्थयेव(१) पूर्वोक्तस्तदर्थश्च तदेव हि ।
नानयोरन्तरं किं चिद्विद्यते सत्यमीरितम् ॥

(१) त्वमर्थ एवमिति पाठः कल्पयितुं युज्यते ।

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चात्मतया च यत् ।
प्रकाशते तद् ब्रह्माहमिति ज्ञात्वा विमुच्यते ।
एवमात्मानमद्वैतं ब्रह्मतत्त्वात्मनैव तु ।
यो ऽभिजानाति निष्ठेषा नापरा तस्य योगिनः ॥
त्रिषु[1] धामसु यद्भोग्यं भोक्ता भोगश्च यो भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रो ऽहं सदाशिवः ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्मास्म्यहमद्वयम् ॥
अणोरणीयानहमेव शंकरो महानहं विश्वमहं न चापरः ।
पुरातनो ऽहं पुरुषो ऽहमीशिता हिरण्मयो ऽहं शिव एव चिद्घनः ॥
अपाणिपादो ऽहमचिन्त्यशक्तिमान् शृणोमि पश्यामि निरस्तसाधनः ।
अहं विजानामि विमुक्तरूपतां समस्तमन्यो न हि वेदिता मया ॥
चिता चिदन्येन न चैव गृह्यते निरूपणायामनिरूपणे ऽपि च ।
चितश्चिदन्या न हि चित्स्वरूपतस्तथा जडेनापि न गृह्यते चित् ॥
समस्तवेदैरहमेव चिद्घनः शिवस्वरूपेण समीरितः सदा ।
समस्तवेदान्तकृदप्यहं तथा पुराणकृच्चाहमहं हि वेदवित् ॥
न पुण्यपापे नशनं न जन्म मे न देहपूर्वं सकलं तथैव ।
न भूतजातं भुवनं च भौतिकं न चापरं नैव समस्तकारणम् ॥
एवं विदित्वा परमात्मरूपं गुहाशये निष्कलमद्वितीयम् ।
समस्तभानं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥
एवंरूपं तु विज्ञानं जायते नैव कस्य चित् ।
महाभाग्यवतामेव जायते न हि संशयः ॥
ततस्तत्साधनत्वेन शतरुद्रीयमुत्तमम् ।

(१) त्रिधा सर्वं तु मत्तोऽन्यविति पाठः संगत इति भाति ।

अभ्यसेच्छ्रद्धया नित्यमाश्रयेद्वाविमुक्तकम् ॥
निवृत्ते सकले पापे विज्ञानं पारमेश्वरम् ।
विज्ञायते ऽचिरेणैव वेदान्तश्रवणेन तु ॥
वेदान्तादेव कैवल्यं विज्ञानफलमश्नुते ।
नापरेण न संदेहः सर्वविज्ञानसाधनम् ॥
कर्मणैव परा मुक्तिरित्याहुरपरे जनाः ।
कर्मसाध्यमनित्यं हि नित्या मुक्तिपरा बुधाः ॥
कर्मणा सहितेनैव ज्ञानेनेत्यपरे जनाः ।
तदसंगतमेव स्याद्विज्ञानं कर्मघस्मरम् ॥
कैवल्योपनिषत्साक्षात्सर्वमेतन्मयोदितम् ।
प्राहातिश्रद्धया सार्द्धं मातृभूताखिलात्मना ॥

॥ इतिषष्ठोऽध्यायः ॥

श्रीभगवानुवाच ।
भूयो ऽपि ब्रह्मविद्यायाः साधनं प्रवदामि वः ।
पारम्पर्यक्रमावाप्तं वेदान्तैरेव दर्शितम् ॥
देवदेवो महादेवः स्वतो वाचामगोचरः ।
स्वप्रकाशैकसंसिद्धः स्वयं सर्वगतो ऽपि च ॥
न भातीव सदा भातो विवेकविकलस्य च ।
विवेकादित्यदीप्तायां बुद्धौ भाति महाद्विजाः ॥
अतः सर्वेश्वरं साक्षाद्द्रष्टुमिच्छति चेन्नरः ।
विवेकं परमं नित्यं गुणं संपादयेद्दृढम् ॥
विवेकेन हि विज्ञानं जायते पारमेश्वरम् ।
विवेकेन विना नैव जायते न हि संशयः ॥
आद्यो वेदान्तविज्ञानं जन्मनः प्रतिबन्धकम् ।
अहंममाभिमानश्च शरीरे ऽनात्मरूपके ॥

इन्द्रियेषु तथा ज्ञानं जन्मन: प्रतिबन्धकम् ।
एषामपि च संघाते पञ्चभूतसमुद्भवे ॥
अहंममाभिमानश्च तथैव प्रतिबन्धकम् ।
प्रतिबन्धकविध्वंसे विज्ञानं पारमेश्वरम् ॥
यथावज्जायते पुंसां वेदान्तकरणेन तु ।
मूलाज्ञानसमुत्पन्नं विज्ञानप्रतिबन्धकम् ॥
अभिमानं विवेकेन छिन्द्याद्व्ययत: सुधी: ।
द्रष्टा तावत्स्वदृश्येभ्यो विभिन्न: सर्वथा खलु ॥
न मन्ददृष्टिरप्यत्र विवादं कुरुते नर: ।
देहो ऽयं दृश्यते द्रष्टा ममेदमिति सत्तमा: ॥
तद्द्रष्टापि ततस्तस्माद्भिन्न एव न संशय: ।
इन्द्रियाणामपि द्रष्टा भिन्नस्तेभ्यस्तथैव च ॥
प्राणद्रष्टा तथा भिन्न: प्राणस्तस्मान्न संशय: ।
मनसश्च तथा बुद्धेरहंकारादपि द्विजा: ॥
संघाताच्च विभिन्नो वै तद्द्रष्टा न हि संशय: ।
कर्मेन्द्रियार्थरूपाङ्गाद्यदा बुद्धि: प्रजायते ॥
तदा जागरितावस्था धाम तद्भोक्तुरात्मन: ।
मनसा केवलेनैव वासनासहितेन तु ॥
कल्पितार्थे मतिर्जाता यदा स्वप्नस्तदा भवेत् ।
संस्कारात्मतया ज्ञाने विलीनं सकलं यदा ॥
तदा सुषुप्तिराख्याता सा च स्वप्नश्च धाम तु ।
धामत्रयमपि प्राज्ञा दृश्यते पुरुषेण वै ॥
तद्द्रष्टापि ततो भिन्न: स्यात्तु तस्मात्प्रकल्पितम् ।
दृश्यभूतं जगत्सर्वं कल्पितं शुक्तिरूप्यवत् ॥

कल्पितं सकलं विप्रा अधिष्ठानादृते न हि ।
अधिष्ठानातिरेकेण केवलं व्यवहारतः ॥
द्विजाः कल्पितसद्भावं शुक्तिरूप्यं यथा तथा ।
नेति नेतीति वेदान्ताः कल्पितं प्रतिषेधति ॥
सर्वाधिष्ठानमद्वैतं परं ब्रह्म सनातनम् ।
स एवात्मवतामात्मा साक्षी सर्वस्य सर्वदा ॥
साक्ष्यभावे जगत्साक्ष्यं कथं भाति स्वतो जडम् ।
व्यवहारे जगत्साक्ष्यं साक्षिभानेन भासते ॥
वस्तुगत्या जगन्नास्ति ततो भानं च तस्य न ।
स्वतः प्रतीतं ब्रह्मैव वस्तुगत्या नचेतरत् ॥
ब्रह्मरूपात्मनः साक्षात्स्वरूपं भानमास्तिकाः ।
स्वयं ज्योतिरिति प्राह श्रुतिः सत्यार्थवादिनी ॥
प्रकाशव्यभिचारो ऽस्य ब्रह्मभूतात्मवस्तुनः ।
सुषुप्ते ऽपि न विप्रेन्द्राः सुसूक्ष्मार्थनिरूपणे ॥
सुषुप्तादुत्थितो मर्त्यः सुषुप्तो ऽस्मीति सत्तमाः ।
परामृशति वै सो ऽयं सुषुप्त्यनुभवं विना ॥
नोपपन्नस्ततः सो ऽयं परामर्शस्तपोधनाः ।
सुषुप्त्यनुभवं तस्य कल्पयत्येव सुस्थिरम् ॥
सुषुप्त्यनुभवः सो ऽयं न जन्यो जनको न हि ।
जनकं करणं सर्वं तदोपरतमेव हि ॥
तदा व्याप्रियमाणश्च जाग्रद्वा स्वप्नएव वा ।
भवेन्नैव सुषुप्तिः स्यात्सुप्रसिद्धं हि तन्नृणाम् ॥
स्थूलः सूक्ष्मः सुसूक्ष्मश्च व्यापारः करणस्य तु ।
क्रमेण धामसु प्राज्ञा अस्तीत्येतन्न युज्यते ॥

सुषुप्ते विलयं प्राह श्रुतिः सर्व्वस्य वै पुरा ।
सुषुप्त्यनुभवेनैव करणाव्यापृतिस्तदा ॥
नैव कल्पयितुं शक्या जनैः श्रुतिविरोधतः ।
सुषुप्त्यनुभवस्तस्मान्न जन्यः साधु भाषितम् ॥
आत्मनो ऽनुभवो नित्यं तथापि गुण एव सः ।
तेन सत्त्वगुणेनैव सुषुप्तिरनुभूयते ॥
एवं केवलमोहेन प्रवदन्ति नरा वृथा ।
केवलो निर्गुणश्चेति परमा श्रुतिराह हि ॥
अतः स्वरूपं भूतेन प्रकाशेन च केवलम् ।
ब्रह्मभूतात्मना विप्राः सुषुप्तिरनुभूयते ॥
सुषुप्तो ऽस्मीत्ययं नैव परामर्शः प्रकीर्त्तितः ।
इदानींतन एवायं प्रत्ययः प्रतिभासते ॥
इति केवलमोहेन प्रवदन्ति तु वादिनः ।
प्रत्यक्षप्रत्ययो नायं सुषुप्तिर्न हि वर्त्तते ॥
इदानीं वर्त्तमानार्थविषयं ह्यक्षजं बुधाः ।
नानुमानात्मको विप्राः सुषुप्त्यानीतयापि न ॥
व्याप्तं लिङ्गप्रतीतेव सुषुप्तिर्नैव वर्त्तते ।
प्रत्यक्षसिद्धयोरेव व्याप्तिर्मर्त्यैर्हि गृह्यते ॥
प्रत्यक्षेण गृहीता चेद्वर्त्तमानेव सा भवेत् ।
अर्थापत्त्यात्मको नायं प्रत्ययः पण्डितोत्तमाः ॥
नैवान्यो ऽनुपपन्नो ऽस्ति परामर्शमिमं विना ।
अयं ह्यनुपपन्नस्तु सौषुप्तानुभवं विना ॥
कल्पयत्येव पूर्वोक्तप्रकारेण ततः स्वयम् ।
अपूर्वो वर्त्तमानस्तु प्रत्ययेन निरूपणे ॥

नोपमानात्मकश्चायं सदृशार्थे हि तत्स्मृता ।
तादृशं करणं नास्ति प्रत्ययस्यास्य सत्तमाः ॥
नापि शाब्दो विना शब्दं प्रत्ययोऽयं विभाति हि ।
सुषुप्तिर्नाम विज्ञानाभाव एव न चापरः ॥
सुषुप्तावनुभूतं च विद्यते स्मर्यते हि तत् ।
न स्मर्यते ततस्तस्मिन्काले नानुभवो नृणाम् ॥
इति मोहेन विज्ञानाभावस्तात्कालिको जनैः ।
महायासेन वेदज्ञाः कल्प्यते वानुमीयते ॥
स्मृतिर्न जायते पुंसामनुभूतेऽपि वस्तुनि ।
दृश्यतेऽनुभवश्चातः कदा चिन्मनुजैः स्मृतः ॥
स्मृतेरनुभवव्याप्तिर्न्नियतेव मुनीश्वराः ।
सुषुप्तिकालावच्छिन्नः प्रत्यगात्मास्ति सत्तमाः ॥
ज्ञानाभावस्य धर्मीति वक्तव्यं सर्ववादिभिः ।
तदानीं प्रत्यगात्मायं नैव ग्रहणमर्हति ॥
अगृहीतमनुस्मृत्य धर्मिणं वेदवित्तमाः ।
ज्ञानाभावः कथं तस्मिन्निदानीमनुभूयते ॥
अभावानुभवो धर्मिस्मरणे हि सति द्विजाः ।
पारिशेष्यादयं साक्षात्परामर्शो न चापरः ॥
परामर्शतयैवात्मा स्वप्रकाशेन केवलम् ।
सुषुप्तौ भाति नाभावः श्रुत्यर्थोऽयं हि दर्शितः ॥
एवंरूपेण शुद्धेन विवेकेन मुनीश्वराः ।
विज्ञानं जायते साक्षाद्भवपाशविमोचनम् ॥
प्रत्ययोऽहमिति प्राज्ञाः सर्वेषामपि देहिनाम् ।
जायते हि स्वभावेन शब्दश्चाहमिति स्वतः ॥

अधिष्ठानतयोभाभ्यां संबन्धीव प्रकाशते ।
असङ्गो ऽपि पुमान्विप्रास्तस्मादर्थस्तयोरयम् ॥
सुषुप्तादुत्थितत्वेन हेतुनाहमिति द्विजाः ।
सुषुप्तिसाक्षिचैतन्ये प्रयुक्ते शब्दमात्मनि ॥
अहं शब्दः प्रयुक्तो ऽपि सुषुप्तादुत्थितेन तु ।
सुषुप्तिसाक्षिचैतन्ये शब्दस्तस्य न भासकः ॥
अधिष्ठानतया तस्य प्रकाशकतयैव च ।
केवलं प्रोच्यते चात्मा तस्यार्थ इति न स्वतः ॥
एवमेवाविगीतेन प्रयोगेनैव केवलम् ।
अहमर्थ इति प्रोक्तः प्रत्यगात्मा स्वयंप्रभः ॥
अहमर्थात्मचैतन्यप्रकाशैकतयैव तु ।
अहमर्थतया चान्तःकरणं भाति न स्वतः ॥
इयं वस्तुगतिः साक्षान्न सापि व्यवहारतः ।
भाति मुख्यार्थवद् भ्रान्त्या द्विजाः करणमान्तरम् ॥
ततस्तदनुरोधेन स्वतो मुख्यार्थमेव हि ।
अन्तःकरणसंबन्धाच्छरीरं चाहमर्थवत् ॥
भ्रान्त्या भाति शरीरादिव्यभिचारि खलु द्विजाः ।
अहमर्थतया भातं समस्तं जाग्रति द्विजाः ॥
भजते व्यभिचारं हि स्वप्ने स्वप्नं च जाग्रति ।
कदा चिदपि चिद्रूपः प्रत्यक्षात्मा स्वयंप्रभः ॥
नैव व्यभिचरत्यात्मा स एवार्थस्ततो ऽहमः ।
प्रत्यये ऽपि गतिर्ह्येषा सुसूक्ष्मं परिपश्यताम् ॥
व्यभिचारितया भातं विसृज्य सकलं बुधाः ।
व्यभिचारिविनिर्मुक्तं व्यभिचारस्य साक्षिणम् ॥

साक्षादात्मतया बोधं विविञ्च्यादप्रमादतः ।
एवं विवेकं परमं च कुर्वन् विवेकलभ्यं परमार्थरूपम् ॥
विचिन्त्यलब्धात्मतयैव पश्येद्विवेकमेनं पृथगात्मनि स्थिरम् ।
आद्यं विवेकश्च विशुद्धवेदनप्रदः प्रसादेन शिवस्य लभ्यते ॥
गुरुप्रसादेन च पुण्यकर्म्मणा विमुक्तिकामश्चिरमार्जयेदिदम् ।
अतिगुह्यः श्रुतिसार आस्तिकाः कथनीयः कथितः समासतः ॥
मतिरेषा जनतापहारिणी विपरीता जननैककारणम् ।

॥ इतिसप्तमोध्यायः ॥

पञ्चदशाध्याये ।

अथातः संप्रवक्ष्यामिप्रायश्चित्तं समासतः ।
रहस्यानां प्रसिद्धानां पापानामविशेषतः ॥
ज्ञानं वेदशिरोद्भूतं पापानां न निवर्त्तकम् ।
अथ वा सर्वपापानां निवृत्यर्थं महामतिः ॥
जितेन्द्रियो जितक्रोधो हविष्याशी समाहितः ।
प्रणवं परमात्मानं वाग्यतो मनसा जपेत् ॥
व्याहृतीर्नाजपेन्मौनी सावित्रीं वा महेश्वरीम् ।
ज्ञानयज्ञेन शुद्धेन पापं दहति पण्डितः ॥
ज्ञानाभ्यासेन पापानि लयं यान्त्यखिलानि च ।
अतः समस्तपापानां निवृत्यर्थमतन्द्रितः ॥
ज्ञानयज्ञं महायासात्प्रकुर्यादशुभापहम् ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ।
सर्वाधिष्ठानभावेन स्थितादन्यन्महेश्वरात् ॥
स एवेति सदा पश्यन्मुच्यते भवबन्धनात् ।

अनन्तानन्दसर्वार्थप्रकाशं परमं पदम् ॥

स्वात्मरूपेण संपश्यन्मुच्यते भवबन्धनात् ।
विज्ञातारं च विज्ञानं विज्ञेयं साक्षिमात्रतः ॥

स्वानुभूत्यैव संपश्यन्मुच्यते भवबन्धनात् ।
गुरुं प्रबोधदातारं शास्त्रविज्ञानकारणम् ॥

स्वात्मरूपेण संपश्यन्मुच्यते भवबन्धनात् ।
बन्धमोक्षविधातारं बन्धमोक्षनिवर्त्तकम् ॥

स्वात्मरूपेण संपश्यन्मुच्यते भवबन्धनात् ।
संसारबन्धनं मुक्तिं तथा संसारवर्तिनम् ॥

स्वात्मरूपेण संपश्यन्मुच्यते भवबन्धनात् ।
दृग्रूपत्वातिरेकेण विभातं दृश्यमस्थिरम् ॥

दृग्रूपात्मतया पश्यन्मुच्यते भवबन्धनात् ।
यथाभातस्वरूपेण यथाभातं सदाखिलम् ॥

निःसंदिग्धमना भूत्वा निश्चलो निर्भयः शिवः ।
तर्कतश्च प्रमाणैश्च स्वगुरोरुपदेशतः ॥

स्वानुभूत्यानुसंपश्यन् शिव एव भवेत्स्वयम् ।
पुरापि शिव एवायं शिवोऽद्यापि तथोपरि ॥

संसारीवाविवेकेन विभाति न हि वस्तुतः ।
अविवेको विवेकश्च शिव एव न चापरः ॥

तथापि शिवरूपेण न भाति परमः शिवः ।
यदा शिवात्मना भाति यदा भात्यशिवात्मना ॥

कालद्वये ऽपि तस्यास्ति क्षतिर्नैव न संशयः ।
योगी विज्ञाय तन्निष्ठामसंदिग्धमना: सुखी ॥

निस्पृहो निर्भयः पूर्णो निर्व्यापारश्च तिष्ठति ।
एवं प्रमाणसिद्धापि स्थितिरेषा महेश्वरी ॥
अयोगतामविज्ञाय सदा भीतः प्रवर्त्तते ।
शिवाशिवादिरूपेण शिव एको विभात्यपि ॥
न जाने शिवभावस्य कारणं भववैभवम् ।
वदन्त्यशिवभावस्य कारणं के च नास्तिकाः ॥
अशक्यमेव तत्तेषां तदन्यद्वस्तु नैव हि ।
व्यावहारिकदृष्ट्यापि तदन्यन्नैव विद्यते ॥
तद्दृष्ट्यव्यभिचारेण दृष्टिरेव हि नापरम् ।
वाचामगोचरं तत्त्वं शिवाख्यं सत्यमद्वयम् ॥
तदुक्तिः साहसेनैव प्रवृत्ता विदुषामपि ।
महानुभावा विद्वांसो वदन्तु परमं पदम् ॥
मम तत्र मुनिश्रेष्ठा मौनमेव हि युज्यते ।
एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः ॥
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ।
विसृज्य सर्वकर्माणि निर्भयो निरुपद्रवः ॥
आश्रयेदात्मविज्ञानं यदिच्छेत्परमां गतिम् ।
श्रुतिस्मृत्युदितं कर्म समस्तं मुनिपुङ्गवाः ॥
ज्ञानेच्छोदयमात्रस्य को ग्रन्थेनापि नोसमम् ।
ज्ञानयज्ञस्य माहात्म्यं मया वक्तुं न शक्यते ॥
शिवेन विष्णुना ऽजेन श्रुत्या परमयापि च ।
ज्ञानयज्ञसमं नास्ति प्रायश्चित्तं न संशयः ॥
अतः पापनिवृत्त्यर्थं ज्ञानयज्ञं समाश्रयेत् ।
कृतस्य कर्म्मणः शुद्धिः पापरूपस्य वेदनात् ॥

प्रायश्चित्तादपि प्राप्ता न प्रकारान्तरेण वै ।
तद्दुत्काम्यस्य विज्ञानाद्विशुद्धिः परमा भवेत् ॥
उपभोगाच्च काम्यस्य प्रायश्चित्तं न विद्यते ।
पापानामपि सर्वेषां विद्या निःशेषदाहिका ॥
काम्यानामपि सर्वेषां न प्रायश्चित्तमास्तिकाः ।
अज्ञातस्य निषिद्धस्य निष्पन्नस्य तु कर्म्मणः ॥
प्रायश्चित्तं नरैः कर्तुं न शक्यं सर्वदा खलु ।
कथं विज्ञानमप्येषामानन्त्यात्कर्मणामपि ॥
न शक्यं सुतरां कर्तुं प्रायश्चित्तं शरीरिभिः ।
अतो वेदान्तविज्ञानं केवलं ब्रह्मगोचरम् ॥
अनपेक्षमतः साक्षादेकमेव निवर्त्तकम् ।
अर्चिरादिगतिर्नैव कर्मणां विनिवर्त्तिका ॥
क्रमेण ब्रह्मविज्ञाने पर्यवस्यति केवलम् ।
अतो ऽर्चिरादिमार्गस्तु ज्ञानमार्गश्च सत्तमैः ॥
उपादेयं सदा ज्ञानात्परं निर्वाणमाप्नुयात् ।
अतीव पक्वविज्ञानामर्चिरादिगतिर्नृणाम् ॥
न रोचते विलम्बेन खलु सा मुक्तिदायिनी ।
विज्ञानं परमं साक्षात्सोत्पत्त्या मुक्तिदं त्विह ॥
अतस्तदेवोपादेयं त्याज्यमन्यन्मुमुक्षुभिः ।
सर्वमुक्तं समासेन त्याज्यं ग्राह्यं च सादरम् ॥
इतः परं न वक्तव्यं शेषो ऽन्यो ग्रन्थविस्तरः ।

इति पञ्चदशोऽध्यायः ॥

( शेषमये )

॥ श्री ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 38. Vol. V.)

३६८ ऋत्विजश्च पवनादित्रयं कुर्युः ततः पुण्याहवाचनं तत्राग्निः प्रीयतामिति विशेषः । तच्चेत्थम् । आदौ गणपतिं षोडशोपचारैः संपूज्य मही द्यौरिति भूमिं संप्रार्थ्य ओषधयः समिति भूमौ शक्त्यनुसारेण व्रीहीणां राशिद्वयं उदक्संस्थं विधाय आकलशेष्विति राश्योः कलशद्वयं निधाय इमं मे गङ्ग इति कलशयोर्जलमापूर्य गन्धद्वारामिति गन्धं प्रक्षिप्य या ओषधीरिति सप्तधान्यानि प्रक्षिप्य काण्डात्काण्डादिति दूर्वाः अश्वत्थेव इति पञ्च पल्लवान् स्योना पृथिवीति सप्त मृदः स॰हि रत्नानीति पञ्च रत्नानि हिरण्यरूप इति हिरण्यं च प्रक्षिप्य युवाः सुवासा इति द्विसूत्र्या कलशकण्ठौ वेष्टयित्वा पूर्णा दर्वीति कलशयोरुपरि पूर्णपात्रे स्थापयेत् । ततः कलशयोस्तत्त्वा यामीति वरुणमावाह्य षोडशोपचारैः पूजयित्वा युग्मान् ब्राह्मणान् उदङ्मुखानुपवेशयेत् । ब्राह्मणास्तु सपत्नीकं यजमानं प्रतिब्रूयुः मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भवेति । एताः सत्या आशिषः सन्तु इति यजमानो ब्रूयात् । ततः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णमुत्तरकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुष्प्रमाणेन पुण्याहं दीर्घमायुरस्तु इत्यनेन मन्त्रेण उत्तरकलशं स्वशिरसा पत्नीशिरसा विवाहादौ संस्कार्यशि-

रसा च संयोज्य कलशस्थाने कलशं स्थापयित्वा पुनर्गृहीत्वा मन्त्रेण तथैव कृत्वा पुनर्गृहीत्वा मन्त्रेण तथैव इति त्रिवारं कुर्यात् ततो यजमानः शिवा आपः सन्त्विति भवन्तो ब्रुवन्त्विति ब्राह्मणहस्ते जलं दद्यात्। ब्राह्मणाश्च शिवा आपः सन्त्विति वदेयुः । ततो यजमानो गन्धाः पान्तु सुमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्त्विति ब्राह्मणहस्ते चन्दनं दद्यात्। ब्राह्मणास्तु गन्धाः पान्तु सुमङ्गल्यं चास्त्विति वदेयुः । अक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्त्विति यजमानः अक्षतान् दद्यात्। ते च अक्षताः पान्तु आयुष्यमस्तु इति ब्रूयुः। ततः पुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्त्विति यजमानः पुष्पाणि दद्यात्। ब्राह्मणास्तु पुष्पाणि पान्तु सौश्रियमस्त्विति ब्रूयुः। ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्त्विति यजमानस्ताम्बूलानि दद्यात्। ब्राह्मणास्तु ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति ब्रूयुः। दक्षिणाः पान्तु बहुदेयं चास्त्विति यजमानो दक्षिणां दद्यात्। ब्राह्मणास्तु दक्षिणाः पान्तु बहुदेयं चास्त्विति ब्रूयुः। यजमानो दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति जलं दद्यात्। ब्राह्मणास्तु दीर्घमायुरित्यादि अस्त्वित्यन्तं ब्रूयुः । ततो यजमानः यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये इति ब्रूयात् ब्राह्मणाः वाच्यतामिति ब्रूयुः यजमानः भद्रं कर्णेभिरित्यृचं द्रविणोदा द्रविणस इत्यृचं सविता पश्चातादित्यृचं नवोनव इत्यृचं उच्चा दिवीत्यृचं सं त्वा सिञ्चामीत्यर्धर्चं च पठित्वा व्रतनियमतपः

स्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानां मनः समाधीयतां इति प्रार्थयेत् समाहितमनसः स्मः इति ब्राह्मणाः प्रसीदन्तु भवन्तः इति यजमानः प्रसन्नाः स्मः इति ब्राह्मणाः ततो यजमानः शान्तिरस्त्वित्यादिभिः इष्टसम्पदस्त्वित्यन्तैराशीर्मन्त्रैः पात्रे जलं सिञ्चति अरिष्टनिरसनमस्तु यत्पापं तत्प्रतिहतमस्त्विति मन्त्राभ्यां पात्राद्बहिर्जलं सिञ्चेत् पुनः यच्छ्रेयस्तदस्त्वित्यादिभिः सर्वा इष्टदेवताः प्रीयन्तामित्यन्तैर्मन्त्रैः पात्रे जलं सिञ्चेत् ततो हता ब्रह्मद्विष इत्यादिभिः शाम्यन्त्वीतय इत्यन्तैर्बहिर्जलं सिञ्चति ततः शुभानि वर्धन्तामित्यादिभिः महासेनः प्रीयतामित्यन्तैः पात्रे सिञ्चति ततः पुण्याहकालान् वाचयिष्ये इति ब्रूयात् ब्राह्मणास्तु वाच्यतामिति ब्रूयुः यजमानः उद्गातेव शकुन इत्यृचं याज्ययेत्यादि संस्कुरुते इत्यन्तं ऐतरेयब्राह्मणं यत्पुण्यमित्यादि कुरुते इत्यन्तं तैत्तिरीयब्राह्मणं च पठित्वा मह्यं सह कुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय करिष्यमाणस्य अमुष्य कर्मणः पुण्याहं भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु ओं पुण्याहमिति प्रतिब्रूयुः इमे वचनप्रतिवचने त्रिवारं पठनीये ततो यजमानः स्वस्तये वायुमित्यृचं आदित्य उदयनीय इत्यादि स्वस्त्युद्यन्तीत्यन्तं ऐतरेयब्राह्मणं अष्टौ देवा इत्यादि अमृतं स्वस्तीत्यन्तं तैत्तिरीयं च ब्राह्मणं पठित्वा मह्यमित्यादि करिष्यमाणाय अमुष्मै कर्मणे स्वस्तिं भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु आयुष्मते स्वस्तीति ब्रूयुः एवं पूर्ववत् त्रिवारं कुर्यात् यजमानः ऋध्याम स्तोममित्यृचं सर्वामृद्धिमित्यादि य एवं वेदेत्यन्तं ऐतरेयब्राह्मणं ऋध्यास्म हव्यैरित्यादि प्रतितिष्ठतीत्यन्तं तैत्तिरीयब्राह्मणं च पठित्वा

मह्यमित्यादिकर्मण: ऋद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु कर्म ऋध्यतामिति ब्रूयु: एवं पूर्ववत् त्रिवारं कुर्यात् यजमान: श्रिये जात इत्यृचं श्रिय एवेत्यादि य एवं वेदेत्यन्तं ऐतरेयब्राह्मणं यस्मिन् ब्रह्मेत्यादि अमृतासतामित्यन्तं तैत्तिरीयब्राह्मणं च पठित्वा मह्यमित्यादि अमुष्य कर्मण: श्रीरस्त्विति भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु अस्तु श्री: इति ब्रूयु: एवं त्रिवारं कुर्यात् ततो मङ्गलानि भवन्तु वर्षशतं पूर्णमस्तु गोत्राभिवृद्धिरस्तु इत्युक्त्वा कर्मप्रधानदेवतानाम प्रथमान्तं उक्त्वा अन्ते प्रीयतामित्युक्त्वा शुक्रेभिरङ्गैरित्यृचं तदप्येष इत्यादि सभासद इतीत्यन्तं ऐतरेयब्राह्मणं च पठित्वा शिवंशिवमित्युक्त्वा पत्नीं वामभागे उपवेश्य वास्तोष्पते इति चतस्र ऋच: पठन् दक्षिणकलशं वामहस्ते उत्तरकलशं दक्षिणहस्ते गृहीत्वा उभयो: कलशयो: संततधारां पात्रान्तरे कुर्यात् ततस्तेन जलेन युग्मा ब्राह्मणा: पत्नीयजमानयोरभिषेकं दूर्वाङ्कुरै: आम्रपल्लवैश्च समुद्रज्येष्ठा इति चतसृभि: पायन्तामिति तिसृभि: इमा आप इति तिसृभि: देवस्य त्वेति यजुषा समस्तव्याहृतिभि: अभिषिञ्चन्ति ततो यजमान: ब्राह्मणेभ्यो दक्षिणां दत्वा पुण्याहवाचनफलसमृद्धिरस्त्विति भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणा: पुण्याहवाचनफलसमृद्धिरस्त्विति ब्रूयु: ततो यजमानो नानानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां ददाति इदं सर्वं कर्म पुण्याहवाचनमिति स्वस्तिवाचनमिति चोच्यते ॥

३६६ ततो गौरी पद्मा शची मेधा सावित्री विजया जया देवसेना स्वधा स्वाहा मातरो लोकमातर: धृति: पुष्टि: तुष्टि: आत्म-

न: कुलदेवता ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी चामुण्डा गणपति: एतासां देवतानां षोडशोपचारैः पूजनं मातृकापूजनमित्युच्यते ॥

३०० तत: गृह्याग्नेः पश्चात् प्रागग्रान् दर्भानास्तीर्य तेषु दक्षिणत: पत्नी उपविशति उत्तरतो यजमान: तयोरुत्तरत: प्राङ्मुखा: सर्वे ऋत्विज: तत: सपत्नीको यजमान: पुरुष एवेदमिति विष्णुं स्मृत्वा पुरस्तादित्यादि निविष्टमित्यन्तं जपित्वा मासप- क्षाद्युल्लिख्य अग्नीनाधास्ये इत्युपांशु चिरुच्चार्य उच्चैस्त्रिर्वदेत् तत: तन्म इत्यादि काम इत्यन्तं ऋत्विज: प्रत्याह ऋत्वि- जस्तु तत्त इत्यादि काम इत्यन्तं प्रतिब्रूयु: यजमान: प्रणवपू- र्वकं तथेत्याह तदेतत् सर्वं आधानसंकल्प इत्युच्यते ॥

३०१ तत: सपत्नीको यजमान: ब्रह्मण: पादौ उपसंगृह्य अमुकश- र्माहं ब्रह्मत्वेन त्वा गच्छामि याजयतु मां भवान् चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वामुकशर्माणं वृणे इति ब्रह्माणं वृणीते ब्रह्मा महन्मे इत्यादि भुविषीयेत्यन्तं जपित्वा चन्द्र- मास्ते ब्रह्मा स ते ब्रह्मा ब्रह्माहं ते मानुष इति ब्रूयात् ततो होतारं वृणीते अमुकशर्माहं हौत्रेण त्वा गच्छामि याजयतु मां भवान् अग्निर्मे होता स मे होता होतारं त्वामुं वृणे ततो होता महन्मे इत्यादि जपित्वा अग्निष्टे होता स ते होता होताहं ते मानुष इति ब्रूयात् ततो ऽध्वर्युं वृणीते अमुकशर्माहं आध्व- र्यवेण त्वा गच्छामि याजयतु मां भवान् आदित्यो मे ऽध्वर्यु: स मे ऽध्वर्युरध्वर्युं त्वामुं वृणे ततो ऽध्वर्यु: महन्मे वोच इत्यादि जपित्वा आदित्यस्ते ऽध्वर्यु: स ते ऽध्वर्युरध्वर्युरहं ते

मानुषः इति ब्रूयात् तत उद्गातृवरणं विकल्पेन अमुकशर्माहं औद्गात्रेण त्वा गच्छामि याजयतु मां भवान् पर्जन्यो म उद्गाता स म उद्गातोद्गातारं त्वामुं वृणे तत उद्गाता महन्म इत्यादि जपित्वा पर्जन्यस्त उद्गाता स त उद्गातोद्गाताहं ते मानुषः इति ब्रूयात् तत आग्नीध्रं वृणीते अमुकशर्माहमाग्नीध्रकर्मणा त्वा गच्छामि याजयतु मां भवान् आग्नीध्रं त्वामुं वृणे तत आग्नीध्रः आग्नीध्रकर्म करिष्यामीति वदेत् यजमानः ओं तथेति ततः सदस्यवरणं विकल्पेन अमुकशर्माहं सादस्येन त्वा गच्छामि याजयतु मां भवान् आकाशो मे सदस्यः स मे सदस्यः सदस्यं त्वामुं वृणे ततः सदस्यः महन्म इत्यादि जपित्वा आकाशस्ते सदस्यः स ते सदस्यः सदस्योऽहं ते मानुष इति प्रतिब्रूयात् एतावत्सर्वं ऋत्विग्वरणमित्युच्यते ॥

३०२ ऋत्विग्वरणानन्तरं मधुपर्कः क्रियते शुद्धस्थले आसनेषु प्राङ्मुखान् ऋत्विज उपवेश्य वृतान् ऋत्विजो मधुपर्केणार्हयिष्ये इति संकल्प्य प्रथमतः ऋत्विजां पादान् प्रक्षालयेत् ततः कृताचमनेभ्य ऋत्विग्भ्यो विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामिति विष्टरं दद्यात् ऋत्विजस्तु प्रतिगृह्णामीति विष्टरं हस्ते गृहीत्वा अहं वर्ष्मेति मन्त्रान्ते उदगग्रे विष्टरे उपविशन्ति सङ्घीभूताः अष्टाचत्वारिंशद्दर्भाः मूलप्रदेशमारभ्य अग्रपर्यन्तं द्विगुणितसूत्रवेष्टिताः विष्टरपदवाच्याः ॥

३०३ ततः पाद्यं पाद्यं पाद्यं प्रतिगृह्यतामिति पाद्यं दद्यात् ऋत्विजस्तु प्रतिगृह्णामीत्युक्त्वा प्रतिगृह्णन्ति ततः शुध्यर्थमाचामन्ति पादप्रक्षालनपर्याप्तं पात्रस्थं जलं पाद्यार्थं उदकं इति व्युत्पत्त्या पादाभ्यां चेति यत्प्रत्यये पाद्यमित्युच्यते ॥

२७४ ततः कृताचमनेषु ऋत्विक्षु यजमानस्तेभ्यः अर्घ्यमर्घ्यमर्घ्यं प्रतिगृह्यतामित्युक्त्वा अर्घ्यं ददाति ऋत्विजस्तु प्रतिगृह्णामीति प्रतिगृह्णन्ति मूल्ये पूजाविधावर्घ इति कोशात् अर्घः पूजाविधिस्तदर्थमुदकमिति व्युत्पत्त्या पूर्वोक्तसूत्रेण यत्प्रत्यये गन्धाद्यष्टोपचारसहितं अर्घ्यपात्रस्थं जलं अर्घ्यमित्युच्यते ॥

२७५ ततो यजमानः आचमनीयमाचमनीयमाचमनीयं प्रतिगृह्यतामित्याचमनार्थं जलं ददाति ऋत्विजस्तु प्रतिगृह्णामीति प्रतिगृह्य अमृतोपस्तरणमित्यादिमन्त्रेण आचमनं कुर्वन्ति ततोऽन्येन जलेन शुध्यर्थमाचमनं कुर्वन्ति तत्राचमनपात्रस्थं जलमाचमनीयमित्युच्यते ॥

( शेषमग्रे )

॥ श्रीः ॥

## ॥ योगवार्तिकम् ॥

( *Continued from page* 48 Vol. V. )

एतेष्वाद्यपक्षं सूत्रेण सिद्धान्तयति ।

### तदा द्रष्टुःस्वरूपेवस्थानम् ॥ ३ ॥

तदाऽसंप्रज्ञातयोगकाले द्रष्टुः चितिशक्तेः पुरुषस्य स्वरूपे निर्विषयचैतन्यमात्रे ऽवस्थानमित्यर्थः । यथा जपापाये स्फटिकस्यालोहिते स्वस्वरूपे ऽवस्थानं तथा वृत्त्यपाये पुरुषस्य वृत्तिप्रतिबिम्बशून्ये स्वस्वरूपे ऽवस्थानमिति भावः । यथा च तदा संस्कारशेषबुद्धेर्भानं न भवति तथोत्तरसूत्रे वक्ष्यामः । तथा च कूटस्थ एव पुरुषो व्युत्थानवत् तदानीमपि प्रकाशस्वरूप एव तिष्ठति । योगलक्षणमप्येतद्धेतुनिरोधत्वमेव । तत्र च वृत्त्यात्मकदुःखाभावः पुरुषार्थ इति भावः । सोयं पुरुषा-

र्थो भाष्यकारेण सूचितो यथा कैवल्यइत्यनेन। कैवल्ये हि दुःखनिवृत्तिरेव पुरुषार्थं इति वक्ष्यति 'हेयं दुःखमनागत'मिति सूत्रेणेति । क्रमेण चरमासंप्रज्ञाते ऽशेषसंस्कारक्षयात् चित्तेन सह वृत्तीनामात्यन्तिकनिरोधे सत्यात्यन्तिकं स्वरूपावस्थानं मोक्षाख्यमिति। ननु तदानीं दुःखाभावे ऽन्यदा दुःखमस्तीत्यायातं तथा चापरिणामित्वानुपपत्तिरित्याशङ्कां परिहरति भाष्यकारः। व्युत्थानेति । व्युत्थानचित्तदशायां तु चितिस्तथा ऽपि स्वरूपेण तिष्ठन्ती न तथा नासंप्रज्ञातस्य कैवल्यस्य च समानरूपेत्यर्थः । सूत्रान्तरमवतारयितुं पृच्छति । कथं तर्हीति । कूटस्थापि चितिः केन प्रकारेण तर्हि व्युत्थाने तिष्ठतीत्यर्थः । असंप्रज्ञातापेक्षया संप्रज्ञातोप्यत्र व्युत्थानं बोध्यम् । अत्र प्रत्युत्तरं सूत्रं हेतुपदमध्याहृत्य पठति । दर्शितविषयत्वादिति ।

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

इतरत्र व्युत्थाने, चितेन सह द्रष्टुर्वृत्तौ सारूप्यमित्यर्थः । व्युत्थाने हि बिम्बप्रतिबिम्बरूपयोर्बुद्धिपुरुषवृत्त्योः सारूप्यं, तदेतद्व्याचष्टे । व्युत्थानेति। इतरत्र व्युत्थाने याश्चित्तस्य वृत्तयो दीपस्य शिखाइव द्रव्यरूपा भङ्गुरा अवस्थापरिणामाः मूषानिषिक्तद्रुतताम्रवत् स्वसंयुक्तार्थाकारास्त्रिगुणकार्यत्वात् सुखदुःखमोहाश्रयतया शान्तघोरमूढाख्या भवन्ति ताभिरविशिष्टा अविलक्षणा वृत्तयो यस्य पुरुषस्य स तथा । वृत्तिश्च गुणो न भवति "भागगुणाभ्यां तत्त्वान्तरं वृत्तिः संबन्धार्थं सर्पती"ति सांख्यसूत्रात् । भागो विभक्तांशो ऽग्निविस्फुलिङ्गवदिति । कुतः पुनरपरिणामिनो वृत्तिस्तत्रोक्तं दर्शितविषयत्वादिति । बुद्ध्या निवेदितविषयत्वादित्यर्थः । निवेदनं च स्वारूढविषयस्य प्रतिबिम्बरूपेण चित्याधानम् । "गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति । अन्तःकरणरूपाय तस्मै विश्वात्मने नम" इति विष्णुपुराणादिभ्यः । एतदुक्तं भवति । यद्यपि पुरुषश्चिन्मात्रो ऽविकारी तथापि बुद्धेर्विषयाकारवृत्तीनां पुरुषे यानि प्रतिबिम्बानि तान्येव पुरुषस्य वृत्तयः। न च ताभिरवस्तुभूताभिः परिणामित्वं, स्फटिकस्येवातत्त्वतोऽन्यथाभावादिति । तदुक्तं साङ्ख्ये, जपास्फटिकयोरिव नोपरागः

किं त्वभिमान इति । सूत्रकारोऽपि वक्ष्यति 'चितेरप्रतिसंक्रमायास्तदाकारा-पत्तौ स्वबुद्धिसंवेदन'मिति । एतेन सुखदुःखमोहगुणकवृत्तिसारूप्याद् व्युत्थाने चितिरपि दुःखादिमतीव यद्भवति तदेव चितेर्दुःखभोगो दुःखा-भ्यवहरणरूपः, प्रतिबिम्बरूपदुःखहानमेव चासंप्रज्ञातस्य फलमिति सूत्रद्वयेन सिद्धम् । ये तु अहं सुखीदुःखीत्यादिप्रत्ययादात्मन एव पार-मार्थिकीं वृत्तिमिच्छन्ति तएवं प्रत्याख्येयाः । स्वत एव चेदात्मनः परिणा-मस्तर्हि सर्वावयवावच्छेदेन सर्वदा वृत्तिप्रसङ्गादनिर्मोक्षादिप्रसङ्गः । यदि * मनःसंयोगो निमित्तं तर्हि लाघवादेकेन मनस्त्वेनैव हेतुतास्तु आत्ममनस्तत्संयोगानां त्रयाणां हेतुत्वे गौरवात् । अनुमानं च अर्थाकार-परिणामसुखादिकमन्तःकरणोपादानकं बाधकाभावे सति तदन्वयव्यति-रेकानुविधायित्वात् मनःसंयोगवदिति । भोगे व्यभिचारवारणाय सत्यन्तं, बुद्धेः स्वभोक्तृत्वे च बाधकं कर्तृकर्मविरोधं सूत्रकारो वक्ष्यति । अहं कर्त्ता सुखीत्यादि प्रत्ययास्तु अहं गौर इत्यादिभ्रम-प्रत्यक्षतान्तःपातित्वेनाप्रामाण्यज्ञानास्कन्दिता *नोक्तानुमानस्य बाधकाः, प्रत्युत "प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः । यः पश्यति तथात्मा-नमकर्त्तारं स पश्यति" इत्यादि स्मृत्युपोद्बलितेनोक्तानुमानेनैव † बाध्यन्ते देहभिन्नात्मसाधकैरनुमानैरहं गौर इत्यादिप्रत्ययवदिति दिक् । स्वोक्ते बुद्धि-पुरुषयोर्वृत्तिसारूप्ये पञ्चशिखाचार्यसूत्रं प्रमाणयति । तथा च सूत्रमिति । ख्यातिर्बुद्धिर्दर्शनं पुरुषस्य इत्यन्तं च सूत्रम् । तथा च ख्यातिरेव दर्शनमित्ये-कमेव एकाकारमेव दर्शनं भ्रमो लोकानामिति सूत्रार्थः । इतिशब्दश्चान्यो भाष्ययोजनार्थं पूरणीयः । ननु सविषयवृत्तेः स्फुरणं चेतनसंयोगादेव भवतु यथा सजलघटादिप्रकाशः सूर्यसंबन्धात्, अतः किमर्थं चैतन्ये वृत्तिप्रति-बिम्बं वृत्तौ वा वक्ष्यमाणचैतन्यप्रतिबिम्बं कल्प्यते । सुख्यहं जानामीति बुद्धिपुरुषयोरेकताभ्रमस्तु परस्परप्रतिबिम्बं विनापि दूरस्थवनस्पत्योरिव दो-षवशादेव संभवति तत्कथं बुद्धिपुरुषयोर्वृत्तिसारूप्यसिद्धिरिति । अत्रोच्यते ।

* यदि चेति पाठान्तरम् ।

† ते बाध्यन्ते इति पुस्तकान्तरे पाठः ।

चेतने तावद्बुद्धिप्रतिबिम्बमवश्यं स्वीकार्यम् । अन्यथा कूटस्थनित्यविभुचैतन्यस्य सर्वसंबन्धात्सदैव सर्वं वस्तु सर्वज्ञायेत नहि सूर्यसंबन्धे सति घटाद्यप्रकाशो दृष्ट इति । न चाज्ञानाख्यं ज्ञानप्रतिबन्धकं चैतन्ये कल्पनीयं, नित्यज्ञानस्य प्रतिबन्धासंभवात् "दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मन" इत्यादिभिरात्मन्यज्ञानप्रतिषेधाच्च । अतोऽर्थभानस्य कादाचित्कत्वाद्युपपत्तये ऽर्थाकारतैवार्थग्रहणं वाच्यं बुद्धौ तथा दृष्टत्वात्, बुद्धावपि हि संयोगमात्रस्यार्थग्रहणत्वे अतीन्द्रियस्याप्यर्थस्य बुद्धिग्राह्यत्वप्रसङ्गात् । सा चार्थाकारता बुद्धौ परिणामरूपा स्वप्नादौ विषयाभावेन तत्प्रतिबिम्बासंभवात्, पुरुषे च प्रतिबिम्बरूपा विद्यमानवृत्तिमात्रग्राहके पुंसि प्रतिबिम्बेनैवोपपत्तेरिति । न केवलं तर्कादेव चिति बुद्धेः प्रतिबिम्बं कल्प्यते किंतु "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः । रञ्जकाद्युपधानेन तद्वत्परमपूरुष" इत्यादिस्मृतिशतैरपीति । न चैवं संस्कारशेषा बुद्धिः पुरुषे प्रतिबिम्बिता भायादित्यसंप्रज्ञातयोगानुपपत्तिरिति वाच्यम् । परमाणोरिव वृत्त्यतिरिक्तानां प्रतिबिम्बसमर्पणासामर्थ्यस्य फलबलेन कल्पनात् । अनादिस्वस्वामिभावस्यैव प्रतिबिम्बनियामकतया वक्ष्यमाणत्वात्तु न परबुद्धिवृत्तिभानम् । अत एव पुरुषार्थवत्येव बुद्धिः पुरुषस्य विषय इति सांख्यसिद्धान्तो विवेकख्यातिविषयभोगौ च पुरुषार्थाविति । यथा च चिति बुद्धेः प्रतिबिम्बमेवं बुद्धावपि चित्प्रतिबिम्बं स्वीकार्यमन्यथा चैतन्यस्य भानानुपपत्तेः स्वयं साक्षात्स्वदर्शने कर्मकर्तृविरोधेन बुद्ध्यारूढतयैवात्मनो घटादिवज्ज्ञेयत्वाभ्युपगमात् । तथा च वक्ष्यति सूत्रकारो 'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थ'मिति । बुद्धावात्मप्रतिबिम्बमेव च तान्त्रिका बुद्धेश्चिच्छायापत्तिरित्यात्माकारतेति प्राहुः । प्रतिबिम्बोपाधौ बिम्बाकारो बुद्धेः परिणाम एव स च साक्षिभास्य इति । एतेन नीरूपत्वाद् बुद्धिपुरुषयोरन्योन्यं प्रतिबिम्बनं न संभवतीत्यपास्तम् । उभयत्रोभयाकारबुद्धिपरिणामस्यैव प्रतिबिम्बशब्देनात्र विवक्षितत्वात् । जलादावपि सूर्याद्याकारबुद्धिपरिणामस्यैव सूर्यादिप्रतिबिम्बितत्वाच्च । तदेवं बुद्ध्यात्मनोः

परस्परप्रतिबिम्बरूपाद्वोषादविवेकताभ्रमोऽहं कर्त्ता सुखी जानामीत्यादिरूप इति । तदेतत्परस्परं प्रतिबिम्बं सांख्यकारिकायामिवशब्दाभ्यामुक्तं । "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीन" इति दिक् । यच्चैतच्चैतन्ये* बुद्धिवृत्तिसारूप्यमुक्तं चैतन्यस्य बुद्ध्याकारतारूपम् । इदमेव चैतन्यस्यार्थोपरक्तं वृत्तिभानं तस्य चाकारोऽयं घट इत्यादिरूप एव, अन्यथा वृत्तिसारूप्यानुपपत्तेः । न तु वृत्तिबोधस्य पृथगाकारोस्ति घटमहं जानामि दुःखितोहमित्यादिकं तु बुद्धेरेवाकारान्तरं पुरुषस्यापरिणामित्वाद् अभ्रान्तत्वाच्चेति । तथा च सूत्रकारो वक्ष्यति 'चित्तेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदन'मिति । ननु वृत्तितद्बोधौ यदि घटदीपाविवात्यन्तभिन्नौ न तु चिज्जडात्मकमविभक्तमेकं वस्तु मणिकान्तिवत् तर्हि तत्तच्चित्तवृत्तीनां प्रतिनियततत्तत्पुरुषमात्रबोध्यत्वे किं नियामकमित्याकाङ्क्षायां प्रतिनियतयोरेव चित्तात्मनोरनादिः स्वस्वामिभावसंबन्धस्तन्नियामक इति प्रतिपादयति । चित्तमयस्कान्तेत्यादिना संबन्धो हेतुरित्यन्तेन । तत्राप्यादावनादिं स्वस्वामिभावं युक्त्योपपादयति । चित्तमिति । यथायस्कान्तमणिः स्वस्मिन्नेवायःसन्निधीकरणमात्रात् शल्यनिष्कर्षणाख्यमुपकारं कुर्वन् स्वामिनः स्वं भवति भोगसाधनत्वात् तथैव चित्तमपि अयःसदृशविषयजातस्य स्वस्मिन् सन्निधीकरणमात्रात् दृश्यत्वरूपमुपकारं कुर्वत् पुरुषस्य स्वामिनः स्वं भवति भोगसाधनत्वात् । अतश्चित्तपुरुषयोरनादिः स्वस्वामिभावः संबन्ध इति शेषः । ततः किमित्यत आह । तस्मादिति । तस्मात् स्वस्वामिभावस्य सिद्धत्वात् स एवानादिसंबन्धः पुरुषस्य चित्तवृत्तिदर्शने हेतुरित्यर्थः । अतो न परचित्तेन परस्य वृत्तिसारूप्यं भवति, कदापि तद्वृत्त्यबोधेन तयोः स्वस्वामि†संबन्धाभावात् । ननु स्वस्वामिभावस्य कथमनादित्वं स हि भोग्यभोक्तृभावरूपतया प्रलये न तिष्ठतीति । मैवम् । अभुज्यमानधनेऽपि सुषुप्तस्य स्वस्वामिभावेन स्वत्वस्वामित्वयोरतिरिक्तपदार्थत्वात् स्वरूपसंबन्धविशेषत्वाद्वा

* अत्रैतच्छब्दः पुस्तकान्तरे नास्ति ।

† स्वस्वामिभावसंबन्धेति युक्तः पाठः ।

प्रतियोग्यनुयोगिभाववत् । अथ वा स्वभुक्तवृत्तिवासनावत्त्वमेव बुद्धौ पुरुषस्य स्वत्वमीदृशो भोग्यभोक्तृभाव एव च तान्त्रिकैर्भोग्यभोक्तृयोग्यतेत्युच्यते । 'चिदवसानो भोग' इति सांख्यसूत्रोक्तस्य सुखदुःखानुभवरूपभोगस्य पुरुषधर्मत्वादिति । स च स्वस्वामिभावश्चित्तपुरुषयोरनादिरेव स्वीक्रियते । न च महत्तत्त्वरूपस्य चित्तस्य कार्यतया कथं तद्धर्मस्यानादित्वमिति वाच्यम् । अन्तःकरणस्य वृक्षवत् कार्यावस्थायामेव महत्तत्त्वपरिभाषास्वीकारात् बीजावस्था तु प्र[1]कृत्यंशत्वरूपा नित्यैव, अन्यथा धर्माधर्मसंस्कारादीनामाश्रयं विना प्रलये ऽवस्थानानुपपत्तेः प्रकृतिमात्रस्य तदाश्रयत्वे तत्कार्यभोगस्मृत्यादेरपि तन्निष्ठत्वस्यैवौचित्यात् अन्तःकरणकल्पनानर्थक्यमन्तःकरणधर्मत्वं धर्मादीनामिति सांख्यसूत्रस्य यथाश्रुतार्थानुपपत्तिश्चेति । अथैवं बुद्धितत्कारणयोरुभयोर्धर्मादिकल्पने गौरवमिति चे,द्दृष्टानुसारितया ऽस्य गौरवस्य प्रामाणिकत्वात् । यथा हि परमाणुपर्यन्तमेव घटे पाकेन रूपं जायते तद्घटभङ्गे च तैरणुभिर्घटान्तरं तद्रूपकं भवति तथैव प्रकृतिपर्यन्तमेव बुद्धौ धर्मादिकमुत्पद्यते तद्बुद्धिनाशे च तत्प्रकृतिभिः तादृशधर्मादिमदेव बुद्ध्यन्तरमुत्पाद्यते कारणगुणप्रक्रमादिति दिक् ॥

कृत्यादिलक्षणा अपि वृत्तयः सन्तीत्यागामिसूत्रस्य न्यूनतां परिहर्त्तुं चित्तस्येत्यन्तं पूरयित्वोत्तरसूत्रमवतारयति । ताः पुनरिति । चित्तस्य बहुवृत्तिकत्वे सत्यपि ता निरोद्धव्या वृत्तयः क्लिष्टाक्लिष्टरूपा वक्ष्यमाणाः पञ्चतय्य एवेति सूत्रेण सहान्वयः । प्रमाणादिरूपवक्ष्यमाणवृत्तिपञ्चकनिरोधेनैव तत्कार्याणामन्यवृत्तीनां निरोधसिद्धिरिति भावः ॥

## वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥

यैः प्रमाणादिलक्षणव्यापारैः चित्तं जीवति ते तद्वृत्तय उच्यन्ते द्विजादीनां याजनादिवत् । क्लिष्टाश्चाक्लिष्टाश्च क्लिष्टाक्लिष्टाः । निरोद्धव्या वृत्तयः क्लिष्टा वा अक्लिष्टा वा भवन्तु वक्ष्यमाणाः पञ्चतय्यः पञ्चप्रकारा

१ प्रकृत्यंशमात्रस्वरूपेति पाठान्तरम् ।

एवेति सूत्रार्थः । वृत्तीनामसंख्यव्यक्तितया ऽवयवार्थकत्वानुपपत्त्या तयपो लक्षणयात्र प्रकारवाचित्वं 'ताः पञ्चधा वृत्तय' इत्यागामिभाष्यात्* इति । क्लिष्टवदक्लिष्टस्यापि हेयत्वप्रतिपादनाय क्लिष्टाक्लिष्टविभागप्रदर्शनं, तत्र चायं क्रमोऽक्लिष्टा उपादाय क्लिष्टा निरोद्धव्यास्ततस्ता अपि परवैराग्येणेति । "सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव ही"ति स्मरणात् । क्लिष्टा व्याचष्टे । क्लेशहेतुका इति । त्रिगुणात्मकतया सर्वासामेव वृत्तीनां क्लेशवत्त्वेन क्लिष्टाक्लिष्टविभागो नोपपद्यतइत्यतः क्लेशसंबन्धविशेषपरतया इत्थं व्याख्यायते । अत्र च हेतुः प्रयोजनं, क्लेशश्चात्र मुख्य एव ग्राह्यो दुःखाख्यः । तथा च क्लेशहेतुका दुःखफलिका विषयाकारवृत्तय इत्यर्थः । क्लेशजनकत्वे हेतुः कर्मेत्यादि । कर्माशयप्रचयानां धर्माधर्मवासनासमूहानां क्षेत्रीभूता आलम्बनीभूताः, क्लिष्टा इत्यर्थः । विषयाकारवृत्तिजन्यतृष्णाद्यभिहतस्तद्धानार्थं यतमानः परपीडानुग्रहाभ्यां धर्माधर्मावुपचिनोति ततश्च दुःखधारा भवतीति भावः । अक्लिष्टा व्याचष्टे । ख्यातीति । अक्लिष्टा अक्लेशफलिकाः । ताश्च गुणाधिकारविरोधिन्यः गुणानां सत्त्वादीनामधिकारः कार्यारम्भणं तद्विरोधिन्यो ऽविद्याकामकर्मादिरूपकारणनाशकत्वात् । ख्यातिविषया विवेकख्यातिसंबद्धा इत्यर्थः । ख्यातिसाधनस्यापि संग्रहाय विषयपदमिति । ननु सूत्रकारेण तामसीनां सात्त्विकीनां च द्विविधानामेव वृत्तीनां निरोद्धव्यत्वमुक्तं न तु राजसीनां क्लिष्टाक्लिष्टरूपमिश्रवृत्तीनामिति न्यूनतेत्याशङ्क्य मिश्रवृत्तीनामुक्तास्वेवान्तर्भावमाह । क्लिष्टप्रवाहेति । क्लिष्टशेषीभूता अपि अक्लिष्टरूपास्तदंशा यद्यपि क्लिष्टच्छिद्रेषु सन्ति तथाप्यक्लिष्टा एव अक्लिष्टशब्देन गृहीता भवन्ति । एवमक्लिष्टच्छिद्रेष्वपि क्लिष्टाः क्लिष्टशब्देन गृहीता इत्यर्थः । तथा च राजस्या मिश्रवृत्तेरंशाभ्यामंशिन्योः प्रवेश इति न न्यूनता । इदानीं वृत्तिनिरोधस्य फलं वक्तुमादौ संसारानर्थबीजं संस्कारं दर्शयति । तथाजातीयकाइति ।

* पञ्चधेत्यर्थकथनमात्रं न तु शब्दवृत्तिव्याख्यानं तयपः प्रकारे ऽस्मरणात् किं तु तयडवयवे एवेति वाचस्पतिमिश्रप्रभृतयः ।

क्लिष्टाक्लिष्टजातीयकाः संस्कारा इत्यर्थः । अस्य जीवग्रामकस्य वृत्ति-संस्कारचक्रस्य स्तम्भने प्रलये च निरोध एवोपाय इत्याह । तदेवंभूत-मिति । तद्वृत्तिसंस्कारचक्रात्मकं चित्तमेवंभूतं निरोधावस्थमवसिताधिकारं क्रमेण समाप्यमानाधिकारं सदात्मकल्पेनात्माविभागेन निर्दुःखतया ति-ष्ठति व्युत्थानपर्यन्तम् । अथ वाभ्यासपाटवेनाखिलसंस्कारक्षये सति प्रलय-मात्यन्तिकलयमेव गच्छति विदेहकैवल्यं प्राप्नोतीत्यर्थः । निरोधसमाधेः पुनरनुत्थानमेव योगिनां मुक्तिरिति भावः । पूर्वसूत्रेण सह योजनार्थं ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तय इति पूरयित्वोत्तरं सूत्रं पठति ॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

सुगमं सूत्रम् । तत्रेति पूरयित्वोत्तरसूत्रमवतारयति । तत्र, तासु वृत्तिषु मध्ये ॥

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

अनधिगततत्त्वबोधः प्रमा तत्करणं प्रमाणमिति प्रमाणसामान्य-लक्षणं सुगमत्वादकृत्वैव विभागः कृतः । परोक्तानि चेतराणि प्रमाणानि एष्वेवान्तर्भाव्यानीत्याशय इति । प्रत्यक्षं व्याचष्टे । इन्द्रियेति । इन्द्रि-याण्येव नाडी * चित्तसंचरणमार्गः तैः संयुज्य तद्गोलकद्वारा बाह्यवस्तूपरक्त-स्य चित्तस्येन्द्रियसाहित्येनैवार्थाकारः परिणामो भवति न केवलस्य चित्तस्य शंखपैत्याद्याकारतायां नयनादिगतपित्ताद्यन्वयव्यतिरेकाभ्यां,मतो रूपादि-वृत्तिषु चक्षुरादीनामपि कारणत्वं शास्त्रेषूच्यते । अत्रोपरागादित्यन्तेन बाह्य-वृत्तेः कारणमात्रं दर्शितं[1] न तु तल्लक्षणे प्रवेशनीयम् । आत्मादिप्रत्यक्षाव्याप-नादीश्वरप्रत्यक्षाव्यापनाच्च, तस्याजन्यत्वात् । अर्थस्येत्यनेन समारोपित-त्वप्रतिषेधान्न विपर्ययेतिव्याप्तिः । विशेषावधारणप्रधानेति विशेषणादनुमा-

* उपलब्धभाष्यपुस्तकेषु इन्द्रियप्रणालिकयेति पाठदर्शनादत्रेन्द्रियाण्येव प्रणालि-केति वक्तुं युक्तम् । अथवा इन्द्रियनाड्येति वार्तिकसंमतो भाष्यपाठः ।

१ प्रदर्शितमिति पाठान्तरम् ।

नागमयोर्व्याप्तिः । स्मृतिव्यावर्त्तनाय तद्विषयेति । उपरक्तवस्तुविषयेत्यर्थः । सामान्यविशेषाभ्यामत्यन्तभिन्न एवार्थ इत्येतन्निरासायोक्तं सामान्यविशेषात्मन इति । अनेन चावयवी न निराकृतः किं त्ववयविनि सामान्यविशेषयोरविभागलक्षणं तादात्म्यमुक्तं पश्चादवयविव्यवस्थापनादिति । "अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि । बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्" इत्यादिस्मृतिभ्यो रश्मिशाखादितुल्यतालाभात् । वृत्तिः प्रभावत् द्रव्यमेवेति प्रागेवोक्तम् । सा वृत्तिरेव दीपप्रभावत् बाह्यार्थमुपसृत्य चक्षुराद्येकीभावेन घटाद्याकारा भवति । स्वप्नध्यानादौ घटाद्याकारतया चित्तवृत्तेरनुभूयमानत्वाद् बाह्ये ऽपि ज्ञानाकारः सिध्यति । अत्रांशे बौद्धानामस्माकं चैकवाक्यत्वे ऽपि न साम्यम् । अस्माभिर्बाह्यार्थस्यापि स्वीकारादिति । प्रत्यक्षस्य लक्षणं कृतमिदानीं तस्य प्रमाकरणत्वेन प्रमाणत्वमुपपादयति । फलमिति । वृत्तिरूपस्य करणस्य फलं पुरुषनिष्ठश्चित्तवृत्तिविषयको बोधः, पुरुषार्थमेव करणानां प्रवृत्तेः । अयं च बोधो विषयदेशएव भवति विभुत्वात् । ननु अयं घट इति वृत्तेर्बोधो घटमहं जानामीति रूपस्तस्य च पौरुषेयत्वे पुरुषस्य स्वतन्त्राकारेण परिणामित्वापत्तिरिति तत्राह । अविशिष्ट इति । स च बोधश्चित्तवृत्त्या सहाविशिष्ट इति वृत्तिसारूप्यसूत्रे उपपादित इत्यर्थः । अयं घट इत्याकारा बिम्बरूपा वृत्तिः कारणं तस्या एव वृत्तेश्चैतन्ये प्रतिबिम्बनाच्चैतन्यमप्ययं घट इत्याकारमिव सद्बोधाख्यं फलं भवतीति नात्रविशेषः शब्देन वक्तुं शक्यते, विवेकिभिरेवेक्षुक्षीरादिमाधुर्यस्येव स्वयं विशेषो ऽनुभूयते दृग्दृश्यादिवैधर्म्यादिति भावः । पौरुषेयो बोध इत्याधाराधेयभावश्च गगने ओत्रमितिवद्विशिष्टाविशिष्टभेदेनोपपादनीयः । करणलक्षणं चात्र फलायोगव्यवच्छिन्नकारणत्वमिति । ननु रूपादिषु चक्षुरादीनामेव करणत्वं श्रुतिस्मृत्योरवगम्यतइति चेत्सत्यं, किं तु बुद्धिवृत्त्याख्यप्रमान्तरं प्रत्येव तेषां करणत्वं न तु पौरुषेयबोधरूपां मुख्यप्रमां प्रति, प्रमाद्वयं च साङ्ख्ये सूत्रितं 'द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमे'ति । चक्षुरादीनां च वृत्तौ करणत्वं व्यापारवत्कारणत्वरूपं कुठारादाविवेति शेषः । ननु विषयाकारतैव विषयग्रहणं चित्तस्यले दृष्टं

पुरुषस्तु कूटस्थो न वृत्त्याकारतां भजते ऽतः कथं पुरुषश्चित्तवृत्तिसाक्षी स्यात् कथं वार्थविशिष्टः पौरुषेयो बोध इत्याशङ्कायामाह। प्रतिसंवेदीति। संवेदिन्या बुद्धेः प्रतिसंवेदी तत्समानाकारः पुरुष इत्येतच्चतुर्थपादे 'चितेर-प्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदन'मिति सूत्रे उपपादयिष्याम इत्यर्थः। यद्यपि चितेः स्वयमाकारो नास्ति तथापि प्रतिबिम्बवशाद्वृ-त्त्याकारापत्त्या वृत्तिबोध इत्यस्माभिर्वृत्तिसारूप्यप्रसङ्गेन प्रागेव व्याख्या-तम्। कश्चित्तु वृत्त्याख्यकारणसामानाधिकरण्येन बुद्धावेव प्रमाख्यं फलं जायते, चैतन्यमेव हि बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्यार्थाकारया तदाकारतामापद्यमानं फलं, तच्च चिच्छायाख्यं चित्प्रतिबिम्बं बुद्धेरेव धर्म इति वदति। तन्न। पौरुषेयशब्दस्य यथाश्रुतार्थत्यागापत्तेः प्रतिबिम्बस्य तुच्छतया ऽर्थभानरूपत्वानुपपत्तेश्च प्रतिबिम्बस्य प्रकाशाद्यर्थक्रियाकारि-तायाः क्वाप्यदर्शनाच्च। प्रतिबिम्बं हि तत्तदुपाधिषु बुद्धेर्बिम्बाकारपरिणाम-मात्रमिति। किंच परस्परं प्रतिबिम्बस्य श्रुतिस्मृतिसिद्धतया चितेरेव वृत्ति-प्रतिबिम्बोपहितायाः फलत्वं युक्तं ज्ञानशब्देनात्मन एव प्रतिपादनात् 'सत्यं ज्ञानमनन्तं ब्रह्म' 'ज्ञानमेव परं ब्रह्म' 'ज्ञानं बन्धाय चेष्यते' इत्यादिश्रुतिस्मृ-तिभ्यिति। बुद्धेश्चिच्छायापत्तिश्चाहमित्यादिरूपैश्चितौ भानार्थमेवेष्यते बुद्ध्यारोहं विना साक्षात्स्वभाने कर्मकर्तृविरोधादित्युक्तमेव। अपि च बुद्धेरेव प्रमातृत्वे पुरुषो न सिध्येत्। वृत्तिसाक्षितया पुरुषसिद्धिरिति चेत्, एवं सति वृत्तिद्रष्टुरेव वृत्त्यारूढार्थद्रष्टृत्वकल्पनोचिता न तु बिम्बप्रतिबिम्ब-योरुभयोरेव द्रष्टृत्वमर्थभेदेन कल्पयितुं युक्तं, गौरवादिति। किं च जाना-मीत्येवं बुद्धिवृत्तौ भासमानं प्रतिबिम्बचैतन्यं स्वज्ञेयं न संभवति कर्मकर्तृ-विरोधादतो बिम्बचैतन्ये भानमावश्यकमिति। अत्रायं प्रमात्रादिवि-भागः॥

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम्॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात्॥

साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूत्रितम् ।
अविकारेण द्रष्टृत्वं साक्षित्वं चापरे जगुः ॥

इति दिक् । पुरुषे वृत्तिबोधरूपं च फलमनुमानादिसकलवृत्तिष्वपि बोध्यम् । अनुमानं लक्षयति । अनुमानस्येति । साध्यविशिष्टः पक्षो ऽनुमेयः तस्य साध्यवत्त्वेन तुल्यजातीयेषु सपक्षेषु अनुवृत्तो विजातीयेभ्यो विपक्षेभ्यो व्यावृत्तो यः संबन्धो ऽर्थात्तत्रैवानुमेये पक्षवृत्तिरिति यावत् । तद्विषया तन्नि-बन्धना, षीञ् बन्धने इत्यनुशासनात् तद्विषयज्ञानजन्येति यावत् । एवंभूता या सामान्यावधारणप्रधाना वृत्तिः सानुमानमित्यर्थः । संबन्धइति पाठेऽपि संबध्यतइति संबन्धः, तथा च स एवार्थः । सामान्येत्यादि प्रत्यक्षव्यावृत्तस्व-रूपकथनमात्रं न तु लक्षणान्तर्गतं वैयर्थ्यादिति । अनुमानवृत्तेरुदाहरणमाह । यथा देशान्तरप्राप्तेरिति । अत्रान्वयव्याप्तौ दृष्टान्तश्चैत्रवदिति । व्यतिरेक-व्याप्तौ च दृष्टान्तो विन्ध्यश्चाप्राप्तिरगतिरिति । अप्राप्तेरिति पञ्चमीपाठ-स्तु लेखकप्रमादात् । प्रत्यक्षसिद्धेनुमितिवैयर्थ्यादिति । आगमाख्यां वृत्तिं लक्षयति । आप्तेनेति । भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषरहितेने-त्यर्थः । मूलवक्त्रभिप्रायेण श्रुतो वेति नोक्तं तदप्युपलक्षणीयम् । स्वबोधसंक्रा-न्तये स्वबोधसदृशबोधोत्पत्त्यर्थमित्यर्थः । श्रोतुर्वृत्तिरिति व्युत्क्रमेणान्वयः । अत्राप्तोक्तार्थविषयिणी शब्दजन्या वृत्तिरित्येवागमप्रमाणस्य लक्षणं, शेषं तु आगमशब्दव्युत्पत्तिमात्रमाप्तादागच्छति वृत्तिरित्यागम इत्याशयः । तदर्थ-विषयेत्यन्तविशेषणव्यावृत्त्यात्रप्रमाणमागमवृत्तिं दर्शयति । यस्येति । दृष्टा-नुमितार्थकत्वाभावेनाश्रद्धेयार्थो ऽवेद्यप्रतिपाद्यको यस्यागमस्य वक्ता स आगमः शास्त्रं चैत्यं वन्देत स्वर्गकाम इत्यादिरूपं प्लवते, प्रमाणवृत्तिजन-नासमर्थइत्यर्थः । नन्वेवं दृष्टानुमितार्थकवक्त्रनिर्मितस्य श्रुतिमूलस्याधु-निकागमस्यापि प्लवः स्यादत आह । मूलेति ।

( शेषमग्रे )

# ॥ माधवीयधातुवृत्तिः ॥

(*Continued from page* 56. VOL. V.)

वृद्धिनिषेधस्य प्रयोजनमन्यत्र, अस्तु चेहापि टिड्ढाणञित्यादिना स्त्रियां ङीपि 'यस्येति चे'त्यकारलोपे सौवाती भार्या यस्येति बहुव्रीहौ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु'ति प्राप्तस्य पुंवद्भावस्य 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे'इति रक्तविकारादतिरिक्तार्थस्य च वृद्धिनिमित्ततद्धितान्तस्य पुंवद्भावो नेति विधीयमानो निषेध इहाणो वृद्धिनिमित्तत्वाभावाच्चेति पुंवद्भावे सौवातभार्य्य इति भवति। स्त्रियाः पुंवदिति सूत्रस्यार्थः। स्त्र्यर्थस्य शब्दस्य स्त्रियां वर्त्तमाने समानाधिकरणे पूरणीप्रियादिवर्जितउत्तरपदे पुंस इव रूपं भवति स चेत् स्त्रीशब्दो भाषितपुंस्कादनूङ् भवतीति। पूरणीति पूरणप्रत्ययान्तः स्त्रीलिङ्गपञ्चम्यादिशब्द उच्यते। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कः, इह तु शब्दस्तद्योगात्तथोक्त. ऊङो ऽभावो ऽनूङ् भाषितपुंस्कात्परोनूङ्, निपातनात्पञ्चम्यलुक्। अतिथिः, ऋतन्यञ्जिवन्यञ्जर्पिमद्यत्यङ्गिकुयुक्रशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्टजिसन्स्यनिथिनुल्यसासानुक इत्यर्त्त्यादिभ्यो द्वादशभ्यः कत्न्यादयो द्वादश प्रत्यया यथासंख्यमित्यतेरिथिन्। अतिथौ साधुरातिथेयः। 'पथ्यतिथिवसतिस्वपतेर्ढञि'ति सप्तम्यन्तात्साध्वित्यर्थे ढञ्। ढस्यायनेयीत्येयादेशः। अतिथयइद,मातिथ्यम्। 'अतिथेर्ञ्य' इति चतुर्थ्यन्तात्तादर्थ्ये ञ्यः। अतसः क्षौमं प्रहरणं च वायुश्च। अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्यो ऽसजित्यसच्। अतसी उमा, 'षिद्गौरादिभ्यश्चे'ति स्त्रियां ङीष्। सातयतीति सातयः। 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्चे'ति कर्त्तरि शे शपि गुणायौ, सातिः सौत्रो धातुरिति वृत्तौ। बोधिन्यासेपि सातिः सुखे वर्त्तते सौत्र इति। जिनेन्द्रहरदत्तौ सातिर्हेतुमण्ण्यन्त इति। इदिद्ग्रन्थनार्थ उत्तरत्र भविष्यति ॥ ३८ ॥

चिती संज्ञाने ॥ संज्ञानं चैतन्यम् । चेतति । चिचेत । चिचिततुः । चिचेतिथ । चिचित । चिचेत । चिचितिव । चिचितिम । चेतिता । चेतिष्यति । चेततु । अचेतत् । चेतेत् । आशिषि चित्यात् । अचेतीत् । अचेतिष्यत् । भावे । चित्यतइत्यादि, चिचितिषति । चिचेतिषति । चितित्वा । चेतित्वा । रलो व्युपधादिति कित्त्वविकल्पः । चेचित्यते । चेचितीति । नाभ्यस्तस्येति गुणनिषेधः । चेचेत्ति । चेतयति देवदत्तम् । अचीचितत् । अणावकर्मकादिति परस्मैपदमेव । गतिबुद्धीति प्रयोज्यं कर्म । चित्तः । चित्तवान् । श्वीदित इत्यनिट्त्वं, चितः । इगुपधलक्षणः कः । चेतनः । बाहुलकात्कर्त्तरि ल्युः । चित् चैतन्यम् । संपदादित्वाद्भावे क्विप् । चेतः । असुवित्यसुन् । सुचेतीकरोति । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चे'ति कृभ्वस्तियोगे च्विः सलोपश्च । 'अस्य च्वावि'तीकारोऽकारस्य । अत्र मैत्रेयः कणः कश्चेति चितेः कणप्रत्यये धातोरन्त्यस्य ककारे चिक्कण इति । बहुलवचनाद्गुणाभावः प्रत्ययकस्येत्संज्ञाऽभावश्चेति । हरदत्तस्तु चिनोतेः क्विप्, चित्,कणतेश्च कणः, तकारस्य ककारश्चिक्कणादिपाठात् । के चित्तु चिक्कणादिषु तकारमेव पठन्ति । न्यासकारोऽप्येवं निरुवाह । स्मरणार्थोऽप्ययम् । चेतन्ती सुमतीनामिति दर्शनात् । 'अधीगर्थदयेशां कर्मणी'ति कर्मणः शेषत्वे षष्ठी । अधीगर्थाः स्मरणार्थाः । तथा संधानार्थोऽपि । यदाह श्रीरामस्वामी । प्रायो विनाशः चित्तं सन्धानं विनष्टस्य संधानं प्रायश्चित्तमिति । 'प्रायस्य चित्तिचित्तयो'रिति पारस्करादिपाठात् सुट् । चिति स्मृत्यामिति चुरादौ । चिते संचेतनइति तत्रैवात्मनेपदी ॥ ३९ ॥

च्युतिर् आसेचने ॥ 'उपदेशेऽजनुनासिक इत्' 'हलन्त्यमितीकाररेफयोरित्त्वे । सेचनमा आर्द्रीभावनम् । यदाह हरदत्तः, सिचिः कर्मस्थक्रियः आर्द्रीभावने ह्यत्र प्रधानं तदर्थत्वात्कारकव्यापारस्येति । आङीषदर्थेऽभिव्याप्तौ वा । च्योतति । चुच्योत । चुच्योतिथ । चुच्युतिव । च्योतिता । च्योतिष्यति । अच्योतत् । च्योतेत् । आशिषि । च्युत्यात् । लुङि 'इरितो वे'ति च्लेः परस्मैपदेष्वङादेशविधानान् ङित्त्वाच्च गुणः । अच्युतत् । अच्युततामित्यादि । अङभावे अच्योतीदित्यादि, कर्मादौ च्युत्यतइत्यादि । चुच्युतिषति । चुच्योतिषति ।

च्योतित्वा । च्युतित्वा । पूर्ववत् कित्त्वविकल्पः । चोच्युत्यते । चोच्युतीति । चोच्योत्ति । इति माभ्यस्तस्येति गुणनिषेधः । च्योतयति । अचुच्युतत् । निष्ठाया'मुदुपधाद्भावादिकर्मणो'रिति कित्त्वविकल्प उदाहार्यः । च्युतितमनेन । च्योतितमनेनेत्यादि । कर्माविवक्षायां कर्मकर्तरि भावसंभवः ॥ ४० ॥

श्च्युतिर् क्षरणे ॥ क्षरणं स्रुतिः । श्च्योतति । चुश्च्योतेत्यादि च्युतिवत् । अभ्यासे खयः शेषः । सकारादिरयं, निर्देशः श्चुत्वेन । सकारादित्वे प्रयोजनं मधु श्च्योततीति मधुश्च्युत् । क्विप् । अस्मात्तत्करोति तदाचष्टइति णिचि णाविष्ठवत्प्रातिपदिकस्येतीष्ठनीव कार्यविधानाट्टिलोपे मधुश्च्यायतेः क्विप् । तस्य लोपे प्रत्ययलक्षणेन 'णेरनिटी'ति णेश्च लोपे यकारान्ताद् अस्मात् कृदन्तात् प्रातिपदिकात्सौ तस्य हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वेन पदत्वे संयोगान्तस्येति यलोपे श्चुत्वस्य पूर्वत्रासिद्धत्वात्स्कोरिति सलोपे 'चोः कु'रिति चकारस्य पदान्तस्य कुत्वे तस्य जश्त्वे मधुगिति रूपसिद्धिरिति वृत्तिन्यासपदमञ्जरीसंमताकारमैत्रेयादिभिरुक्तम् । यद्येवमटतीत्यट्,अट् श्च्योततीत्यत्रापि श्चुत्वस्यासिद्धत्वात्सकारपरत्वा ड्डः सि धुडि'ति धुट् प्राप्नोति,नैतत् । श्चुत्वं धुट्त्वे सिद्धं वक्तव्यमित्युक्तत्वात् । अत एव वृत्तिकारादिविरोधात् तालव्योष्मादिवादिनौ स्वामिकाश्यपावुपेक्ष्यौ । यद्यपि तयोरट् श्च्योततीत्यत्र धुडभावः सिद्धः, मधुगित्यत्र संयोगान्तस्येति यकारवकारयोर्लोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां ष' इति व्रश्चादीनां छकारशकारान्तानां च झलि पदान्ते च षत्वविधानाच्च शकारस्य षकारे झलां जश इति जश्त्वे मधुडिति स्यात् । अत्र श्चुतिरित्ययकारमपि पठन्ति । तथा च मधुश्चुतं घृतमिव सुपूतं श्चोतन्ति ते इत्यादौ भट्टभास्करः । अत्र मैत्रेयोपि । श्चुतिरित्यप्येके पठन्ति चुतिर् हासनइति च ॥ ४१ ॥

मन्थ विलोडने ॥ विलोडनं क्षोभणम् । मन्थति । ममन्थ । ममन्थिथ । मन्थिता । मन्थिष्यति । मन्थतु । अमन्थत् । मन्थेत् । आशिषि । मथ्यात् । यासुटः कित्त्वान्नलोपः 'अनिदितां हल उपधायाः

क्ङिती'ति । अमन्थीत् । अमन्थिष्यत् । कर्मादौ मथ्यतइत्यादि । मिमन्थिषति । मामथ्यते । मामन्थीति । मामन्ति । लङस्तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे चामामन् । मन्थयति । अममन्थत् । मथित्वा । मन्थित्वा । नोपधात्परस्य 'नोपधात्थफान्ताद्वे'ति थकारफकारान्तात्सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः । मन्थः । 'हलश्चे'ति करणे घञ् । मन्थनी । करणाधिकरणयोश्चेति अधिकरणे ल्युडन्तात्टिड्ढाणञिति ङीप्, मन्थानः । सम्यानचत्स्व इत्यानच्बाहुलकादस्मादपि । अत्रायं धातुर्यद्यपि क्षीरस्वाम्यादिभिर्न पठ्यते तथापि मैत्रेयचन्द्रदुर्गैः पठितत्वात् शमीगर्भादग्निं मन्थति ततो यथा प्राशु मन्थति यदि मथ्यमानो न जायेतेत्यादिदर्शनादस्त्येव । अयं द्विकर्मकः । दुहादित्वादप्रधाने कर्मणि लादयः । अमृतमम्बुनिधिर्मथ्यतइति । द्वितीयावत् कृद्योगलक्षणा षष्ठ्युभयत्र कर्मणि गुणे तूभयथा गोणिकापुत्र इति वचनाद् द्वितीयापि । अमृतस्याम्बुनिधेर्मन्थिता । अम्बुनिधिमिति च । अमृतं मन्थितव्यो ऽम्बुधिर्देवैरित्यत्र कृत्यानामिति योगविभागेन कर्तृकर्मणोः षष्ठी निषिध्यते । नाथतौ सर्वमेतद् उपपादितम् । अयं क्र्यादावपि । इह चायं निरनुषङ्ग एदित् ॥ ४२ ॥

कुथि पुथि लुथि मथि हिंसासंक्लेशयोः ॥ कुन्थति । चुकुन्थेत्यादि मन्थिवत् । विशेषस्त्विदित्वात् क्ङिति नलोपाभावः । कुन्थ्यतइत्यादि, तथा हिंसार्थत्वाच्च गतिहिंसेति कर्मव्यतिहारे हिंसायां तङ्निषेधश्च । एवं पुन्थतिलुन्थतिमन्थतयो ऽपि । मन्थतिस्तु सर्वत्र मन्थतिवत् । अत्र च क्षीरस्वामी मन्थं सानुषङ्गमनिदितं पठित्वा मथ्यतइति चोदाहृत्य मथीति दौर्गा मन्यन्तइत्याह । संमतायां तु द्वावपि पठ्येते । खड्गोपकुन्थं शत्रुं मारयति । खड्गेनोपकुन्थमिति वा । 'हिंसार्थानां च समानकर्मकाणा'मिति अनुप्रयोगधातुना समानकर्मकाणां हिंसार्थानां तृतीयान्तउपपदे वा णमुलिति णमुल् । तृतीयाप्रभृतीनीति समासविकल्पः । सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वा सरूपेण क्त्वापीति वृत्तावुक्तम् । तेन खड्गेनोपकुन्थ्येति 'समानकर्तृकयोः पूर्वकाल'इति क्त्वापि भवति । एवं खड्गोपकुन्थमित्यप्युदाहार्यम् ।

कुन्थ संश्लेषणइति क्र्यादौ । कुथ पूतीभावे । पुथ हिंसायामिति दिवादौ । पुथ भाषार्थश्चुरादौ ॥ ४६ ॥

षिध गत्याम् ॥ केचिदुदितं पठन्ति । यदाह काश्यपः, उकार'उदितो वे'ति विशेषणार्थ इति, तरङ्गिणी चायमुदिदिति, तद्वृत्तिविरोधादुपेक्ष्यं, यदाह ततः परं सिध्यति श्यनेतर इत्यनिट्कारिकायां सिध्यतिबुध्यत्योः श्यना निर्द्देशादन्यविकरणयोर्बुधिसिध्योरिड् भवत्येव । बोधिता । सेधिता । निष्ठायामपि प्रतिषेधाभावाद् बुधितं सिधितमित्येव भवतीति । उदित्त्वे हि'उदितो वे'ति क्त्वायां विकल्पस्योक्तत्वाद् 'यस्य विभाषा' यस्य धातोः क्व चिद्विभाषेडुक्तस्तस्य निष्ठायामिण्नेति प्रतिषेधेन भाव्यमिति कथमेवं ब्रूयात् । तत्र न्यासपदमञ्जर्योरपि सिधेरुदित्त्वमनार्षमित्युक्तम् । अत एव क्षीरस्वामी सिद्धमित्युदाहृत्य निरनुबन्धपाठे तु सिधित इत्यपरितुष्यन्नुदाजहार । अथोदाहरणानि । 'धात्वादेः षः सः' ॥ सेधति । सिषेध । सिषिधिथ । सिषिधिव । 'आदेशप्रत्यययोरि'ति षत्वं, सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । आशिषि । सिध्यात् । असेधीत् । असेधिष्यत् । कर्मणि सिध्यतइत्यादि । गत्यर्थत्वेन कर्तृस्थक्रियत्वाद् न कर्मकर्तास्ति । सिसेधिषति । सिसिधिषति । सिधित्वा । सेधित्वा । रलो व्युपधादिति कित्त्वविकल्पः । स्तौतिण्योरेव षणीति नियमान्न षत्वम् । सेषिध्यते । कुटिलं गच्छतीत्यर्थः । 'नित्यं कौटिल्ये गतौ'-विति यङ् । नित्यग्रहणं क्रियासमभिहारे यङो निवृत्तयइति वृत्तौ प्रतिपादितम् । सेषिधीति । सेषेद्धि । झषस्तथोर्धोऽध इति धत्वे जश्त्वम् । सेधयति । असीषिधत् । 'दीर्घो लघोरि'ति दीर्घः, 'सिध्यतेरपारलौकिके'इति णावात्वं श्यना निर्द्देशादस्य न भवति । प्रतिषेधति । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जा'मिति उपसर्गस्थान्निमित्तात्परस्य सुनोत्यादिसकारस्य षत्वविधानात्सात्पदाद्योरिति निषेधं बाधित्वा सिधिसकारस्य षत्वं, सेधेति शपा निर्द्देशो यङ्लुङ्निवृत्त्यर्थो दैवादिकनिवृत्त्यर्थश्चेति हरदत्तः । तेन प्रतिसेषिधीतीत्यत्र अभ्यासे न षत्वं,

परस्य आदेशप्रत्यययोरिति षत्वम् अस्त्विह शपा निर्देशोयं सिध्यतेरेव निवृत्त्यर्थो न यङ्लुक, स्तेनेह षत्वं भवत्येव, एवं हि 'सेधतेर्गताविति निषेधे शपा निर्देशो ऽर्थवान् अन्यथा यङ्लुकि षत्वस्यैवाप्रसङ्गात् किमनेनेति, प्रत्यषेधदित्यादौ उपसर्गस्यान्निमित्तात्परत्वाभावेऽपि 'प्राक् सितादड्व्यवायेऽपी'ति षत्वम् । प्राक् सितादिति उपसर्गस्यात्सुनोतीत्यादयः परिनिविभ्यः सेवेत्यन्ता उच्यन्ते । प्रतिषिषिधिषतीत्यत्र स्तौतिण्योरेवेति नियमं बाधित्वा 'स्थादिष्वभ्यासेन चाभ्यासस्ये'ति अभ्यासात्परस्य षत्वं, प्रकृते तूपसर्गादिति । इदं षत्वमषोपदेशार्थमवर्णान्ताभ्यासार्थस्तौतिण्योरेवेति नियमबाधनार्थं चेत्युक्तम् । सूत्रार्थस्तु स्थादिषु प्राक्सितीयेषु उपसर्गादिति अभ्यासेन व्यवहितस्य च भवतीति । अत्राभ्यासस्योपसर्गादित्येव सिद्धे ऽभ्यासग्रहणं योगभेदेन प्राक्सितीयेषु स्थादिष्वेवाभ्यासस्य षत्वं न त्वन्यत्रेति निषेधप्रतिपादनार्थम् । इदं चोपसर्गादिति षत्वं 'सेधतेर्गताविति निषेधात् प्रतिसेधति गा इत्यादौ गत्यर्थत्वे न भवति । सुषेधः, दुःषेधः, निःषेधः, । 'सुषामादिषु चे'ति षत्वम् । नन्वत्राद्यउपसर्गस्यान्निमित्तात्परत्वादेव सिद्धम्, इतरयोरपि 'नुम्विसर्जनीयशर्व्यवायेपी'ति किमेषां गणे पाठेन । अत्र वृत्तिः । सुशब्दस्य कर्मप्रवचनीयत्वान्निर्दुश्शब्दयोः क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोयं, सेधतेर्गताविति प्रतिषेधबाधनार्थंतेति । सिध्रः साधुपर्यायः सिध्यतेर्वायम् । स्फायितञ्चीत्यादिना रक् । सिध्रको वृक्षविशेषः । संज्ञायां कन् । सिध्रकप्रचुरो वनविशेषः, सिध्रकावणम् । 'वनगिर्योः संज्ञायां कोटरकिंशुलकादीना'मिति कोटरादित्वाद्वनउत्तरपदे दीर्घः । 'वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्य'इति वननकारस्य णत्वम् । वनमिति षष्ठ्यर्थे प्रथमा । इदं णत्वं संज्ञाया,मग्रात्परत्वेऽसंज्ञायामपीति स्थितम् । सिध्मं बाहुलकान्मन् । सिध्मलः । 'सिध्मादिभ्यश्चेति' प्रथमान्तादस्त्युपाधिकादस्त्यर्थे लच् ॥ ४७ ॥

( शेषमये )

# सटीकसंक्षेपशारीरकम् ।

(Continued from page 17. Vol. V.)

मू० ॥ सोऽयमित्यपि पदार्थरूपकं
लक्षणं यदुपलक्षणं हि तत् ॥
अंशता यदि पदार्थलक्ष्ययो-
र्गृह्यते ननु पुनर्विरोधिता ॥ २०७ ॥

टी० ॥ जहल्लक्षणायां लक्ष्यस्य वाच्यसंबन्धित्वेनैव लाक्षणिकपदजन्यज्ञानमिति नियमं दूषयित्वा जहदजहल्लक्षणायां तदसंभवमाह । सोऽयमिति । पदार्थरूपकं पदार्थस्वरूपम् । लक्षणं लक्ष्यतेऽनेनेति लक्षणम्, लक्षकमिति यावत् । तत्तेदन्ताविशिष्टपदार्थद्वयस्वरूपं शुद्धस्य यल्लक्षणं तदप्युपलक्षणम् । उपलक्षणं हि तटस्थलक्षणमेव, अपिशब्दात्काकवदिति सूचयति । एतावान्विशेषः, काकाऽधिकरणत्वमन्यदेव गृहस्वरूपं लक्षयति । इदं तु स्वान्तर्भूतमेव देवदत्ताऽऽदिरूपमिति । ततः किं तत्राऽऽह । अंशतेति । पदवाच्याभ्यां लक्ष्ययोरंशता मुख्याऽर्थसंबन्धिविशिष्ठता यदि गृह्यते सोऽयं पदाभ्यां लक्षणया ज्ञायते तर्हि पुनर्विरोधिता नन्विति संबन्धः । यथा वाच्ययोर्विशिष्टयोरभेदे विरोधः प्रागुक्तः, एवं यदि वाच्याऽर्थलक्ष्ययोरंशांशिताऽपि लाक्षणिकपदेन ज्ञाप्येत तदा पुनरपि सैव विरोधिता भवेत्, लक्ष्यस्वरूपे तत्तेदंतावैशिष्ट्याऽनपायादित्यर्थः ॥ २०७ ॥ :: ॥ :: ॥

मू० ॥ एवं तावल्लक्षणावृत्तिहेतो-
र्नीतैषाऽखण्डवाक्याऽर्थबुद्धिः ॥
मुक्त्वापीमां लक्षणावृत्तिमेषा
वक्तुं शक्येत्युच्यतेऽनन्तरेण ॥ २०८ ॥

टी० ॥ एवं पदद्वयलक्षणया महावाक्यस्य सत्यादिवाक्यस्याऽपि समभिव्याहृतनिखिलपदलक्षणयाऽखण्डे ब्रह्मणि वृत्तिमुक्तामनूद्य विना-

ऽपि लक्षणां वाक्यं परमतेऽखण्डाऽर्थनिष्ठं यदा तदाऽस्मन्मते लक्षणया तत् किमु वक्तव्यमित्याशयेनाह। एवं तावदिति। उक्तोपपत्तिपरामर्शार्थ एवं-शब्दः। तावच्छब्दोऽपि वक्ष्यमाणपक्षात्प्राथम्यमस्य द्योतयति। अनन्तरेणान्येनेति शेषः॥ २०८॥ :: ॥ :: ॥

मू० ॥ भिन्नाऽभिन्नरवौ घटादिवचसा साकं समुच्चारिता-
वन्यूनानधिके घटाऽऽदिविषये तावत्प्रवृत्तौ तव ॥
नो चेद्विश्वसृजोऽपि दुष्परिहरा भेदादिमालाऽऽगता
भेदादेरपि तत्र वाच्यमपरं भेदादिकं स्यादिति ॥ २०९ ॥

टी० ॥ तदेव दर्शयति। भिन्नाऽभिन्नेति। रवौ शब्दौ। भिन्नो घट इति, अभिन्नो घट इति घटादिपदेन सहोच्चारितौ भिन्नाभिन्नशब्दौ घटाऽऽदिपदस्य यावान्विषयस्तावत्येव तव मते प्रवृत्तौ तावन्मात्रविषयाविति यावत्। परपक्षे हि भेदः स्वरूपमेव वस्तुन इति वक्तव्यम्। एवं च भिन्न-घटशब्दयोरेकाऽर्थत्वाल्लक्षणां विनैव तावेकप्रातिपदिकाऽर्थमात्रनिष्ठाविति तद्वाक्यमखण्डाऽर्थम्। एवमभिन्नो घट इति वाक्यमपि। ननु भिन्न इति घटाऽऽदिविशेषणतया प्रतीयमानो भेदः कथं घटाऽऽदिस्वरूपं स्यादिति चेत्सत्यमस्ति तवेयमनुपपत्तिः, तथापि स्वरूपाऽतिरिक्तो भेदस्त्वन्मते न सिद्ध्यतीत्याशयेनैवमुक्तम्। नन्वतिरिक्त एव भेदोऽभेदो वा स्तु तथा च तद्विशिष्टोऽभेद एव घटादिर्वाक्यर्थ इति कुतोऽखण्डाऽर्थतेत्याशङ्क्याह। नो चेदिति। स्वरूपमेव भेदादिर्न भवति किं तु तदतिरिक्त एव चेदि-त्यर्थः। भेदाऽऽदिमाला, भेदाऽभेदपरम्परेत्यर्थः। आगतेति च्छेदः। कथं तत्र भेदादिमालाऽऽगतास्यात्तत्राऽऽह। भेदादेरिति। तत्र तस्मिन्मते, भेदादे-र्धर्म्यादिभ्यो भेदभेदे धर्म्यादिभ्या भेदान्तरमभेदे च स्वाभेदान्तरमेवं तत्रतत्राऽपीति भेदादिमालाप्रसङ्गः। न च भेदादेर्भेदादिः स्वरूपमेवेतिवा-च्यम्। तर्हि प्रथममेव तथास्तु किमतिरिक्तभेदादिकल्पनया। न च घटो भिन्न इत्यादिविशिष्टप्रतीतिबलाद्घटाऽद्यतिरिक्तभेदादिसिद्धौ सत्यां पश्चा-त्कल्प्यमानस्वरूपभेदादेः प्रथमक्लृप्तातिरिक्तभेदबाधकत्वं न युक्तकल्पनमि-

तिवाच्यम् । भेदादिविशेषणतादिप्रतीतेर्दुर्म्यादिभ्यस्तस्य भेदग्रहसापेक्षत्वेन प्रथममेव घटादिस्वरूपभेदादेः क्लृप्तत्वेन तद्विलक्षणभेदादिकल्पनाऽनुपपत्तेः । न हि विशेषणविशेष्ययोर्भेदज्ञानमृते परस्परविरुद्धविशेषणविशेष्यभावप्रतीतिर्भवति । भावे वा प्रतीतेरन्यथासिद्धत्वेनातिरिक्तभेदसाधकत्वं न स्यादिति भावः ॥ २०९ ॥

मू० ॥ परस्पराभावमुपाददानो
निमित्तमर्थेषु हि भिन्नशब्दः ॥
प्रवर्त्ततेऽन्ये तु घटादिशब्दा
निजंनिजं वाच्यमुपाददानाः ॥ २१० ॥

टी० ॥ नन्वेवं भिन्नाऽभिन्नघटशब्दानां पर्यायतापत्तिरिति चेत्त्किं भेदादौ भिन्नाऽऽदिशब्दो न प्रवर्त्तते, प्रवर्त्तते चेत्तत्र यः परिहारः स एवाऽन्यत्राऽपि तवाऽस्तु, एवं सत्यपि परिहारान्तरमाह । परस्परेति । ननु कोऽसौ स्वरूपभेदवादे परस्पराऽभावः, अन्योऽन्याभाव इति चेत्किं तत्र प्रमाणं, घटात्पटोभिन्न इत्यादिबुद्धेः स्वरूपभेदाऽवलम्बनतयाऽन्यथासिद्धत्वात् । एतेनाऽस्त्येव तन्मतेपि परस्पराऽभावः किं तूक्तदोषात्स भेदो न भवतीति न भेदानन्त्यमिति प्रत्युक्तम् । भेदाऽतिरिक्तपरस्पराभावे प्रमाणाभावस्योक्तत्वादितिचेत्सत्यम् । एवं हि स्वरूपभेदवादिनो भावान्तरमभावो हि कया चित्तु व्यपेत्ययेति वदन्त आहुः, घटः पटो न भवतीति पटाऽऽदिसापेक्षतया प्रतीयमानं घटादिस्वरूपं पटाऽऽदिभ्यो भेदः, एवं पटादिस्वरूपमपि घटाऽऽदिभ्यो भेद इति, एवं परस्परस्याऽभावः परस्पराऽपेक्षस्वरूपम् । तदुपाददान इत्यर्थः । निमित्तं प्रवृत्तिनिमित्तम् । अर्थेषु घटपटादिषु । निजंनिजं स्वीयंस्वीयमन्योन्यनिरपेक्षघटत्वादिस्वरूपं वाच्यमुपाददानाः बोधयन्तः । प्रवर्त्तन्त इति विपरिणताऽनुषङ्गः । तत्पक्षे हि भिन्नशब्दः पटादिकमपेक्ष्य घटाऽऽदिस्वरूपं बोधयति । अथ च पटादिवैशिष्ट्यं घटेन प्रतिपादयति, घटादिशब्दस्तु घटत्वादिकमेव निमित्तीकृत्य तत्र प्रवर्तते इति न तयोः पर्यायता नाऽपि विशिष्टार्थं वाक्यमिति भावः ॥ २१० ॥

मू० ॥ परस्पराऽभावविहीनभावा-
दभिन्नशब्दस्य घटे प्रवृत्तिः ॥
घटस्वरूपैकनिबन्धनात्तु
घटादिशब्दस्य घटे प्रवृत्तिः ॥ २११ ॥

टी० ॥ एवमभिन्नशब्देऽप्याह । परस्पराऽभावविहीनभावादिति । भेदशब्दप्रवृत्तिनिमित्तेतरसाऽपेक्षत्वस्याऽभावः परस्पराऽभावविहीनभावः तत्सापेक्षवस्तुस्वरूपमिति यावत्, तस्मात्तथा च तटस्थ एवाऽभिन्नपदप्रवृत्तिनिमित्तं स इति न घटाऽऽदिपदेन तत्स्वरूपनिमित्तेन पर्यायतेति भावः ॥ २११ ॥

मू० ॥ अबोधनाशश्चितिरित्यमुष्मि-
न्पदद्वयेत्वेकरसाऽऽत्मनिष्ठे ॥
अगौणमेकं पदमन्यदत्र
द्वितीयवृत्तीतरसंगमाय ॥ २१२ ॥

टी० ॥ इदानीं सिद्धान्त्येकपदलक्षणयाऽपि तदाह । अबोधनाश इति । अज्ञाननाश इत्यर्थः । चितिः ज्ञानम् । अगौणं मुख्यार्थम् । द्वितीयवृत्ति लक्षणावृत्तिविशिष्टम् । इतरसंगमाय पदान्तरसम्बन्धाय, तदर्थान्वययोग्यताया इत्यर्थः ॥ २१२ ॥

मू० ॥ अज्ञाननाशपदमत्र हि मुख्यमिष्टं
विद्यानिबन्धननिवृत्तिसमर्पकत्वात् ॥
तेनाऽन्वयाऽपचितिवाचि पदं स्ववाच्ये
सैवं समुज्झति मतेः परिणामरूपम् ॥ २१३ ॥

टी० ॥ ननु किं पदं तत्राऽगौणं किं वा लक्षणावृत्तीति तत्राह । अज्ञाननाशपदमिति । अत्रास्मिन्वाक्ये । हिरेवार्थे । अज्ञाननाशपदमेवेति सम्बन्धः । मुख्यं मुख्यार्थम् । कुत इति चेत्तत्राह । विद्यानिबन्धनेति । विद्या अविद्यानिवर्त्तकसाक्षात्काररूपा वृत्तिस्तन्निबन्धना तदुपहिता या निवृ-

त्तिस्तस्याः समर्पकत्वाद्बोधकत्वादित्यर्थः । अविद्यानिवृत्तिर्हि वक्ष्यमाणन्यायेनाऽविद्याऽधिष्ठानात्मैव । अविद्यानिवृत्तिपदं च तामेव निवृत्तिमभिधत्ते । यद्यपि पूर्णात्मन्युक्तवक्ष्यमाणन्यायेन कस्याऽपि पदस्य वृत्तिर्न संभवति । तथाऽपि विद्योपहितात्मरूपाऽविद्यानिवृत्तौ तत्पदं प्रवर्त्तते, पशुत्वोपहिते इतिहरिशब्दवत्, तत्र पशुत्वमिवाऽत्र विद्याप्युपाधितया तटस्थैवेति केवलाऽऽत्मनिष्ठत्वान्मुख्यमेवेदम् । नन्वविद्यानिवृत्तिरिति नैकं पदं निवृत्तिपदं तु घटादिनिवृत्तिसाधारणेन रूपेण तां वदतीति नात्ममात्रनिष्ठमिति चेत्र । निवृत्तौ भावस्याऽभावस्य वा साधारणधर्मस्यासंभवेन तत्तत्स्वरूपस्यैव तत्पदाऽभिधेयत्वादविद्यानिवृत्तिश्चात्मैव स्वरूपमिति नोक्तदोषः । ततस्तदन्वयाय चितिवाचि पदं चितिरिति पदं स्ववाच्ये शबले मतेरन्तःकरणस्य परिणामरूपं सैवं स्वकीयं धीपरिणामांशं समुज्झति त्यजति । एतच्च भागान्तरोपादानोपलक्षणमिति मुख्यलाक्षणिकपदाभ्यामखण्डसिद्धिरिति भावः । अत्र सैवं समुज्झतीत्यनेनाऽर्थसिद्धाऽनुवाद इति द्रष्टव्यम् ॥ २१३ ॥

मू० ॥ विधिपदानि हि भागसमर्पणा-
दपरभागनिराकरणादपि ॥
अविषयात्ममतिं जनयन्ति नो
न तु मृषाऽर्थनिवृत्तिगिरस्तथा ॥ २१४ ॥

टी० ॥ ननु विधिपदस्यात्मनि लक्षणा, अभावपदस्य तत्र शक्तिरिति महदेतच्चित्रम्, अविद्यानिवृत्तिर्वा कथमात्मा भवेत्, न हि घटनिवृत्तिर्भूतलं भवतीत्याशङ्क्य सत्यादिपदसाधारण्याच्चितिपदस्य नाऽत्र किं चिच्चित्रमित्याशयेनाह । विधिपदानीति । भावरूपाऽर्थवाचकपदानीत्यर्थः । निराकरणात्परिवर्ज्जनात् । अविषयात्ममतिमवाच्याऽऽत्ममतिं ब्रह्माकारां वृत्तिम् । नः अस्माकं मते । द्वितीयामाशङ्कां परिहरन्नाह । न त्विति । मृषार्थनिवृत्तिगिरस्तु तथा तद्भागत्यागाऽपरभागाऽर्पणेनाऽविषयाऽऽत्ममतिं न जनयन्तीत्यर्थः । मृषाऽर्थनिवृत्तीत्यस्याऽयमाशयः । यत्र यदध्यस्तं तस्य ततः

पृथक्सत्त्वाऽभावात्तत्र तन्निवृत्तिरत्यन्ताऽभावोऽधिष्ठानमेव, यथा शुक्तिरजताऽऽदेः, घटाऽऽदेस्तु भूतलादावनध्यस्तत्वेन पृथक्सत्त्वान्निवृत्तिस्ततो भिद्यते। अविद्या चात्मन्यध्यस्तैवेति तन्निवृत्तिः स एव, अतो न किं चिदन्नालौकिकमिति ॥ २१४ ॥ :: ॥ :: ॥

मू० ॥ भेदो भिन्नश्चाऽतिरेकोऽतिरिक्तो-
ऽभेदो ऽभिन्नः संविदः स्वप्रकाशाः ॥
इत्येतस्मिन्विद्यते नाऽर्थभेदो
वेदान्तानामप्यखण्डस्तथाऽर्थः ॥ २१५ ॥

टी० ॥ पूर्वं भिन्नोऽभिन्नो वा घट इत्याद्युदाहरणेन मुख्यवृत्त्याऽखण्डाऽर्थतायां परसंमतिरुक्ता, तत्र धर्मभेदवादिनोऽसंप्रतिपत्तिं मत्वा तत्संमतोदाहरणेन तामाह। भेदो भिन्न इत्यादिना। एकदेशिनं प्रत्याह। अतिरेकोऽतिरिक्त इति। जीवब्रह्मणोर्भेदाऽभेदसंपादकः कश्चिद्धर्मोऽतिरेकः। प्राभाकरं प्रत्याह। संविदः स्वप्रकाशा इति। इत्येतस्मिन्नीदृशेऽस्मिन्वाक्य इत्यर्थः। येषां मते भेदो घटादेर्भिद्यते तेषामपि भेदस्य भेदाद्भेदानङ्गीकारात्तत्स्वरूपमेवेति मुख्याऽर्थयोरपि पदयोरेकार्थत्वम्। एवमतिरेकाद्युदाहरणेऽपि द्रष्टव्यम्। तथा स्वप्रकाशत्वमपि संवित्स्वरूपमेव। तस्य ततो भेदे तेनाऽन्येन वा संबन्धाऽसंभवेनाऽसिद्धिप्रसङ्गः, मानान्तरग्राह्यत्वे च संविदोऽपि तत्प्रसङ्गेन स्वप्रकाशत्वाऽयोगादित्यभिप्रेत्य दार्ष्टान्तिकमाह। वेदान्तानामिति ॥ २१५ ॥

मू० ॥ एवं तावदखण्डवस्तुविषयः शब्दाऽन्वयो दर्शितो
लोके दृष्टनयेन पाणिनिवचोऽप्यस्यैव संसूचकम् ॥
येनाऽयं स्मरति प्रकृत्यभिहिते वृक्षादिके केवले
तन्मात्रे प्रथमेतिसूत्रवचसैवाद्यां विभक्तिं मुनिः ॥ २१६ ॥

टी० ॥ एवंन्यायबलाल्लोकवादिप्रसिद्धेः सोऽयमित्यादिदृष्टान्तेन च वेदान्तानामखण्डवस्तुसमन्वयं दर्शितमनुवदन्समस्ततीर्थकाराणां संप्रति-

पत्राप्तभावपाणिनिवचनादप्यखण्डाऽर्थत्वसिद्धेर्वेदान्तेषु तदविरुद्धमित्याशयेनाऽऽह । एवं तावदिति । येन वचसा पाणिनिनाऽखण्डविषयशब्दसमन्वयः सूचितः, तत्सूत्रैकदेशं संक्षिप्य तदर्थकथनपूर्वकमुदाहरति । येनेति । अयं मुनिर्येन सूत्रवचसैव स्मरति तत्पाणिनिवच एवाऽस्य संसूचकमिति संबन्धः । प्रकृत्यभिहिते वृक्षादिपदस्य प्रकृत्यंशाऽभिहिते । अनेनप्रातिपदिकार्थेति पदं व्याख्यातम् । केवल इति सौत्रमात्रपदार्थस्योक्तिः तन्मात्रे प्रथमेति सूत्रैकदेशोदाहरणम् । आद्यां प्रथमाम् । पाणिनिः खलु भगवान्प्रातिपदिकाऽर्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रे प्रातिपदिकाऽर्थमात्रे प्रथमां विभक्तिं स्मरन्पर्याययोर्वृक्षाऽऽदिप्रातिपदिकप्रथमाविभक्त्योरेकार्थत्वं दर्शयति । एतदेव च वाक्यस्याऽखण्डाऽर्थत्वमिति तत्संमतमिति भावः ॥ २१६ ॥ :: ॥

मू० ॥ सामानाधिकरण्यमन्वयगिरा हेतुं वदत्यादरा-
तस्यैवार्थविशेषणं समिति च व्यावृत्तये गृह्यते ॥
गौणान्मुख्यमयं भिनत्ति भगवान्व्यावर्तकेनाऽमुना
नीलेनोत्पलवस्तुवत्स्फुटतरं द्वैविध्यसद्भावतः ॥ २१७ ॥

टी० ॥ श्रुतितन्मूलन्यायसिद्धं सूचयता भगवता बादरायणेन तत्तु समन्वयादिति सूत्रेण तदिति वेदान्तगम्यत्वेन प्रतिज्ञाते निरतिशयाऽऽनन्दाऽद्वये ब्रह्मणि स्वप्रकाशे समन्वयादिति हेतुरुक्तः । तत्र यद्यपि व्यधिकरणाऽन्वयोऽपि लोके वेदे च दृश्यते तथाऽपि तस्य संबन्धादिनिष्ठतया प्रतिज्ञातब्रह्मनिष्ठत्वासंभवात् योग्यतया सामानाधिकरण्यान्वय एव तेन विवक्षित इति समन्वयादिति सौत्रोक्तिबलाद्वेदान्तानामखण्डे पर्यवसानमित्याह । सामानाधिकरण्यमिति । अन्वयगिरां समन्वयसूत्र इति शेषः । वदति भगवानित्यनुषङ्गः । आदरादिति तस्य श्रुतिन्यायसूचकत्वं दर्शयति । भवतु तर्हि नीलोत्पलवद्गुणगुणिभावनिष्ठतया मृद्घटवत्कार्यकारणभावनिष्ठतया वा सामानाधिकरण्यमित्याशङ्क्याह । तस्यैवेति । अर्थेति पूरणाऽर्थे । समिति विशेषणं च गृह्यत इति संबन्धः । तत्किं रूपवान्घट इति

रूपवत्तेव घटस्याऽन्वयस्य समितिविशेषणं नेत्याह । व्यावृत्तस्य इति । विशेषणस्योत्सर्गतो व्यावृत्त्यर्थत्वात्संभवन्त्यां च व्यावृत्तौ रूपवत्ताया इव न स्वरूपमात्रनिष्ठतेति भावः । गृह्यते भगवतेति विपरिणताऽनुषङ्गः । कुतो व्यावर्तयति विशेषणमिति जिज्ञासायां तद्दर्शयन्व्यावृत्तिसंभावनामपि दर्शयति। गौणादिति। अयं भगवान्स्फुटतरं सामानाधिकरण्यद्वैविध्यस्य सद्भावतो व्यावर्तकेनाऽमुना समितिविशेषणेन गौणात्सामानाधिकरण्यान्मुख्यं नीलोत्पलवस्तुवद्भिन्नत्तीतिसंबन्धः । सूत्रकारो ह्यन्वयस्य समितिविशेषणं प्रयच्छति तच्च व्यावृत्तिपरमिति गौणात्सामानाधिकरण्यादस्य व्यावृत्तिसिद्धौ मुख्यत्वं सिद्ध्यतीति तद्वाक्यमखण्डपर्यवसायीति वक्ष्यमाणन्यायेन निश्चीयत इति भावः ॥ २१७ ॥

मू० ॥ सद्भि द्विधैकाऽधिकरण्यमुक्तं
गौणं च मुख्यं च विविच्य सद्भिः ॥
संसर्गरूपाऽर्थनिवेशि गौणं
मुख्यं त्वखण्डाऽर्थनिविष्टमाहुः ॥ २१८ ॥

टी० ॥ द्वैविध्यसद्भावमेव दर्शयति । तद्धीति । हिरवधारणे । सद्भिस्तदैकाऽधिकरण्यं गौणं च मुख्यं चेति द्विधा विविच्य तत्रतत्रोक्तमेवेति संबन्धः । गौणमुख्ययोः क्रमेण स्वरूपमाह । संसर्गेति । गुणगुण्यादिसंसर्गरूपेऽर्थे निवेशि तत्पर्यवसायि यत्सामानाधिकरण्यं तद्गौणम् । मुख्यं तु नैवं किं त्वखण्डाऽर्थनिष्ठमिति सन्त आहुरिति संबन्धः ॥ २१८ ॥

मू० ॥ आदाय नानाविधकारणानि
गिरामथैकत्र तु या प्रवृत्तिः ॥
तामाहुरैकाऽधिकरण्यनाम्ना
विपश्चितो वेदशिरःसु विप्राः ॥ २१९ ॥

टी० ॥ इदानीं मुख्यस्याऽखण्डे पर्यवसानं दर्शयिष्यंस्तदुभयसाधारणरूपमाह । आदायेति । कारणानि प्रवृत्तिनिमित्तानि । भिन्नप्रवृत्तिनि-

मित्तानां शब्दानामेकत्रैवार्थे या वृत्तिः, तां वेदशिरःसु विपश्चितो विवेकिनो विप्रा ऐकाऽधिकरण्यनाम्ना आहुरिति संबन्धः । अत्र पर्यायपदेषु, राज्ञः पुरुष इत्यादिषु चाऽतिप्रसङ्गवारणाय भिन्नप्रवृत्तिनिमित्तानामेकत्रेति च द्वयमुपात्तम् । तत्त्वमस्यादिवाक्यार्थनिरूपणं सामानाधिकरण्यायत्तमिति वेदान्तिभिस्तदवश्यं निरूपणीयमिति द्योतयितुं वेदशिरःसु विपश्चित इत्युक्तम् ॥ २१९ ॥

मू० ॥ नीलं सुगन्धि महदुत्पलमम्बुशायी-
त्येवंप्रकारमिह गौणमुशन्ति सन्तः ॥
सोऽयं पुमानुदशरावगतो विवस्वा-
नाकाशगो रविरसाविति मुख्यमाहुः ॥ २२० ॥

टी० ॥ उभयोः क्रमेणोदाहरणमाह । नीलमित्यादिना । उत्पलमिति विशेष्यमुक्तम् । उदशरावगतः जलभाजने प्रतिबिम्बितो, विवस्वानाकाशगोऽसौ रविरिति सामानाधिकरण्यं मुख्यमाहुः । बिम्बप्रतिबिम्बयोरेकरसत्वादित्यर्थः ॥ २२० ॥

मू० ॥ एकत्र वृत्तिरिति लक्षणमत्र मुख्यं
संसर्गवस्तुनि पुनर्न हि तद् घटेत ॥
नानारसे हि विषये वचसां प्रवृत्ति-
र्नीलं सुगन्धि महदुत्पलमित्यमीषाम् ॥ २२१ ॥

टी० ॥ अस्त्वेवं तद्द्वैविध्यं कथमेतावता मुख्यसामानाधिकरण्यस्याऽखण्डपर्यवसानं तत्राऽऽह । एकत्रेति । लक्षणं लक्षणांऽशः । अत्र अखण्डे । अखण्डे हि वस्तुनि पर्यवसन्नानामपर्यायपदानामेकत्र वृत्तित्वं मुख्यमनुपचरितम् । नीलोत्पलादिविशिष्टवस्तुनि पुनस्तन्मुख्यमेकनिष्ठत्वं न हि घटेत । तत्र लोकप्रसिद्धिमेव हेतुमाह । नानारसेति । अमीषां वचसां नानारसे विषये प्रवृत्तिः प्रसिद्धेति संबन्धः ॥ २२१ ॥

मू० ॥ नानाविधैर्बहुभिरेव निमित्तभेदै-
भिन्नेषु वस्तुषु गिरामथ या प्रवृत्तिः ॥
सर्वेच वैयधिकरण्यमिति प्रसिद्धा
सा शब्दवृत्तिकुशलव्यवहारभूमौ ॥ २२२ ॥

टी० ॥ इदानीमेकत्र वृत्तिरित्येतद्व्यावर्त्त्यं व्यधिकरणाऽन्वयस्वरूपमाह। नानाविधैरिति। अत्र बहुत्वमविवक्षितं द्वयोरपि तद्दर्शनात्। निमित्तभेदैः स्वस्वाऽर्थे प्रवर्त्तमानानामिति शेषः। तासां भिन्नेषु गुणप्रधानभूताऽनेकपदाऽर्थेषु, तन्निरूपिताऽर्थेष्विति यावत्। तत्र या वृत्तिः सा वैयधिकरण्यमित्यन्वयः। सामानाधिकरण्यव्यावृत्तये भिन्नेष्विति। अत्यन्तभिन्नेष्वित्यर्थः। नानाव्यक्तिनिष्ठपर्यायव्यावृत्तये निमित्तभेदैरिति। शेषं स्वरूपकथनम्। शब्दवृत्तीति। शब्दवृत्तिविवेचने ये कुशलास्तेषां व्यवहारस्थल इत्यर्थः ॥ २२२ ॥

मू० ॥ अभिन्नहेतुर्विषये समाने
विभिन्नवाचामथ या प्रवृत्तिः ॥
पर्यायनाम्नाऽभिवदन्ति धीराः
प्रवृत्तिमेतां वचसां बहूनाम् २२३ ॥

टी० ॥ इदानीं नानाविधकारणानीत्येतद्व्यावर्त्त्यं पर्यायस्वरूपमाह। अभिन्नहेतुरिति। एकप्रवृत्तिनिमित्तेत्यर्थः। समाने एकस्मिन्नभिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः पर्यायता इत्यर्थः ॥ २२३ ॥

मू० ॥ कुड्यं गृहस्य सरसोम्बुजमस्य वस्त्र-
मित्यत्र वैयधिकरण्यमिति प्रसिद्धम् ॥
एवं मुखं वदनमाननमित्यमीषां
पर्यायताऽपि विदितैव पुरोक्तहेतोः ॥ २२४ ॥

टी० ॥ व्यधिकरणाऽन्वयपर्याययोः क्रमेणोदाहरणमाह। कुड्यमित्यादिना। अस्य देवदत्ताऽऽदेः। पुरोक्तहेतोः निमित्तभेदैः, अभिन्नहेतुरित्यत्र चोक्तहेतोः ॥ २२४ ॥

(शेषमग्रे)

## ॥ अथ चित्सुखी ॥

### ॥ तत्र प्रथमपरिच्छेदावशेषः ॥

*(Continued from page 28. Vol. V.)*

नापि प्रमाणादेव जन्म, ज्ञानस्य गुणत्वेन स्वप्रामाण्यं प्रति समवायिकारणत्वासंभवात् ।

नापि ज्ञानसामग्रीतो जन्म, प्रामाण्यस्योपाधित्वे जातित्वे च जन्मासंभवात्, तथाह्युपाधिपक्षे स्मृतित्वानधिकरणस्य ज्ञानस्य बाधात्यन्ताभावप्रामाण्यम्, न च तस्योत्पत्तिः संभवति, अत्यन्ताभावत्वादेव ।

नापि जातेर्जन्म, नित्यत्वात् ।

ज्ञानसामग्रीजन्यत्वं प्रमायाः प्रामाण्यस्य स्वतस्त्वमिति चेत्, मैवम्, अप्रमाया अपि स्वतस्त्वप्रसङ्गात्, तस्या अपि ज्ञानसामग्रीजन्यत्वात् ।

अथ ज्ञानसामग्रीमात्रजन्यत्वं स्वतस्त्वम्, अप्रमा तु न तन्मात्रजन्या दोषसहकृतज्ञानसामग्रीजन्यत्वादिति चेत्, मैवम्, विकल्पासहत्वात्,

तथाहि दोषाभावसहकृतज्ञानसामग्रीजन्यत्वं मात्रशब्दार्थः किं वा दोषासहकृतज्ञानसामग्रीजन्यत्वम् ।

नाद्यः, परतः प्रामाण्यवादिमतानुप्रवेशप्रसङ्गात्, तेऽपि हि दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव परतः प्रामाण्यमितीच्छन्ति ।

नापि द्वितीयः, विशेषदर्शनस्य भ्रमनिवृत्तिहेतुत्वे तद्विपर्ययस्य भ्रमहेतुत्ववद्दोषसहकृतज्ञानसामग्रीजन्यं ज्ञानमप्रमेत्यङ्गीकुर्वता प्रमां प्रति दोषाभावस्य हेतुताया अनिराकार्यत्वात् ।

नन्वीश्वरज्ञान इव दोषाभावस्यावर्जनीयतया·अस्मत्प्रमास्वपि तथा संनिधिः किं न स्यात्, न हीश्वरज्ञानेऽपि दोषाभावः प्रयोजक इति युक्तं वक्तुम्, तत्प्रयुक्तत्वस्य तदन्तर्भूतसामग्रीजन्यत्वासंभवादिति चेत्, मैवम्, अन्तरेणापि तत्सामग्रीजन्यत्वं नित्यद्रव्येषु गुणवत्त्वप्रयुक्तद्रव्यत्ववत् तत्प्रयुक्तत्वोपपत्तेः ।

न च दोषाभावस्याभावत्वादेवाकारणत्वम्, विशेषदर्शनाभावस्य भ्रमहेतुत्ववत् प्रमाणाभावस्य प्रमेयाभावप्रमितिहेतुत्ववद्विहिताकरणस्य प्रत्यवायहेतुत्ववच्च तदुपपत्तेः ।

न च प्रामाण्यस्य स्वतस्त्वे मानमस्ति, प्रामाण्यं[1] ज्ञानहेतुमात्रज-न्याश्रयम्· अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात्· ज्ञानत्ववत्, दोषजन्य-त्वेन व्यभिचारो मा भूदिति ज्ञानैकधर्मत्वादित्युक्तम्, तथा प्रामाण्यमु-क्तविधमप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्तित्वात् प्रत्यक्षत्ववदित्यनुमानं मानमिति केचित्, तच्च, विकल्पासहत्वात् ।

तथाहि किं तथाविधव्यक्तिवृत्तिमात्रं विवक्षितमुतान्यावृत्तित्वे सति तथाविधव्यक्तिवृत्तित्वम् ।

नाद्यः, अंशतः सिद्धसाधनत्वात्, अनुव्यवसायानुमित्युपमितीनां स्वतः प्रमात्वस्य परैरप्यङ्गीकारात् ।

न द्वितीयः, आद्यप्रयोगे दृष्टान्तस्य साध्यविकलत्वात्, ज्ञानत्वस्य दोषजन्याप्रमाणज्ञानवृत्तित्वस्याप्यङ्गीकारात् ।

नाप्रमाणज्ञाने ज्ञानत्वस्य वृत्तिस्तस्य ज्ञानाभासत्वादिति चेत्, मैवम्, तथा सत्यप्रामाण्येतरत्वे सतीति विशेषणस्य वैयर्थ्यापातात्, अप्रामा-ण्यज्ञानस्य ज्ञानाभासत्वेनाप्रामाण्यस्य ज्ञानवृत्तित्वाभावात्, द्वितीयानुमाने च संशयत्वादिना व्यभिचारः, तथाहि तदपि ह्यप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्ति भवति न तु भवति ज्ञानहेतुमात्रजन्याश्रयम्, तिमिरादि-दोषजन्याश्रयत्वात्, दृष्टान्तस्य साध्यविकलता च, प्रत्यक्षत्वस्यापि परतः प्रामाण्यवादिना ज्ञानहेतुमात्रजन्याश्रयत्वानाश्रयणात्, प्रमात्वमेव यस्य ज्ञानहेतुमात्रजन्याश्रयं न भवति गुणविशिष्टज्ञानसामग्रीजन्यवृत्तित्वात् तस्य कथं तदवान्तरजातिप्रत्यक्षत्वं तद्धेतुमात्रजन्याश्रयं स्यात्, अस्ति च पर-तस्त्वेऽपि प्रयोगः, अनीश्वरप्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वा-द्घटवत् ।

१ रत्नदीपावलीकृतमनुमानमुद्भावयति प्रामाण्यमिति ।

ननु किं ज्ञानव्यक्तेः प्रमाव्यक्तितोऽस्ति कश्चिद्विशेषः किं वा प्रमा व्यक्तिरेव ज्ञानव्यक्तिः ।

आद्ये प्रत्यक्षज्ञानव्यक्त्या स्पष्टो व्यभिचारः, प्रत्यक्षज्ञानव्यक्तेर्विज्ञानहेत्वतिरिक्तहेत्वधीनत्वाभावात् ।

द्वितीयेऽपि जन्यापि ज्ञानरूपा प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीनेति बाध इति चेत्, मैवम्, ज्ञानव्यक्तेः प्रमाव्यक्तितो भेदाभावेऽपि विज्ञानत्वप्रमात्वधर्मयोर्भेदात्, ततश्च घटत्वस्य पृथिवीत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधन इव प्रमाया विज्ञानत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधने बाधाभावात्, विपक्षे च प्रमात्वस्य विज्ञानप्रयोजकमात्रप्रयोज्यत्वाज्ज्ञानत्ववदप्रमाज्ञानवृत्तित्वं स्यादिति बाधकस्तर्क उन्नेयः ।

ननु ज्ञानसामग्र्या एवानिरूपणात् तदतिरिक्तहेत्वधीनत्वं दुर्ज्ञानमिति चेत्, मैवम्, एवं सत्यप्रमायाः परतस्त्वं दत्तजलाञ्जलि स्यात्, तदपि हि ज्ञानसामग्रीनिरूपणाधीननिरूपणम्, तस्य दोषानुषक्तविज्ञानसामग्रीजन्यताप्रतिज्ञानात् ।

तस्मान्नोत्पत्तौ प्रमायाः स्वतस्त्वम् ।

नापि ज्ञप्तौ, तथाहि नीलसंवेदनस्य प्रामाण्यं नीलसंवेदनेनैवावेद्यत इति स्वतस्त्वमुच्यते किं वा तद्वेदनग्राहकमात्रग्राह्यत्वेन ।

नाद्यः, तस्य तत्राप्रमाणत्वात्, तथाहि यदेतन्नीलप्रकाशनप्रत्यक्षं तन्नीलं प्रति तावत् प्रत्यक्षमिन्द्रियार्थसंनिकर्षोत्पन्नत्वात्, स्वप्रामाण्यपरिच्छित्तौ तु कथं तत् प्रमाणम्, तस्य बहिरिन्द्रियैरसंनिकर्षात् ।

अपिच[१] तत् प्रत्यक्षं विज्ञानस्यैव प्रामाण्यं गृह्णीयादुत तत्फलस्य ।

नाद्यः, ज्ञानस्य फललिङ्गानुमेयत्वेन तस्याप्रत्यक्षतया तत्प्रामाण्यस्यापि प्रत्यक्षतानुपपत्तेः ।

न द्वितीयः, फलस्यापि स्वप्रकाशतया बाह्येन्द्रियाविषयत्वात्, तद्गतयथार्थत्वलक्षणप्रामाण्यस्यापि बाह्येन्द्रियप्रत्यक्षविषयत्वानुपपत्तेः ।

१ भट्टं प्रति विकल्पयति • अपिचेति ।

नापि द्वितीयः, ज्ञानग्राहकमात्रग्राह्यत्वे प्रामाण्यस्य क्वचिदपि ज्ञाने प्रमाणमप्रमाणं वेति संशयाभावप्रसङ्गात् ।

ननु ज्ञानग्राहकमात्रग्राह्यत्वेऽप्यर्थविशेषितत्वस्य सांशयिकत्ववत् प्रामाण्यस्यापि सांशयिकत्वमुपपद्यते, तथाहि कुम्भज्ञानस्याम्भोविषयोऽभूच्च वेति संशयाना दृश्यन्ते जनाः, साम्भसामनम्भसामपि कुम्भानामुपलम्भात् ।

एवं प्रामाण्येऽपि संशयः किं न स्यादिति चेत्, मैवम्, अम्भसः कुम्भग्राहकसामग्रीमात्रग्राह्यत्वानङ्गीकारात्, अङ्गीकारे वाऽविशेषेण सकलकलशानां सलिलवत्त्वप्रसङ्गात् ।

तस्मान्नारिकेलफलान्तर्गतसलिलादिवद्भिन्नसामग्रीग्राह्यत्वादेव तत्र संशयः, प्रामाण्ये तु न तथेति युक्तमुत्पश्यामः ।

किंच विज्ञानग्राहकसामग्रीमात्रग्राह्यतायां प्रामाण्यस्य शुक्तिकारजतादिबुद्धिष्वपि तद्ग्रहप्रसङ्गः, सत्यम्, गृहीतमेव तद्बाधकादपनीयते, यथाहुः,

"तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते" ॥

इति ।

तस्मा[1]दस्माकमिष्टप्रसञ्जनमिदमिति चेत्, मैवम्, परतः प्रामाण्यप्रसङ्गात्, तथाहि, प्रसक्तमपि प्रामाण्यं मिथ्यारजतादिषु बाधकज्ञानादपनीयत इति वदता बाधकज्ञानाभावनिबन्धनमेव प्रामाण्यावधारणमभ्युपगतं स्यात् ।

न च ज्ञप्तिः स्वतस्त्वे मानमस्ति ।

ननु[2] प्रमा स्वतो ज्ञायते परनिरपेक्षोत्पत्तिकत्वात्, ज्ञानवत्, तथा

१ बोधात्मकत्वेन ज्ञानत्वादेव शुक्तिरजतादिबुद्धेरपि प्रमाणता प्राप्ता गृहीता तथाप्यर्थान्यथात्वज्ञानैः प्रतीतार्थस्यान्यथात्वबोधकैर्बाधकज्ञानैर्हेतूत्थदोषज्ञानैश्चापोद्यत इति भट्टोक्तेरर्थः ।

२ रत्नदीपावलीस्थमनुमानमुद्भावयति ननु प्रमेति ।

प्रामाण्यं स्वतो ज्ञायते· अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात्· ज्ञानत्ववदित्यस्त्येवानुमानमिति चेत्, मैवम्, आद्यप्रयोगे परतः प्रामाण्यवादिनं प्रति हेतोरसिद्धेः, दृष्टान्ताभावाच्च, न हि पक्षीकृतां प्रमां विपक्षकुक्षिनिक्षिप्तामप्रमां च विहाय ज्ञानस्यापरा कोटिरस्ति या दृष्टान्तपदवीमुपारोहेत्, द्वितीये च प्रयोगे प्राभाकरस्य स्वयंप्रभत्वे ज्ञानैकधर्मे भाट्टस्य च ज्ञाततानुमेयत्वधर्मे व्यभिचारः, तयोर्ज्ञानैकधर्मत्वेऽपि ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वाभावात्· अन्यथा तत्र वादिनां विप्रतिपत्त्यभावप्रसक्तेः, ज्ञप्तिपरतस्त्वे चानुमानं न्यायकुसुमाञ्जलावाह स्म चोदयनः, प्रामाण्यं परतो ज्ञायते· अनभ्यासदशायां सांशयिकत्वात्· अप्रामाण्यवत्, विपक्षे प्रामाण्ये संशयो न स्यात्, ज्ञाननिश्चायकादेव तन्निश्चयप्राप्तेर्बाधकस्तर्कः ।

ननु नैवमनुमानमुदेति धर्मिहेत्वोरसिद्धेः, तथाहि, प्रामाण्यं[१]प्रवृत्तिसामर्थ्यलिङ्गावगम्यं भवद्भिरुपगम्यते, तस्य च लिङ्गस्य प्रवृत्तिः प्रामाण्ये संशयपूर्विका, असंदिग्धे सिसाधयिषाभावादनुमानाप्रवृत्तेः ।

तत्संशयश्च क्वचिन्निश्चयाधीन इति प्रामाण्ये संशयनिश्चययोरन्योन्याश्रयादनवस्थानाद्वा नैकमपि सिध्येदिति चेन्मैवम्, विकल्पासहत्वात् ।

किं स्वार्थानुमानमसंदिग्धे न प्रवर्तते किं वा परार्थम् ।

नाद्यः, सद्यः समुन्मीलितविलोचनस्य शिखरिशेखरविपरिवर्तमानधूमलेखावलोकनसमनन्तरमप्रत्यूहं धूमध्वजमनीषासमुन्मेषात् ।

नापि द्वितीयः, विपर्यस्तमपि प्रतिवादिनं प्रत्यनुमानप्रयोगोपगमात्· अन्यथा जल्पवितण्डयोः प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालम्भासंभवात्, संदिग्धे न्यायः प्रवर्तत इति वचनस्यायोगव्यवच्छेदपरत्वात्, क्वचित् साधकबाधकप्रमाणानुदयात् संदेहे सति न्यायप्रवृत्त्युपपत्तेः ।

न चानभ्यासदशायामिति विशेषणस्य वैयर्थ्यम्, असिद्धिवारकत्वात् ।

१ विमतमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वाद् यन्नैवं तन्नैवं यथा ज्ञानाभास इति व्यतिरेकिणानुमानादिवदित्यन्वयिना वानभ्यासदशापन्नेषु प्रामाण्यमनुमीयते, अभ्यासदशापन्नेषु च तज्जातीयज्ञानत्वलिङ्गेनेत्यभ्युपेयत इत्यर्थः ।

न च व्यभिचारनिवारकमेव हेतोर्विशेषणमिति नियमः, चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवदित्यादिचिरंतनानुमानेष्वसिद्धिनिवारकाणां विशेषणानां बहुलमुपलम्भात् ।

अपिच· असिद्धिनिवारणार्थेऽपि विशेषणोपादाने न दोषं पश्यामः ।

क्षित्यादिकमकर्तृकं शरीरजन्यत्वादाकाशवदित्यादाविव व्याप्यत्वासिद्धिरिति चेत्, मैवम्, तत्राकर्तृत्वे साध्ये तदेकदेशस्याजन्यत्वस्यैवोपाधितया विशिष्टस्य व्याप्यत्वासिद्धेः, उक्तं [१] हि, "एकामसिद्धिं परिहरतो द्वितीयासिद्धिरापद्यत" इति, प्रकृते तु परतो ज्ञाने न सांशयिकत्वमुपाधिः, स्फीतालोकपरिवर्तिनां परतो ज्ञायमानानामपि घटादीनां सांशयिकत्वादर्शनात् ।

ननु प्रामाण्यस्य परतो ज्ञानेऽनवस्था, तत्तत्प्रामाण्यग्रहणायान्यस्यान्यस्य प्रमाणस्यापेक्षणात्, अतः प्रतिकूलतर्कपराहतं परतः प्रामाण्यानुमानमिति चेत्, मैवम्, मानान्तरस्यावश्यंभावनियमाभावात् ।

न च स्फुरत एव मानस्यार्थनिश्चायकत्वमन्यथा ज्ञानेऽप्यनन्तरं संदेहापत्तेरिति वाच्यम्, ज्ञाततानुमेयं ज्ञानमिति मते निलीनस्यापि ज्ञानस्यार्थनिश्चायकत्वात्, स्वयं वेदनं संवेदनमिति वदतः प्राभाकरस्यापि मते प्रामाण्यस्य तद्धर्मस्य तद्गतगुणत्वादेरिव न स्वतः स्फुरणम्, तस्यापि संवेदनवत् स्वयंप्रभत्वापत्तेः, तथात्वे वा प्रमात्वस्यापि स्वत एव स्फुरणप्रसङ्गात्, ततश्चाप्रामाण्यं परतः प्रमीयत इति स्वसिद्धान्तभङ्गप्रसङ्गः, वेदान्तिनां च प्रमाणस्य साक्षिवेद्यत्वेन स्फुरणनियमादिदं प्रमाणमप्रमाणं वेति संदेहो न भवेत् ।

न च प्रमाणं स्वत एव फलं जनयति, हानोपादानोपेक्षालक्षणस्य त्रिविधस्यापि फलस्य वस्तुज्ञानातिरिक्तगुणदोषमाध्यस्थ्यदर्शनपूर्वकत्वाभ्युपगमात्, तस्माद्वेदान्ताः स्वत एव प्रमाणमिति न प्रामाणिकप्रतीतिपथमवतरति, अत्राभिदध्महे, न तावत् प्रमायाः स्वतस्त्वानिरुक्तिः, यतः ।

१ स्वरूपासिद्धिं परिहरतो व्याप्यत्वासिद्धिरिति बौद्धाधिकारे उदयनेनोक्तमित्यर्थः ।

आहुर्विज्ञानसामग्रीजन्यत्वे सत्यजन्यताम् ।
तदन्यतः प्रमायास्तत् स्वतस्त्वमिति तद्विदः ॥ २५ ॥

विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वं नाम ।

न चैतल्लक्षणमव्यापकम्, सर्वप्रमाणानुगमात् ।

न चाजन्यत्वादव्याप्तिः, ईश्वरज्ञाने तस्याजन्यत्वेऽपि ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तकारणजन्यत्वलक्षणविशिष्टधर्मवत्त्वाभावात् ।

नाप्यतिव्यापकम्, अप्रमाया विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तहेतुजन्यत्वात्, अस्ति चेह मानमनुमानम्, तथाहि ।

प्रमाविज्ञानसामग्रीजन्यत्वे सति नान्यतः ।
जायते व्यतिरिक्तत्वादप्रमातः पटादिवत् ॥ २६ ॥

प्रमा विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्या न भवति· अप्रमातिरिक्तत्वात् पटादिवत् ।.

न च ज्ञानत्वानधिकरणत्वमुपाधिः, ईश्वरज्ञाने साध्याव्याप्तेः, नापि ज्ञानसामग्र्यजन्यत्वमुपाधिः, यज्ज्ञानसामग्रीजन्यं तज्ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्यमप्रमावदिति व्यतिरेकव्याप्तावप्रमात्वस्यैवोपाधित्वात्, विपक्षे च विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसंभवे तदतिरिक्तस्य गुणस्य दोषाभावस्य वा कारणत्वकल्पनागौरवप्रसङ्गो बाधकस्तर्कः ।

एतेन प्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वात् पटवदिति योऽयमुदयनस्य परतस्त्वेऽपि प्रयोगः सोऽपि परास्तः,प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति प्रतिसाधनग्रस्तत्वाच्च ।

न च प्रमात्वस्य विज्ञानसामग्रीमात्रप्रयोज्यत्वादप्रमाज्ञानवृत्तित्वं स्यादिति वाच्यम्, तत्र प्रयोजकाभावादेव प्रयोज्यस्याप्रसक्तेः, दोषासहकृतज्ञानसामग्रीप्रयोज्यं हि प्रमात्वम्, तत्र दोषस्यैव सद्भावात् कथं प्रमात्वस्य वर्तनसंभावनापि समुद्भवेत् ।

दोषस्याप्रमाहेतुत्वे तदभावस्य गले पादुकान्यायेन प्रमां प्रति हेतुत्वं स्यादिति चेत्, स्यादेवं यद्यनन्यथा सिद्धावन्वयव्यतिरेकौ कारणत्वावेदकौ स्याताम्, तौ तु विरोध्यप्रमाप्रतिबन्धकत्वेनोपपत्तौ न कारणमात्रत्वमावेदयतः ।

तथा चाहुर्भट्टपादाः ।

"तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः ।

अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनयोदितः" ॥

इति ।

नन्वेकस्यापि दोषाभावस्याप्रमाप्रतिबन्धकत्वं प्रमाहेतुत्वं च किं न स्यात्, एकस्यापि संस्कारस्यानुभवनाशकत्वस्मृतिहेतुत्वयोरपि दर्शनादिति चेत्, मैवम्, तत्र संस्कारस्यानुभवनाशकत्वेऽपि स्मृतेः संस्कारातिरिक्तकारणान्तरानिरूपणात्, उभयहेतुताया अवश्याश्रयणीयत्वात् ।

न च तत्रापि संस्कारनाशात् स्मृतिः किं न स्यादिति वाच्यम्, स्मृतिसमुदयव्यतिरेकेण संस्कारनाशस्यैवासंभवात्, प्रकृते तु ज्ञानसामग्रीत एव प्रमोद्भवसंभवे दोषाभावस्यापि तद्धेतुत्वकल्पना निष्प्रामाणिका ।

तस्मात् प्रमा विज्ञानसामग्रीमात्रादेव जायत इति सिद्धम्, तथा प्रमाज्ञप्तिरपि विज्ञानज्ञापकसामग्रीत एव ।

न च तथात्वे विज्ञान इव प्रमाणमप्रमाणं वेति संशयानुदयप्रसङ्गः, स्वतः प्रमाणत्वेन भवदभिमतधर्मिज्ञानेऽनुव्यवसाये च स्फुरत्यपि सुगतमतानुसारिणामप्रमाणमेवेति विपर्यासदर्शनात्, स्वतः प्रमाणत्वेन भवदङ्गीकृतानुमित्यादावपि ज्ञायमानायां चार्वाकस्य प्रामाण्ये विप्रतिपत्त्युपलब्धेः, स्वरूपभेदवादिनां च गृह्यमाणेऽपि स्थाणोः स्वरूपे स्थाणुर्वा पुरुषो वेति संदेहस्य पुरुष एवेति विपर्ययस्य चोपलम्भात्, सत्यपि प्रतिभासपुष्कलकारणे प्रतिबन्धकदोषादिसमवधानात् तत्र तत्र संशयविपर्यासयोरुपपत्तौ प्रकृतेऽपि समं समाधानमन्यत्राभिनिवेशात् ।

न च ज्ञानज्ञापकादेव प्रामाण्यग्रहणे मिथ्यारजतादिबुद्धिषु प्रामाण्यग्रहणप्रसङ्गः, प्रसक्तस्यापि प्रामाण्यग्रहणस्य कारणदोषावगमबाधबोधाभ्यामपनयात् । (शेषमग्रे)

॥ श्रीः ॥

# कैवल्यरत्नम् ।

( *Continued from page* 71. Vol. V. )

श्रीभगवानुवाच ॥

अथ प्रमेयं वक्ष्यामि समासेन च विस्तरात् ।
सर्ववेदान्तसंसिद्धं संप्रदायसमन्वितम् ॥
प्रमेयं नाम मानेन प्रतीतं हि न चापरम् ।
व्यावहारिकरूपेण केवलं न च वस्तुतः ॥
व्यावहारिकरूपेण प्रमेयत्वेन यत्स्थितम् ।
पारमार्थिकरूपेण तत्प्रमातैव केवलम् ॥
प्रमाणं चोभयापेक्ष्यं व्यावहारिकमास्तिकाः ।
पारमार्थिकरूपेण तत्प्रमातैव केवलम् ॥
व्यावहारिकरूपेण प्रतीतं वेदवित्तमाः ।
शुक्तिकारजतं साक्षाच्छुक्तिकैव हि केवलम् ॥
परिकल्पितभेदेन प्रमेयं बहुधा स्थितम् ।
प्रमेयाकारवस्त्वेकमित्थं ह्यर्थव्यवस्थितिः ॥
कल्पितः खलु सर्वत्र भेदार्थो नैव वास्तवः ।
मायामात्रमिदं द्वैतं इति प्राह खलु श्रुतिः ॥
प्रमेयं सत्यमेवेति वदन्ति भुवि के चन ।
अयुक्तमेव तैरुक्तं सत्यं ब्रह्मैकमेव हि ॥
व्यावहारिकरूपस्य प्रमेयस्याखिलस्य तु ।

व्यावहारिकमेवोक्तं सत्यत्वं केवलं बुधाः ॥
व्यावहारिकसत्यत्वमौपचारिकमेव हि ।
यथा ऽयो दहतीत्येतन्मुनीन्द्रा औपचारिकम् ॥
व्यावहारिकसत्यं तु प्रमेयं किं चिदास्तिकाः ।
प्रत्यक्षादिप्रमाणानां पञ्चानामेव गोचरः ॥
केवलं चोदनागम्यं किं चिन्नैवान्यमानगम् ।
धर्माधर्मात्मकं प्रोक्तं तत्तावत्तत्त्ववेदिभिः ॥
ब्रह्म सच्चित्सुखानन्तं प्रमातैव हि केवलम् ।
न प्रमेयं प्रमेयं तु जडं स्यात्कलशादिवत् ॥
प्रमातुर्मेयता नास्ति मेयत्वे मातृता न हि ।
अंशभेदेन मेयत्वं मातृत्वं च न युज्यते ॥
सांशस्यानात्मता दृष्टा घटादेरखिलैरपि ।
मेयत्वं च तथा नास्ति मेयं मातुर्हि नैव सः ॥
यदा मेयः पुमानन्यस्तदा माता भवेद्यदि ।
अनवस्था भवेत्तस्मान्मातुर्माता न विद्यते ॥
मातृसिद्धिः स्वतो मानं मेयस्यैव हि भासकम् ।
मातुर्न मेयतास्तीति पूर्वमेव प्रसाधितम् ॥
प्रमातुरप्रतीतस्य प्रमेयं नोपकारकम् ।
अप्रतीतप्रमातारो बहवः सन्ति विग्रहे ॥
समानमेव सर्वेषां प्रमेयं तद्भवेत्खलु ।
एकस्यैव गुणा मानं ततो मेयं च तस्य हि ॥
इति वार्तापि वार्तैव सुसूक्ष्मार्थनिरूपणे ।
निर्गुणः खलु चिद्रूपः प्रमातात्मा मुनीश्वराः ॥
केवलो निर्गुणश्चेता साक्षीत्याह खलु श्रुतिः ।

द्रव्यवृत्तिर्गुणो द्रव्यं गुणस्याश्रयमास्तिकाः ॥
तदेतरेतरापेक्षा दुर्निवारा भवेद् द्विजाः ।
कार्यस्य समवाय्येव द्रव्यं साक्षान्न चेतरत् ॥
एतच्चायुक्तमात्मायं समवायी न चैव हि ।
कार्यकारणभावस्तु कल्पितो वेदवादिना ॥
वाचारम्भणवाक्येन सत्यतैव परस्य हि ।
कल्पितस्य समस्तस्य ब्रह्मभूतः स्वयं प्रभुः ॥
आत्माधिष्ठानमेव स्यात्केवलं नैव कारणम् ।
एतावन्मात्रमालम्ब्य कारणत्वेन भण्यते ॥
कारणत्वं तु कार्यस्य सत्यत्वे सति हि द्विजाः ।
अत आत्मगुणा नैव प्रमाणा तत आस्तिकाः ॥
स्वयं प्रकाशचैतन्यस्वरूपस्य परात्मनः ।
प्रमेयं भाति मानेन मानं मानसमेव हि ॥
मनोवृत्तिर्हि मानं स्यान्नैवात्मगुण आस्तिकाः ।
अध्यासादात्मनो भातमिव मानं प्रकाशते ॥
आत्मनोऽपि प्रमेयत्वं कदाचित्प्रोच्यते बुधाः ।
अध्यस्ताज्ञानतत्कार्यबाधयैव हि केवलम् ॥
सर्वमुक्तं समासेन मुनीन्द्राः करुणाबलात् ।
इतः परं न वक्तव्यं शेषोऽन्यो ग्रन्थविस्तरः ॥

॥ इति सप्तदशोऽध्यायः ॥

श्रीभगवानुवाच ।

अथ प्रमाणमाहात्म्यं प्रवदामि समासतः ।
यस्य विज्ञानमात्रेण ब्राह्मण्यं पुष्कलं भवेत् ॥
वेद एव समस्तस्य मानं साक्षात्सनातनः ।

प्रमाणं तस्य वेदस्य स्वत एव न चान्यत: ॥
वेदा: शास्तार एवोक्तास्ते च सर्वार्थसाधका: ।
वेदादन्यत्र नास्त्येव सम्यग्दर्शनमास्तिका: ॥
साक्षाधर्म्मश्च सन्देहो नैव सत्यमुदीरितम् ।
वेदादन्यत्र विज्ञानं यत्स आभास एव हि ॥
धर्मश्चापि तथा भास: सुसूक्ष्मं परिदृश्यते ।
ज्ञानाभासे महामोहाद्धर्माभासे च मानवा: ॥
वृथा श्रद्धां प्रकुर्वन्ति पापमेवात्र कारणम् ।
वेदा: सर्वे मुनिश्रेष्ठा: शिवस्यामिततेजस: ॥
अम्बिकाया: पते: शंभो: प्रत्यक्षा: करबिल्ववत् ।
सो ऽयं साक्षान्महादेव: सर्वज्ञ: करुणाकर: ॥
लोकानामुपकाराय केवलं वेदवित्तम: ।
ब्रह्माणं प्रथमं सृष्ट्वा वेदानात्मनि संस्थितान् ॥
दत्तवानखिलांस्तस्मै यथावत्सकलेश्वर: ।
तत्प्रसादबलादेव ब्रह्मण: परमेष्ठिन: ॥
करामलकवद्वेदा: प्रत्यक्षा: सकला अपि ।
विष्णोरपि महादेवप्रसादेनैव केवलम् ॥
रुद्रस्यापि त्रिमूर्त्तीनां प्रत्यक्षा: करबिल्ववत् ।
धर्म्मशास्त्रप्रणेतॄणां सर्वेषाममलात्मनाम् ॥
तथा पुराणकर्तॄणां पूर्वपूर्वतपोबलात् ।
त्रिमूर्त्तीनां प्रसादेन शिवस्य परमस्य च ॥
यथावत्सकला वेदा: प्रत्यक्षा न हि संशय: ।
वेदाङ्गानां प्रणेतॄणां योगिनाममितौजसाम् ॥

मुनीनामपि चान्येषां वेदभावानुसारिणाम् ।
प्रत्यक्षा: सकला वेदा: प्रसादेनैव केवलम् ॥
वेदस्य कर्म्मभागे तु वाक्यानां वेदवित्तमा: ।
अन्योन्यं न विरोधो ऽस्ति न्यायेन परिपश्यताम् ॥
न्यायो जैमिनिना प्रोक्तो व्यासशिष्येण धीमता ।
प्रसादेनैव रुद्रस्य द्विजा: सूत्रात्मनैव तु ॥
कर्म्मभागे तु वेदस्य वेदान्ताख्ये तथैव च ।
वाक्यानां न विरोधो ऽस्ति न्यायेन परिपश्यताम् ॥
न्याय: सूत्रात्मना प्रोक्त: सर्वज्ञेन महात्मना ।
व्यासेनैव प्रसादेन शिवस्य परमात्मन: ॥
विरोधो ज्ञानकाण्डेन कर्म्मकाण्डस्य नैव हि ।
तथैव कर्मकाण्डेन ज्ञानकाण्डस्य सत्तमा: ॥
कर्मकाण्डस्तु शेष: स्याज्ज्ञानकाण्डस्य सत्तमा: ।
ज्ञानकाण्डो न शेष: स्यात्कर्मकाण्डस्य सर्वथा ॥
ज्ञानमज्ञानसंभूतं कर्म ग्रसति वेदजम् ।
ततो न शेषो विज्ञानकर्म्मणा: श्रुतिवित्तमा: ॥
अखण्डैकरसार्थे तु वेदान्ता: सकला भृशम् ।
पर्यवस्यन्ति नान्यत्र तथा व्यासेन कीर्तितम् ॥
संसर्गार्थे द्विजा वेदा: समस्ता आस्तिकोत्तमा: ।
पर्यवस्यन्तिनान्यत्र तथा जैमिनिनेरितम् ॥
असत्यद्वैतनिष्ठस्तु कर्मकाण्ड: समासत: ।
वास्तवैकत्वनिष्ठस्तु ज्ञानकाण्ड: सुशोभन: ॥
द्वैतं मायामयं प्राह श्रुति: सत्यार्थवादिनी ।
वास्तवं प्राह नाद्वैतं सर्वमाभाति भामिनि ॥

धर्मो ऽधर्मश्च वेदोक्तः स तु जैमिनिनैव तु ।
सुनिर्णीतः समासेन तद्विरुद्धं प्रजल्पितम् ॥
ब्रह्म तद्विषयज्ञानं तदङ्गान्यखिलानि तु ।
वेदान्तेनोदिता मुनीन्द्राः सत्यवादिना ॥
व्यासेनैव मुनीन्द्रेण सुनिर्णीतानि तानि च ।
तद्विरुद्धानि सर्वाणि जल्पमात्राणि केवलम् ।
कणादकापिलाद्यैस्तु मुनीन्द्रैः परिकीर्त्तितम् ॥
मन्दबुध्यनुसारेण केवलं परिकीर्तितम् ।
अत एव मुनीनां तु विरोधो नास्ति कश्चन ॥
अन्यथा ते विरोधार्थं कथं ब्रूयुर्न संशयः ॥
ब्रह्मविष्णुमहादेवप्रमुखैः परिकीर्त्तिताः ।
आगमाश्चानया नेया दिशा नैवान्यथा बुधाः ॥
अन्यथा ते तु नेयाश्चेद्विरुद्धास्युर्न संशयः ।
कथं ते निर्गता देवा विरुद्धार्थविभाषिणः ॥
अत एव न कस्यापि विरोधो ह्यस्ति कश्चन ।
विरोधप्रतिभाभ्रान्त्या निर्णयो यः स निर्णयः ॥
एतावदुक्तमस्माभिर्वेदः सर्वार्थसाधकः ।
स्वत एव प्रमाणं हि सन्देहो नैव कश्चन ॥
स्मृतयश्च पुराणानि भारतादीनि सत्तमाः ।
वेदमूलतया मानं न स्वतन्त्रतया सदा ॥
स्वतन्त्रा आगमाः सर्व्वे निर्मलैः परिकीर्त्तिताः ।
अधिकारिविशेषेण प्रवृत्ता न हि संशयः ॥
अष्टार्थमुपजीवन्ति सर्वे देवा न चापरम् ।
अत एवायमाम्नायः सर्वमानोत्तमोत्तमः ॥

आम्नायस्य तु वैशिष्ट्यं मया वक्तुं न शक्यते ।
अतः सर्वं परित्यज्य वेदमेकं समाश्रयेत् ॥

॥ इत्यष्टादशोऽध्यायः ॥

॥ इति कैवल्यरत्ने ब्रह्मात्मैक्यप्रकाशकमानवोपपुराणसारः समाप्तः ॥

ओं पराशरोपपुराणमप्येवमवतरति ।
सौरमण्डलमध्यस्थं साम्बं संसारभेषजम् ॥
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम् ।
मेरुशृङ्गे समासीनं संसारोदधितारकम् ॥
शुकः प्रणम्य सर्वज्ञं श्रीपराशरमादरात् ।
पप्रच्छ परमं गुह्यं भक्त्या परमया सह ॥
भवपाशेन बद्धानां भवपाशविमोचनम् ।
पराशरोऽपि भगवान् भवानीपतिवल्लभः ॥
प्राह कारुणिकः श्रीमान् ध्यात्वा साम्बं त्रिलोचनम् ।

श्रीपराशर उवाच ।

पुरा पुराणमखिलं व्यासः सत्यवतीसुतः ।
कृत्वा रुद्रप्रसादेन मुनीनां भावितात्मनाम् ॥
दर्शयित्वा मुनीन्द्रैस्तु तैः प्रसन्नैर्म्महात्मभिः ।
पूजितोऽभवदत्यर्थं पुरजित्पादवल्लभः ॥
अस्मिन्नवसरे श्रीमान् महाकारुणिकोत्तमः ।
महादेवो महादेव्या सह सन्निहितो भवत् ॥
तं दृष्ट्वा देवदेवेशं त्रिनेत्रं चन्द्रशेखरम् ।
प्रणम्य मुनयः सर्वे दण्डवत्पृथिवीतले ॥
प्रदक्षिणत्रयं कृत्वा प्रपूज्य परमेश्वरम् ।
तुष्टुवुर्हृष्टमनसो विस्मिताः विवशाः शुकाः ॥

मुनय ऊचुः ।

शिवाय सत्यविज्ञानमहानन्दस्वरूपिणे ।
स्वविलक्षणहीनाय स्वयंवेद्याय ते नमः ॥
स्वात्मभूतमहामायाशक्तिवैभवसाक्षिणे ।
स्रष्ट्रे भर्त्रे च संहर्त्रे सर्वस्य जगतः सदा ॥
शक्त्याकारे तु मायायाः स्वयं चिच्छक्तिरूपतः ।
संस्थिताय स्वतन्त्राय नमः सांबाय शम्भवे ॥
महदाद्यणुपर्य्यन्तमायाचित्तस्य सर्वदा ।
कर्तृभूताय रुद्राय नमः संसारहारिणे ॥
रुद्रविष्ण्वादिरूपेण विभक्ताय स्वमायया ।
सत्वादिगुणदेहाय निर्गुणाय नमो नमः ॥
वरदाभयहस्ताय त्रिनेत्राय त्रिमूर्तिभिः ।
हृदि ध्येयाय नित्याय नमः सांबाय साक्षिणे ॥
वेदवेदान्तसंस्थाय वेदमार्गातिवर्तिनाम् ।
अगम्याय सुगम्याय नमो वेदान्तवेदिनाम् ॥
श्रुतिस्मृतिपुराणादिप्रमाणानां तथैव च ।
प्रत्यक्षादिप्रमाणानां प्रमेयाय नमो नमः ॥
अप्रमेयाय शान्ताय स्वप्रकाशाय साक्षिणे ।
स्वस्वरूपैकनिष्ठानां मुक्तिदाय नमो नमः ॥
स्वस्वरूपातिरेकेण किं चिदप्यविजानताम् ।
आत्मयाथात्म्यनिष्ठानामात्मभूताय वै नमः ॥
आत्मयाथात्म्यविज्ञानविहीनानां दुरात्मनाम् ।
दुःखदाय नमस्तुभ्यं शक्तिगम्याय शूलिने ॥

श्रीपराशरः ।

इत्येवं मुनिभिः साक्षाच्छङ्करो ऽभिष्टुतः प्रभुः ।
प्रसन्नः पार्वतीनाथः प्राह गम्भीरया गिरा ॥

ईश्वर उवाच ।

मुनीन्द्रा ब्रह्मविच्छ्रेष्ठाः प्रसन्नो ऽहमतीव वः ।
अयं सत्यवतीसूनुरत्यन्तं मम वल्लभः ॥
मत्प्रसादेन विप्रेन्द्रास्तपसा च ममाज्ञया ।
निर्ममे च पुराणानि लोकानां हितकाम्यया ॥
मत्प्रियार्थं मुनिश्रेष्ठाः पुराणं सकलं तु तत् ।
श्रुत्वा सत्यवतीसूनोर्लोकानां हितकाम्यया ॥
अन्यान्युपपुराणानि यथेष्टं यूयमास्तिकाः ।
कुरुध्वं संग्रहेणैव ममाज्ञा परमा कृता ॥

श्रीपराशरः ।

एवमाज्ञां महादेवः कृत्वा वेदविदां वरः ।
प्रसन्नः परया भक्त्या तत्रैवान्तरधीयत ॥
एवमाज्ञापितास्तेन शिवेन मुनयः पुरा ।
श्रुत्वा सत्यवतीसूनोः पुराणं सकलं मुदा ॥
अन्यान्युपपुराणानि वक्तुः सारतराणि वै ।
आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ॥
स्कन्दाख्यं शिवधर्माख्यं दौर्वासं नारदीयकम् ।
कापिलं मानवाख्यं च तथैवोशनसेरितम् ॥
ब्रह्माण्डं वारुणं कालीपुराणाख्यं तथैव च ।
वासिष्ठलैङ्गयसंज्ञं च साम्बं सौरं तथैव च ॥
पाराशरसमाख्यं च मारीचं भार्गवाह्वयम् ।
पाराशरसमाख्यं तु पुराणमिदमुत्तमम् ॥

मयैव कथितं तत्र स्थितः श्रुत्यर्थ आस्तिकः ।
इदं पुराणमत्यर्थं पुरजित्प्रीतिकारणम् ॥
श्रोतव्यं पठितव्यं च लेखनीयं तु पुस्तकम् ।
रक्षणीयं द्विजश्रेष्ठैः अन्यैरप्यादरेणतु ॥
पठतां शृण्वतां चापि वाग्देवी च विजृम्भते ।

॥ इत्युपपुराणे पाराशरे प्रथमो ऽध्यायः ॥

श्रीपराशर उवाच ।

अथातः संप्रवक्ष्यामि तव सृष्टिक्रमं द्विज ।
श्रद्धया शृणु वेदोक्तं ब्रह्मविज्ञानसिद्धये ॥
इदं सर्व्वं जगत्पूर्वं प्रलये परमेश्वरे ।
मायाभिन्ने स्वमायाख्यकारणाभिन्नरूपतः ॥
वर्त्तते वासनारूपेणैव नाभावरूपतः ।
कालकर्म्मविपाकेन वासनाबलतोपि च ॥
मायायाः सृक्षणीवायं महानात्मा प्रजायते ।
सृष्टव्यविषयं ज्ञानं सत्वजं मुनिपुङ्गव ॥
महानात्मेति विद्वद्भिः पठ्यते वेदवित्तमैः ।
सृष्ट्वा महान्तमात्मानं शिवो ऽनुप्राविशत्स्वयम् ॥
स पुनः स्वप्रधानेन रूपेणैव द्विजोत्तमः ।
सर्व्वज्ञ इति विद्वद्भिः पठ्यते मुनिपुङ्गव ॥
ईक्षितेतीक्षणोपाधिप्रधानः परिकीर्त्तितः ।
स पुनश्चेक्षिता सत्वगुणमात्मतयैव तु ॥
मनुते सर्वसंहर्त्ता तमसा भवति स्वयम् ।
तथैवात्मतया नित्यं मनुते च तमोगुणम् ॥

(शेषमग्रे)

॥ श्रीः ॥

# ॥ योगवार्त्तिकम् ॥

( *Continued from page* 88 Vol. V. )

प्रमाणं लक्षयित्वा विपर्ययं लक्षयति ।

## विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

विपर्यय इति लक्ष्यनिर्देशोमिथ्याज्ञानमिति लक्षणं, मिथ्येत्यस्य विवरणमतद्रूपप्रतिष्ठमिति । न तद्रूपो न स्वसमानाकारो यो विषयस्त-त्प्रतिष्ठं तद्विशेष्यकमित्यर्थः । भ्रमस्थले ज्ञानाकारस्यैव विषये समारोप इति भावः । संशयस्याप्यत्रैवान्तर्भावः । अत्र च शास्त्रे ऽन्यथाख्यातिः सिद्धान्तो न तु सांख्यवदविवेकमात्रम् 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये'त्यागामिसूत्रात् । वैशेषिकाच्चात्रायं वि-शेषो यद्बाह्यरजतादेर्नारोपः किं त्वान्तरस्यैवेति, ज्ञानाकारमनुभवसिद्धं शुक्त्यादिकं सन्निकृष्टं विहाय दूरस्थरजतादिविषयकत्वकल्पने गौरवात् स्वप्ने दृष्टमिदानीं नास्तीति स्वरूपतो बाधानुपपत्तेश्च । तथा च ब्रह्म-सूत्रद्वयं 'संध्ये सृष्टिराह ही'ति 'तदभिध्यानादेव तत्तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'विति चेति । ननु प्रतीतिबलेनैव विषयः सिध्यतु तथा च शुक्तिरजतादिस्थलेप्यतद्रूपप्रतिष्ठत्वमसिद्धमित्याशयेन पृच्छति । स कस्मा-दिति । परिहरति । यत इति । अबाधितानुभवेनैव विषयसिद्धिरिति भावः । ननु बाध्यबाधकभाव एव वैपरीत्येन कथं न भवति तत्राह । भूतार्थेति । सद-र्थविषयत्वेन प्रमाणस्य बलवत्त्वात् तत्त्वपक्षपातो हि धियां स्वभाव इति । अत्रोदाहरणमाह । तत्र प्रमाणेनेत्यादिना । विपर्ययवृत्तेरतिहेयत्वख्यापना-याह । सेयमिति । पञ्चपर्वा याऽविद्या संसारानर्थबीजं सा । इयमेव, मिथ्या-ज्ञानरूपा वृत्तिरेव, एतद्विशेषएवेति यावत् । अत इयमवश्यं निरोद्धव्येति भावः । पर्वाणि गणयति । अविद्याऽस्मितेति । क्लेशाः क्लेशाख्याः । क्लेशद-त्वादिति भावः । रागादीनां मिथ्याज्ञानत्वाभावेपि अविद्ययानुगतत्वाद-विद्यापर्वत्वं विपर्ययत्वं च, यथाङ्कुरस्य बीजपर्वत्वं बीजत्वं चेति बोध्यम् ।

नन्वविद्या विपर्ययो मोह इति पर्याया एवं च सति मोहवृत्त्योरभेदात् कथं-शान्तघोरमूढत्वं वृत्तीनामिति सिद्धान्तो घटेतेति चेत्, न । धर्मधर्म्यभेदेनैवात्र वृत्तीनां विपर्ययादिरूपविभागकरणात् । वस्तुतस्तु वृत्तयो विपर्ययादिमत्य एवेति । अत्यन्तहेयत्वप्रतिपादनायान्वर्थसंज्ञापञ्चकं क्लेशानामाह । एतएवेति । स्वसंज्ञाभिः स्वानुरूपसंज्ञाभिः । तथा च विष्णुपुराणम् ॥

तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥

इति । एतेषामेव च प्राधान्येनावान्तरविभागः सांख्यकारिकायामुक्तः ।

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥

इति । अव्यक्तमहदहंकारपञ्चतन्मात्रेष्वनात्मस्वष्टस्वात्मबुद्धिरविद्या अष्टविधं तमः, ज्ञानावरकत्वात् । एतास्वेव देहाद्यात्मबुद्धीनामन्तर्भावः, देहादीनामेतदष्टककार्यत्वात् । शुक्तिरजतादिविपर्ययाणां तु संसाराहेतुतया नात्र गणना, 'विपर्ययादिष्यतेबन्ध' इति पूर्वकारिकया बन्धहेतुविपर्ययस्यैव प्रकृतत्वादिति । मोहादिष्वप्येवं बोध्यम् । अष्टस्वणिमाद्यैश्वर्येष्वनात्मसु आत्मीयबुद्धिरस्मिता स्वत्वास्मितयोः पर्यायत्वात् सैव चाष्टविषयकतया अष्टविधो मोहो मुख्यत उच्यते । शेषं पूर्ववत् । तथा दृष्टानुश्रविकभेदेन दशसु शब्दादिविषयेषु रागो दशविधो महामोहः । शेषं पूर्ववत् । तथाष्टैश्वर्यस्य विषयदशकस्य च परिपन्थिनि द्वेषोऽष्टादशधा तामिस्रः । शेषं पूर्ववत् । तथा ऐश्वर्याष्टकं विषयदशकं च नङ्क्ष्यतीति यस्त्रासः सोऽष्टादशधाऽभिनिवेशोऽन्धतामिस्रः । शेषं पूर्ववत् । एतइति । अविद्यादय इत्यर्थः ॥

## शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥

शब्दज्ञानानुपाती वस्तुशून्यः प्रत्ययो विकल्प इत्यर्थः । शब्दश्च शाब्दज्ञानं च ते अनुपातिनी यस्य स तथा । तथा च तदुभयजनकः

सर्वदैव बाधाबाधकालाविशेषेणेत्याद्यविशेषणार्थः । ननु विकल्पस्य सवस्तुकत्वे प्रमाणेऽन्तर्भावः, निर्वस्तुकत्वे तु विपर्ययेऽन्तर्भावस्तृतीयप्रकारासंभवादित्याशङ्कां परिहरन्नेव विशेषणयोर्व्यावर्त्यमाह । स नेति । उपारोहोऽन्तर्भावः । प्रमाणकोट्यनन्तर्भावे हेतुर्वस्तुशून्यत्वेपीति विपर्ययकोट्यनन्तर्भावे च हेतुः शब्दज्ञानेत्यादि । माहात्म्यं याथार्थ्यं, तथा च यथार्थशब्देन यथार्थज्ञानेन च यादृशो व्यवहारो भवति शब्दज्ञानरूपस्तादृश एव व्यवहारो विकल्पादपि दृश्यते विवेकिनामपीत्यर्थः । विपर्ययस्तु नैवं, बाधोत्तरमिदं रजतमिति शब्दप्रत्यययोरभावादिति । एतेन विपर्ययलक्षणे शब्दज्ञानाननुपातित्वं विशेषणं देयमिति भावः । विकल्पस्योदाहरणमाह । तद्यथेत्यादिना । किं विशेष्यं केन विशेषणेन व्यपदिश्यते अत्यन्ताभेदान्नास्त्यत्र विकल्पज्ञाने विशेषणविशेष्यभावरूपोर्थ इत्यर्थः । वस्तुशून्यत्वमुपपाद्य शब्दज्ञानानुपातित्वमुपपादयति । भवति चेति । चैत्रस्य गौरिति यथार्थशब्दवत् अत्रापि विशेष्यविशेषणभावव्यपदेशे सति तथा वृत्तिर्बाधो विवेकिनामपि भवति चेत्यर्थः । अन्यान्यप्युदाहरणान्याह । तथेत्यादिना । शास्त्रैः प्रतिषिद्धा वस्तुभूताः सुखादयो धर्मा यत्रेति प्रतिषिद्धवस्तुधर्मा पुरुष, इयं वृत्तिरेकमुदाहरणम् । अभावस्याधिकरणमात्ररूपत्वेनाधाराधेयभावविरहादिति । निष्क्रियः पुरुष इत्यन्यदुदाहरणम् । लौकिकमप्युदाहरणत्रयमाह । तिष्ठतीति । तिष्ठति बाणः स्थास्यति स्थित इति गतिनिवृत्तौ गतिनिवृत्तिविषयकविकल्पे वर्त्तमानत्वादिविशिष्टं स्थाधात्वर्थमात्रं पारमार्थिकतया प्रतीयते कर्त्तृत्वं कर्त्तृत्वस्य वर्त्तमानत्वादिकं च प्रत्ययत्रयार्थस्तु विकल्पित इत्यर्थः । बाणे गतिनिवृत्त्यनुकूलकृत्यभावादिति । उदाहरणान्तरमाह । तथानुत्पत्तीत्यादिना व्यवहार इतीत्यन्तेन । अनुत्पत्तिर्धर्मो यस्येत्यनुत्पत्तिधर्मा पुरुषः । स धर्मो, ऽनुत्पत्तिर्धर्मः । प्रमाणविपर्ययातिरिक्तायां विकल्पवृत्तौ बहुवादिविप्रतिपत्तेस्तन्निरासाय बहून्युदाहरणानि । एवं खपुष्पशशशृङ्गप्रत्यया अपि विकल्पमध्ये प्रवेशनीयाः । खपुष्पं नास्तीति प्रत्ययानुरोधेन तादृशप्रत्ययसिद्धेः । विकल्पप्रत्ययास्तु वैशेषिकैराहार्यज्ञानविशेषतयैष्टव्या एव । विशेषस्तु, तैर्मिथ्याज्ञा-

नमध्ये प्रवेश्यन्ते 'अस्माभिस्तु सविकल्पनिर्विकल्परूपाभ्यां श्रुतिसिद्धयोगविभागार्थं पृथङ् निर्दिश्यन्त इति ॥

## अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

निद्राया वृत्तित्वस्फुटीकरणाय पुनर्वृत्तिग्रहणम् । जाग्रत्स्वप्नवृत्तीनामभावस्य प्रत्ययः प्रतिसंक्रमस्थानं कारणमिति यावत् । तच्च चित्तसत्त्वाच्छादकं तमोद्रव्यमन्धकारादिवत् तदेवालम्बनं विषयो यस्याः सा तथा तादृशी वृत्तिर्निद्रेत्यर्थः । बुद्धेर्हि त्रिगुणतया यदा सत्त्वरजसी अभिभूय समस्तकरणावरकं तम आविर्भवति तदा मलिनस्य चित्तसत्त्वस्य तमआकारैव वृत्तिः स्वपिमीत्याकारा जायते, स्वापश्चात्र जाग्रत्स्वप्नवृत्त्यभावः । तां च निद्राख्यां वृत्तिमवबुध्यमानः पुरुषः सुषुप्तस्थानोन्तःप्रज्ञ इति श्रुतिभिरुच्यत इति । न च चित्तेन चित्तग्रहणे कर्मकर्तृविरोधः । वृत्त्या चित्तस्य ग्रहणेन कर्मकर्त्रोर्भेदात् । न चैवमेकया वृत्त्या वृत्त्यन्तरग्रहणसंभवे पुरुषकल्पनावैयर्थ्यम् । नियमेन वृत्तिगोचरवृत्तिकल्पने ऽनवस्थायाः सूत्रेण वक्ष्यमाणत्वादिति । ननु निरोधे * कैवल्यप्रलयादिष्विव वृत्त्यभाव एव सर्वेस्यां सुषुप्तौ कथं न स्वीक्रियते न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति सौषुप्तश्रुतावपि तदानीं ज्ञानाभावस्यैवावगमादित्याशङ्क्याह । सा तु संप्रबोध इति । सा तु निद्रा प्रत्ययविशेष एव, जागरे स्मरणादित्यर्थः । अत एव 'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवे'दित्यादिश्रुतयः सुषुप्तस्थानेपि भोग्यमस्तीत्याहुः । न चैवं श्रुत्योर्विरोध इति वाच्यम् । अर्धसमयभेदेन सुषुप्तेर्द्वैविध्यात् । 'मुग्धेर्द्धसम्पत्ति'रिति सुषुप्तिप्रकरणस्थवेदान्तसूत्रात् । अन्यथा श्रुत्योर्विरोधस्यापरिहार्यत्वाच्च कदा चिद्गाढतमसा चित्तसत्त्वस्य तमोगोचरवृत्तावप्यसामर्थ्यं च संभवत्येवेति । यत्त्वाधुनिका वेदान्तिब्रुवा आहुः, सुषुप्तौ तमः साक्षिभास्यमेव न तत्र वृत्तिरस्तीति । तन्न । वक्ष्यमाणस्मरणानुपपत्तेः साक्षिण्यपरिणामिनि संस्कारस्मृत्योरनभ्युपगमात् । यच्च तदेकदेशी सुषुप्तावज्ञानाख्यप्रकृतेरेव

* निरोधकैवल्येतिपाठान्तरम् ।

वृत्तिमाह न तु चित्तस्य, तदपि हेयम् । एवं सति जाग्रत्स्वप्नयोरपि तस्या एव वृत्तिसंभवे चित्तकल्पनावैयर्थ्यादिति । तस्माज्जाग्रत्स्वप्नयोरिव सुषुप्तेपि चित्तस्यैव वृत्तिः, 'जाग्रत्स्वप्नसुषुप्तं च गुणतो बुद्धिवृत्तयः' इति स्मृतिभ्यश्च, तथा चित्तत्वेनैव वृत्तिसामान्ये हेतुतायां लाघवाच्चेति । स्मरणाकारं पृच्छति । कथमिति । यस्यां सत्त्वसचिवं तम आविर्भवति तस्याः सात्त्विक्या निद्राया उत्थितस्य स्मरणाकारमाह । सुखमिति । प्रसन्नं निर्मलं मनः स्वस्मिन् जायमानां प्रज्ञां यथार्थवृत्तिं विशारदीकरोति * सूक्ष्मार्थप्रतिबिम्बोद्ग्राहिणीं करोतीत्यर्थः । विशारदां करोतीति पाठस्तु साधुः । यस्यां रजःसचिवं तम आविर्भवति तस्या राजस्या निद्राया उत्थितस्य स्मरणाकारमाह । दुःखमिति । स्त्यानमकर्मण्यं, तामस्या निद्राया उत्थितस्य स्मरणाकारमाह । गाढमिति । अलमत्यन्तं मुषितमिव परैरपहृतमिव तिष्ठतीत्यर्थः । अलसमिति पाठे तु स्त्यानता चित्तस्यातिचाञ्चल्येन कर्माक्षमता, आलस्यं तु तमोधर्मगुरुत्वेन कर्माक्षमता कर्मण्यनिच्छा वेति भेदः । ननु भवतु प्रत्यवमर्शस्तथापि कथं सुषुप्तौ प्रत्ययसिद्धिस्तत्राह । स खल्विति । प्रत्ययानुभवे सूत्रोक्तस्याभावप्रत्ययस्यानुभवे सति सोयं प्रत्यवमर्शः खलु न स्यादित्यर्थः । संस्कारासंभवादिति भावः । ननु वृत्तिं विनापि सुखादिवत् सुषुप्तौ स्वापस्य साक्षिभास्यत्वमभ्युपगम्य तत्स्मरणमुपपादनीयमित्याशङ्क्याह । तदाश्रिता इति । तद्विषयाः प्रत्ययविषयिकाः स्मृतयोऽपि तदाश्रिताश्चित्ताश्रिता न स्युरन्यदृष्टस्यान्येनास्मरणादित्यर्थः । न च स्मरणमपि साक्षिण्येवास्त्विति वाच्यम् । तत्र संस्कारासंभवात् स्मृत्याख्यपरिणामासंभवाच्चेति । ननु निद्रावृत्तिरपि तमस्येकाग्रा विषयदुःखशून्या चेति सा किमर्थं निरोद्धव्येत्याश-

---

* वाचस्पत्ये स्वच्छीकरोतीतिविवरणादुपलब्धसर्वभाष्यपुस्तकेषु विशारदीकरोतीतिनिरनुस्वारपाठस्य दर्शनाच्च च्व्यन्तो ऽप्ययं पाठः साधुरेव । वार्तिककारस्य तु 'प्रतिबिम्बोद्ग्राहिणीं करोती'ति द्वितीयान्तेन विवरणं ङीषादेरप्राप्त्या बह्वादिषु पाठकल्पने प्रमाणाभावेन पाठान्तरकल्पनं च 'विशारदीम्' इति द्वितीयान्तपाठावगमेनेति भाति । रा० शा०

ङ्माह । सा चेति । इतरवृत्तिवत् सुखदुःखमोहात्मकत्वेन समाधिप्रतिपक्षत्वेन च निद्रापि समाधौ निरोद्धव्येत्यर्थः ॥

## अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥

भाष्यानुसारेणास्य सूत्रस्यायमर्थः । एवमनुभूतौ यौ विषयौ वृत्तितदारूढार्थौ तयोरसंप्रमोषो ऽस्तेयमनपहरणं धर्मधर्म्यभेदात्तद्वती तदुभयविषयिणीति यावत्, एवंभूता वृत्तिः स्मृतिरिति । अत्र प्रत्यभिज्ञादिव्यावृत्तये संस्कारमात्रजन्यत्वमेव स्मृतिलक्षणं, सूत्रकारेण तु स्मृतेः प्रायिकं स्वरूपमेवोक्तं तेन न प्रमुष्टतत्ताकस्मरणाव्याप्तिः । अथ वा सूत्रोक्तमेव लक्षणं तच्च संस्कारमात्रजन्यत्वेन विशेषणीयं प्रमुष्टतत्ताकं तु संस्कारमात्रजन्यमपि ज्ञानमनुभवमध्ये प्रवेशनीयं, शब्दजन्यपदार्थोपस्थित्यादौ स्मरामीति स्फुटं व्यवहारादर्शनात् । प्रमाणेत्यादिवृत्तिविभागसूत्रे तु संस्कारमात्रजन्यत्वगुणेन तादृशं ज्ञानं स्मृतिशब्दगृहीतमनेन च सूत्रेण मुख्यस्मृतिर्लक्षितेति । स्मृतेर्वृत्तितदर्थोभयविषयकत्वं सूत्रोक्तमवधारयितुं भाष्यकारो विमृशति । किं प्रत्ययस्येति । स्मृत्यर्थधातुयोगात् कर्मणि षष्ठी । चित्तं किं पूर्वानुभवरूपं प्रत्ययमपि स्मरति आहो स्विद्विषयमात्रमित्यर्थः । तत्र स्मृतेरुभयविषयकत्वरूपमाद्यं पक्षं सिद्धान्तयितुमादावुभयस्मरणे कारणमुभयगोचरसंस्कारमुपपादयति । ग्राह्योपरक्त इत्यादिना । यतो ग्राह्योपरक्तो ज्ञानविशेषणतया घटादिभिरप्याकारितो ऽतो ग्राह्यग्रहणोभयाकारनिर्भासस्तदुभयाकारतया प्रसिद्धो यः प्रत्ययो घटं जानामीत्यनुव्यवसायः स तथाजातीयकं ग्राह्यग्रहणोभयाकारमेव संस्कारं जनयति समानाकारत्वेनैव लाघवादनुभवसंस्कारस्मृतीनां कार्यकारणभावादित्यर्थः । नन्वत्र व्यवसायरूपवृत्तेः स्वप्रकाशत्वमेव निर्भासान्तविशेषणार्थः कथं नेष्यतइति चेत्, न । कर्मकर्तृविरोधेन वृत्तेः स्वविषयकत्वस्य सूत्रभाष्याभ्यां चतुर्थपादे निराकरिष्यमाणत्वात् । ननु किं व्यवसायस्य संस्कारजनकत्वमेव नास्ति । न नास्ति, किं तु तत्संस्कारजन्यं ज्ञानं स्मृतिर्न भवति प्रमुष्टतत्ताकस्य पराभिमतस्य स्मरणस्यास्माभिर्व्यवहारानुसारेणानुभवमध्यएव प्रवेशनादिति ।

नन्वस्तूभयविषयकसंस्कारस्ततः किमित्यत आह । स संस्कार इति । स चोभयविषयकसंस्कारो यदा स्वाभिव्यञ्जकेन कालादिनाभिव्यक्तो भवति तदा तदाकारां स्वसमानाकारामेव ग्राह्यग्रहणोभयात्मिकां तदुभयविषयिणीं स्मृतिं जनयतीत्यर्थः । अनुभूतविषयासंप्रमोषं सूत्रोक्तं व्याख्यायानुव्यवसायतज्जन्यस्मरणयोर्विशेषमप्याह । तत्र ग्रहणइति । पूर्वं मुख्यं विशेष्यमिति यावत् । तयोः प्रत्ययस्मरणयोरत्यन्तं समानाकारत्वं न मन्तव्यं यतस्तत्र तयोर्मध्ये बुद्धिरनुव्यवसायरूपा यथोक्तप्रत्ययो ग्रहणाकारविशेष्यिका भवति घटमहं जानामीत्यनुव्यवसाये ज्ञानस्य घटांशे विशेष्यत्वात्, स्मृतिस्तु ग्राह्याकारविशेष्यिका भवति स घट इत्येव स्मरणात् । तत्ता च पूर्वज्ञानत्वरूपा । अतः स्मृतौ ज्ञानस्य ग्राह्यं विशेष्यमिति । अयं चाकारभेदोऽनुभवसिद्ध इति भावः । स्मृतेरवान्तरभेदं दर्शयति । सा च द्वयीति । भावित उद्भावितः सूचितः स्मर्त्तव्यार्थो यथेति भावितस्मर्त्तव्या तद्भिन्ना चाभावितस्मर्त्तव्या । तयोरुदाहरणे दर्शयति । स्वप्न इति । स्वप्नदर्शनमेव हि भाव्यर्थसूचकतया शास्त्रे सिद्धं न तु जाग्रत्कालीना स्मृतिरिति । ननु स्वप्ने पूर्वदृष्टत्वास्मरणात् संस्कारमात्रजन्यत्वाभावाच्च कथं स्मृतित्वमिति चेन्न । अंशतस्तदुभयरूपत्वस्य स्वप्नज्ञानेष्वपि सत्त्वात् तादृशस्य स्वप्नांशस्यैवात्रोपन्यासादिति । सर्वाश्चेत्यन्ते स्मृतिवृत्तेरुपन्यासस्य बीजमाह । सर्वा इति । अनुभवात्, अनुव्यवसायात् । अनुभावादिति पाठे प्रभावादित्यर्थः । यथोक्तानां वृत्तीनां निरोध्यत्वे बीजमाह । सर्वाश्चैता इति । एताः सर्वाः प्रमाणादिवृत्तयो बुद्धिद्रव्यस्य सुवर्णस्येव प्रतिमादिवद्विषयाकारा द्रव्यरूपाः परिणामाः सुखदुःखमोहगुणका इत्यर्थः । बुद्धिवृत्तिर्हि रूपादिमती भार्येव सुखादिमती पुरुषस्य भोग्येति । अतो दुःखवत्त्वेन वृत्तयो निरोद्धव्या इत्युपसंहरिष्यति । ननु सुखवत्त्वेनोपादेयत्वमेव कुतो न भवेदित्यत आह । सुखदुःखेति । क्लेशेषु क्लेशव्याख्यानसूत्रेषु व्याख्येयाः । व्याख्यानमेवाह । सुखानुशयी रागइत्यादि । सुखदुःखानुशयी सुखदुःखविषयकः । तथा च रागजनकतया दुःखवत्सुखमपि हेयं, मोहस्त्वविद्यारूपतया शोकाद्यखिलदुःखनिदानत्वेन हेय इत्याशयः । एता इति । अतो

दुःखात्मकत्वादेताः सर्वा निरोद्धव्या इत्यर्थः । प्रकरणार्थमुपसंहरति । आसामिति तदेवं सामान्यतो योगस्य लक्षणं कृतमिदानीं तस्योपायं प्रतिपादयिष्यति सूत्रकारस्तत्र संक्षेपाद् उपायसारसंग्राहकं सूत्रमवतारयति । अथासामिति ॥

## अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

अभ्यासवैराग्ये व्याख्यास्येते । अभ्यासवैराग्ययोरवान्तरव्यापारभेदेन निरोधजनने समुच्चय एव न विकल्प इत्याह । चित्तनदीति । यथा नदी कदा चित् समुद्राभिमुखी वहति कदाचिच्च तद्वैपरीत्येन पृथिव्यभिमुखी वहति । अन्यथा समुद्रगमनमात्रेण शुष्येतैव । एवं चित्तनद्यपि उभयतोवाहिनी । उभयतो वहनस्य प्रयोजनमाह । वहतीति । कल्याणं मोक्षस्तदर्थं, पापं संसारस्तत्फलत्वात्तत्कारणत्वाद्वा तदर्थम् । तथा चोक्तम् ।

प्रत्यग्दृशां विमोक्षाय निबन्धाय पराग्दृशाम् ।
अपामार्गलतेवायं विरुद्धफलदो भवः ॥ इति ।

प्रवाहद्वयं विशिष्य दर्शयति । या त्विति । प्राग्भारा अभिमुखी । विवेकविषयो निम्नो गमनमार्गो यस्या इत्यर्थः । जलस्य हि प्रवाहाभिमुखं वर्त्म नीचं भवतीति । तत्र चित्तनद्यां वैराग्येण विषयमार्गगं वृत्तिस्रोतः खिलीक्रियते अल्पीक्रियते विवेकदर्शनस्याभ्यासेन च विवेकमार्गगं वृत्तिस्रोत उद्घाट्यते बलवत् क्रियते येन निरोधाख्ये कैवल्यसागरे विलीयते । इत्यतोवान्तरव्यापारभेदेनोभयाधीनश्चित्तवृत्तिनिरोध इत्यर्थः । तदुक्तं गीतायाम् ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ इति ।

अत्र विवेकदर्शनमात्रस्याभ्यासः प्राधान्येनोक्तः । आगामिसूत्रे निरोधसाधनानुष्ठानसामान्यस्यैवाभ्यासत्वावगमादिति । अत्राभ्यासवैराग्ये क्रमाल्लक्षयति सूत्रजातेन ॥

## तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

तत्राभ्यासवैराग्ययोर्मध्ये । चित्तस्येति । अवृत्तिकस्य वृत्त्यन्तरशून्यस्य न तु वृत्तिसामान्याभाववतः, स्थित्यनन्तरं संप्रज्ञातस्य समापत्तिसूत्रे भाष्यकारैर्व्याख्येयत्वात् । प्रशान्तवाहितेति । वृत्त्यन्तराभावात् प्रशान्ता हर्षशोकादितरङ्गरहिता एकाग्रवृत्तिधारेत्यर्थः । शान्तिश्च तन्त्रेऽप्युक्ता ॥

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा शुभाशुभम् ।
न हृष्यति ग्लायति च स शान्त इति कथ्यते ॥

इति । स्थितिशब्दार्थं व्याख्याय सप्तम्यर्थं व्याचष्टे । तदर्थं इति । तथा च चर्मणि द्वीपिनं हन्तीतिवदियं निमित्तसप्तमीति * । यत्नशब्दं व्याचष्टे । प्रयत्न इति । प्रयत्नमपि पर्यायाभ्यां विशदयति । वीर्यमुत्साह इति । तथाप्यस्पष्टं मन्वानो ऽतिविशेषत आह । तत्संपिपादयिषयेति । तत्संपादनेच्छया श्रद्धावीर्यस्मृतिसमाधिप्रज्ञादीनां वक्ष्यमाणानां साधनानामनुष्ठानमभ्यास इत्यभ्यासलक्षणं कृतम् । ननु व्युत्थानसंस्कारेणानादिना प्रतिबन्धात् कथमभ्यासः स्थितिं संपादयतु इत्याकाङ्क्षायामाह सूत्रकारः ॥

## स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥

सत्कारासेवित इत्येतद्विवृणोति । तपसेत्यादिना सत्कारवानित्यन्तेन । दृढभूमिरित्येतद्विवृणोति । व्युत्थानेति । व्युत्थानसंस्कारेण द्रागित्येव सहसा अनभिभूतः स्थितरूपो विषयो यस्य स भवतीत्यर्थः । अभ्यासं कृत्वोपरमे च कालक्रमादभिभवो भवत्येवेति प्रतिपादयितुं द्रागित्येवेत्युक्तम् । अभ्यासं लक्षयित्वा वैराग्यं लक्षयति ॥

## दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

रागाभावमात्रं दोषदर्शनजन्यो रागाभावो वा न निरोधहेतुर्वैराग्यं रोगादिनिमित्तकारुचितो योगानुदयात् । दोषदर्शनजवैराग्यादनन्तरमपि विषयसांनिध्येन चित्तक्षोभतः सौभर्यादेर्योगानिष्पत्तेश्च । अतोऽत्र वैराग्यस्य वैतृष्ण्यमात्रं न लक्षणं किं तु यथोक्तवितृष्णस्य वशीकारसंज्ञेति । तदे-

* वस्तुतो वैषयिके आधारे सप्तमी न तु निमित्तसप्तमी कर्मयोगाभावादिति । रा० शा०

तद् व्याचष्टे । स्त्रिय इति । दृष्टविषयवितृष्णस्येति व्याख्याय आनुश्रविकविषयवितृष्णस्येति व्याचष्टे । स्वर्गेति । स्वर्गश्च वैदेह्यं च प्रकृतिलयत्वं च तेषां प्राप्तिरेवानुश्रवाख्यवेदोक्तो विषयस्तत्र च वितृष्णस्येत्यर्थः । स्थूलदेहविरहेपि लिङ्गशरीरेणैव येषां देवानां भोगस्ते विदेहास्तद्रूपता च वैदेह्यम् । ये तु सावरणब्रह्माण्डाद्बहिरावरणे प्रकृतौ लीनाः श्लिष्टाः लिङ्गदेहेन सह गता इति यावत्, तेषां भावः प्रकृतिलयत्वं न तु प्रलय एवात्रोक्तः, करणं गतस्यैव श्रुतिस्मृत्योर्भोगश्रवणात् । अन्यथा प्राकृतप्रलयवदपुरुषार्थत्वाच्च । प्रकृतिलयानां च विदेहेभ्यो ऽयं भेदः । विदेहाः सावरणब्रह्माण्डान्तर्गता एवाल्पमैश्वर्यं मलिनं च विषयं भुञ्जते, प्रकृतिलयास्तु बहिर्गमनेन विदेहान् प्रत्यपीशते स्वसंकल्पमात्रेण तत्रैव निर्मलं कारणसत्त्वनिर्मितं विषयं च भुञ्जते तदीश्वरकोटय उच्यन्तइति । षष्ठ्यन्तं हेतुगर्भविशेषणपदं व्याख्याय वशीकारसंज्ञेति विशेष्यपदं व्याचष्टे । दिव्यादिष्वेति । अयमर्थः । आदौ विषयसान्निध्यरूपेवसरे दोषावरकाभावाद् दोषदर्शनेन वैतृष्ण्यं भवति 'विरक्तिर्दोषदर्शनादि'ति स्मृतेः । तच्च त्रिविधं यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञेति । एताश्च पश्चाद्व्याख्यास्यामः । एतस्माच्च त्रिविधवैतृष्ण्यादभ्यस्यमानाद्विषयसंयोगकालेपि दोषदर्शनमप्रतिबद्धमुत्पद्यते 'वैराग्याद्दोषदर्शन'मिति स्मृत्यन्तरात्, कुतः पुनरप्रतिबन्धः । तत्रोक्तं, प्रसंख्यानबलात् दोषसाक्षात्कारस्य बलवत्त्वादिति । दोषसाक्षात्काररूपबलाभावात्तु सौभर्यादेः प्राग्विरक्तस्यापि विषयसन्निकर्षेण दोषदर्शनं प्रतिबध्य पुना राग उत्पादित इति । एतस्माच्च दोषदर्शनोत्कर्षाद्विषयसंयोगकालेपि या चित्तस्यानाभोगात्मिका ऽऽभोगरहिता एतस्य विवरणं हेयोपादेयशून्या रागद्वेषशून्या वशीकारसंज्ञा या वितृष्णा सा वैराग्यमपरमिति शेषः । उत्तरसूत्रे तत्परमिति वचनादस्यापरत्वम् । तथा च रागद्वेषशून्यस्य विषयसाक्षात्कारस्य योग्यता वशीकारसंज्ञाख्यं वैराग्यमिति पर्यवसितम् । तेन सर्वदैतादृशविषयसंयोगाभावेपि न निरोधासंभवः । तदेवमनेन सूत्रेण हेतुहेतुमद्भावरूपतस्तन्त्रान्तरसिद्धं वैराग्यचतुष्टयमेवोक्तम् । तत्र प्रथमभूमिका यतमानसंज्ञानाम्नी वितृष्णा

ज्ञानपूर्वकं वैराग्यसाधनानुष्ठानम् । द्वितीयभूमिका व्यतिरेकसंज्ञा सा च जितान्येतानीन्द्रियाणि एतानि च जेतव्यानीति व्यतिरेकावधारणयोग्यता । तृतीयभूमिका च एकेन्द्रियसंज्ञा सा च बाह्येन्द्रियविषयेषु रूपादिषु रागादिक्षये सति एकस्मिन्नेव मनसि मानापमानादिविषयकरागद्वेषादिक्षयो रागद्वेषज्ञानपूर्वक इति । चतुर्थभूमिका तु वशीकारसंज्ञा स्पष्टमुक्तैवेति ॥ (शेषमग्रे)

## सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 104. Vol. V.)

मू० ॥ पर्यायता न खलु तत्त्वमसीति वाक्ये

नाऽपीह संभवति भेदकभेद्यभावः ॥

तत्त्वंपदार्थगतमेकरसैकभागं

तत्त्वंपदे समुपलक्षयतो विरोधात् ॥ २२५ ॥

टी० ॥ एवं लोकप्रसिद्धाऽन्वयस्वरूपभेदमुक्त्वेदानीं तत्त्वमसीति वाक्ये अन्येषामसंभवान्मुख्यमेव सामानाधिकरण्यमखण्डनिष्ठं सिद्ध्यतीत्याह । पर्यायतेति । न संभवतीत्यनुषङ्गः । तत्त्वमसीति सत्यादेरुपलक्षणम् । प्रवृत्तिनिमित्तभेदादिति शेषः पर्यायत्वे सहप्रयोगाऽयोगाच्च । तदुक्तम् । पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते इति । भेदकभेद्यभावः कुड्यं गृहस्य नीलमुत्पलमित्यादाविव तदर्थयोर्विशेषणविशेष्यभावोऽपि न संभवति तस्य तत्र बाधितत्वान्मुख्याऽर्थयोर्विरोधादित्यर्थः । अविरोधादिति वा तदर्थमित्यर्थः । अतोऽबाधितं मुख्यमेव सामानाधिकरण्यं तत्र समन्वयो भवतीति तदखण्डार्थमिति । फलितमाह । तत्त्वंपदाऽर्थगतमिति । एकरसश्चाऽसावेकभागस्तं चिदेकरसमित्यर्थः ॥ २२५ ॥

मू० ॥ प्रकृष्टप्रकाशध्वनी व्यक्तिमेकां

यथा लक्षणावर्त्मनोपक्षिपेताम् ॥

शशाङ्काऽऽदिशब्दाऽर्थसंकीर्तने स-
च्चिदानन्दशब्दाः परं ब्रह्म तद्वत् ॥ २२६ ॥

टी० ॥ एवं महावाक्यस्याऽखण्डे वृत्तिं तत्र दृष्टान्ततया सोऽयमिति वाक्येऽपि लोके तां दर्शयित्वा इदानीं ब्रह्मलक्षणसत्यादिवाक्यस्याऽखण्डाऽर्थत्वोदाहरणे प्रकृष्टप्रकाशश्चन्द्र इति चन्द्रलक्षणवाक्येऽपि अखण्डाऽर्थतां दर्शयन्दार्ष्टान्तिकेऽपि न्यायसिद्धान्तामनुवदति। प्रकृष्टप्रकाशध्वनी इति। ध्वनी शब्दौ। व्यक्तिं चन्द्रव्यक्तिम्। उपलक्षितां प्रतिपादयतः। ननु किमिति प्रकृष्टप्रकाशशब्दयोश्चन्द्रे स्वाऽर्थसंसर्गमविरुद्धं विहाय लक्षणया तत्स्वरूपबोधकत्वं मुख्ये संभवति लक्षणाया अन्याऽय्यत्वादिति तत्राह। शशाङ्काऽऽदीति। आदीति गवादिशब्दं दर्शयति। संकीर्त्तने उद्दिश्य इति शेषः। वक्ष्यमाणरीत्या शशाङ्काऽऽदिशब्दाऽर्थसंकीर्तनं हि अनेन वाक्येन क्रियते। प्रकृष्टप्रकाशाऽऽदिवैशिष्ट्यं च न तदर्थस्वरूपमिति तद्विहाय विवक्षितशशाङ्कस्वरूपमेव पदद्वयं लक्षणया प्रतिपादयतीत्यर्थः। तद्वत्प्रकृष्टाऽऽदिशब्दवल्लक्षयतीत्यर्थः ॥ २२६ ॥

मू० ॥ न नीलोत्पलाद्या गिरो व्यक्तिनिष्ठाः
स्ववाच्याऽर्थसंसर्गमात्राऽभिधानात् ॥
विरोधे हि वाच्यच्युतिर्नाऽविरोधे
गिरां लक्षणाऽप्यापि चेदस्तु साम्यम् ॥ २२७ ॥

टी० ॥ ननु संभवन्मुख्याऽर्थप्रयोगस्याऽपि लक्षणयाऽखण्डार्थत्वे नीलोत्पलाऽऽदिवाक्यस्याऽपि तत्किमिति न भवेदित्याशङ्क्याह। न नीलोत्पलाद्या इति। कुतस्तत्राऽऽह। स्ववाच्येति। तत्र गुणगुण्यादिसंसर्गमात्रस्यैव ताभ्यामभिधानादित्यर्थः। ननु तदेव कुतः प्रकृष्टप्रकाशपदयोरिव तयोरपि द्रव्यमात्रनिष्ठतैव किं नस्यात्तत्राह। विरोधे हीति। मुख्यार्थानां गिरां तात्पर्यविषयीभूताऽर्थबाधे मुख्यार्थच्युतिर्नाविरोधेऽपि। यद्यविरोधेऽपि तत्र लणाऽभ्युपगम्येत तर्हि नीलोत्पलादेरपि प्रकृष्टप्रकाशादिसाम्यमस्तु किं नश्छिन्नमित्याह। लक्षणेति ॥ २२७ ॥

मू० ॥ न नीलत्वजात्याश्रयव्यक्तितः स्या-
द्विभिन्नोत्पलत्वाऽऽश्रयव्यक्तिरेषा ॥
तथैवोत्पलत्वाऽऽश्रयव्यक्तितः स्या-
न्न नीलत्वजात्याश्रयव्यक्तिरन्या ॥ २२८ ॥

टी० ॥ तत्र साम्यमेवोपपादयति । न नीलत्वेति । उत्पलत्वस्याऽऽश्रय आश्रयत्वं यस्यां सा तथोक्ता, न विभिन्ना स्यादिति संबन्धः । एवं द्रव्यस्याऽपि गुणादभेदमाह । तथैवेति । गुणगुणिनोरभेदादित्यर्थः । नीलत्वोत्पलत्वादिजातिवाचकशब्दाभ्यां लक्षितव्यक्त्योरभेदात्तदप्यखण्डार्थमस्त्विति प्रौढ्याभ्युपगमः ॥ २२८ ॥

मू० ॥ न नीलोत्पलादिप्रदेशेषु किं चि-
द्विरां लक्षणाकारणं तेन तत्र ॥
न नीलोत्पलत्वादिकव्यक्तिनिष्ठा
गिरस्ता भवेयुः प्रमाणादृते नः ॥ २२९ ॥

टी० ॥ एवं नीलोत्पलवाक्ये लक्षणामखण्डार्थत्वं चाभ्युपेत्योक्त्वेदानीं तदुभयं परित्यजति । न नीलोत्पलादीतिद्वयेन । इदमुपेत्य किमप्युदितमित्युत्तरश्लोकस्यमत्रादौ द्रष्टव्यम् । लक्षणाया अपि तत्राभ्युपगमेनोक्ताया अत्र परित्यागात्प्रदेशेषु वाक्येषु नीलोत्पलाद्यर्थेषु वा लक्षणाकारणं किमपि नेति संबन्धः । न तावदन्वयानुपपत्तिस्तत्रास्ति निमित्तं तदन्वयस्य सत्त्वात् । नापि तात्पर्यानुपपत्तिः गुणगुणित्वसंसर्गस्यैव तत्राभिप्रेतत्वात् । नचान्यल्लक्षणानिमित्तं प्रसिद्धमस्ति निर्बीजलक्षणायां चातिप्रसंग इत्याशयेनाह । तेन तत्रेत्यादिना । नो मते नीलोत्पलत्वादिजातेर्या व्यक्तिस्तन्निष्ठास्ता गिरो न भवेयुः । प्रमाणाभावादित्यर्थः ॥ २२९ ॥

मू० ॥ इदमुपेत्य किमप्युदितं मया
न तु तयोरभिदा परमार्थतः ॥
गुणगुणित्वकृतोऽतिशयस्तयो-
र्भवति लक्षणयाऽपि गृहीतयोः ॥ २३० ॥

टी० ॥ लक्षणायामपि तस्य वाक्यस्य नाखण्डार्थता लक्ष्यव्यक्त्योरे-कत्वाभावादित्याह । इदमुपेत्येति । किमपि अनभिप्रेतमपि । तयोः नीलोत्पलव्यक्त्योः । अभिदा परमार्थतोऽत्यन्तमभेदस्तस्यैव परमार्थत्वादि-त्यर्थः । कुतो नाभिदा तत्राह । गुणगुणित्वेति । अतिशय ईषद्भेदः । अत्यन्ताभेदे गुणगुणित्वायोगान्नैल्योत्पलयोश्च गुणगुणित्वेन प्रसिद्धत्वाद-त्यन्तभेदाभावेऽपीषद्भेदोऽस्तीति न तदखण्डार्थमित्यर्थः ॥ २३० ॥

मू० ॥ प्रकृष्टप्रकाशत्वजाती हि लोके
प्रकृष्टप्रकाशाभिधानाभिधेये ॥
तयोरन्वये कीर्त्यमाने तु ताभ्यां
शशाङ्काभिधानाभिधेयं न लभ्यम् ॥ २३१ ॥

टी० ॥ तर्हि तद्वदेव प्रकृष्टप्रकाशादिवाक्यमपि चन्द्रे बाधितस्वा-र्थसंसर्गपरमस्त्वित्याशङ्क्याह । प्रकृष्टप्रकाशेति । प्रकृष्टत्वप्रकाशत्वजाती इत्यर्थः ॥ हिरवधारणे । प्रकृष्टप्रकाश इत्यभिधानयोः शब्दयोरभिधेये भव-त इति शेषः । ततः किं तत्राह । तयोरिति । आक्षिप्तव्यक्तिद्वारा तयोर्जा-त्योरन्वये ताभ्यां पदाभ्यां प्रतिपाद्यमाने सति । तुरवधारणे । शशाङ्काभि धानाभिधेयं न लभ्यमेव । जातिद्वयतदाश्रयचन्द्रवैशिष्ट्यस्य चन्द्रपदाभिधे यत्वाभावादिति भावः ॥ २३१ ॥

मू० ॥ शशाङ्काभिधानाभिधेये हि पृष्टे
तदेवोत्तरेणापि निर्णेयमत्र ॥
प्रकृष्टप्रकाशत्वजात्यन्वयोऽयं
तदाक्षिप्ततद्व्यञ्जकव्यक्तिनिष्ठः ॥ २३२ ॥

टी० ॥ ननु प्रकृष्टप्रकाशविशिष्टस्यैव चन्द्रत्वाद्यः प्रकृष्टप्रकाशः स चन्द्र इति वचनव्यक्त्या किमिति शशाङ्काभिधानाभिधेयं न लभ्यमिति तत्राह । शशाङ्काभिधानेति । तदेव न गुणादिवैशिष्ट्यमित्यर्थः । उत्तरेण प्रकृष्टप्रकाशश्चन्द्र इति प्रत्युत्तरवचनेन । अत्र लोके । ननु तदेवो-

क्षवचनव्यक्त्यापि निर्णीयते । प्रकृष्टप्रकाशाश्रयस्यैव तयापि चन्द्रत्वप्रतिपादनाच्चन्द्रत्वाश्रयस्यैव तदभिधानाभिधेयत्वादिति तत्राह । प्रकृष्टप्रकाशत्वेति । तदानीं हि तत्पदद्वयेन मुख्यवृत्त्योपस्थितप्रकृष्टत्वप्रकाशत्वजात्योरन्योऽन्यमन्वयो वाच्यः । पदार्थयोस्तन्नियमात्स च साक्षान्न संभवतीत्ययं जात्यन्वयस्तदुभयाक्षिप्ततदभिव्यञ्जकतद्व्यक्तिनिष्ठ इति न केवलचन्द्रव्यक्तिलाभ इति भावः ॥ २३२ ॥

मू० ॥ शशाङ्काभिधानाभिधेयो नचेष्टः
शशाङ्कस्य तेजोविशेषत्वहेतोः ॥
ततश्चोपपन्ना जहल्लक्षणातः
पुरोक्ता पदाभ्यामखण्डार्थसिद्धिः ॥ २३३ ॥

टी० ॥ ननु स एव शशाङ्क इत्युक्तमिति चेत्सत्यं शशाङ्कस्यासाधारणो धर्मः सः न तु तत्स्वरूपमित्याशयेनाह । शशाङ्काभिधानाभिधेयो न चेष्ट इति । चोऽवधारणे नैवेष्टः सिद्ध्यतीति शेषः । कुतः शशाङ्कस्य तेजोविशेषत्वहेतोस्तेजोविशेषमात्रस्यैव तत्स्वरूपत्वान्न जातिद्वयविशिष्टव्यक्तिद्वयतादात्म्यं तत्स्वरूपमिति न ततस्तत्सिद्ध्यतीत्यर्थः । इदमिह विवक्षितम् । अस्ति तावल्लोके चन्द्रस्वरूपेयं चन्द्रोयं वेति संशयः, अस्ति च तदपनयायास्मिन्ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नः, तदुभयं चन्द्रस्वरूपमात्रविषयं तदन्यस्य तद्विषयस्याभावात् । ननु चन्द्रस्याऽसाधारणो धर्मः क इति प्रश्नोऽस्त्विति चेन्न । प्रश्नवाक्ये तत्पदाभावात् । लक्षणायां च न निमित्तमस्ति प्रकृष्टप्रकाशस्य प्रत्यक्षेण निर्णीतस्य स्वरूपेण कः प्रकृष्टप्रकाश इति संशयाभावात् । चन्द्रज्ञानं विना तस्य चन्द्रधर्मत्वज्ञानायोगेन प्रकृष्टः प्रकाशः किं चन्द्रस्याऽन्यस्य वेति प्रश्नासंभवाच्च । यद्यपि चन्द्रमपि प्रत्यक्षेण पश्यति । तथाऽपि तत्संशयानुरोधेन तज्ज्ञानस्यापातज्ञानतया तदज्ञाने नाऽविरोधः । नैवं प्रकृष्टप्रकाशेऽनिश्चयस्तज्ज्ञानम् । अत एव चन्द्रपदवाच्यत्वादिः प्रश्नविषय इति प्रत्युक्तम् । चन्द्र एव चन्द्रपदवाच्य इति सामान्यतश्चन्द्रे तस्याऽपि निर्णीतत्वात् । व्यक्तिविशेषे तदज्ञानस्य

पूर्ववच्चन्द्रस्वरूपज्ञानाभावेऽसंभवात् । अतः संशयप्रश्नावज्ञातचन्द्रप्रातिपदिकार्थमात्रनिष्ठौ । अत एव प्रकृष्टप्रकाशइति वचनमपि तन्मात्रगोचरं न तु प्रकाशविशेषवैशिष्ट्यादिगोचरमन्यथाऽऽम्रप्रश्ने कोविदारोत्तरवत्प्रश्नव्यधिकरणप्रतिवचनस्यानवधेयतापत्तेः । यत्तु अपृष्टमपि प्रकाशवैशिष्ट्यं पृष्टार्थनिर्णयोपयोगितया वाक्यं प्रतिपादयति, अन्यथा यः कश्चिच्चन्द्र इत्युत्तरार्थप्रसङ्गेन तदनिर्णयादिति । तन्न । व्यक्तिमात्रतात्पर्यं लाघवेन वाक्यस्य निश्चिते गुणवैशिष्ट्यस्यावाक्यार्थत्वेऽपि लक्षणया नियतव्यक्त्युपस्थित्यर्थत्वेन नियतव्यक्तिविषयतया व्यक्तिमात्रविषयप्रतिवचनेनापि तन्निर्णयोपपत्तेः । गङ्गापदाल्लक्षणया जातं ज्ञानं तीरविशेषे निर्णयः, अतः प्रकृष्टप्रकाशवैशिष्ट्यस्य तत्राऽबाधितस्याऽपि तात्पर्याऽगोचरतया वाक्यं चन्द्रप्रातिपदिकार्थमात्रनिष्ठं तदिदमुक्तं तदेवोत्तरेणेति । तच्च प्रकृष्टप्रकाशपदाभ्यां मुख्यार्थनिष्ठाभ्यां न शक्यं निर्णेतुमिति पृष्टोऽर्थो नैव सिद्ध्यति चन्द्रस्य तेजोविशेषमात्रतया विशिष्टस्वरूपमात्रत्वादिति फलितमाह । ततश्चेति लक्षणात इत्येकं पदम् ॥ २३३ ॥

मू० ॥ प्रकर्षः प्रकाशातिरिक्तो न चात्र
प्रकाशः प्रकर्षाऽतिरिक्तो न चात्र ॥
बहिश्चन्द्रमस्ति स्वरूपातिरेक-
स्तयोश्चन्द्रमस्येकतैवातिमात्रम् ॥ २३४ ॥

टी० ॥ ननु लक्षणयापि ताभ्यां पदाभ्यां स्वाभिधेयव्यक्तिद्वयमेव लक्षणीयं मुख्यार्थसंबन्धात्र तु चन्द्रव्यक्तिरसंबन्धात्ततः कथं ताभ्यां तल्लाभ इत्याशङ्क्याह । प्रकर्ष इति । अत्र चन्द्रे प्रकर्षप्रकाशव्यक्त्योश्चन्द्रव्यक्त्या परस्परं चाभेदान्नोक्तदोष इति भावः । ननु खद्योते प्रकाशे सत्यपि न प्रकर्षोऽस्ति तम आदौ प्रकर्षे सत्यपि न प्रकाश इति तयोर्भेदो वाच्यः । एवं च चन्द्रेऽपि तयोर्भेद एवेत्याशङ्क्याह । बहिश्चन्द्रमिति । चन्द्रादन्यत्रेत्यर्थः । तयोः प्रकर्षप्रकाशयोः । अतिमात्रमत्यन्तम् ॥ २३४ ॥

मू० ॥ न चन्द्रप्रकाशप्रकर्षं प्रकाशा-
तदीयात्पृथक्कश्चिदुत्पश्यतीह ॥
तथाऽस्य प्रकर्षप्रकाशं प्रकर्षा-
त्ततो नानयोरस्ति भेदे प्रमाणम् ॥ २३५ ॥

टी० ॥ तत्रानुभवप्रमाणमाह । न चन्द्रप्रकाशेति । तदीयाच्च-न्द्रसंबन्धिनः प्रकाशादिति संबन्धः । पृथग्भिन्नम् । उत्पश्यति स्पष्टं पश्यति । इह चन्द्रे । यद्यपि खद्योते तमसि च प्रकाशप्रकर्षौ पृथगनुभूयेते तथापि चन्द्रे तयोः परस्परं चन्द्राच्च भेदं कोऽपि नाऽनुभवति । न चापर्यायशब्द-प्रतिपाद्यतया तत्रापि भेदोऽस्तीति वाच्यम् । वाच्यभेदे सत्यपि लक्षितव्य-क्तीनामभेदात् । यथा घटतज्ज्ञानयोः पृथक्प्रवृत्तसत्यज्ञानपदाभ्यां ब्रह्मणि लक्षितव्यक्त्योरभेदः एवं च खद्योतमन्धकारं च व्यावर्त्य प्रकृष्टप्रकाशपदाभ्यां चन्द्रस्वरूपप्रकाशविशेषो जहल्लक्षणया प्रतिपाद्यत इति तद्वाक्यमखण्डा-र्थमेवं गवादिलक्षणवाक्यमपि द्रष्टव्यम् । तस्यापि तत्तल्लक्ष्यस्वरूपनिश्चयाय प्रवृत्तस्य तदन्यार्थत्वायोगात् । तथा च सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यमख-ण्डार्थं लक्षणवाक्यत्वात्प्रकृष्टप्रकाशादिवाक्यवत् । न चाप्रयोजकत्वं चन्द्रस्व-रूपमात्रप्रश्नवदिह ब्रह्ममात्रप्रश्नादर्शनेन प्रकृष्टादिवाक्यस्येवास्याखण्डा-र्थत्वाभावे बाधकाभावादिति वाच्यम् । यतो ब्रह्मविदाप्नोति परमिति निर-तिशयबृहदात्मकब्रह्मज्ञानस्य परमपुरुषार्थसाधनत्वं संकीर्त्तितं तच्च त-ज्जिज्ञासामूलप्रश्नार्थमेव अन्यथा साधनात्फलानिष्पत्तेस्तत्संकीर्त्तनवैयर्थ्या-दिति यावन्मात्रज्ञानात्फलं श्रावयति तावन्मात्रनिर्णयाय प्रवृत्तमिदमपि वाक्यं तावन्मात्रार्थमेवेति कथमप्रयोजकता ब्रह्मातिरिक्तवैशिष्ट्यस्य ब्रह्म-पदार्थे संभवाच्च । नापि लक्षणवाक्यत्वं धर्मधर्मिभावं विनानुपपन्नमसाधा-रणधर्मस्यैव लक्षणत्वादिति विरुद्धमिति वाच्यम् । यतो न लक्षणमसाधारणो धर्म इति नियमोऽस्ति अन्त्यविशेषलक्षणे तदभावात् । किंतु यद्विषयं सज् ज्ञानं सजातीयादिभ्यः स्वविषयं व्यावर्त्तयति तल्लक्षणम् । तच्च धर्मो धर्मी वा यथा प्रमाणमस्त्विति सर्वमेव लक्षणवाक्यमखण्डार्थमिति ब्रह्मलक्षण सत्यादिवाक्यमप्यखण्डार्थमिति भावः ॥ २३५ ॥

मू० ॥ यथा सच्चिदानन्दशब्दास्तदर्थं
तथा तत्त्वमावात्मनो ब्रह्मभावम् ॥
विरोधान्मिथो लक्षणावर्त्मनेमौ
किमर्थं न संभूय वक्तुं समर्थौ ॥ २३६ ॥

टी० ॥ एवं तत्त्वमस्यादिवाक्यस्य वाक्यत्वेन ज्योतिष्टोमादिवाक्यवद्विशिष्टार्थत्वानुमाने व्यभिचारादिना दूषिते तदखण्डार्थं उपाधितो भिन्नयोरभेदवाक्यत्वाद्बिम्बप्रतिबिम्बाभेदवाक्यवद्ब्रह्मपरवाक्यत्वाद्वा सत्यज्ञानादिवाक्यवदित्यभिप्रेत्योपसंहरति । यथेति । तदर्थं महावाक्यस्यतत्पदलक्ष्यं लक्षणया बोधयन्तीति शेषः । तत्त्वमौ तत्त्वंशब्दौ मिथो विरोधादित्यन्वयः । मुख्यार्थयोः परस्परमभेदे विरोधाद्धेतोरित्यर्थः । लक्षणावर्त्मना लक्षणामार्गेण लक्षणयेति यावत् । इमौ तत्त्वमाविति संबन्धः । किमर्थं न संभूय वक्तुं समर्थौ समर्थावेवेत्यर्थः ॥ २३६ ॥

मू० ॥ प्रत्यक्त्वं लक्षयेत्त्वंपदार्थ-
स्तच्छब्दार्थो लक्षयेदद्वितीयम् ॥
एवं पूर्णं प्रत्यगात्मानमेतौ
शब्दौ ब्रूतो लक्षणावर्त्मनेव ॥ २३७ ॥

टी० ॥ केन पदेन कीदृशोऽर्थो लक्ष्यते येन तदर्थयोर्विरोधः परिह्रियेतेत्याशङ्क्य प्रागुक्तमर्थमुपसंहारे स्मारयति । प्रत्यक्त्वमिति । अहंकारादिसाक्षिसर्वान्तरचैतन्यमात्रमित्यर्थः । त्वं पदार्थ इति । पदार्थस्य लक्षकत्वमाश्रित्योक्तम् । एवमप्यर्थेऽपि सर्वान्तरस्य साक्षिणः सर्वव्याप्यद्वयाभेदे तत्त्वं पदसामानाधिकरण्ये न सिद्धे निरतिशयबृहत्त्वशालि ब्रह्म सिद्ध्यतीत्याशयेनाह । एवं पूर्णमिति । एवकारेण वृत्त्यन्तरं व्यावर्त्तयति । अत एव गौण्युक्तिर्यन्थकारस्य प्रौढोक्ति प्रागवादिषम् ॥ २३७ ॥

मू० ॥ पारोक्ष्यं च ब्रह्मणि प्रत्यगर्थे
दुःखित्वं च ध्वान्तसंभूतमाहुः ॥

सम्यग्ज्ञानध्वस्तमोहस्य पुंसः
प्रध्वंसेते हेत्वभावे फलत्वात् ॥ २३८ ॥

टी० ॥ नन्वेवमपि कथं पूर्णवस्तुलाभः परापरयोः पारोक्ष्यदुःखित्वादेरनपायादित्याशङ्क्याह । पारोक्ष्यं चेति । ब्रह्मणि पारोक्ष्यं चेति जगत्कारणत्वादि समुच्चिनोति । दुःखित्वं चेति । सुखित्वादि समुच्चिनोति । तयोरविद्यासंभूतत्वे किं सिद्धं तदाह । सम्यगिति । प्रध्वंसेते पारोक्ष्यं दुःखित्वं चेत्यनुषङ्गः । तत्र सामान्यन्यायमाह । हेत्वभाव इति । अफलत्वादिति छेदः कारणाभावे कार्याभावादित्यर्थः ॥ २३८ ॥

मू० ॥ षष्ठी जातिगुणक्रियादिरहिते सर्वस्य विज्ञातरि
प्रत्यक्चे परिवर्जिताऽखिलजगद्द्वैतप्रपञ्चे दृशौ ॥
सन्त्यक्तव्यवधानके परमके विष्णोः पदे शाश्वते
त्वय्यज्ञानविजृम्भिता नहि गिरो मुख्यप्रवृत्तिक्षमाः ॥२३९॥

टी० ॥ एवं वेदान्तानां सर्वपदलक्षणयाऽखण्डैकरसे ब्रह्मणि पर्यवसानं न्यायत उपपादितम् । ननु सर्वपदलक्षणाऽनुपपन्ना लोके लक्ष्यस्य पदान्तरवाच्यत्वनियमदर्शनात् । अन्यथा लाक्षणिकपदैरेव लक्ष्यप्रश्नोत्तरदाने तत्रापि लक्ष्यप्रश्ने लाक्षणिकपदप्रयोगानवस्थानप्रसङ्गादितिचेन्न । तेन विनापि वाच्यसंबन्धितया विचारादिनाऽवगतात्मतत्त्वस्य योग्यतादिमहिम्ना स्वत एव लक्ष्यज्ञानसंभवेन लक्ष्यप्रश्नोत्तरानन्त्याप्रसङ्गात् । न हि तीरादिपदसंगतिग्रहात्पूर्वं प्रवाहादिसंबन्धितया विचारादवगते तीरादौ गङ्गादिपदलक्षणा नावतरति । किंचेक्षुक्षीरादिमाधुर्यविशेषेऽनुभवसिद्धे कस्यापि पदस्य शक्त्यसंभवान्माधुर्यविशेषादिः सामान्यशब्देन लक्षणयैव प्रतिपादनीयः स इति पदान्तरवाच्यमेव लक्ष्यमिति न नियमो लोकेऽपि वक्तुं शक्यः । किंच सत्यज्ञानानन्दैकरसे ब्रह्मणि गवादाविव गवादिशब्दः किं जातिनिमित्तो वाचकः शब्दः प्रवर्त्तते, किं वा दण्ड्यादिशब्द इव संबन्धेन सनिमित्तः, अथ वा गुणवचनेभ्यो मतुपो लोपा*नुशासनात् शुक्लादिशब्द

* मतुब्लोपा । पा० २ ॥

इव पटादौ गुणयोगेन सनिमित्तः, यद्वा याजकादिशब्दवत्क्रियानिमित्तः, उद्भिदादिशब्दवत्स्वरूपमात्रनिमित्तो वा न सर्वथापीत्याह । षष्ठीत्यादिना संबन्धः षष्ठी ब्रह्मणि तेषामन्यतमस्याप्यसंभवादित्यर्थः । तत्र हेतुमाह । सर्वस्य विज्ञातरीति । सर्वावभासक इत्यर्थः । ननु स्वावभासकत्वे तस्य स्वात्मनि वृत्तिविरोध इति कथं सर्वस्य विज्ञातेति चेन्न । तस्य स्वप्रकाशतया स्वत एव नित्यापरोक्षत्वादित्याह । प्रत्यक्ष इति । तदुपपादनाय दृशावित्युक्तम् । तथा चावभास्यघटादेरवभासकेऽभाव इव चेतनाचेतनात्मकद्विविधप्रपञ्चशून्यत्वात्तस्मिन्न षष्ठ्यादिसंभव इत्याह । परिवर्जितेति । जगदिति । चतुर्विधचेतनप्रपञ्चो निर्दिष्टः द्वैतशब्देन तदितरः वैपरीत्येन वेति विवेक्तव्यम् । ननु द्रष्ट्रूपमपि पुरुषान्तरसंवेदनं न प्रत्यक्षं तद्वद्ब्रह्मणोऽपि किं न स्यादित्याशङ्क्य तस्योपाध्यन्तरेण व्यवधानात्तथात्वं न निरुपाधिब्रह्मणस्तदित्याशयेनाह । सन्त्यक्तव्यवधानक इति । ननु निखिलप्रपञ्चकारणस्य कथं परिवर्जितेत्याद्युक्तमिति चेन्न मायाशबलात्मना तस्य तथात्वेऽपि स्वस्वरूपेण परिशुद्धत्वादित्यभिप्रेत्याह । परमके विष्णोः पद इति । शाश्वते निर्विकार इति गुणक्रियाराहित्ये हेत्वन्तरमुक्तम् । स्वशिष्येणैवं भूते ब्रह्मणि प्रत्यगभेदबुद्धिः कर्तव्येति शिक्षयन्नाह । त्वयीति । किञ्चाज्ञानकार्याणां गिरां तादृशेनैवार्थेन संबन्धो युक्तः समस्वभावयोरेव लोके संबन्धदर्शनात्तन्नामरूपाभ्यामेव व्याक्रियतेति शब्दतदभिधेययोराविद्यकत्वश्रवणाच्च न त्वज्ञानतत्कार्यविरुद्धेन द्रष्ट्रूपेण प्रत्यगात्मनेत्याशयेनाह । अज्ञानविजृम्भिता इति । एवं च कोऽपिशब्दस्तत्र प्रवर्त्तितुं नार्हतीति सर्वपदलक्षणैवोचितेति भावः ॥ २३९ ॥

(शेषमग्रे)

# ॥ अथ चित्सुखी ॥

## ॥ तत्र प्रथमपरिच्छेदावशेषः ॥

*(Continued from page* 112. Vol. V.*)*

न च ताभ्यामपनये तयोरभावज्ञानस्य प्रामाण्यग्रहणहेतुत्वोपपत्तौ परतः प्रामाण्यापत्तिरिति वाच्यम्, दोषबाधबोधयोरनुदयमात्रेण प्रामाण्यस्फुरणोररीकरणम्, तथा चाहुर्भट्टपादाः,

"यदा स्वतः प्रमाणत्वं तदान्यन्नैव मृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥

इति ।

अन्यथा तदभावावगमस्यापि प्रामाण्यस्फुरणहेतुत्वे तत्तदभावावगमस्यापि प्रामाण्यावगमाय तत्तदभावावगमान्तराणामप्यवश्याश्रयणीयत्वादनवस्था, तथा चानभ्यासदशायां सांशयिकत्वादिति हेतोः स्पष्टमनैकान्तिकत्वम्, स्वतः प्रमाणत्वेन भवदभिमतेष्वेवानुमानोपमानानुव्यवसायधर्म्यध्यवसायेषु व्यभिचारस्य दर्शितत्वात्, उक्तं चैतदनुमानादेः स्वतः प्रामाण्यमाचार्यवाचस्पतिना न्यायवार्तिकटीकायाम्, "विमतं ज्ञानमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वात्, यदि पुनरेवं नाभविष्यन्न समर्थां प्रवृत्तिमकरिष्यत्, यथा प्रमाणाभास इति व्यतिरेकी· अन्वयव्यतिरेकी वा अनुमानस्य स्वतः प्रमाणतयान्वयस्यापि संभवात्, तथानुमानस्य तु परितो निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यम्, अनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात्, एतेनोपमानं व्याख्यातमित्यादि," सत्प्रतिपक्षसाधनत्वाच्च, विवादस्थले प्रमात्वं विज्ञानग्राहकसामग्रीमात्रग्राह्यम्· अप्रमामात्रवृत्तित्वानधिकरणत्वे सति ज्ञानैकवृत्तिजातित्वाज्ज्ञानत्ववत् ।

ननु कथं प्रमात्वं जातिः, साक्षात्कारित्वेन तस्य परापरभावासंभवात्, तथाहि यदि साक्षात्कारित्वं परं तदा तदपरसामान्यस्य प्रमात्वस्य परसामान्याविनाभावनियमात् सर्वैव प्रमा साक्षात्कारिण्येवेत्यनुमानादेः परोक्षस्याप्रमात्वमेव भवेत्, अथापरम्, तदा साक्षात्कारित्वस्य प्रमात्वाविनाभावादिदं रजतमित्यादिसाक्षात्कारिणो विभ्रमस्य प्रमात्वप्रसङ्गः ।

किंच यदि प्रमात्वं जातिस्तदा सर्वं ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्यय इत्येषापि परिभाषा परिलुप्येत ।

एकस्यैवेदं रजतमिति ज्ञानस्य धर्म्यंशे प्रमात्वमप्रमात्वं चेतरांश इति जातिसंकरप्रसङ्गादिति चेत्, मैवम्, साक्षात्कारित्वस्य रजतादिविभ्रमावृत्तित्वात्,तत्र न व्यवहारस्येन्द्रियसंयोगजन्यतोपाधिमात्रेणोपपत्तेः, धर्म्यंशे प्रमाव्यवहारस्य चा[१]बाधितानुभूतित्वोपाधिनिबन्धनतयापि संभवात् ।

न चैवं सर्वत्रोपाधिनिबन्धन एवास्तु प्रमाव्यवहारः कृतं जातिकल्पनयेति वाच्यम्, प्रमिणोमीत्यबाधितानुगतव्यवहारस्य गौर्गौरिति व्यवहारस्येव जातिमन्तरेणानुपपत्तेः, उपाधिमादाय जातिप्रत्याख्यानस्य गोत्वादिष्वपि तुल्यत्वात् ।

तस्माद्यत्र,

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः" ॥

इत्युक्तबाधकानामन्यतमोऽपि बाधो न प्रसरति, तत्र जातिनिमित्तो व्यवहार इतरत्र तूपाधिनिबन्धन इति विभागो द्रष्टव्यः, तस्माज्ज्ञानैकनिष्ठजातित्वादिति न विशेष्यासिद्धो हेतुः, विपक्षे चानवस्थाप्रसङ्गो बाधकस्तर्कः ।

न च निलीनस्यैव प्रमाणस्यार्थे व्यवहारजनकत्वोपपत्तेर्नानवस्थेति वाच्यम्, तथात्वनिश्चायकप्रमाणानुदये तदस्तित्वस्यैव निश्चेतुमशक्यत्वात् ।

अस्तु तर्हि ज्ञानस्य स्वत एव स्फुरणं तथापि तत्प्रामाण्यं तद्गतगुणत्वादिवदन्यत एव स्फुरिष्यति को विरोध इति चेत्, मैवम्, तस्यादित एव प्रमाणत्वेनास्फुरणे तद्विषये निःशङ्कप्रवृत्त्यनुपपत्तेः, न हि ज्ञातमित्येतावता प्रवृत्तिः, मरुमरीचिकादौ सत्यपि विज्ञाने तदप्रामाण्यनिश्चये प्रवृत्त्यदर्शनात् ।

१ न चाबाधितानुभूतित्वसंभवे तद्व्यङ्ग्या जातिरपि तत्र भवेदिति वाच्यम्, प्रबाधने संकरबाधात्, प्रसञ्जने विपर्ययापर्यवसानात् ।

अस्तु तर्ह्यप्रामाण्यास्फुरणे प्रामाण्यस्फुरणमन्तरेणापि ज्ञानमात्रात् प्रवृत्तिरिति चेत्, मैवम्, विज्ञानस्य प्रामाण्याप्रामाण्ययोरस्फुरणे संशयान्निःशङ्कप्रवृत्त्यनुपपत्तेः, अस्ति चानभ्यासदशायां नववनस्थलीस्थितेषु फलितरसालादिषु तत्फलादानेच्छोर्निःशङ्कप्रवृत्तिः ।

अपिच त्वयापि पारलौकिकफलसाधनेषु निःशङ्कप्रवृत्तिः प्रामाण्यनिश्चयाधीनाभ्युपगता ।

न च कृष्यादौ संशयेऽपि प्रवृत्तिर्दृष्टेति वाच्यम्, तत्र निःशङ्कप्रवृत्तेरभावात्, एवं यत्र यत्र निःशङ्का प्रवृत्तिस्तत्र तत्र प्रामाण्यनिश्चयाधीनैवेत्यभ्युपगन्तव्यम्, अपरथा प्रामाण्यानिश्चयानिवृत्तेरपि प्रसङ्गात् ।

न च फलेऽपि परतस्त्वम्, ज्ञेयाभिव्यक्तिलक्षणफलस्य ज्ञानमात्रादेव सिद्धेः, उपादानादीनां पुनरिष्टसाधनादिज्ञानाधीनतया तद्विषयप्रमाणस्य तत्रापि फलजनकत्वं स्वत एव ।

तस्मादवधीर्यैव गुणगणमनपेक्ष्यैव दोषाभावं स्वशक्त्यैव स्वार्थमावेदयन्ति वेदान्ता इति सिद्धम् ।

ननु स्वरूपसहकारिसमवधानातिरिक्तां शक्तिमेव न जानीमः, तत्र प्रमाणाभावात् ।

तथाहि स्फोटादिलक्षणकार्यान्यथानुपपत्तिस्तत्र प्रमाणमुतोपादानोपादेयभावनियमानुपपत्तिः ।

नाद्यः, स्वरूपादेव पावकादेः प्रतिबन्धकाभावादिसहकार्युपबृंहितात् स्फोटादिलक्षणकार्योत्पत्त्युपपत्तावतीन्द्रियशक्तिकल्पनानुपपत्तेः ।

न चाभावस्याकारणत्वात् प्रतिबन्धकाभावो न सहकारीति सांप्रतम्, किमन्वयव्यतिरेकित्वं नास्त्युताभावस्य कारणत्वेऽनिष्टप्रसक्तिः ।

नाद्यः, भाववदभावस्यापि कार्यान्वयव्यतिरेकित्वात् ।

न द्वितीयः, योग्यानुपलब्धेरभावप्रमितिहेतुत्वात्, विवेकाग्रहस्य च विभ्रमहेतुत्वात् ।

ननु किं प्रतिबन्धकप्रागभावस्य कारणत्वमुत तत्प्रध्वंसस्य ।

नाद्यः, उत्तम्भकसद्भावे सत्यपि प्रतिबन्धके विनापि प्रागभावं कार्यदर्शनात् ।

न द्वितीयः, प्रतिबन्धकानुदयेऽपि कार्यानुपलब्धेरिति चेत्, मैवम्, उत्तम्भकमणिमन्त्राद्यभावसहकृतस्यैव प्रतिबन्धकस्य प्रतिबन्धकत्वात्, तेन तत्र प्रतिबन्धकप्रागभावसहकृतस्यैव कारणत्वाच्च व्यभिचारः ।

एतेनानियतहेतुकत्वमप्यपास्तम्, सर्वत्र प्रतिबन्धकसंसर्गाभावविशिष्टस्यैव कारणत्वाङ्गीकरणात्, अन्यथानुपलब्धावप्युपलब्धिप्रागभावप्रध्वंसाभावविकल्पेनाभावप्रमितेरनियतहेतुकताया दुष्परिहरत्वात्, शक्तिपक्षेऽप्यप्रतिबद्धाया एव तस्याः कारणत्वादभावविकल्पोत्थदोषतत्परिहारयोः समानत्वात् ।

ननु न प्रतिबन्धकाभावस्य कारणता, प्रतिबन्धापेक्षस्तदभावः कारणं कारणापेक्षश्च तदभावः प्रतिबन्ध इत्यन्योन्याश्रयग्रस्तत्वात् ।

प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धक इत्यङ्गीकारादिति चेत्, मैवम्, अवधीर्यैवाभावस्य कारणतां कार्यानुदयमात्रेणैव मन्त्रादेः कार्यप्रतिकूलतावगमात्, अनवलम्ब्यैव च मणिमन्त्रादेः कार्यप्रतिबन्धकतां तदभावस्यान्वयव्यतिरेकाभ्यामेव कारणताध्यवसायात् ।

किंचेदमन्योन्याश्रयत्वमुत्पत्तौ ज्ञप्तौ वा स्यात् ।

नाद्यः, मन्त्रतदभावयोः परस्परहेतुत्वाभावात् ।

नापि द्वितीयः, अज्ञातयोरपि मन्त्रतदभावयोः कार्यं प्रति प्रतिकूलत्वकारणत्वयोरुपपत्तेः ।

ननु कार्याभावावसेयकार्यप्रतिकूलभावा मन्त्रादयः शक्तेरपह्नवाय कारणाभावरूपा दृष्यन्ते, अत एव मन्त्राद्यभावोऽपि कारणमिष्यते, ततो मन्त्रतदभावनिष्ठप्रतिबन्धकत्वकारणत्वयोरन्योन्योपाधिकत्वादुत्पत्तौ ज्ञप्तौ वान्योन्याश्रयता दुर्वारेति चेत्, न, उक्तोत्तरत्वात्, अन्तरेणैवाभावस्य कारणतावगमं मन्त्रादेः कार्याभावमात्रेण कार्यप्रतिकूलभावस्यावगन्तुं शक्यत्वात्, तदभावकारणत्वस्याप्यन्वयव्यतिरेकाभ्यामेव सुकरावगमत्वादिति ।

न च शक्त्यनङ्गीकारे प्रतिबन्धासंभवः, मणिमन्त्रादिसंनिधानासंनिधानयोः स्वरूपस्याविशेषादिति वाच्यम्, कार्यौदासीन्यस्यैव प्रतिबन्ध-

शब्दाभिधेयस्य विशेषत्वात्, अन्यथा शक्तिपक्षेऽपि प्रतिबन्धस्य दुर्विवेकत्वात्, न हि शक्तेर्नाशः प्रतिबन्धः, प्रतिबन्धापाये कार्याभावप्रसङ्गात् ।

न च स्फोटाख्यकार्योत्पत्तये शक्त्यन्तरं तत्रोत्पन्नम्, तत्कारणानिरूपणात् ।

न च प्रतिबन्धाभावः कारणम्, अभावस्य कारणतानङ्गीकारात्, अङ्गीकारे वा तस्यैव स्फोटादिकार्यजनकत्वमस्तु कृतमतीन्द्रियशक्तिकल्पनादुर्व्यसनेन, शक्तेः शक्त्यन्तरं प्रतिबध्यत इति वदतोऽनवस्था, तस्मात् कार्यस्यान्यथाप्युपपन्नत्वान्नातीन्द्रियशक्तिकल्पनावकाशः ।

नापि द्वितीयः, उपादानोपादेयभावनियमस्याप्यनादिसिद्धवृद्धव्यवहारावसिततत्तत्कार्यानुकूलस्वभावभेदादेवोपपत्तेः, अन्यथेयमिहैव किमिति शक्तिर्नान्यत्रेति पर्यनुयोगे कः स्वभावभेदादन्यः परिहारः स्यात् ।

तस्मादर्थापत्तिद्वयमपि नात्र प्रमाणम् ।

अस्तु तर्ह्यनुमानम्, तथाहि विमतमजनकदशातो जनकदशायामतिशययोगि कारकत्वात् कुण्ठकुठारवदिति चेत्, न, सहकारिसमवधानाख्यातिशयेनैव सिद्धसाधनत्वात् ।

अस्तु तर्ह्यग्निरतीन्द्रियसामान्यवन्निष्क्रियाश्रयः कारणत्वाद् गुरुत्वाश्रयवदिति प्रयोगः, तेजोद्गुणकमतीन्द्रियरूपस्य वायोश्चाधिकरणमिति तद्व्यावृत्त्यर्थमतीन्द्रियसामान्यवन्निष्क्रियेत्युक्तम्, अतः शक्तिसिद्धिरिति कश्चित्, तन्न, योगिस्वीकारवादिनं प्रत्यतीन्द्रियविशेषणस्याप्रसिद्धत्वात् ।

विमतं न गुरुत्वजातिविषयमिन्द्रियत्वादस्मच्चक्षुर्वदित्यतीन्द्रियसिद्धिरिति चेत्, न, योगिनमनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धेः, तत्सिद्धौ वा धर्मिग्राहकप्रमाणबाधात् ।

अस्तु तर्ह्यस्मदाद्यभिप्रायेणातीन्द्रियत्वविशेषणम्, मैवम्, अनुव्यवसायप्रत्यक्षगोचरतया सर्वस्यास्मदादिविशेषणस्वीकारेऽपि पूर्वोक्तदोषतादवस्थ्यात् ।

अनुव्यवसायेतरास्मदाद्यैन्द्रियकबुद्ध्यगोचरत्वाभिप्रायेणातीन्द्रियत्वविशेषणमिति चेत्, न, प्रमाणान्तरोपनीतविशेषणावगाहिविशिष्टज्ञानबाधे

सर्वेषामप्यतीन्द्रियकत्वसंभावनया पूर्वोक्तदोषानुसारात्, आश्रयपदस्य च समवाय्यर्थतायां भाट्टस्य समवायानङ्गीकारवादिनोऽप्रसिद्धविशेषणत्वात्, वह्नौ स्थितिस्थापकसंस्कारसिद्धेः सिद्धसाधनत्वाच्च ।

ननु कथं सिद्धसाधनत्वं तत्सत्त्वे मानाभावादिति चेत्, मैवम्, विमतः स्थितिस्थापकसंस्कारवान् रूपवत्त्वात् कटवदित्यनुमानसद्भावात् ।

न च स्थितिस्थापककार्यवत्त्वमुपाधिः, उत्पन्न[१]मात्रविनष्टकटादिषु कार्यानुलम्भेऽपि तथाविधसंस्काराभ्युपगमेन साध्याव्याप्तेः ।

किंच यः स्वसिद्धान्तानुसारेण सिद्धसाधनतां ब्रूयात् स कथमनुमानशतैरपि स्वसिद्धान्तात् प्रच्याव्येत, कथं वा तदीयसिद्धसाधनताभिधानं प्रत्युद्ध्रियेत ।

अस्तु तर्हि स्थितिस्थापकेतरातीन्द्रियसामान्यवच्छिक्रियाश्रय इति प्रयोग इति चेत्, मैवम्, तथापि कर्माप्रत्यक्षत्ववादिनं प्राभाकरं प्रत्यर्थान्तरत्वापातात्, वह्नेरतीन्द्रियसामान्यवच्छिक्रियकर्माश्रयत्वात्, कारणत्वादिति हेतोः शक्तावनैकान्त्यात्, शक्तेश्च शक्त्यन्तराभ्युपगमेऽनवस्थापातात् ।

जनकशक्तियोगिन एव कारणत्वेन विवक्षितत्वान्न शक्तावनैकान्तिकतेति चेत्, मैवम्, शक्तियोगित्वस्य विशेषणस्य शक्त्यसिद्धावसिद्धेः, मानान्तरात् तत्सिद्धौ कृतमनया ग्रन्थकथाकन्थाकदर्थनया, गुणादावनैकान्त्यं च, गुणादेरप्यतीन्द्रियसामान्यवच्छिक्रियाश्रयत्वे च घटादिवद् द्रव्यत्वप्रसङ्गान्न यथोक्तशक्त्याश्रयत्वोपपत्तिः ।

अस्तु तर्हि विवादाध्यासितः स्फोट उभयवादिसंप्रतिपन्नस्फोटकारणातिरिक्तकारणजन्यः कार्यत्वाद् घटवदिति प्रयोग इति चेत्, मैवम्, प्रतिबन्धकाभावेन प्रतिवादिनोऽसंप्रतिपन्नेन कारणेन सिद्धसाधनत्वात्, भावजन्य इति विशेषणेऽपीश्वरेण सिद्धसाधनत्वात् ।

ननु मा भूदर्थापत्तिः प्रमाणं मा स्म भूदनुमानं "व्रीहीन् प्रोक्षति" "यूपं तक्ष" "त्यग्नीनादधीते"त्याद्याः श्रुतय एव प्रमाणम् ।

---

१ अत्र चोत्पन्नमात्रेत्यनुत्पादितकार्यत्वमात्रं विवक्षितम्, इतरथा तत्र साध्याभावस्यापि सुवचत्वादिति ।

तथाहि व्रीहीनित्यादिवाक्येषु द्वितीयाश्रुत्या ग्रामं गच्छतीत्यादिष्विव व्रीह्यादीनां कर्मतावगमात् तेषु कश्चिदतीन्द्रियः प्रोक्षणजन्योऽतिशयोऽस्तीत्यवसीयते, दृष्टस्य फलान्तरस्यादर्शनात् ।

स चायमतिशयः शक्तिरिति शक्तिवादिभिर्गृह्यत इति चेन्न, मैवम्, संस्काराख्यादृष्टस्य चेतनगतस्याचेतनेषु व्रीह्यादिषु समवायासंभवात्, घटविषयज्ञानजनितभावनाया घटविषयत्ववद् व्रीहिप्रोक्षणाद्युद्भूतसंस्कारस्यापि तद्विषयक्रियाजन्यतामात्रेण तदीयत्वप्रतीत्युपपत्तेर्व्रीह्यादिषु शक्तिकल्पनायां प्रमाणाभावात् ।

तस्माच्च शक्तिसद्भावे प्रमाणमस्ति, तथा च प्रयुक्तं लीलावतीकारेण, "विवादाध्यासितं न निजरूपमात्रसंबद्धातीन्द्रियसापेक्षं प्रमाणेन तथात्वानुपलभ्यमानत्वाद् यत् प्रमाणेन यथा नोपलभ्यते न तत् तथाभूतं यथा नीलं पीत"मिति, अत्र च निजरूपमात्रसंबद्धशब्देन द्विष्ठस्य संयोगादेर्व्यावृत्तिः क्रियत इति ।

अत्रोच्यते, न तावच्छक्तौ प्रमाणाभावः, यस्मात्,

"परास्य शक्तिर्विविधा सर्गाद्या भावशक्तयः ।
इति श्रुतिस्मृतिमिता शक्तिः केन निवार्यते" ॥

"न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
य एकोऽवर्णो बहुधा शक्तियोगात्" ।

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः" ॥

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य" ॥

इत्यादिश्रुतिस्मृतिशतैर्गीयमाना शक्तिः शक्यते कथमपह्नोतुम् ।

न चैतानि वचांसि स्वरूपसहकारिमात्रप्रतिपादकानि, कार्यकारणादिसहकारिनिरासपुरःसरं तस्याः प्रतिपादनात् ।

न च स्वरूपत्वमपि शक्तेः, 'परास्ये'त्यादिषष्ठ्या स्वरूपातिरिक्तत्वप्रतिपादनात्, 'अस्य शक्तिर्विविधा' 'तास्तु शक्तय' इति च नानात्वेन श्रूयमाणाया एकरूपब्रह्मत्वासंभवाच्च ।

न चासां श्रुतिस्मृतीनामर्थवादत्वम्, उपक्रमोपसंहारादिलिङ्गैरीश्वरस्वरूपपरत्वाध्यवसायात्, नैयायिकादिभिरेतासामीश्वरस्वरूपपरत्वाभ्युपगमाच्च ।

अथैवमपि नार्थापत्त्यनुमाने विना तार्किकमन्यस्तुष्यति भवान्, तदार्थापत्त्यनुमानोपन्यासेन भवन्तं परितोषयामः, तथाहि स्फोटादिकार्यान्यथानुपपत्तिलक्षणोदाहृतैवार्थापत्तिः ।

ननु तत्राप्युदितैवान्यथाप्युपपत्तिः, प्रतिबन्धकाभावसहकृतादेव वह्निस्वरूपात् कार्योत्पत्तेः ।

न च प्रागभावप्रध्वंसाभावादिविकल्पेनाभावस्याकारणत्वम्, शक्तावपि तत्प्रसङ्गस्य तुल्यत्वात्, अप्रतिबद्धाया एव शक्तेः कारणत्वादिति चेत्, मैवम्, विकल्पासहत्वात् ।

तथाहि यदि प्रतिबन्धकाभावः कारणं न स्यात् तर्हि शक्तिरपि कारणमिति प्रतिकूलतर्कमात्रमिदं किं वा भवति च शक्तिः कारणं ततः प्रतिबन्धकाभावोऽपि कारणमिति विपर्यये पर्यवसानादभावस्य कारणत्वसाधकं वा ।

नाद्यः, तर्कमात्रस्योपालम्भानङ्गत्वात् ।

नेतरः, भवति च शक्तिः कारणमिति विपर्ययस्य शक्तिमनिच्छता वक्तुमशक्यत्वात् ।

न च परसिद्धेन परस्यानिष्टापादनम्, प्रमितप्रतियोगिकनिषेधवादिनः शक्तिरपि कारणं न भवेदित्येवंविधनिषेधस्यासिद्धेः, तथापि जल्पकथामवधीर्य प्रतिबन्धकाभावस्याकारणत्वे प्रतिबद्धापि शक्तिः किमिति कार्यं न जनयेदिति सुहृद्भावेन पृच्छतः किमुत्तरमिति चेत्, श्रूयतां तर्हि दर्शनरहस्यम्, सति पुष्कलकारणे कार्योत्पादविरोधिप्रतिबन्धकमिति हि शक्तिवादिनः, तेन न सामग्रीवैकल्यात् तत्र कार्यानुदयः किंतु विरोधिसद्भावादेव ।

न च सामग्रीवैकल्यमेव प्रतिबन्धः, लोकप्रसिद्धिविरोधात्, न हि कुसूलनिहितबीजानि क्षितिपवनपाथस्तेजःसंसर्गविरहितानि तन्तवो वा मञ्जूषानिहितास्तुरीवेमकुविन्दादिविरहिणः प्रतिबद्धा इति प्रतियन्ति लौकिकाः, सामग्रीविधुरतामात्रस्य च प्रतिबन्धतायां समस्तस्यापि हेतुजातस्य प्रतिबन्धाभावतयैवोपक्षीणत्वादिदमस्य कारणमयं च प्रतिबन्धाभाव इति परीक्षकाणां विशेषावधारणमेव न स्यात् ।

अभावस्याकारणत्वे कार्येणान्वयव्यतिरेकविरोध इति चेत्, मैवम्, अन्यथा सिद्धत्वात्, अनन्यथा सिद्धावन्वयव्यतिरेकौ कारणक्लृप्तिं कुर्वात इति न्यायात् ।

तर्ह्यनुपलब्धेरप्यभावोपलम्भहेतुता न भवेत्, विरोधिन्या अभावोपलब्धेरभावतया तदन्वयव्यतिरेकयोरप्यन्यथासिद्धेर्वक्तुं सुकरत्वादिति चेत्, न, तद्व्यतिरेकेणाभावोपलम्भकारणानिरूपणात् ।

इन्द्रियमेव कारणमिति चेत्, न, तस्याभावेन संनिकर्षासंभवात्, संयोगसमवाययोस्तत्राभावात्, विशेषणविशेष्यभावस्य च संबन्धान्तरगर्भस्यैव प्रत्यक्षाङ्गत्वाच्च तत्राभावस्य प्रत्यक्षगम्यत्वं किंत्वनुपलब्धिगम्यत्वेवेति निश्चीयते, अन्यथायं पर्वतो वह्निमानित्यत्र वह्नेरपि संयुक्तविशेषणतया प्रत्यक्षत्वप्रसङ्गात् ।

नन्वसंबद्धस्यैवाभावस्येन्द्रियग्राह्यत्वमस्तु तत्प्रतीतेरिन्द्रियान्वयव्यतिरेकानुविधायित्वेनापरोक्षत्वाद् गत्यन्तराभावाच्चेति चेत्, मैवम्, अयोगिप्रत्यक्षप्रमिताविन्द्रियाणां संबद्धार्थग्राहकत्वनियमस्य निराकर्तुमशक्यत्वात्, अभावप्रतीतेरपरोक्षत्वस्यासिद्धत्वादिन्द्रियान्वयव्यतिरेकयोरधिकरणग्रहणमात्र एवोपक्षीणतयान्यथासिद्धत्वाच्च ।

नन्वधिकरणग्रहणमात्रोपक्षीणत्वमन्वयव्यतिरेकयोरयुक्तम्, अन्धस्य त्वगिन्द्रियेणोपनीतघटादौ रूपाभावप्रतीतिप्रसङ्गात्, अधिकरणस्य गृहीतत्वात्, इन्द्रियस्य चाभावग्राहकत्वात् ।

तस्मादन्धस्य प्रतियोगिग्राहकेन्द्रियाभावादेव रूपाभावप्रतीत्यनुदय इति वाच्यम्, तथा चाभावस्येन्द्रियकत्वसिद्धिरिति चेत्, मैवम्,

अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वमतेऽप्यमन्धस्यापि मेघादौ घटतद्रू-पाद्यभावस्य चाक्षुषत्वं किं न स्यात् ।

ननु तत्र प्रतियोगिनश्चाक्षुषत्वेऽप्यधिकरणस्याचाक्षुषत्वाच्च तत्र रूपाभावश्चाक्षुष इति चेत्, एवं तर्हि मन्मतेऽपि नान्धस्य त्वगिन्द्रिय-गृहीते घटादौ रूपाभावप्रतीतिः, प्रतियोगिग्राहकेणाधिकरणस्य घटादेर-ग्रहणात् ।

तर्हि घ्राणागोचरकुसुमादौ वायौ वाऽचाक्षुषे गन्धस्य रूपस्य चाभावः प्रत्यक्षो न स्यादिति चेत्, मा भूत्, तत्र प्रामाणान्तरवेद्यत्वेऽपि तद्व्यवहारा-विरोधात् ।

न च सर्वत्र षष्ठप्रामाणवादिनामनुपलब्धिगम्य एवाभाव इति नियमः, व्यापकाभावाद्व्याप्याभावस्य कारणाभावेन कार्याभावस्य वानुमेयत्वा-ङ्गीकारात्, उक्तं हि भट्टपादैः,

"नियम्यत्वनियन्तृत्वे भावयोर्यादृशी मते ।
विपरीते प्रतीयेते ते एव तदभावयोः" ॥

इति, तथा च ब्रह्मसिद्धौ मण्डनमिश्रैः, "विपर्ययाभावस्तु युक्तोऽनुमानं हेत्वभावे फलाभाव" इति ।

तस्मादनुपलब्धेरनन्यथासिद्धान्वयव्यतिरेकबलादभावप्रतीतिहेतुता स्थलविशेषेऽध्यवसीयते, प्रस्तुते च स्वपुष्कलकारणादेव कार्योत्पत्त्युपपत्तौ न प्रतिबन्धकाभावस्य कारणता, अन्योन्याश्रयता चास्य मते दुर्वारा ।

यद्यपि मण्यादेः कार्यप्रतिकूलत्वमन्वयव्यतिरेकावसेयं तथापि विसामग्रीरूपतालक्षणं यदिदं प्रतिबन्धकत्वं तत् तदीयाभावस्य सामग्र्य-न्तर्भावविज्ञानसापेक्षं प्रतिबन्धो विसामग्रीत्यङ्गीकारात्, तेन प्रतिबन्धक-त्वसामग्रीत्वयोरन्योन्यापेक्षयैवाधिगतिरिति परस्पराश्रयता कथं न स्यात् ।

ननु मण्याद्यभावस्य सामग्र्यन्तर्भावज्ञानसापेक्षमस्तु नाम मण्या-देर्विसामग्रीत्वज्ञानं तथापि तदभावस्यान्वयव्यतिरेकाभ्यामेव वह्निस्वरूप-वत् सामग्र्यन्तर्भावान्नान्योन्याश्रयतेति चेत्, मैवम्, विकल्पासहत्वात् ।

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 78. VOL. V.)

३७६ ततो यजमानः मधुपर्को मधुपर्को मधुपर्कः प्रतिगृह्यतामिति मधुपर्कं ददाति ऋत्विजस्तु प्रतिगृह्णामीत्युक्त्वा प्रतिगृह्णन्ति पूर्वं आह्रीयमाणं मधुपर्कं मित्रस्य त्वेति मन्त्रेण प्रतीक्षन्ते देवस्य त्वेति मन्त्रेण अञ्जलौ गृहीत्वा वेष्टितं सूत्रं विस्रस्य पिधानकं दूरीकृत्य मधु वाता इति त्र्यृचेन मधुपर्कं अवेक्ष्य तत्पात्रं वामहस्ते कृत्वा तत्रत्यं मधुपर्कं अङ्गुष्ठानामिकाभ्यां त्रिः प्रदक्षिणमालोड्य वसवस्त्वेत्यादिमन्त्रेण प्राच्यां दिशि मधुपर्कं अङ्गुष्ठानामिकोच्छलनेन प्रोक्षयन्ति तथैव रुद्रास्त्वेत्यादि मन्त्रेण दक्षिणतः प्रोक्षयन्ति तथैवादित्यास्त्वेत्यादिमन्त्रेण पश्चिमतः तथैव विश्वे त्वा देवा इत्यादिमन्त्रेण उत्तरतः ततोऽङ्गुष्ठानामिकाभ्यां मध्यात् गृहीत्वा भूतेभ्यस्त्वेति मन्त्रेण त्रिवारं ऊर्ध्वं प्रोक्षयन्ति ततस्तत्पात्रं भूमौ निधाय मधुपर्कैकदेशं दक्षिणहस्ते गृहीत्वा विराजो दोह इत्यादिमन्त्रेण भक्षयन्ति ततो लौकिकजलेनाचामन्ति ततः पुनर्मधुपर्कैकदेशं गृहीत्वा विराजो दोहमित्यादिमन्त्रेण भक्षयन्ति पुनर्लौकिकजलेनाचम्य मधुपर्कैकदेशं गृहीत्वा मयि दोह इत्यादिमन्त्रेण भक्षयन्ति ततो लौकिकजलेनाचम्य मधुपर्कशेषं जले प्रक्षिपन्ति अमृतापिधानमसीति मन्त्रेण पूर्वदत्ताचमनीयजलेनाचम्य लौकिकजलेनाचामन्ति । कांस्यपात्राभ्यां संपुटीकृतं उपरि द्विगुणितसूत्रवेष्टितं मधुमिश्रितं दधि मधुपर्कं इत्युच्यते ॥

३७७ ततो यजमानो गौर्गौर्गौः प्रतिगृह्यतामिति प्रत्येकमृत्विग्भ्यो गां ददाति ऋत्विजस्तु प्रतिगृह्णामीत्युक्त्वा माता रुद्राणामित्यृचं पठित्वा ओमुत्सृजतेति मन्त्रेण गोरुत्सर्जनं कुर्वन्ति यजमानस्तु नववस्त्रयुग्मं यज्ञोपवीतयुग्मं चन्दनं पुष्पमालां अलंकारान् फलाद्युपहारं च ऋत्विग्भ्यो ददाति सेयं विष्टरदानप्रभृत्येतावत्पर्यन्ता मधुपर्कपूजेत्युच्यते ॥

३७८ ततो यजमानस्य देवयजनयाञ्चा विहिता तत्रादौ अध्वर्यो देवयजनं मे देहि इति अध्वर्युं याचते ततोऽध्वर्युः आदित्यो देव इत्यादि ददात्वित्यन्तं पठति यजमानः प्रणवपूर्वकं तथेत्याह । ब्रह्मन् देवयजनं मे देहि इति ब्रह्माणं ततो ब्रह्मा चन्द्रमा देव इत्यादि ददात्वित्यन्तं पठति यजमानः पूर्ववत्तथेत्याह । होतर्देवयजनं मे देहीति होतारं ततो होता अग्निर्देव इत्यादि ददात्वित्यन्तं पठति यजमानः पूर्ववत् । उद्गातर्देवयजनं मे देहि इति उद्गातारं तत उद्गाता पर्जन्यो देव इत्यादि पठति यजमानः पूर्ववदाह । सदस्य देवयजनं मे देहि इति सदस्यं ततः सदस्यः आकाशो देव इत्यादि पठति यजमानः पूर्ववदाह । देवा इज्यन्ते यस्मिन्नित्यधिकरणे ल्युटा देवोद्देश्यकयागभूमिः देवयजनशब्देनोच्यते ॥

३७९ तस्य पूर्वोक्तप्रकारेण अध्वर्य्वादीन् प्रति याचनं देवयजनयाञ्चा इत्युच्यते ॥

३८० ततोऽध्वर्य्वादयो गार्हपत्यस्य पश्चादुपविश्य इडेत्यादि मदन्त्वित्यन्तं जपन्ति अध्वर्युस्तु स्फ्यं गृहीत्वा उदग्देशेन गत्वा यजमानपत्नीभ्यां सह वेद्युत्करयोर्मध्येन प्रविश्य तिष्ठन् यजमानान्वारब्धः गार्हपत्यायतनं उद्धन्यमान इत्यृचा स्फ्येन-

उद्धन्ति ततः शं नो देवीरित्यृचा जलेनावोक्षति एवं दक्षिणाग्न्यायतनं आहवनीयायतनं च उद्धननावोक्षणाभ्यां संस्करोति अवोक्षणं नाम अवाचीनेन हस्तेन जलप्रोक्षणम्(१) ॥

३८१ सिकता ऊषरमृत्तिका मूषकबिलमृत्तिका वल्मीकमृत्तिका महाह्रदमृत्तिका अरण्यवराहविहतमृत्तिका पद्मिनीपत्रं शर्कराः षट् हिरण्यशकलानि अश्वत्थः उदुम्बरः पलाशः शमी विकङ्कतः अशनिहतं अरण्यो मुञ्जकुलायः प्रसिद्धाश्वत्थस्य आर्द्राः सपत्राः सप्ररोहाः प्रादेशमात्राः अशुष्काग्रास्तिस्रः समिधः त्रीणि सुवर्णशकलानि त्रीणि रजतशकलानि एते विंशतिपदार्थाः सम्भ्रियन्ते संपाद्यन्ते इति कर्मव्युत्पत्त्या संभारा इत्युच्यन्ते ॥

३८२ एतान् पदार्थान् वेद्यां प्रागग्रान् स्थापयति तन्मध्ये प्रथमतः वैश्वानरस्य रूपमित्यृचा सिकतां स्थापयति ततः यदिदं दिव इत्यृचा ऊषरमृत्तिकां ऊतीः कुर्वाण इत्यृचा मूषकबिलमृत्तिकां ऊर्जं पृथिव्या इत्यृचा वल्मीकमृत्तिकां प्रजापतिसृष्टानामित्यृचा महाह्रदमृत्तिकां यस्य रूपमित्यृचा अरण्यवराहविहतमृत्तिकां यत्पर्यपश्यदित्यृचा पद्मिनीपत्रं याभिरदृंहदित्यृचा षट् हिरण्यशकलानि अश्वो रूपमत्यृचा अश्वत्थं ऊर्जः पृथिव्या इत्यृचा उदुम्बरं गायत्रिया ह्रियमाणस्येत्यृग्भ्यां पलाशं या ते सृष्टस्येत्यृचा शमीं यत्ते सृष्टस्येत्यृचा विकङ्कतं यत्ते तां तस्येत्यृचा अशनिहतं चित्रियादश्वत्थादित्यृचा प्रसिद्धाश्वत्थस्य तिस्रः समिधः या ते अग्न इति यजुषा मुञ्जकुलायं अश्वत्थाद्धव्येति यो अश्वत्थ इति च द्वाभ्यामृग्भ्यां अरण्यो ततीयं त्वा समभरन्नित्यृचा संभृतान् संभारान् पुनः संभरति ततः

(१) प्रोक्षणमत्र सिञ्चनमेव न तु पारिभाषिकम् ।

अरणीमुञ्जकुलायप्रसिद्धाश्वत्थसमिद्भिरण्यशकलव्यतिरिक्तानां संभाराणां त्रेधा विभाज्य स्थापनं क्रियते एतत्सर्वं कर्म संभारसंभरणमित्युच्यते ॥

३८३ ततः गोपितृयज्ञो ऽनुष्ठीयते स चेत्थम् । अध्वर्युः प्राङ्मुखस्यासीनस्य यजमानस्य दक्षिणगोदानप्रदेशे ऊर्ध्वाग्राणि त्रीणि दर्भपिञ्जूलानि निधाय चौलवत्सर्वं करोति ततः केशादिनखान्तानां कृन्तनं करोति प्रवपे देवेनेति यजुषा यानि मङ्गल इति यजुषा यजमानो ऽभिमन्त्रयते पत्न्यास्तु तूष्णीं केशव्यतिरिक्तलोमादिकृन्तनं क्रियते अध्वर्युर्यजमानमुदकुम्भेनाभिषिञ्चन् इमा म आप इत्यृचं वाचयति पत्नीं तूष्णीं स्नातौ पत्नीयजमानौ प्राग्देशं गत्वा ऽहते वाससी परिधायालंकृत्याञ्जनेनाञ्जाते ततो यजमान एकविंशतिदर्भपिञ्जूलैस्त्रेधाविभक्तैः शिरोनाभिगुल्फदेशान् क्रमात् तूष्णीं पावयित्वा पत्न्या सह बहिर्गत्वा नैर्ऋत्यां दिशि चतुष्पथे अध्वर्युणा आनीते उदपात्रे आत्मानमवेक्षते अध्वर्युर्यजमानं सिंहे म इत्यनुवाकं वाचयति पत्नी तूष्णीमवेक्षते अस्मिन्काले ब्रह्मा दक्षिणत उपविशति ततस्तदुदकं नैर्ऋत्यां दिशि निनीय उदपात्रं परास्य अप उपस्पृश्य अनवेक्षमाणौ यथागतं प्रदक्षिणमावृत्य आगत्य हस्तौ पादौ प्रक्षाल्य आचमनं करोति ततो ऽध्वर्युर्यजमानं पवमानः सुवरित्यनुवाकं वाचयन् आत्मानं यजमानं पत्नीं चाद्भिः प्रोक्षति ततो यजमानः प्राचीनावीती गोपितृयज्ञं करिष्ये इति संकल्प्य लौकिकाग्निमाहृत्य दक्षिणाग्नौ प्रणीय ज्वलयित्वा परिस्तीर्य पवित्रे कृत्वा आज्यस्थालीं स्रुवं च सादयित्वा प्रोक्ष्य आज्यं संस्कृत्य दक्षिणाग्नेरुत्तरतः सादयित्वा चतुर उदकुम्भान् औदुम्बरीं

दर्वीं दक्षिणाग्नेर्दक्षिणतः सकृदाच्छिन्नं बर्हिः एरकोपबर्हणे अञ्जनाभ्यञ्जने पात्रान्तरस्थमाज्यं स्फ्यं दशारहितं वस्त्रं प्रक्षालिते उलूखलमुसले कृष्णाजिनं शूर्पं चरुस्थालीं मेक्षणं आज्यस्थालीं प्रोक्षणीं च सादयित्वा उद्धननावोक्षणे दक्षिणाग्नेर्दक्षिणतः करोति एकोनपञ्चाशत्संख्याकान् बैभीतकान् अक्षान् उद्धननस्थाने निधाय तद्दक्षिणतः पिण्डनिर्वापस्थाने स्फ्येन अपहता असुरा इति यजुषा दक्षिणापवर्गां रेखां करोति उदीरतामवर इत्यृचा रेखामद्भिरवोक्षति य आददाना इत्यृचा उल्मुकमादत्ते अग्निः पावक इत्यृचा उल्मुकेन तां रेखामभितपति तत उल्मुकमग्निसमीपे पृथङ्निदधाति उल्मुके आज्यबिन्दुं प्रश्चोतयति सकृदाच्छिन्नं बर्हिरित्यृचा रेखायां दक्षिणाग्रान् दर्भान् स्तृणाति अन्यान् दर्भान् हस्ते गृहीत्वा उत्थाय कृताञ्जलिः प्रह्वो दक्षिणामुखः उदीराणा इहेति मन्त्रेण पितॄनाह्वयति हस्तधृतान् दर्भान् भूमौ निधाय पितॄणां पुरस्ताद्दक्षिणतो वा आसनं शयनमित्यृचा एरकोपबर्हणे निदधाति एकेन उदकुम्भार्धेन तूष्णीं मार्जयन्ति मधुक्षीरपयोमिश्रसक्तूनां पात्रत्रितयं ब्राह्मणेभ्यो दत्त्वा तादृशमेव पात्रत्रितयं एतद्वः पितरः पात्रमिति मन्त्रेण पितृभ्यो ददाति अवशेषितोदकुम्भोदकेन तूष्णीं मार्जयन्ति ततः पूर्वमासादितानामक्षाणां पूर्वतः यजमान उपविशति दक्षिणतः पुत्रो ज्येष्ठस्ततो ऽनुजः पश्चिमतः उत्तरतः कनिष्ठः एवमुपविश्य यदि द्वादशाक्षान् यजमानः ज्येष्ठानुजौ चाकर्षन्ति कृतं कृतमित्युक्त्वा तदा त्रय एते विजयिनः समसंख्याकाकर्षणात् कनिष्ठः पराजितो भवति विषमसंख्याकाकर्षणात् पुत्रद्वित्वे यजमानो द्विरावृत्त्या चतुर्विंशतिसंख्याकानक्षानाकर्षति

एकपुत्रत्वे पत्नी तृतीया यजमानः पूर्ववत् द्विरक्षानाकर्षति पुत्राभावे पत्नीयजमानौ प्रत्येकं द्विवारमाकर्षतः समसंख्याका-कर्षणे जयः विषमसंख्याकाकर्षणे पराजयः एवं त्रिवारमक्षाक-र्षणं कृत्वा पचत ओदनमित्युक्त्वोत्तिष्ठन्ति ततः पितृभ्यस्त्वे-त्यादिना उपाकरोमीत्यन्तेन मन्त्रेण शूर्पे व्रीहीन् सकृन्निर्वपति तथैव प्रोक्षामीत्यन्तेन तेन मन्त्रेण प्रोक्षति ततः कृष्णाजिने उलूखलं निधाय तस्मिन् व्रीहीनोप्य मुसलेनावहत्य संपन्नान् तन्दुलान् प्रक्षाल्य प्रक्षालनोदकं पात्रान्तरे निधाय दक्षिणाग्नौ चरुमाज्यं चाधिश्रित्य उभयं पर्यग्निकृत्वा शृते चरौ प्रभूतमा-ज्यमानीय स्रुवं दर्वीं च संमृज्य स्रुवेण चरुमभिघार्य उद्वास्य चरोरेकं पिण्डमुद्धृत्य पात्रान्तरे निधाय यः प्राचीः संभवन्ती-त्यादिभिर्ऋग्भिः स्रुवेण पञ्चाज्याहुतीर्जुहोति ततः प्रागुद्धृतं पिण्डं त्रेधा विभज्य उपस्तरणाभिघारणवर्जं एकैकं भागं दर्व्या सोमाय पितृमत इत्यादिभिर्मन्त्रैः त्रिभिर्जुहोति ततो दर्वीं तूष्णी-मग्नौ निधाय चरोः पिण्डान् कृत्वा प्रोक्षणीयस्योदकुम्भस्यार्धो-दकेन पूर्वकृतरेखायां तूष्णीं मार्जयित्वा उपस्तरणाभिघारणे कृत्वा एतत्ते पितर्देवदत्तशर्मन् इत्यादिभिस्त्रिभिर्मन्त्रैः रेखायां बर्हिषि पिण्डान् ददाति ततः अत्र पितर इति यजुषा अनु-मन्त्र्य द्वितीयोदकुम्भशेषेण तूष्णीं मार्जयति तृतीयोदकुम्भजलं तन्दुलप्रक्षालनोदकेन सहालोड्य यानि रक्षांसीति मन्त्रेण भूमौ पिण्डसमीपे प्रवाहयेत् तत आञ्जतां पितर इत्यादिमन्त्रेण पिण्डेषु अञ्जनं ददाति अभ्यञ्जतां पितर इत्यादिमन्त्रेण अ-भ्यञ्जनं ददाति ततः पूर्वासादितसूत्रं त्रेधा छित्त्वा एतानि वः पितर इत्यादिमन्त्रेण ददाति ततो नमो वः पितरो रसा-

येत्यादिभिः षड्भिर्मन्त्रैरुपतिष्ठते ततो वीरं मे पितरो दत्तेत्यादिभिर्मन्त्रैः पुत्रं याचते उत्तिष्ठत पितर इत्यादिना मन्त्रेण आवाहितान् पितॄनुत्थापयति यन्तु पितर इत्यादिमन्त्रेण पितॄन् स्वस्थानं गमयन् मनसाताननुगच्छति ततस्तान्प्रत्यनुगतं मनः मनो ऽन्वा हुवामह इति तृचेन पुनराह्वयते ततो यजमानः परिहितं वासः गोपितृयज्ञविदे ब्राह्मणाय ददाति ततो ऽन्यत्परित्यागार्हवासः परिधाय आचम्य दक्षिणां दिशं गत्वा चतुर्थोदकुम्भोदकेन स्नानं करोति या सुगन्धा रसा इति मन्त्रेण तत आचम्य तदपि वासः परित्यज्य क्षौमं वासः परिधायाचम्य यज्ञोपवीती दक्षिणाग्नेः समीपं प्रजापते न त्वदित्यृचा गच्छति अभूद्दूत इत्यृचा पूर्वं पृथक् कृतमुल्मुकमग्नौ प्रक्षिपति ब्राह्मणेभ्यः पिण्डानोदनं च ददाति अध्वर्युस्तस्मिन्नेवाग्नौ जयसंज्ञकैस्त्रयोदशभिर्मन्त्रैराज्यं जुहोति स्वाहाकारान्तानि चित्तं चेत्यादीनि जयनामकानि ॥

३८४ अग्निर्भूतानामधिपतिरित्यादिभिः सप्तदशमन्त्रैस्तथैव जुहोति अष्टादशं यजमानं वाचयति एते ऽष्टादश मन्त्रा अभ्यातानाा इत्युच्यन्ते ॥

३८५ ततः ऋताषाडृतधामेत्यादिभिर्द्वाविंशतिमन्त्रैर्जुहोति एते च मन्त्रा राष्ट्रभृत्संज्ञकाः ॥

३८६ ततो यद्देवा देवहेडनमित्यादिभिर्द्वाविंशतिमन्त्रैर्जुहोति चोलवत्करणादि एतावदन्तं कर्म गोपितृयज्ञ इत्युच्यते ॥

३८७ यस्मिन्काले सूर्यकिरणा भूमिं त्यक्त्वा वृक्षारूढा भवन्ति तस्मिन् काले तिलमाषव्रीहियवप्रियङ्ग्वणुगोधूमश्यामाकनीवारर्जर्तिं-

लगवीधुक्कगार्मुतकुरविन्दवेणुयवान् समुच्चित्य प्रक्षाल्यादाय आज्यस्थालीं स्रुवं स्रुचं दर्भान् शुष्ककाष्ठानि चादाय वाससा प्रच्छन्नाः अध्वर्युब्रह्मपत्नीयजमानाः औपासनाग्निं प्रति व्रजन्ति ततः काष्ठान्यौपासनाग्नौ प्रक्षिप्य आदीप्य दर्भैः परिस्तीर्य गृह्योक्तविधिना पात्रासादनाद्याज्यसंस्कारान्तं कृत्वा अध्वर्युर्यजमानाञ्जलावुपस्तीर्य तिलमाषादि ओप्य अभिघारयति यजमानः अग्नये सर्वौषधायेत्यादिना मन्त्रेण जुहोति अयं सर्वौषधिहोम इत्युच्यते॥

३८८ ततः स्रुवेण चित्तं चेत्यादिभिः स्वाहाकारान्तैर्मन्त्रैः त्वमग्ने अयासीत्येतावत्पर्यन्तैर्हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा प्रजापते न त्वदेतानीत्यृचा हुत्वा अपरं चतुर्गृहीतं गृहीत्वा अन्वग्निरुषसामित्यृचा जुहोति अथ यजमानः शरावे औपासनाग्नेः सर्वानङ्गारान् अर्धाधानपक्षे त्वर्धानङ्गारान् आयुषे वो गृह्णामीति गृह्णाति आयुर्मामाविशत्विति मन्त्रेण अङ्गारानादायोत्तिष्ठति तानध्वर्यवे ददाति अध्वर्युणान्वारब्धे यजमाने सर्वे यथागतं गच्छन्ति अध्वर्युरङ्गारान् गार्हपत्ये निदधाति ततो गार्हपत्यं परिस्तीर्य उत्तरतः दर्भेषु प्रोक्षणीमाज्यस्थालीं चरुस्थालीं मेक्षणं उद्धरणपात्रीं स्रुवं निर्वपणस्थालीं उलूखलमुसले शूर्पं च सादयति गार्हपत्याद्दक्षिणतः ब्रह्मा समन्त्रके निरसनोपवेशने करोति यजमानश्चोपविशति अध्वर्युः प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षति ततः सुलोहितं आनडुहं चर्म प्राचीनग्रीवं उत्तरलोम गार्हपत्यस्य पश्चादास्तीर्य सपवित्रया निर्वपणस्थाल्या तस्मिन् चर्मणि पृष्ठस्थाने ब्रह्मणे जुष्टं निर्वपामीति मन्त्रावृत्त्या चतुष्कृत्वो व्रीहीन्निर्वपति अयं ब्रह्मौदननिर्वाप इत्युच्यते ॥ (शेषमग्रे)

# ॥ माधवीयधातुवृत्तिः ॥

(*Continued from page* 94. VOL. V.)

षिधू शास्त्रे माङ्गल्ये च ॥ शास्त्रं शासनमिति मैत्रेयशाकटायनौ, शिष्टावित्येव चन्द्रः ॥ शास्त्रं शास्त्रविषयं शासनम् । माङ्गल्यं मङ्गलक्रियेति क्षीरस्वामी । एवं तरङ्गिण्यामपि । सेधतीत्यादि पूर्ववत् । विशेषस्तूदित्त्वा-द्वलादावार्धधातुके 'स्वरतिसूतिसूयतिधूञूदितो वे'ति इटो विकल्पनात् । सेद्धा । सेत्स्यति असैत्सीद् इति, लुङि वदव्रजेति वृद्धिः ॥ तथा ऽऽशीर्लिङ्लुङोरात्मनेपदेषु । 'लिङ्सिचावात्मनेपदेषु' । इक्समीपाद्धलः परौ झलादी लिङ्सिचावात्मनेपदेषु कितावित्ति कित्त्वादगुणः, व्यति-षित्सीष्ट । व्यत्यषिद्ध्वम् । व्यत्यषित्सातामित्यादि भवति ॥ क्त्वासनो-श्चेडभावे सिद्ध्वा । सिषित्सति । 'हलन्ताच्चे'ति इक्समीपाद्धलः परस्य झलादेः सनः कित्त्वाच्च गुणः । निष्ठायां 'यस्य विभाषेतीण्निषे'धात्सिद्धमिति भवति ॥ अत्र मैत्रेयसंमताकारौ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' । क्रादय एव लिट्यनिटस्ततोऽन्ये लिटि सेडित्यनेन नियमेन पुरस्तात्प्रतिषेधकाण्ड-स्यारम्भात् तस्य तदाश्रयस्य नियमस्य च बलीयस्त्वमिति यावान्कश्चि-दिडभावः प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा स सर्वो बाध्यत-इत्युदिल्लक्षणं विकल्पं बाधित्वा लिटि क्रादिनियमान्नित्यमिडिति सिषे-धिथेत्याहतुः । तथा ऽचस्तास्वदित्यत्र वृत्तिकारो नित्यग्रहणं किं वि-धोता, विधविता, तासौ विभाषितेटस्थलि नित्यमिडागमो भवतीति । अत्र न्यासे स्वरत्यादिसूत्रेण धूञ इड्विकल्पः, तस्य नित्यग्रहणाद्विभाषि-तेटस्थलि नित्यमिडागमो भवतीति । हरदत्तस्तु नित्यमिडागमो भव-तीति वृत्तिमुपादाय यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्प-निबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यतइत्यस्मिन्पक्ष इति भावः । यदा तु प्रतिषेधाधिकारेण क्रादीनामेव लिटीण् न भवतीति नियमात् प्रतिषेध एव सर्वो निवर्त्त्यते, स्वरत्यादिसूत्रेण विकल्पो भवत्येवेति पक्षस्तदा विदुधोथ, विदुधविथेत्युभयं भवतीति । अस्यायमभिप्रायः ।

अत्र वृत्त्यतिरिक्तानां क्रादीनामेकाच उपदेशेनुदात्तात्' । एकाज् यो धातुरुपदेशे ऽनुदात्तस्तस्मात्परस्य वलादेरार्धधातुकस्येण्नेति प्रकृत्याश्रयः प्रतिषेधः सिद्धः, वृङ्वृञोस्तूगन्तत्वात् 'श्र्युकः किती'ति प्रत्ययाश्रय इति सिद्धे सत्यारभ्यमाणेनानेन नियमेन तुल्यजातीयानां क्रादिव्यतिरिक्तानां येषां प्रकृत्याश्रयः प्रत्ययाश्रयो वा निषेधः प्राप्तस्तेषामेवेट् प्राप्यत इति पुरस्तात्प्रतिषेधकाण्डारम्भस्य प्रयोजनं स्मृत्वा स्मृत इत्यादौ परमपि स्वरत्यादिविकल्पं बाधित्वा 'श्र्युकः किती'ति निषेधप्रवृत्तिरिति च तेनोक्तम् । हरदत्तानुवादी रामदेवमिश्रोपि क्रादिसूत्रे ऽनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृङ्वृञोस्तु प्रत्ययाश्रयस्तदुभयस्याप्ययं नियम इति वृत्तिग्रन्थोप्यत्रैवानुकूलः । अत्र मते सिषेधिथ सिषेद्ध सिषिधिव सिषिध्वेत्यादि भवति । एतदनन्तरं मृ मरणइत्याभरणे पठ्यते, तद्भाष्यविरोधादुपेक्ष्यम् । यद्ययं स्यात्कथं 'व्यत्ययो बहुलमि'त्यत्र स च न मरति, न म्रियतइति प्राप्तइति ब्रूयात् । अयमनुदित्संराध्यर्थ दिवादौ ॥ ४९ ॥

खादृ भक्षणे ॥ खादति । चखाद । चखादिथ । खादिता । खादिष्यति । खादतु । अखादत् । खादेत् । आशिषि खाद्यात् । अखादीत् । कर्मादौ खाद्यतइत्यादि । चिखादिषति । चाखाद्यते । चाखादीति, । चाखात्ति । खादयति मोदकं देवदत्तेन, गतिबुद्धीत्यादिना प्राप्तं प्रयोज्यस्य कर्मत्व'मादिखाद्योः प्रतिषेध' इति निषिध्यते । निगरणचलनेति नित्यं परस्मैपदम् । ऋदित्वादचखाददित्यत्र उपधाह्रस्वो न भवति, खादितो मोदकः, खादितमनेन, इदमेषां खादितं, क्ताधिकरणे चेत्यादिना कर्मभावाधिकरणेषु क्तः ॥ खादकः । 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञि'ति ताच्छीलिको वुञ् । ण्वुलैव सिद्धे वुञ्विधानं ज्ञापकार्थं तच्छीलादिषु वासरूपविधिना तृजादयो न भवन्तीति वृत्तौ ॥ ५० ॥

खद स्थैर्ये हिंसायां च ॥ चकाराद्भक्षणे च । स्थैर्ये ऽकर्मकः । खदति । चखादेत्यादि, खादिवत् । लुङि अखदीत् । अखादीत् ॥ 'अतो

ह्लादेर्लघो' रिति वृद्धिविकल्पः । खादयति । अचीखदत् । स्थैर्यं कर्मबलात् प्रयोज्यं कर्म, खदिरः । अजिरशिशिरशबिरशिथिलस्थिरस्फिरस्थविरखदिरा इति किरजन्तो निपातितः । यवखदा, यवस्य सारः । स्वभावात्स्त्रीविषयोयं, यवखदी । व्रीह्यादिभ्यश्चेति मत्वर्थइनिः ॥ ५१ ॥

बद स्थैर्ये ॥ ओष्ठ्यादिः । बदति । बबादेत्यादि । खदिवत् । किति लिटि थलि च सेटि रूपाभेदे आदेशादित्वानाश्रयणादेत्वाभ्यासलोपयोः बेदतु,र्बेदुः बेदिथेत्यादि । बदरं, बाहुलकादरन्प्रत्ययः । बदरी । 'षिद्गौरादिभ्यश्चे' ति ङीष् । अत्र पाठादेवारन् प्रत्ययः । अत्र मैत्रेयः सानुषङ्गं पठित्वा नलोपे कृते एत्वाभ्यासलोपयोर्बेदतुरित्याह, तदसत् । संयोगान्तत्वेन मन्थ्यादिवल्लिटः कित्त्वाभावात् । बिदि अवयवे इत्यये ॥ ५२ ॥

गद व्यक्तायां वाचि ॥ गदति । जगाद । गदितेत्यादि, खदिवत् ॥ वचनं शब्दप्रकाशनफलत्वात्कर्मस्थमिति न्यासपदमञ्जरीकैयटेषु । प्रणिगदति । 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु चे' ति उपसर्गस्थान्निमित्तात्परस्य नेर्गदादिषु णत्वमिति णत्वम् । अड्व्यवाये ऽपि इदमिष्यतइति प्रण्यगददित्यादावपि भवति । गादयति पुत्रं श्लोकं देवदत्तः ॥ गतिबुद्धीत्यादिना प्रयोज्यस्य कर्मत्वम् । अत्र शब्दकर्मेति कर्मशब्देन साधनमुच्यते न क्रिया । यदि हि स्याद्गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकेति लघ्वसंदिग्धं च ब्रूयात् । एवं न्यासकैयटपदमञ्जर्यादिष्वपि स्थितमिति न शिष्येण धर्मं गादयतीत्यत्र प्रयोज्यस्य कर्मत्वम् । अत्र नित्याकर्मकगत्यर्थाभ्यवहारार्थशब्दकर्मदृशो ऽखादददिक्रन्दिशब्दायह्वेञ इति शाकटायनसूत्रव्याख्यायाममोघायां नित्याकर्मकेभ्यो गत्यर्थेभ्योभ्यवहारार्थेभ्यः शब्दनक्रियेभ्यः शब्दकर्मकेभ्यश्च दृशेश्च यो णिस्तस्य कर्ता कर्म भवति । खाददिक्रन्दिशब्दायह्वेञ इत्येतान् वर्जयित्वेत्युक्तम् । तन्मते क्रन्दित्रयव्यतिरिक्तेषु शब्दार्थेषु प्रयोज्यस्य कर्मत्वेन भाव्यम्, सूत्रे शब्दकर्मकेति कर्मग्रहणात् क्रन्द्यादिपर्युदासाच्च । तेनार्थद्वयस्य लाभः । गद्यम् । 'गदमद-

चरयमश्चानुपसर्ग' इति कर्मणि यत् ॥ उपसृष्टात्तु ण्यत् । प्रगाद्यमिति । निगदः । 'नौ गदनदपठस्वन' इति पक्षे ऽप् । अन्यदा घञि निगादः । अनुगदतीत्यानुगादिकः ॥ 'अनुगादिनष्ठगि'ति स्वार्थे ठक् । अस्मादेव निपातनाण्णिनिः । न स्वयं केवलं प्रयोगार्हः, ठको नित्यत्वादिति न्यासपदमञ्जर्यादिषु । कर्मव्यतिहारे नास्य तदस्ति । प्रतिषेधे हसादीनामुपसंख्यानमिति निषेधात् । हसादयो हसिप्रकारास्ते च शब्दनक्रियाः । स्तनगदी देवशब्दइति चुरादौ ॥ ५३ ॥

रद विलेखने ॥ विलेखनं भेदनम् ॥ रदति । रराद । रेदतुः । रेदिथेत्यादि, पूर्ववत् ॥ रदनः । करणाधिकरणयोश्चेति ल्युट् ॥ ५४ ॥

णद शब्दे ॥ 'णो नः' । धात्वादेरिति शेषः । प्रणदति । प्रणनाद । प्रणेदतुः, प्रणेदिथेत्यादि गदिवत् । 'उपसर्गादसमासे ऽपि णोपदेशस्ये'ति उपसर्गस्थान्निमित्तात्परत्वेन नकारस्य णत्वम् । प्रणिनदतीत्यादौ नेर्गदेति णत्वम् । इदमप्यड्व्यवायेपीति प्रण्यनददित्यादावपि भवति । धातुनकारस्य निशब्देन व्यवधानादुपसर्गादिति णत्वं न भवति ॥ अशब्दकारकत्वे ऽप्यणावकर्मक इति प्रयोज्यस्य कर्मत्वं घटं नादयतीति । नदी । पचादौ नदडिति पाठात् टित्वात् ङीप् । नद्यां भवा नादेयाः ॥ 'नद्यादिभ्यो ढगि'ति शैषिको ढक्, तस्यैयादेशः । पञ्चानां नदीनां समाहारः पञ्चनदम् । 'नदीभिश्चे'ति नदीवचनैः सह संख्याया अव्ययीभावः । अभिधानस्वभावादयं समासः समाहारइत्युक्तम् । अजिति योगविभागादच् समासान्तः । उक्तं च ।

> कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः ।
> गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥

इति । निनदः । नौ गदनदेति पक्षे अप् । तदभावे घञ् । निनादः । इदित्समृध्यर्थो ऽयं, णदभाषार्थश्चुरादौ ॥ ५५ ॥

अर्द गतौ याचने च ॥ याचने द्विकर्मकः । नाथत्यादिवल्लादयो नेयाः । अर्दति । आनर्द । आनर्दतुः । आनर्दिथ । आनर्दिव । 'अत आदे'रित्यभ्यासादेर्दीर्घे 'तस्मान्नुड् द्विहल' इति दीर्घभूतादभ्यासात्परस्य

नुडागमः । अर्दिता । अर्दिष्यति । अर्दतु । आर्दत् । अर्दत् । आशिषि । अर्द्यात् । माभवानर्दीत् । 'नेटी'ति सिचि वृद्धेर्निषेधः । कर्मादौ अर्दित इत्यादि । गत्यर्थत्वे कर्तृस्थक्रियात्वान्न कर्मकर्तास्ति । क्तोऽधिकरणे चेत्यादिना कर्तृकर्मभावाधिकरणेषु क्त उदाहार्यः । तथा गत्यर्थकर्मणीति द्वितीयाचतुर्थ्यौ । कर्मव्यतिहारे न गतिहिंसेति तङ्निषेधः, णौ गतिबुद्धीति प्रयोज्यस्य कर्मत्वं च । अर्दिदिषति । न न्द्रा इति निषेधाद्दरवर्जितस्य द्वितीयस्यैकाचो द्विर्वचनम् । समर्णः न्यर्णः । व्यर्णः । अभ्यर्णः । 'अर्देः संनिविभ्यः' । 'अभेश्चाविदूर्ये'इति समादिपूर्वपदादर्देः परस्य निष्ठाया इण्निषेधे रदाभ्यामिति नकारदकारयोर्नत्वं पूर्वस्य रषाभ्यामिति णत्वे परस्य ष्टुत्वे णकारः । 'अभेश्चाविदूर्ये'इति निषेधदन्यत्र अभ्यर्दितो वृषलः शीतेनेति भवति । आविदूर्यं प्रत्यासत्तिः । अस्मादेव निपातनाद् न नञ्पूर्वादिति निषेधं बाधित्वा भावे ष्यञ् । हिंसार्थोऽयं चुरादौ ॥ ५६ ॥

नर्द गर्द शब्दे ॥ दन्त्यादिः,नृतिनन्दिनर्दीति पर्युदासात् । नर्दति । ननर्देत्यादि । यङ्लुकि पर्देत्यादिवत् । गृहेनर्दी । 'पात्रे समितादयश्चे'ति पत्ते तत्पुरुषः । तत्रैव पाठात्सप्तम्या अलुक् । एवं गर्दतीत्यादि । गर्दभः । शृकारिकलिगर्दिभ्यो ऽभजित्यभच् ॥ ५८ ॥

तर्द हिंसायाम् ॥ सकर्मकः । तर्दतीत्यादि, पूर्ववत् ॥ न गतिहिंसेति तङ्निषेधात् कर्मव्यतिहारेऽपि, परस्मैपदम् । दण्डोपतर्दं गाः कालयति । दण्डेनोपतर्दमिति च, हिंसार्थानामिति णमुल् । तृतीयाप्रभृतीति समासविकल्पः ॥ वासरूपेण क्त्वायां दण्डेनोपतर्द्य ॥ ५९ ॥

कर्द कुत्सिते शब्दे ॥ कुत्सितशब्द इह कौक्षः । यदाह केशवस्वामी कौक्षे कर्दति पर्दते गुदरवइति । कर्दतीत्यादि नर्दतिवत् ॥ कर्दमः । बाहुलकादमच् ॥ ६० ॥

खर्द दन्दशूके ॥ दन्दशूकइति दन्दशूककर्तृका क्रियाभिधीयते । साधनप्रधानप्रयोगित्वस्यापनार्थं दन्दशूकग्रहणमिति संमतातरङ्गिण्यै । दन्दशूको गर्हितो दंशनशील इह तु तस्या क्रिया, दंशइत्यनुक्ति-

स्ताच्छील्यादिप्रतिपत्त्यर्थेति मैत्रेये प्रतिपादितम्। दन्तशूकइति केशवस्वामी दकारस्य स्थाने तकारमाह, तन्महान्तो न सहन्ते । यदाह दन्दशूको बिलेशय इति, अत्र सुभूतिचन्द्राः, दंशेर्यङन्तादूकप्रत्यये ऽल्लोपयलोपयोरिति । तथा इषुमति रघुसिंहे दन्दशूकान् जिघांसाविति भट्टिश्लोकव्याख्याने दन्दशूकान् हिंस्रान् दंशेर्लुपसदेत्याद्युक्तं शंकराचार्येण । हिंस्रमात्रे प्रयुञ्जानो भट्टिकारो दन्दशूकशब्दस्य नैघण्टुकप्रसिद्धिं नाद्रियते । खर्दतीत्यादि पूर्ववत् ॥ ६१ ॥

अति अदि बन्धने ॥ अत्र धनपालः, तान्तं द्रविडाः पठन्ति आर्यास्तु दान्तमिति । उभयमिति मैत्रेयस्वामिकाश्यपसंमताकारादयः । अन्तति । आनन्त । आनन्ततुः । आनन्तिथ । आनन्तिव । अन्तितेत्यादि । इदित्वान्नुमि द्विहल्त्वा 'त्तस्मान्नुड् द्विहल' इति लिटि नुडागमः ॥ अन्तितिषति । अनुस्वारपरसवर्णयोः पूर्वत्रासिद्धत्वाद् न न्द्रा इति नकारवर्जं द्विरुच्यते । न च 'पूर्वत्रासिद्धीयमद्विर्वचन'इत्यसिद्धत्वनिषेधः । अस्य द्विर्वचननिषेधरूपत्वात् । उक्तं चैव हयवरड् इत्यत्र कैयटे । अन्तयति । आन्तितत् । एवमन्दतीत्यादि । अन्तः । घञ्,क्त्वा । उणादिवृत्तौ तु हसिमृग्रीण्वामिदमिशवृधूर्विभ्यस्तन्निति अमेस्तनि व्युत्पाद्यते । अन्ते भवमन्त्यम् । 'दिगादिभ्यो यदि'ति सप्तम्यन्ताद्भवार्थे यत् । अन्तिमम् । अन्ताच्चेति वक्तव्यमिति शैषिको डिमच् । अन्तिकः । 'अत इनिठनौ' । अदन्तादस्त्युपाधिकादस्येति षष्ठ्यर्थे इनिठनाविति ठन् । 'ठस्येकः' । आवसथस्यान्तिके । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्या'मित्यन्तिकयुक्तात् षष्ठीपञ्चम्यौ । अन्तिकशब्दात्तु 'दूरान्तिकार्थेभ्यो द्वितीया चे'त्यत्र पञ्चम्यनुवर्त्तते, चकारेण तृतीया समुच्चीयत इति द्वितीयापञ्चमीतृतीयाः स्युः । तथा 'सप्तम्यधिकरणे चे'ति चशब्दाद् दूरान्तिकार्थसमुच्चयार्थात्सप्तमी चेति चतस्रो विभक्तयः । अन्तिकम् । अन्तिकात् । अन्तिकेन । अन्तिके, इति । एताश्चतस्रो विभक्तयोऽसत्त्ववचनेभ्यः प्रातिपदिकार्थइति वृत्तौ । भाष्ये

दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।
दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद्गुरोः ॥

इति ॥ सत्त्ववचनादधिकरणे पञ्चमी दृश्यते । कैयटे चाव- सथस्य दूरइत्यर्थ इति । अन्तिकादागतः 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' स्तोकाद्यर्थाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन वा समस्यन्तइति तत्पुरुषपत्ते विभक्तेस्तु 'पञ्चम्याः स्तोकादिभ्य' इत्यलुक् ॥ एकपद्यमेक- स्वर्यञ्च विशेषः । नेदिष्ठः । नेदीयान् । 'अन्तिकबाढयोर्नेदसाधा' विति इष्ठन्नीयसुनोर्यथासङ्ख्यंनेदसाधावादेशौ ॥ अस्मादेव वचनादजादौ गुण- वचनादेवेति बाध्यते । अन्दूर्भाषायां शृङ्खले च । अन्दूदृम्भू इत्यूकार- प्रत्यये निपातितः । अन्दुको गजनिगलः । संज्ञायां कनि 'केण' इति ह्रस्वः ॥ ६३ ॥

इदि परमैश्वर्ये ॥ इन्दति । इन्दाञ्चकार । इन्दितेत्यादि । लिटि इजादेश्चेत्याम् । ऋज्रेन्द्रेति रनन्तो निपातितः । इन्द्राणी । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुगि'ति पुं- योगादाख्यायां ङीषानुकौ । पुंयोगादाख्या पुंसो योगात्तच्छब्देन स्त्रियाम- भिधानम् । इन्द्रमात्मन इच्छति 'सुप आत्मनः क्यजि'ति इषिकर्मणः सुबन्तादात्मेच्छायां क्यचि अकारस्य 'अस्य च्वौ' 'क्यचि चे'तीकारे इन्द्री यति । अस्मात्सन्यतो लोपे नन्द्रा इत्यत्राजादेरिति वर्त्तते स च कर्म- धारयः पचम्यन्त इत्यादेरचः परेषां नदराणां द्विर्वचननिषेध इति व्यवहितत्वादकारस्य द्विर्वचने इन्दिद्रीयिषतीति भवति । अग्नीन्द्रौ देवते अस्य आग्नेन्द्रं हविः । 'देवताद्वन्द्वेचे'ति पूर्वपदस्यानङ् 'सास्य देवता' । प्रथमान्ताद्देवतोपाधिकादस्त्यर्थे ऽणित्यणि 'देवताद्वन्द्वेचे'ति प्राप्ताया उत्तरपदवृद्धे'र्नेन्द्रस्य परस्ये'ति निषेधः । इन्दिरा । बाहुलकात् किरच् ॥६४॥

बिदि अवयवे ॥ अवयवइति अवयवक्रियोच्यते । बशादिः । बिन्दति । बिबिन्द । बिन्दितेत्यादि । बिन्दुः । बाहुलकादुप्रत्ययः । अत्र मैत्रेयः । बिन्दुरिच्छुरिति सूत्रं बशादिं पठन् बिन्दुशब्दं व्युदपाद- यत् ॥ वृत्तौ तु वेत्तेरेव तत्र पाठः ॥ अत्र सम्मतायां भिदि अवयवे । भिन्दति । यद्यभिधानमस्ति भिन्दुरिति दृश्यतइति ॥ ६५ ॥

गडि वदनैकदेशे ॥ इह वदनैकदेशारम्भलक्षणा क्रिया वदनैकशदेशशब्देनोच्यते । गण्डति । गण्डः । अत्र । अत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । सम्मतायां बिदिभिदी एव प्रकृत्यैवमुक्तम् ॥ अविगीतमन्ये सर्वेषां तिङमुदाहरन्ति ॥ ६६ ॥

णिदि कुत्सायाम् । निदन्ति । निनिन्द । निनिन्दिथ । निनिन्दिव । निन्दितेत्यादि । कर्मादौ निन्द्यतइत्यादि । प्रणिन्दति । उपसर्गादसमासेपीति णत्वम् । अत्र मैत्रेयाभरणसम्मताकाराः 'वा निंसनिक्षनिन्दा'मिति णत्वविकल्पमिच्छन्ति, तदयुक्तम् । यतोत्र कृत्यच इत्यतः कृतीति वर्त्तते तत्र निन्दादिर्भिर्विशेष्यमाणमर्थात्परसप्तम्यन्तमिति उपसर्गस्थान्निमित्तात्परस्य निंसादिनकारस्य कृति परे वा णत्वमिति सूत्रार्थः । तथा च शाकटायनः । निंसनिक्षनिन्दः कृति वेति । एवं हि प्रकरणमबाधितं भवति णोपदेशश्च सार्थकः । वृत्तौ च प्रणिन्दनम् । प्रनिन्दनमिति कृदन्तमेवोदाहारि । निन्दकः । निन्दहिंसेति वुन् । णिदृ कुत्सासन्निकर्षयोरिति दिवादौ ६७ ॥

टुनदि समृद्धौ । 'आदिर्ञिटुडव' इति त्रय एते धात्वादयः समुदाया इतः । प्रयोजनं नन्दथुरित्यत्र ट्वितो थुजिति भावादावथुच् । नन्दति । ननन्द । नन्दितेत्यादि ॥ भावे नन्द्यतइत्यादि ॥ निनन्दिषति । नानन्द्यते । ननन्दीति । नानन्ति । नन्दयति । अननन्दत् । नन्दयतीति नन्दनः ॥ नन्दिग्रहीति ल्युः । अयं तवर्गीयोपदेशः नृतिनन्दीति णोपदेशलक्षणपर्युदासात् ॥ न नन्दतीति ननान्दा ॥ ननान्दरौ । नञि च नन्देरिति ऋन्प्रत्ययो वृद्धिश्च, 'न षट्स्वस्रादिभ्य' इति ऋन्नेभ्य इति ङीपो निषेधः । 'ष्णान्ता षडि'ति षकारनकारान्ता सङ्ख्या षडित्युच्यते स्वस्रादिपाठादेव नञो नलोपाभावः । ननान्दुरपत्यं नानान्द्रः । 'अनृष्यानन्तर्ये विदादिभ्योऽञि'त्यञ् । अनृषीत्यविभक्तिकं भिन्नं पदं, तेन बिदादिभ्यो गोत्रापत्येऽञ् अनृषिभ्यस्त्वनन्तरापत्ये इति सूत्रार्थः ॥ ६८ ॥

( शेषमये )

॥ श्रीः ॥

# कैवल्यरत्नम् ।

( *Continued from page* 122. Vol. V. )

पालकश्च भवेन्नित्यं सत्त्वेनैव गुणेन तु ।
रजसा केवलेनैव सर्वस्रष्टा भवेद्द्विज ॥
स्रष्टा ब्रह्मा हरिः प्रोक्तो पालकः सत्यवादिभिः ।
संहर्त्ता तु महेशानः शिवः साधारणः परः ॥
रजः सर्वत्र चोत्पत्तौ सत्त्वं सर्वत्र पालने ।
तमः सर्व्वत्र संहारे हेतुः स्यान्न हि संशयः ॥
यस्य यत्कारणं प्रोक्तं तस्य साक्षान्महेश्वरः ।
अधिष्ठानतया स्थित्वा सदैवोपकरोति हि ॥
यस्य यत्कारणं प्रोक्तं तस्य सा या जडात्मिका ।
परिणामितया विप्र सदैवोपकरोति हि ॥
पुण्यपापे च कालश्च वासना च मुनीश्वर ।
सृष्टिस्थित्यन्तकार्येषु सर्वेषूपकरोति हि ॥

एवं द्वितीयप्रभृतिभिः सप्तमपर्यन्तैरध्यायैः सृष्टिक्रमं महेश्वरमाहात्म्यं चोक्त्वा ऽह ॥

श्रीपराशर उवाच ।

अथातः संप्रवक्ष्यामि प्रधानस्य च ते ऽनघ ।
सर्ववेदरहस्यार्थं संसारोच्छेदकारणम् ॥
ज्ञानं कर्म च वेदान्तैर्वेदैश्च प्रतिपाद्यते ।
तात्पर्येण तयोर्ज्ञानं प्रधानं न हि संशयः ॥

तत्र ज्ञानं द्विधा विप्र वेदितव्यं विचक्षणैः ।
एकं साक्षात्परं तत्त्वं अन्यमन्यद्धि कारणात् ॥
विज्ञानं परतत्त्वाख्यं वेदान्तैः प्रतिपाद्यते ।
कारणोत्पन्नविज्ञानं तदर्थं प्रतिपाद्यते ॥
कारणोत्पन्नविज्ञानं द्विधा लोके व्यवस्थितम् ।
तत्त्वावेदकमेकं तु ज्ञानमन्यन्मृषार्थगम् ॥
तत्त्वावेदकविज्ञानं ब्रह्मज्ञानसमाह्वयम् ।
वेदावसानवाक्येन केवलेनैव जायते ॥
येन संपादिता शान्तिर्महती नैव पण्डित ।
न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः ॥
येन संपादिता शान्तिर्महती पण्डितोत्तम ।
तस्यैव ब्रह्मविज्ञानं जायते न हि संशयः ॥
येन संपादिता साक्षात्प्रव्रज्या परमा ऽनघ ।
तस्यैव ब्रह्मविज्ञानं जायते न हि संशयः ॥
येन संपादितं साक्षात्तितिक्षुत्वमतिस्थिरम् ।
तस्यैव ब्रह्मविज्ञानं जायते न हि संशयः ॥
सर्ववेदान्तसंसिद्धसाधनैः सहितस्य तु ।
जायते शुद्धविज्ञानं तेन मुक्तिर्न कर्म्मणा ॥
मृषार्थविषयं ज्ञानमतत्त्वावेदकाभिधम् ।
व्यवहारदशायां तु न मिथ्याज्ञानमुच्यते ॥
सत्यत्वेन महादेव मायया यः प्रकल्पितः ।
तदर्थविषयं ज्ञानं सम्यग् ज्ञानमितीर्यते ॥
यत्तु कल्पितसत्यार्थविषयं ज्ञानमास्तिक ।

तत्तु संसारभोगाय शिवेनैव विनिर्मितम् ॥
नित्यकर्म्माणि सर्व्वाणि पारंपर्यक्रमेण तु ।
मुक्तिहेतुपरिज्ञाने पर्यवस्यन्ति सुव्रत ॥
वर्णाश्रमवयोस्थाविशेषाध्यासवान्नरः ।
अधिकारी भवेन्नित्यं सर्वशास्त्रेषु सत्तमः ॥
वर्णाश्रमवयोवस्थाविशेषरहितात्मवित् ।
वर्त्तमानश्रुतेर्मूर्ध्नि न भवेद्वेदकिङ्करः ॥
अतः परमविज्ञानं साधयेदप्रमादतः ।
ज्ञानार्थं नित्यकर्माणि प्रकुर्याद् ब्राह्मणोत्तम ॥
वेदादन्यच विज्ञानं नास्ति नास्ति क्रिया शुभा ।
अतः परमकल्याणं वेदमेकं समाश्रयेत् ॥
वेदमूलानि शास्त्राणि मन्वादीनि महान्ति च ।
पुराणादीनि सर्व्वाणि सादरं नित्यमाश्रयेत् ॥
वेदमूलतया तानि प्रवृत्तान्यपि सत्तम ।
ब्रुवन्ति वेदबाह्यार्थं कदा चिच्च क चित्क चित् ॥
भाति प्रत्यक्षवेदेन तद्विरुद्धतयाशु वः ।
वैदिकैस्तत्परित्याज्यं नैव ग्राह्यं कदा च न ॥
अक्षपादप्रणीते च काणादे सांख्ययोगयोः ।
त्याज्यः श्रुतिविरुद्धांशः श्रुत्येकशरणैर्नृभिः ॥
पाणिनीयं महाशास्त्रं शब्दसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किं च न ॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन ।
श्रुत्या वेदार्थविज्ञाने शुक्क पारं गतौ हि तौ ॥

बौद्धमार्हादिकं शास्त्रं लोकायतिकसंज्ञिकम् ।
पाषण्डमपरं शास्त्रं वैदिकस्तु परित्यजेत् ॥

॥ इति अष्टमो ऽध्यायः ॥

॥ नवमे ऽध्याये ॥

नित्यानुष्ठानतः क्षीणमहापापमलस्य तु ।
चित्तशुद्धिर्भवेच्छुद्ध्या दोषदृष्टिस्तु संसृतौ ॥
संसारदोषदृष्ट्यैव विरक्तिर्जायते द्विज ।
विरक्तस्यैव संसारात्संन्यासः स्यान्न संशयः ॥
विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥
शक्तो बहूदके तीव्रतरायां हंससंज्ञिके ।
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने ॥
संन्यसेन्नित्यकर्म्माणि मुमुक्षुः परहंसकः ।
अन्ये काम्यानि कर्माणि न नित्यं कर्म्म सत्तम ॥
मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद् ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥
ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।
शान्तिदान्त्यादिभिः सर्व्वैः साधनैः सहितो भवेत् ॥
शान्तिर्बाह्येन्द्रियाणां तु चरतां विषयेषु च ।
व्यावृत्तिर्मनसो दान्तिस्तितिक्षुत्वं सहिष्णुता ॥
समाहितत्वमेकाग्र्यं संन्यासो नाम कर्म्मणाम् ।
त्यागः संकल्पना साक्षाच्छास्त्रोक्तेनैव वर्त्मना ॥
संन्यासः कर्म्मसंत्यागद्वारेण ब्रह्मवेदने ।
अविद्यानाशके शुद्धे चित्तेऽन्द्रोपकरोति हि ॥

बहिः प्रवृत्तिव्यावृत्तिद्वारेण ब्रह्मवेदने ।
शान्तिर्दान्तिस्तथैकाग्र्यं विप्रेन्द्रोपकरोति हि ॥
एवमङ्गानि सर्वाणि दृष्टद्वारेण वेदने ।
उपकुर्वन्ति नादृष्टद्वारेणैव तु केवलम् ॥
तथाप्यङ्गानि विद्याया जन्मनः प्रतिबन्धकम् ।
पापसंघातमप्यर्थाद् घ्नन्ति सत्यमुदीरितम् ॥
अतः शान्तिं तथा दान्तिं सन्यासं च तितिक्षुताम् ।
ऐकाग्र्यं गुरुभक्तिं च शिवभक्तिं तथैव च ॥
अन्यच्चाङ्गतया वेदे श्रुतं च ज्ञानसिद्धये ।
साधयेत्सर्वयत्नेन मुमुक्षुः परहंसकः ॥

एवं नवमे ऽध्याये ऽपेक्षितं वचनजातमुद्धृतमितः परं दशमैकादशद्वादशत्रयोदशाध्यायानतीत्य लिख्यते ।

श्रीपराशर उवाच ।

भूयो ऽपि सर्व्वपापानां प्रायश्चित्तं समासतः ।
प्रसिद्धानां च गुप्तानां प्रवक्ष्यामि तवानघ ॥
पापसंघातकान्तारं समूलं दग्धुमिच्छता ।
ज्ञानदावानलः शीघ्रं संपाद्यः सर्व्वयत्नतः ॥
ज्ञानानले तु संजाते सुदीप्ते पापकाननम् ।
तथाद्दग्धं भवेदेव प्रतिबन्धविवर्जिते ॥
मणिमन्त्रौषधैर्वह्निः सुदीप्तो ऽपि यथेन्धनम् ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तथैव तु ॥
ज्ञानाग्निपरिसंज्वालः सुदीप्तः सुदृढो ऽपि च ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तु कल्मषम् ॥
भावना विपरीता या या चासंभावना शुक ।

कुरुते प्रतिबन्धं सा खलु ज्ञानस्य नापरम् ॥
वाक्यानुग्राहकन्यायपरिशीलनलक्षणात् ।
मननात्तच्च चैकाग्र्यान्निदिध्यानसंज्ञितात् ॥
भावने द्वे निवर्तेते निवृत्त्यैव तया ऽनघ ।
ज्ञानस्य प्रतिबन्धश्च स्वयमेव विनश्यति ॥
निवृत्तप्रतिबन्धश्च यथा दहति पावकः ।
तथा स कारणं पापं प्रबोधाग्निर्दहत्यसौ ॥
आम्नायान्तमहावाक्यशक्तितात्पर्यनिर्णयः ।
उपक्रमादिभिर्लिङ्गैः षड्भिः साध्यो द्विजोत्तम ॥
प्राधान्यं मननादस्ति निदिध्यासनतो ऽपि च ।
उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुध ॥
तटस्थमन्यव्यावृत्त्या मननं चिन्तनं तथा ।
इतिकर्तव्यकोटिस्था श्रुतिदान्त्यादयस्तथा ॥
तटस्था एव रुद्रस्य प्रसादः पण्डितोत्तम ।
अन्तरङ्गमतीव स्यात्तदर्थान्यखिलानि वै ॥
प्रसादो नाम रुद्रस्य भवानीसहितस्य तु ।
वाक्यलक्षणसामग्रीप्रसूतस्य महामुने ॥
वृत्तिज्ञानस्य शुद्धस्य चिदभिव्यक्तियोग्यता ।
योग्यतालक्षणे साक्षात्प्रसादे शाम्भवे शुभे ॥
तीव्रे तीव्रतरे मन्दे संजाते सति देहिनाम् ।
वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ॥
बुभुत्सायास्तथाज्ञो ऽस्मीत्याभाता ज्ञानवस्तुनि ।
असत्यालम्बनत्वेन सत्यः सर्वजडस्य तु ॥

साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ।
आनन्दरूपः सार्वार्थसाधकत्वेन हेतुना ॥
सर्वसंबन्धवत्त्वेन संपूर्णः शिवसंज्ञितः ।
स्वानुभूतिप्रसिद्धस्तु वृत्तौ तस्यां घृणानिधिः ॥
बुभुत्सोः स्वात्मना साक्षादभिव्यक्तो भवेत्स्वयम् ।

किंचित्त्यक्त्वा ।

अतः सर्वाङ्गनिष्ठस्य प्रत्यग्ब्रह्मैकगोचरा ।
या वृत्तिर्मानसी शुद्धा जायते वेदवाक्यतः ॥
तस्या या चिदभिव्यक्तिः स्वतः सिद्धा च शाङ्करी ।
तदेव ब्रह्म विज्ञानं तदेवाज्ञाननाशकम् ॥
ब्रह्मज्ञाने तु संजाते ब्रह्माज्ञानं निवर्त्तते ।
घटज्ञाने तु संजाते घटाज्ञानं यथा तथा ॥
अज्ञानस्यैव कार्याणि कारकाण्यखिलानि च ।
कर्त्रादिकारकग्रामप्रसूतं खलु कर्म तत् ॥
देहेन्द्रियादिसंघाताभिमानोत्थाहि कर्तृता ।
भोक्तृता वाक्रियस्यास्य ब्रह्मभूतात्मनः सदा ॥
कर्तृत्वं चैव भोक्तृत्वं यदि स्वाभाविकं भवेत् ।
आत्मनो न निवर्त्तेत केन चित्साधनेन च ॥
शरीराद्यभिमानेन जातो ऽहमिति मन्यते ।
यथा कृशो ऽहं कृष्णो ऽहमिति भ्रान्त्या हि मन्यते ॥
ब्राह्मणो ऽहं मनुष्यो ऽहं ब्रह्मचारी गृही वनी ।
भिक्षुको ऽहमिति भ्रान्त्या निर्विशेषो ऽवगम्यते ॥
एको ऽपि सर्व्वदेहेषु भ्रमाद्भिन्नो ऽवभासते ।
घटाकाशमहाकाशविभागेन यथा नभः ॥

अक्रियोऽपि स्वतस्तस्माद् भ्रान्त्या सर्व्वविकारवान् ।
जलस्य चलनादेव यथा चलति भास्करः ॥
अतीव धवलो रक्तो विभाति स्फटिको यथा ।
रक्तोपाधिवशादात्मा संसारीवान्यसंगमात् ॥
आत्मानात्मविवेकाख्यप्रदीप्तादित्यसंनिधौ ।
कथं वर्णाभिमानाख्यं तमस्तिष्ठति सत्तम ॥
वर्णाश्रमवयोवस्थाविशेषो यस्य भासते ।
तस्यैव हि निषेधश्च विधयः सकला अपि ॥
सर्व्वोपाधिविनिर्मुक्तं चैतन्यं सर्वसाक्षिणम् ।
स्वात्मना पश्यतः कर्म्म कथं ब्रूहि शुभाशुभम् ॥
सर्वसाक्षिणमात्मानं सर्वसंबन्धवर्जितम् ।
साक्षाद् ब्रह्मतया पश्यन्कथं बध्येत कर्म्मणा ॥
तस्माद् ब्रह्मात्मविज्ञानं ग्रसते ऽज्ञानमात्मनः ।
अज्ञानजनितं कर्म्म तत्फलं च न संशयः ॥
समूलं कर्म यज्ज्ञानं ग्रसते स्वयमेव तु ।
तदेव सर्वपापानां प्रायश्चित्तमनुत्तमम् ॥
प्रतिबन्धविनिर्मुक्तं परमं ब्रह्मवेदनम् ।
विना भयंकरं पापं केन नाशयति द्विज ॥
अतः परमविज्ञानमज्ञानं ग्रसते न तु ।
मायात्मनाऽखिलं दृश्यं ग्रसते ज्ञानसंभवम् ॥
अज्ञानमपि तत्कार्यं ग्रस्तमप्यात्मवेदना ।
प्रारब्धफलकर्मान्तं भाति चाभासरूपतः ॥
यदा भासतया भाति जगज्जाद्यपि स्वतः ।
जीवन्मुक्तस्तदा विद्वान्स भूयो ऽभिजायते ॥

जीवन्मुक्तः सदा भातमभातं चाखिलं जगत् ।
पश्यन्नपि पृथक्तस्मात् पश्यति स्वात्मनैव तत् ॥
भातं भातं तथा भातमभातमिति भाति यत् ।
प्रकाशाव्यभिचारित्वाद्भानवद्भानमेव तत् ॥
प्रकाशाव्यभिचारेण प्रकाशं पश्यतोऽखिलम् ।
किं प्रकाशातिरेकेण विभाति न विभाति वा ॥
तस्मात्संपूर्णविज्ञानं सर्वं कर्म्म निवर्त्तकम् ।
कारणज्ञाननाशेन न कर्म्म प्रतिकूलतः ॥
अज्ञाने सति कर्तृत्वं तस्य कर्म्म शुभाशुभम् ।
तथा सति कथं कर्म बाधते ऽज्ञानमात्मनः ॥
मूलभूते स्थिते ज्ञाने ततो द्वैतं विजायते ।
शोभनाशोभनाभ्यासस्तत्र पुंसः प्रजायते ॥
रागद्वेषौ च जायेते शोभनाशोभनभ्रमात् ।
प्रवर्त्तते पुनर्देही धर्म्माधर्म्मौ प्रवृत्तितः ॥
धर्माधर्मोपभोगाय शरीरी जायते ऽवशः ।
एवं पुनः पुनर्ब्रह्मंश्चक्रवद् भ्राम्यते नरः ॥
सम्यग् ज्ञाने समुत्पन्ने तेनाज्ञानं निवर्त्तते ।
तन्निवृत्तौ च तन्मूलं समस्तं प्रविनश्यति ॥
अतः संसारनाशाय ज्ञानमेकं समाश्रयेत् ।
अज्ञानस्यानुकूलं तु कर्म्म सर्वं परित्यजेत् ॥
संपूर्णज्ञानलाभाय यतन्ते भुवि ये जनाः ।
तेषां पापानि नश्यन्ति महान्ति सुबहूनि च ॥
ज्ञानादूर्द्धं न कर्म्मास्ति शुभं वा शुभमेव च ।
स्वस्वरूपातिरेकेण यद्यस्ति पशुरेव सः ॥

वस्तुगत्यात्मनः किं चित्पृथङ्नास्त्येव योगिनः ।
तथाप्यस्तीव भातीव व्यवहारः प्रवर्तते ॥
यदा स्वफलदानाय प्रारब्धं कर्म सत्तम ।
क्षुभितं हि तदा भाति स्वात्मनो ऽन्यतया खिलम् ॥
यदा न क्षुभितं कर्म फलदानाय सत्तम ।
तदा स्वात्मातिरेकेण न किं चिदपि भासते ॥
स्वात्मनो ऽन्यतया सर्वं पश्यन्नपि परात्मवित् ।
निर्भयः स्वात्मना सर्वं पश्यति स्वानुभूतितः ॥
स्वात्मनः परमव्याप्तिं पश्यति स्वानुभूतितः ।
यथा भातेन रूपेण शिवः सर्वं प्रकाशते ॥
यथा भातेन रूपेण शिवो भाति यदाखिलम् ।
तथा भातेन रूपेण स्वयं तिष्ठति केवलम् ॥
स्वयं स्वानुभवेनैव यदा तिष्ठति केवलम् ।
तदा तिष्ठति निर्वाणं यदा तस्य महात्मनः ॥
महाव्यापकनिर्वाणस्वरूपं स्वात्मवस्तुनि ।
स्वानुभूत्यैव विश्रान्तं स्वयं तु परदेवता ॥
विश्रान्तिश्च महाक्षोभः प्रकाशाव्यभिचारतः ।
प्रकाशरूपमेवेति यदा पश्यति तत्त्ववित् ॥
सर्वं मायामयं साक्षादात्मा सर्वावभासकः ।
इत्यजानन्विजानाति यः स ब्रह्मविदेव वै ॥
दृश्यरूपमिदं सर्वं दृग्रूपं यः प्रपश्यति ।
अकर्तृस्वात्मरूपेण स तु ब्रह्मविदुत्तमः ॥
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम् ॥

एवंरूपं तु विज्ञानं यस्य मर्त्यस्य सिध्यति ।
न तस्य पुण्यपापाभ्यां लेपः कश्चन विद्यते ॥
एकैकस्यैनसः शास्त्रे प्रायश्चित्तं प्रकीर्त्तितम् ।
एकैकं न मुने कर्तुं महतामपि दुःशकम् ॥
इदमद्वैतविज्ञानमेकमेवैनसंचयम् ।
परोक्षमपरोक्षं वा साक्षादुन्मूलनक्षमम् ॥
नास्ति ज्ञानसमं किं चित्प्रायश्चित्तं श्रुतौ स्मृतौ ।
नाधिकं च ततः साक्षाज्ज्ञानमेकं समाश्रयेत् ॥
नास्ति नास्ति समं किं चिद्विज्ञानश्रद्धयापि च ।
किं पुनर्ब्रह्मविज्ञानसमं ब्रूहि मुनीश्वर ॥
अतश्च संक्षेपमिमं वदामि ते समस्तपापस्य सहेतुकस्य ।
विशुद्धविज्ञानमिदं निवर्त्तकं ततश्च तत्केवलमेकमाश्रयेत् ॥
विशुद्धविज्ञानमिदं समाश्रितं श्रुतिप्रसादेन च पुण्यकर्म्मणा ।
गुरुप्रसादेन च दुःखसागरं शिवप्रसादेन तरत्यसंशयम् ॥
शोकमोहसुखदुःखकारणं वेदजन्यविमलात्मवेदनम् ।
अन्तरेण मनुजः कथं प्रसत्याशु केन वद विप्र मेऽनघ ॥
सर्वमेतदखिलेश्वरः शिवः केशवादिसुरनायका अपि ।
नैव तद्वदहमप्यहो परं ब्रह्मतत्त्वविषया परामतिः ॥
शंकरो हि शुक भासते सदा बन्धमुक्तिगुरुशिष्यरूपतः ।
दृश्यरूपजगदात्मना तथा सत्यमेव कथितं मया तव ॥
ब्रह्मतत्त्वविषया मतिः परा कर्म्मवृन्दवडवा न संशयः ।
वेदचक्षुरत एव मानतः सद्य एव मतिमाश्रयेदिमाम् ॥
न हि वक्तव्यमितः परं मम श्रुतिसारः कथितस्तु ते मया ।
शिवपादस्मरणेन केवलं परविद्याऽनघ ते भविष्यति ॥

॥ इति चतुर्दशो ऽध्यायः ॥ (शेषमग्रे)

# सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 142. Vol. V.)

मू० ॥ आस्तामत्र वचःप्रवृत्तिविरहः प्रत्यक्त्वहेतोर्दृशि
व्यापाराय मनोऽपि न प्रभवति भ्राम्यत्पराग्भूमिषु ॥
एवं चेदखिलप्रमाणपदवीः षोढा विभिन्ना भवा-
नुल्लङ्घ्य व्यवतिष्ठते त्वयि गिरः स्यान्मुख्यवृत्तिः कथम् ॥ २४० ॥

टी० ॥ एवं कस्यापि प्रवृत्तिनिमित्तस्य निष्कले आत्मन्यसंभवात् नैकस्यापि शब्दस्य तत्राभिधा वृत्तिः संभवतीत्युक्तम् । इदानीं तत्र संगतिग्रहासंभवादपि नाभिधा संभवतीत्याह । आस्तामिति । तिष्ठत्वित्यर्थः । अत्र निष्कलात्मनि प्रवृत्तिनिमित्ताभावादत्र वचसो मुख्यप्रवृत्तिविरह आस्तां नैतावन्मात्रमिहेति भावः । किं तर्ह्यन्यत्तदाह । प्रत्यक्त्वहेतोरिति । द्रष्टृत्वाद्धेतोरित्यर्थः । व्यापाराय ज्ञानाय । मनोऽपीत्यपिशब्देन सकलार्थावभासकतया सूक्ष्मवस्तुनिर्धारकतया वा चक्षुरादिभ्योऽतिशयं तस्य द्योतयति । न प्रभवति न शक्नोति । मनश्चेदात्मनि ज्ञानं जनयेत्तर्हि मनसा करणेन द्रष्टा स एवान्यो वा । अन्यश्चेत्स एवात्मा न विषयः विषयस्यानात्मत्वनियमात् । एकत्र भोक्तृद्वयायोगाच्च । अत एव स एवेत्यप्यनुपपन्नम् । कर्तृकर्मविरोधोऽपि स्यादिति न द्रष्टरि मनोव्यापारः संभवतीत्याशयेनाह । भ्राम्यदिति । पराग्भूमिषु बाह्यविषयेष्वनिच्छयाऽपि पुनःपुनः प्रवर्त्तमानमित्यर्थः । पराग्विषयेष्वित्यनेन ज्ञानविषयस्य परात्कं ज्ञात्रन्यत्त्वरूपं, भ्रमतीत्यनेन पराग्विषयप्रवृत्तिशीलत्वं च मनसो दर्शितम् । तथा च श्रुतिः । तस्मात्पराङ् पश्यति नान्तरात्मन्निति । ततः किं तत्राह । एवं चेदिति । मन आत्मग्रहायोग्यं चेत्प्रत्यक्षादिषट्प्रकारेण भिन्नास्तदधीनव्यापारनिखिलप्रमाणानां पदवीर्मार्गानुल्लङ्घ्य भवान्व्यवतिष्ठते, मनोऽधीनव्यापाराऽर्हाणि हि चक्षुरादिप्रमाणानि तदगोचरे आत्मनि न प्रवर्त्तितुमर्हन्तीति भवांस्तदविषय इत्यर्थः । ततोऽपि किं तत्राह । त्वयि गिर इति । भवा-

न त्वयीत्यादिशब्दा अधिकारिणाहमेवंविध इति प्रतिपत्तव्यमिति सूचनायेत्युक्तम् । एवमग्रेऽपि प्रमाणान्तरेण हि शब्दस्य संगतिग्रहो वाच्यः । आत्मनि च मनोव्यापारागोचरे न प्रमाणान्तरप्रवृत्तिरिति न तदधीनः शब्दार्थसंगतिग्रहः संभवतीतिभावः ॥ २४० ॥

मू० ॥ आत्मानं न तु कर्मतामुपनयञ्छब्दो वदेल्लक्षणा-
मार्गेणाऽपि यतः पराग्विषयवन्नास्येष्यते कर्मता ॥
प्रत्यक्ता हि विरुध्यते यदि भवेदस्यात्मनः कर्मता
यद्यत्कर्म न तस्य तस्य भवति प्रत्यक्स्वभावो यतः ॥२४१॥

टी० ॥ नन्वेवं लक्षणयापि कथमात्मानं वेदान्तः प्रतिपादयेत् । तस्य विषयतयानात्मत्वप्रसंगादिति चेत् । किं फलव्याप्यतारूपविषयत्वेन तस्यानात्मत्वं, किं वा वृत्तिव्याप्यत्वेन । आद्ये तथैव तत्, अत एव नास्माभिरपि तथा वर्ण्यत इत्याशयेनाह । आत्मानमिति । कर्मतां फलव्याप्यतामुपनयन्प्रापयञ्छब्द आत्मानं लक्षणावृत्त्यापि कर्मतामुपनयन्नेव वदेदिति संबन्धः । ननु वेदान्तानामात्मन्यपरोक्षज्ञानजनकत्वादिन्द्रियवत् कथं तत्र न फलाधायकत्वमित्याशङ्क्याह । यत इति । पराग्विषयवत् । घटादेरिवेत्यर्थः । घटादेर्हि जडत्वात् प्रमाणाधीनस्फुरणाश्रयत्वं विना न स्फुटता संभवति । आत्मनस्तु स्वत एव स्फुटत्वात्तदतिरिक्तस्फुरणासंभवाच्च न प्रमाणाधेयस्फुरणाश्रयत्वमिति न फलव्याप्यतेत्यर्थः । न द्वितीयः । तंत्वौपनिषदमिति श्रुत्याऽऽत्मन्यपि तत्सिद्धेः । न चैवमन्यदेव तद्विदितादिति श्रुतिविरोधः । तस्याः फलव्याप्यत्वमात्रनिषेधपरत्वात् । अन्यथाऽनन्यथासिद्धूर्वर्णितश्रुतिविरोधः स्यादित्याशयेनाह । प्रत्यक्तेति । हिरवधारणे । अस्यात्मनो यदि कर्मता भवेत्तर्ह्येव प्रत्यक्ता विरुध्यत इति संबन्धः । एवं च वृत्तिव्याप्यत्वे न दोष इति भावः । तत्रैव नियममाह । यद्यदिति । यतो यद्यदिति सम्बन्धः ॥ २४१ ॥

मू० ॥ वागादेः खलु बाह्यवस्तुविषयो नात्मा यतो नात्मनि
व्यापारं करणस्य कस्य चिदपि प्रेक्षामहे न्यायतः ॥

यत्किं चित्करणं जगत्त्रयगतं तत्प्रत्यगात्मेक्षितं

बाह्ये वस्तुनि वर्ततेऽनुभवनं तत्र प्रमाणं मतम् ॥ २४२ ॥

टी० ॥ एवं प्रत्यक्षादिसर्वप्रमाणागोचरत्वमुक्त्वा तेनैव चक्षुराद्यगोचरत्वमपि सिद्धवत्कृत्य, अग्राह्यमित्यादिश्रुत्यनुरोधेन न्यूनतापरिहाराय च कर्मेन्द्रियाऽगोचरत्वमप्याह । वागादेरिति । आदिपदेन पाण्यादिग्रहणम् । खल्विति सकलवादिप्रसिद्धिमाह । बाह्यवस्त्विति । वक्तव्यादिरूपशब्दादित्यर्थः । आत्मा विषयो नेत्यनुषङ्गः । कुतस्तत्राह । यत इति । यतो न्यायतः आत्मनि कस्य चित्करणस्य वागादिमध्ये कस्यापि करणस्य व्यापारं न प्रेक्षामह इति संबन्धः । किं वागादिः स्वस्य प्रसिद्धप्रवचनादिव्यापारेणात्मानं विषयीकरोति, उत व्यापारान्तरेण, नाद्यस्तस्यात्मन्यसंभवात् । न हि शब्दादिविलक्षणे वागादेर्वचनादानादिगोचरत्वं संभवति । न द्वितीयः तेन विनाऽनुपपत्त्यभावेन तदसिद्धेरित्यर्थः । किं च जगति यावत् किं चित्करणमस्ति तस्य सर्वस्य नात्मा गोचरः सर्वं हि करणं प्रत्यगात्माऽधिष्ठितं बाह्यमेव विषयीकरोतीति सर्वेषामनुभवसिद्धमित्याह । यत्किं चिदिति । ईक्षितम् । अधिष्ठितम् । तत्र तस्मिन्नित्यर्थः ॥ २४२ ॥

मू० ॥ प्रत्यग्रूपमतो न शब्दविषयो बुद्धेरवेद्यं यतो

बुद्धिर्यत्र हि विद्यते* स विषयः शब्दस्य नात्मन्यसौ ॥

तेनात्मानमसौ न गोचरयितुं शब्दः क्षमो मुख्यया

वृत्त्या वेतरयाऽपि तेन नतया तस्यात्मनः कर्मता ॥ २४३ ॥

टी० ॥ मनोव्यापाराऽगोचरत्वेन तदधीनव्यापारैर्निखिलप्रमाणागोचरे आत्मनि संगतिग्रहाऽसंभवात्प्रवृत्तिनिमित्ताभावाच्च न मुख्यवृत्त्या शब्दप्रवृत्तिरित्युपपादितमुपसंहरति । प्रत्यग्रूपमिति । प्रत्यग्रूपं यतो बुद्धेर्मनसो ऽवेद्यं ततः शब्दविषयो नेति संबन्धः । बुद्ध्यविषयोऽपि शब्दविषयः किं न स्यादित्याशङ्क्याह । बुद्धिरिति । शब्दस्य बुद्धिवृत्तिकरणत्वात्तद्गोचर

* वर्त्तते । पा० २ ।

एव वृत्तिरित्यर्थः । ततः किं तत्राह । नात्मनीति । असौ बुद्धिः । ततोऽपि किं तत्राह । तेनेति । येन बुद्धिरात्मनि न प्रवर्त्तते तेनोक्तन्यायेन संगतिग्रहाऽसंभवादसौ शब्द आत्मानं मुख्यया वृत्त्येतरया लक्षणया वा गोचरयितुं न क्षम इति संबन्धः । लक्षणया तद्गोचरत्वनिषेधश्चात्मनः फलव्याप्यत्वाभावाशयेन तमेवाह । तेनेति । येनात्मनः सर्वप्रमाणफलरूपत्वान्न फलव्याप्यता तेनेत्यर्थः ॥ २४३ ॥

मू० ॥ नन्वज्ञेयमिदं भवेद्यदि मम प्रत्यक् स्वरूपं ततः
प्रामाण्यं कथमस्य वेदशिरसस्तत्र प्रतिज्ञायते ॥
यन्मेयं न भवेत्कदाचिदपि तद्वेदान्तवेद्यं भवे-
दित्येतद्वचनं पराहतपदं वक्तुं न युक्तं बुधैः ॥ २४४ ॥

टी० ॥ नन्वात्मनः फलव्याप्यत्वाभावे शास्त्रजन्यज्ञानविषयत्वं नास्तीत्यज्ञेयं ब्रह्म स्यात् । एवं च तंत्वौपनिषदमिति श्रौती शास्त्रयोनित्वादिति सौत्री च तस्य शास्त्रप्रमाणकत्वप्रतिज्ञा न सिद्ध्येदिति उक्तां व्यवस्थां दृढीकर्त्तुं शङ्कते । नन्विति । चोद्ये इदं प्राङ्निर्धारितस्वभावं ममेदं प्रत्यक्स्वरूपमिति संबन्धः । ततस्तर्हि । तत्र इत्थंभूते मम स्वरूपे । प्रतिज्ञायते श्रुतिसूत्रकाराभ्यामिति शेषः । कथं शब्दसूचितं दूषणमेव व्यनक्ति । यन्मेयमित्यादिना । अथ वा फलाव्याप्यत्वेऽपि ब्रह्मणो वृत्तिव्याप्यत्वान्न प्रतिज्ञाबाध इत्याशङ्क्य तर्हि धर्मादिवच्छास्त्रोत्थवृत्तिचैतन्यविषयत्वं स्यादन्यथा चिदचित्संवलितप्रमाविषत्वाभावाद्ब्रह्म मेयं न भवेदिति तत्र प्रामाण्य प्रतिज्ञा कथं न व्याहन्येतेत्याह । यन्मेयं न भवेदिति । कदा चिदपि यन्मेयं नेति संबन्धः । पराहतान्यन्योऽन्यं विरुद्धानि पदानि यस्मिंस्तत्तथा ॥ २४४ ॥

मू० ॥ नैतद्वस्तुनि कल्पितस्य जगतो वाक्यप्रसूतप्रमा
बुद्धिर्मूलघगिष्यते तव निजस्वाकारमात्रग्रहात् ॥
कर्मत्वं न करोति वाक्यजनिता बुद्धिस्वरूपे तव
स्वाकारग्रहणेन केवलमियं संसारमूलं दहेत् ॥ २४५ ॥

टी० ॥ ब्रह्मणः स्वप्रकाशतया चिदन्तराभावाच्च चैतन्याविषयत्वेऽपि शास्त्रस्य तत्र प्रामाण्यप्रतिज्ञा न विरुध्यत इति परिहरति । नैतदिति । त्वदुक्तं दूषणं नेत्यर्थः । कुतः यतो वाक्यप्रसूतप्रमारूपा बुद्धिर्वस्तुनि कल्पितस्य जगतो यन्मूलमज्ञानं तद्धरति नाशयतीति मूलधगिष्यते ततश्च निवर्त्तकत्वेन तत्र शास्त्रप्रामाण्यमुपपद्यत इति भावः । ननु बुद्धिरूपाया अपि प्रमायाः स्वगोचरविषयाज्ञानादिनिवर्त्तकस्वभावत्वाद्ब्रह्मणः शास्त्रीयप्रमाविषयत्वाभावे कथं तस्यास्तन्निवर्त्तकत्वमिति चेन्न । अस्त्येव हि ब्रह्मणो घटादिवद्वृत्तिविषयत्वं स्वप्रकाशस्याप्यसजातीयविषयत्वस्येच्छाविषयत्ववत् । प्रदीपादेर्ज्ञानविषयत्ववच्चाविरोधाच्चैतन्यांशविषयत्वं तु स्वप्रकाशे विरुद्धमेव । न च तत्र तन्मानमस्ति तथापि प्रकृते न काचित्क्षतिरविद्याविषयस्य पूर्णचैतन्यस्यैव प्रकाशमानस्याविद्यानिवर्त्तकत्वोपपत्तेस्तदाकारसाक्षात्कारवृत्त्याह्यनभिव्यक्तिरूपावरणनिवृत्तौ प्रकाशमानचैतन्यस्यैव सर्वत्राविद्यादिनिवर्त्तकत्वमिति । वृत्तौ तदाकारतामात्रमपेक्षितं तच्चेहास्तीत्याह । तव निजेति । निजो यः स्वस्वभावभूतश्चैतन्याद्वयानन्दघन आत्मा तदाकारमात्रग्रहादित्यर्थः । मात्रपदेनाहङ्कारादि व्यावर्त्तयति । नन्वज्ञानस्य घटादौ स्वगोचरकर्मकज्ञानान्निवृत्तेरिहाप्यज्ञानत्वेनावृतब्रह्मगोचरज्ञाननिवर्त्त्यत्वमनुमीयत इत्याशङ्क्य जडगोचरत्वं तत्रोपाधिरित्याशयेनाह । कर्मत्वं न करोतीति । किं चाविद्यानिवृत्तेरविद्याविषयस्य प्रकाशमात्रेण तदाकारवृत्त्यभिव्यक्तेनोपपत्तौ न कर्मत्वं तत्प्रयोजकमित्यप्रयोजकत्वं हेतोरित्यभिप्रेत्याह । तव स्वाकारग्रहणेनेति । केवलं कर्मत्वरहितं यथा स्यात्तथेयं तव स्वाकारग्रहणेनेति संबन्धः । एवं च वेदान्तादिजन्यवृत्त्याकारमात्रतया ब्रह्म वृत्तिव्याप्यमेव न तु घटादिवत्फलव्याप्यं नापि धर्मवद्वृत्तिचैतन्यविषय इति भावः ॥ २४५ ॥

मू० ॥ संविद्युत्पादकं यद्वचनमभिमतं कर्ममीमांसकानां
यत्कर्मत्वं न तावत्स्पृशति घटपटाद्यर्थसंवित्स्वरूपे ॥
किं त्वज्ञानापनुत्त्या फलवदभिमतं तच्च शिष्यस्य तद्वत्
सर्वं वेदान्तवाक्यं फलवदिदमपि प्रत्यगात्मस्वरूपे ॥ २४६ ॥

टी० ॥ ननु तदाकारवृत्तिव्यक्तचैतन्यविषयत्वं विनाऽविद्यादिनिवृत्तिमात्रेण परीक्षकाणां न प्रामाण्यं संमतमित्याशङ्क्य मीमांसकानां तावत्तत्संमतमित्याह । संविदुत्पादकमिति । कर्ममीमांसकानां तावत्संविदुत्पादकं तत्स्वरूपज्ञापकं वचनं ज्ञानं, ज्ञातता वा स्वप्रकाशमित्यादि वाक्यमभिमतं तद्घटपटाद्यर्थस्य या संवित्तत्स्वरूपे कर्मत्वं ज्ञाततां, तद्विषयज्ञानं वा न क्षिपति न जनयति । ज्ञाततायाः ज्ञानस्य च स्वयं प्रकाशत्वेन तत्र ज्ञाततान्तरस्य ज्ञानान्तरस्य वाऽयोगात् । ज्ञानस्य परोक्षज्ञानविषयत्वोपगमे वाऽपरोक्षविषयत्वे च तत्स्वप्रकाशत्वविरोधादित्यर्थः । किं तर्हि तत्र प्रमाणकृत्यमिति तत्राह । किं त्वित्यादिना । तत्र शिष्यस्य तदाकारज्ञानजननद्वाराऽज्ञानस्य स्वप्रकाशत्वादिसंशयादेरपनुत्त्या निवृत्त्या फलवदभिमतमिति यद्वृत्तद्वदिति संबन्धः ॥ २४६ ॥

मू० ॥ अकार्यस्वरूपस्य कार्यत्वमिष्टं
यथा कारकैर्मूर्तमुत्सारयद्भिः ॥
तथैवाप्रमेयस्य मेयत्वमस्य*
प्रमाणैस्तमस्तद्वदुत्सारयद्भिः ॥ २४७ ॥

टी० ॥ लोकेऽप्याह । अकार्येति । यथा असाध्यस्वरूपस्य कूपगगनादेस्तिरोधायकमृत्पाषाणाद्युत्सारयद्भिरपसारयद्भिः कारकैः कर्तृकरणादिभिः कार्यत्वं साध्यत्वमिष्टम् । तथैवाप्रमेयस्येति संबन्धः । लोके हि देवदत्तादिकर्तृभिः कुद्दालादिभिः कूपः साध्यते । कूपरूपावच्छिन्नं नभ एव तदन्यस्यानिरूपणात् । न च नभसः स्वरूपेण, उपाधिद्वारा वा साध्यता संभवति । मूर्तद्रव्योत्सारणव्यतिरेकेण प्रयत्नसाध्यस्याऽन्यस्याऽत्राऽसंभवात् । एवं च यथा तावतैव कूपाकाशस्य साध्यताऽवगमः, एवमस्याप्रमेयस्याप्यात्मनः प्रमाणैरज्ञानतत्कार्यविलोपात्प्रमेयत्वव्यवहार इति भावः ॥ २४७ ॥

मू० ॥ वाक्योत्थापितबुद्धिवृत्तिरमला यत्नादिभिर्निश्चला
वेदान्तश्रवणादिभिः स्फटिकवत्स्वच्छा सती तावकम् ॥

* मेयत्वमिष्टम् । पा० २ ॥

रूपं दर्पणवद्बिभर्ति परमं विष्णोः पदं संनिधे-
रेतस्मादिह कारणादथ भवेत्संसारबीजक्षयः ॥ २४८ ॥

टी० ॥ नन्वेवं साङ्गाऽध्ययनादेवेत्यत्राऽऽत्मज्ञानादप्यविद्यानिवृत्तिः स्यादित्याशङ्क्य, दृष्टाऽदृष्टप्रतिबन्धरहितवृत्त्यभिव्यक्तपूर्णचैतन्यस्यैवाऽविद्यानिवर्तकत्वान्नैवमित्याशयेनाऽऽह । वाक्योत्थापितेति । अमला प्रक्षीणदुरिता । यज्ञादिभिरमलेति संबन्धः । निश्चला संशयादिरहिता । अत एव स्वच्छा । सन्निधेः सन्निधानादेव । विष्णोः पदं बिभर्ति । तत्प्रतिबिम्बं गृह्णातीत्येतस्माज्ज्ञानात्सविलासाज्ञाननिवृत्तिरित्यर्थः ॥ २४८ ॥

मू० ॥ एवं वेदशिरः प्रमाणमुदितं प्रत्यक्स्वरूपे तव
कर्मत्वं विरहय्य तत्र न हि नो बाधः प्रतिज्ञागिरः ॥
कर्मत्वं न करोति बोधयति च स्पष्टं वचो वैदिकं
रूपं तावकमेवमस्य भवति प्रामाण्यमत्रात्मनि ॥ २४९ ॥

टी० ॥ आर्थक्रमानुरोधेन द्वितीयं पद्यमवधार्यते । एवं फलाव्याप्ये चैतन्याविषये चात्मनि विधिरूपवेदान्तप्रामाण्यमुपपादितमुपसंहरति । एवं वेदशिर इति । तावता च श्रुतिसूत्रयोः शास्त्रप्रमाणकत्वप्रतिज्ञापि न विरुध्यत इत्याह । तत्रेति । प्रतिज्ञाविलोपमेव विवृणोति । कर्मत्वं न करोतीत्यादिना ॥ २४९ ॥

मू० ॥ पृष्ठेन पूर्ववपुषा क्रियते प्रतीति-
र्नेतीतिवाक्यजनिता जगतो निषेद्धी ॥
प्राधान्यमस्तु विधिना सममेवतस्मा-
त्तस्याथ वा भवतु तद्वचनं प्रधानम् ॥ २५० ॥

टी० ॥ एवं सर्वेषां विधिमुखप्रवृत्तवेदान्तानाम् । आत्मा वा इदमेक एवाग्र आसीदित्यादिसर्ववेदस्थनिर्विशेषात्मोपक्रमोपसंहारैक्यादिनोदरमन्तरं कुरुत, इत्यादिभेदमात्रनिन्दावचनेन,एकधैवानुद्रष्टव्यं तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथेत्यात्मप्रातिपदिकार्थमात्रज्ञेयत्वतदितर-

परिहार्यत्ववचनेन च वर्णितन्यायोपोद्बलितेनाखण्डैकरसे तात्पर्यं निरूपितम्,इदानीं निषेधवाक्यमपि पदार्थशोधनद्वारा तत्त्वमस्याद्यनुग्राहकतया तत्रैव पर्यवसन्नमिति वक्तुं प्रथमं नेतिनेत्यस्थूलादिवाक्यमपि तत्त्वमस्यादिना समप्रधानं तदेव वा प्रधानमिति भेदेन केषां चिन्मतमुत्थापयति । पृष्ठेनेति । स एव नेतिनेत्यात्मेत्यादिवाक्यजनिता प्रपञ्चनिषेद्ध्री प्रतीतिः पृष्ठेन पश्चान्निखिलभेदनिषेधानुपपत्त्या पूर्णवपुषा क्रियते, पूर्णा ब्रह्माऽहमस्मीत्येवमाकारा भवति यस्मात्तस्मात्तस्य निषेधवाक्यस्य विधिना विधिमुखप्रवृत्तेन तत्त्वमादिना समं प्राधान्यमस्तु । अथ वा तद्वचनमेव प्रधानं भवत्विति संबन्धः ॥ २५० ॥

मू० ॥ अद्वैतीकरणं निषेधवचनादुत्पन्नबुद्धेरपि,
तुल्यं तत्त्वमसीतिवाक्यजनितप्रत्यक्प्रतीत्या सह ॥
आर्थं शाब्दमथापि वा भवतु तत्किं तेन यद्वा विधिर्नाकर्तुं शबलाऽर्थगोचरतया निर्भेदमर्थं क्षमः ॥ २५१ ॥

टी० ॥ उक्तमेवार्थद्वयं विवृणोति ॥ अद्वैतीकरणमिति ॥ प्रत्यग्ब्रह्मैक्याकारतेत्यर्थः । अध्यस्तसकलप्रपञ्चनिषेधान्यथानुपपत्त्या तदधिष्ठानमद्वयं ब्रह्माहमेवेति, अर्थात् प्रतीतिर्भवेत्, यथा तत्त्वमसीतिवाक्यादित्यर्थः । ननु निषेधवाक्यार्थानुपपत्त्यैकत्राद्वयात्माकारं ज्ञानं भवति । अपरत्र शब्दादेवेति कथमनयोः साम्यमित्याशङ्क्य, भवत्वेवं विशेषः अविद्यानिवृत्तौ तु तदाकारतामात्रं ज्ञानस्यापेक्ष्यते तच्चोभयत्राऽपि सममेवेति किं शाब्दत्वार्थत्वविशेषेणेत्याह । आर्थं शाब्दमिति । अथापि वा अथवेत्यर्थः । द्वितीयपक्षमुपपादयति । यद्वेति । निर्भेदमर्थमाकर्तुं तदाकारज्ञानं जनयितुं न क्षमः । कुतः शबलार्थगोचरतयेति । तत्त्वमस्यादेः शबलार्थत्वात्राऽखण्डार्थज्ञानं ततः संभवतीति न ततोऽविद्यानिवृत्तिः संभवति । तत उक्तविधया निषेधवाक्यमेव फलवत्प्रधानमिति भावः ॥ २५१ ॥

मू० ॥ संबन्धजातविरहान्न च लक्षणाऽस्मिन्संभाव्यते परिहृताऽखिलदृश्यराशौ ॥

ब्रह्मात्मवस्तुनि ततः प्रतिषेधवाक्य-
शेषत्वमेतु विधिरित्यपि केचिदन्ये ॥ २५२ ॥

टी० ॥ ननु शबलार्थस्यापि प्रागुक्तप्रकारेण तत्त्वमस्यादेर्लक्षणयाऽखण्डाऽर्थत्वमस्त्येवेत्याशङ्क्याऽसङ्गेऽद्वये वाच्यार्थसंबन्धाऽसंभवान्न लक्षणा संभवतीत्यभिमानेनाह । संबन्धजातविरहादिति । संयोगसमवायतादात्म्यकार्यकारणतादिसंबन्धाऽसंभवादित्यर्थः । ब्रह्मात्मवस्तुनि संबन्धजातविरहादस्मिंस्तत्त्वमादिवाक्ये लक्षणा च न संभाव्यते । संबन्धाभावसिद्ध्यर्थं ब्रह्म विशिनष्टि । परिहृतेति । इति यतः तत इति संबन्धः । शेषत्वं शबलार्थतत्त्वमादेरपि निषेध्यभेदाभेदोपस्थापकतया निषेधवाक्यशेषत्वमेतु प्राप्नोतु, अपिना पूर्वोक्तपक्षसमुच्चयं द्योतयति । केचिदन्य इति । वक्तृभेदव्यपदेश उक्तमतभेदाभिप्रायः । अन्य इत्युत्तरार्थो वा ॥ २५२ ॥

मू० ॥ वाक्यं मुक्तिफलां धियं जनयति स्पष्टं विधिव्यापृतं
साक्षादेव तव स्वरूपकथनान्नैवं निषेधात्मकम् ॥
अध्यारोपितरूपभेदविलयव्यापारनिष्ठं तव
स्वाकारग्रहणक्षमां नहि धियं कर्तुं समर्थं यतः ॥ २५३॥

टी० ॥ उच्यते संबन्धजातविरहादित्यसिद्धम् । असंगेऽद्वयेऽप्याध्यासिकनिखिलसम्बन्धस्य यथानुभवं सत्त्वात् । किं चैवं सत्यादिवाक्यात्सत्यज्ञानाद्यात्मकब्रह्माऽसिद्धौ स एष नेतिनेत्यादिवाक्येन तत्परामर्शेन निषेधोऽपि नस्यात् । अवान्तरवाक्यस्य तत्र लक्षणाऽभ्युपगमे च किमपराद्धं महावाक्येन तेनेत्याशयेनाह । वाक्यमिति । विधिमुखेन बोधकं तत्त्वमादिवाक्यमेव भागत्यागलक्षणया तव शुद्धचैतन्यस्वरूपाऽनुवादेनाऽद्वयब्रह्मप्रतिपादनान्मुक्तिफलां धियं स्पष्टं यथा स्यादपरोक्षरूपामिति यावत् साक्षाज्जनयति । नैवं निषेधात्मकमिति संबन्धः । साक्षात्तव स्वरूपेति वा योजना । अध्यस्ताऽहंकारस्वरूपव्यावृत्तये च साक्षादित्युक्तम् । ननु माभूत्ततः साक्षान्मुक्तिफलज्ञानजन्म,अर्थाद्भविष्यतीति चेन्न । अधीतिविधिपरिगृहीतोपनिषद्भ्य एव साक्षादुत्पन्नज्ञानस्य मुक्तिसाधनत्वे संभवत्यार्थिकस्य

तदयोगात् । औपनिषदमिति श्रुत्या ब्रह्मणि प्रमाणान्तरस्य निषिद्धत्वा-च्च । किंचार्थादपि किमहं ब्रह्मेति ज्ञानं मुक्तिसाधनं ततो जायते, किं वा-ऽद्वयं ब्रह्मेति, नाद्यः अस्मिन्पक्षे हि तत्त्वमादिना निषेधवाक्येन वा त-ज्ज्ञानं भवतीति तयोर्वैकल्पिकं साधनत्वं वाच्यमेवं च निषेधस्य तत्त्वमा-दिवाक्यानपेक्षत्वाज्जीवमपि प्रपञ्चवत्तन्निराकुर्यात् । जीवस्वरूपशोधक-वाक्यानां त्वंपदशेषाणामपि तेनानपेक्षितत्वात्ततोऽहं ब्रह्मेत्याकारा धी-र्निषेधमात्रपर्यवसिता न भवेदित्याशयेनाह । अध्यारोपितेति । आत्मन्या-रोपितसप्रपञ्चताऽरूपभेदस्य विलये निवृत्तौ यो व्यापारस्तन्निष्ठमित्यर्थः । प्रपञ्चाभावमात्रबोधकमिति यावत् । स्वाकारग्रहणक्षमाम् अहं ब्रह्मेत्या-काराम् ॥ २५३ ॥

मू० ॥ अस्थूलादिवचःसमुत्थितमतिर्नाकारमादास्यते
साक्षादद्वयवस्तुनस्तव विभोरज्ञानविच्छेदिनः ॥
अज्ञातस्य हि वस्तुनो न हि धिया स्वाकारसंवेदनं
मुक्त्वा तद्विषयस्य विभ्रमकृतो ध्वान्तस्य विध्वंसनम् ॥ २५४ ॥

टी० ॥ नापि द्वितीय इत्याह । अस्थूलादिवच इति । अस्थूलमन-ण्वह्रस्वमदीर्घमित्यादिसमस्तद्वैतनिषेधवचनादुत्पन्नं ज्ञानमित्यर्थः । सा-क्षादित्यर्थादित्यस्याप्युपलक्षणम् । अस्थूलादिवचःसमुत्थितमतिरज्ञानवि-च्छेदिनो विभोरद्वयवस्तुनस्तदाकारं साक्षाद्वा अर्थाद्वा नादास्यते न ग्रहीष्य-तीत्यर्थः । वृत्तिव्यक्तस्वरूपस्यैवाऽज्ञाननिवर्तकत्वमित्याशयेनाऽज्ञानविच्छे-दिन इत्युक्तम् । माभूत्तदादानमित्याशङ्क्येष्टसिद्धिस्तदा न स्यादिति सामान्य-न्यायेनाह । अज्ञातस्य हीति । हि यतोऽज्ञातस्य वस्तुनो धियाऽन्तःकरणवृ-त्त्या स्वाकारसंवेदनम्, आवृतस्वरूपविशेषस्फुरणं मुक्त्वा तद्विषयस्य वस्तुवि-षयस्य विभ्रमकृतो विभ्रमहेतोर्ध्वान्तस्याऽज्ञानस्य विध्वंसनं निवृत्तिर्न हि भवति । अज्ञानं हि स्वविषयस्फुरणान्निवर्तते न त्वन्य स्फुरणास्फुरणमन्तरेण वा निषेधमात्रादतिप्रसङ्गात्, स्फुरणं च प्रमाणजन्यवृत्त्यधीनमित्याहृतमोच-रप्रमाणवृत्तिरावश्यकीति भावः ॥ २५४ ॥

मू० ॥ रज्ज्वज्ञानविजृम्भितस्य फणिनो रज्जुप्रकाशात्मकं
विज्ञानं विरहय्य न प्रशमनं दृष्टं निषेधे कृते ॥
तद्वत्प्रत्यगविद्यया विरचितं संसारदुःखं न त-
त्संवित्तिं विरहय्य शाम्यति धिया नेतीति शब्दोत्थया ॥ २५५ ॥

टी० ॥ ततः किमित्याशङ्कयोक्तन्यायस्य विशिष्टं दृष्टान्तं दर्शयन्दार्ष्टान्तिके तदभावे दुःखोपशमो न स्यादित्याह । रज्ज्वज्ञानेति । रज्ज्वज्ञानादारोपितस्य सर्पस्य नाऽयं सर्प इति निषेधे कृतेऽपि रज्जुरियमिति तदधिष्ठानावृतविशेषज्ञानं विना तदज्ञानस्य प्रशमनं न दृष्टं नास्ति यद्वत्तद्वदितिसंबन्धः । जीवस्य नित्यमुक्ताऽद्वयब्रह्मैक्याज्ञानात्संसार इति तत्प्रकाशं विना तदज्ञानतन्मूलसंसारनिवृत्तिर्न भवेदिति नाद्वयं ब्रह्मेति ज्ञानं मुक्तिसाधनं ततो निषेधस्य न तत्त्वमादिसाम्यम् । एतेन तदेव प्रधानमिति पक्षोऽपि निरस्तो वेदितव्यः ॥ २५५ ॥

मू० ॥ अस्थूलादिवचो निषेधकतया भेदस्य संशोधनात्
वाक्यार्थोऽन्वयसिद्धये तु घटते वाच्याऽर्थलक्ष्याऽर्थयोः ॥
एवं तत्त्वमसीति वाक्यगतयोस्तत्त्वंपदोक्ताऽर्थयोः
संशुद्ध्यैव तु नेतिनेति वचनं मोक्षाय साक्षान्न तु ॥ २५६ ॥

किं तर्हि अस्थूलादिवचः कृत्यं मुक्तिसाधनज्ञानस्य विधिवाक्यादेव सिद्धत्वादित्याशङ्क्य पदार्थशोधकतया तस्य तत्त्वमादिवाक्यशेषत्वमाह । अस्थूलादिवचोनिषेधकतयेति । भेदस्य निषेधकतया वाच्यार्थलक्ष्यार्थयोः संशोधनादस्थूलादिवचो वाक्यार्थान्वयसिद्धये अखण्डवाक्यार्थसिद्धये घटते व्याप्रियत इति संबन्धः । वाच्यार्थाभ्यां लक्ष्यौ यावर्थौ प्रत्यग्ब्रह्मस्वरूपभूतौ तयोः संशोधनादित्यर्थः । तत्संशोधनं च चैतन्यानन्दैकरसस्य विनिश्चयः । वाच्यार्थश्च लक्ष्यार्थश्च तयोरिति वा । वाच्यार्थे न वाक्यतात्पर्यमपि तु लक्ष्यमात्र इति निश्चय एव तयोः संशोधनम् । एवं च निषेधवाक्यं विधिवाक्यशेषमेव न विपरीतं, न वा निषेधवाक्यमपि प्रधान-

मित्याशयेनाह । एवमिति । मोक्षाय भवतीति शेषः । साक्षात्तु साक्षान्मोक्षाय नैव भवतीत्यर्थः ॥ २५६ ॥

मू० ॥ अन्ये पुनर्विधिवचोजनितात्मबुद्धि-
सामर्थ्यसिद्धमनुवक्ति निषेधवाक्यम् ॥
द्वैतोपमर्द्दमिति शासति शिष्यवर्गं
तच्च प्रशस्तमनवद्यमभीष्टमेव ॥ २५७ ॥

टी० ॥ एवं निषेधवाक्यस्याज्ञानप्रपञ्चनिषेधप्रतिपादनद्वारा तत्त्वमस्याद्यन्तर्भावो दर्शितः । अन्ये तु तत्त्वमस्यादिवाक्यार्थज्ञानसामर्थ्यसिद्धद्वैतनिषेधस्यानुवादविधया द्वैतनिषेधवाक्यं महावाक्याऽनुग्राहकं, द्वैतनिषेधाऽनुवादादपि महावाक्यस्याऽद्वैततात्पर्यसिद्धेरित्याहुस्तदप्यनुमोदते । अन्य इति । सामर्थ्यसिद्धमिति । तत्त्वमस्यादिवाक्येनाहमद्वयाऽनन्दं ब्रह्मेति वाक्यार्थबोधे जाते अहं चेदित्यंभूतस्तर्हि कालत्रयेऽपि मयि द्वैतं नास्तीति द्वैताभावो निश्चीयत इति तमनुवदति निषेधवाक्यं न तु तं प्रतिपादयतीत्यर्थः । तत्प्रशासनं निषेधवाक्यस्य तत्पक्षे पृथक् तात्पर्याभावेन तात्पर्यलाघवात्प्रशस्तं समीचीनम् । अबाधितत्वाच्चाऽनवद्यं प्रपञ्चनिषेधमन्तरेणाऽपि दृश्यत्वादिना सिद्धतन्मिथ्यात्वमात्रेण वाक्यस्याद्वयब्रह्मप्रतिपादकत्वोपपत्तेः । अत एवाऽभीष्टमेवेत्यर्थः ॥ २५७ ॥

मू० ॥ दृष्टश्च रज्जुविधिनाऽवगतार्थवस्तु-
सामर्थ्यसिद्धभुजगप्रशमाऽनुवादः ॥
रज्जुस्तवाऽयत इयं न भुजङ्गमोऽय-
मित्यत्र तद्वदिह योजयितव्यमेतत् ॥ २५८ ॥

टी० ॥ विधिसामर्थ्यसिद्धनिषेधाऽनुवादं लौकिकदृष्टान्तेनाऽप्याह । दृष्टश्चेति । रज्जुविधिना इयं रज्जुरितिवाक्येन । वस्त्वितिस्वरूपपरं तवाये स्थितेयं रज्जुर्नायं भुजङ्गम इत्याप्तवाक्य, इयं रज्जुरिति वाक्यसामर्थ्यसिद्धभुजङ्गाऽभावस्य नाऽयं भुजङ्गम इत्यनुवादो यद्वत्तद्वदिहापीत्यर्थः ॥ २५८ ॥ (शेषमग्रे)

## ॥ अथ चित्सुखी ॥

### ॥ तत्र प्रथमपरिच्छेदावशेषः ॥

(*Continued from page* 152. Vol. V.)

तथाहि किं मण्याद्यभावाः प्रत्येकमन्वयव्यतिरेकाभ्यां कारणतया॰ अवसीयन्ते॰ अथवा प्रतिबन्धाभावत्वोपाधिना क्रोडीकृताः ।

नाद्यः,मण्याद्यभावानामनन्तानामुपसंग्राहकं विना प्रत्येकमन्वयव्यतिरेकाध्यवसानस्य पुरुषायुषेणाप्यशक्यत्वात् ।

नापि द्वितीयः, तथा सति विसामग्रीलक्षणप्रतिबन्धज्ञानाधीनप्रतिबन्धाभावत्वोपाधिज्ञानमन्तरेण मण्याद्यभावानां सामग्र्यन्तर्भावस्य दुरधिगमतयान्योन्याश्रयताया दुस्तरत्वात् ।

न च शक्तिपक्षे प्रतिबन्धासंभवः, शक्तिमनभ्युपगच्छतामिवाभ्युपगच्छतामपि कारणानां कार्यौदासीन्यस्यैव प्रतिबन्धतोपपत्तेः, वैसामग्र्यस्य प्रतिबन्धस्योदीरितरीत्या निरस्तत्वात्, अतः प्रतिबन्धाभावस्य कारणत्वासंभवाच्च कार्यार्थापत्तेरन्यथोपपत्तिः, उपादानोपादेयभावनियमानुपपत्तिरपि शक्तौ प्रमाणमेव ।

ननु तत्र स्वभावभेदादेवोपपत्तेरन्यथोपपत्तिरुक्तेति चेत्, मैवम्, तथा सति सर्वत्र स्वभाववादपादप्रसारिकया सामान्यसमवायविशेषादेरपि पराकरणप्रसङ्गात्, तथाहि सत्तायां स्वभावभेदादेव सदिति व्यवहारवद् द्रव्यादिष्वपि सद्व्यवहारोपपत्तौ सत्तासामान्यापलापः प्रसज्येत, एवं समवायवानयं घट इत्यादाविव संबन्धमन्तरेणापि गुणकर्मादेर्विशेषणत्वोपपत्तौ समवायापह्नवः स्यात्, विशेषाणां विशेषमन्तरेणैव व्यावृत्तिव्यवहारहेतुत्ववच्च नित्यद्रव्याणामपि स्वभावभेदादेव तथात्वोपपत्तौ विशेषपदार्थपरित्यागप्रसङ्गः ।

अथ यत्र यत्र प्रमाणमस्ति तत्र तत्र वस्त्वन्तराधीन एव तद्व्यवहारः, यत्र तु तन्नास्ति तस्य तत्स्वभावभेदादेव व्यवहार इति व्यव-

स्येति चेत्, हन्तैवमत्रापि प्रमाणसद्भावादेव स्वरूपातिरेकिणी शक्तिरङ्गी-क्रियतां कृतं स्वभाववादयावलम्बनकातरयेत्यलमतिविस्तरेण ।

अनुमानमपि तत्र प्रमाणम्, तथाहि ।

स्थिति*स्थापकधर्मान्यातीन्द्रियादिष्टसंश्रयः ।
दहनो गुणयोगित्वाद् गुरुत्वाश्रयकुम्भवत् ॥ २७ ॥

वह्निरदृष्टातीन्द्रियस्थितिस्थापकेतरभावाश्रयो गुणवत्त्वाद् घटवत् ।

न चेश्वरवादिनामतीन्द्रियत्वमप्रसिद्धम्, प्रमाणान्तरोपनीतविशेषणानालम्बनानुव्यवसायेतरास्मदादिप्रत्यक्षविषयत्वस्यातीन्द्रियशब्दार्थस्य गुरुत्वादौ भावनादौ च प्रसिद्धत्वात्, गुरुत्वधर्माधर्मभावना अतीन्द्रिया इति प्रशस्तपादैरुक्तत्वात् ।

ननु किमिहाश्रयशब्देनाधारत्वमात्रं विवक्षितमुत तत्समवायित्वम् ।

नाद्यः, वह्नेः कदाचित् परमाण्वाधारत्वसंभवेन सिद्धसाधनत्वात् ।

नापि द्वितीयः, समवायमनिच्छतो भाट्टस्याप्रसिद्धविशेषणत्वादिति चेत्, मैवम्, समवायानङ्गीकारेऽपि स्वीयरूपादीनामिवायुतसिद्धतया वह्नेर्विशिष्टधर्माधारत्वस्याश्रयशब्देन विवक्षितत्वात् ।

न चातीन्द्रियकर्माश्रयत्वेन मीमांसकस्यार्थान्तरता, शक्तिवादिनोऽपि प्राभाकरभाट्टवेदान्तिनोः कर्मातीन्द्रियत्वस्यासिद्धत्वात्, विपक्षे च वह्निस्वरूपस्यैव कारणत्वात् प्रतिबन्धकाभावकारणत्वस्य पुरस्तान्निरस्तत्वान्मन्त्रादिसमवधानासमवधानयोरविशेषेण कार्यजननप्रसङ्गो बाधकः ।

न चैवंविधधर्माश्रयत्वे गुणकर्मादेरपि द्रव्यत्वप्रसङ्गः, तेषां गुणानधिकरणत्वात् ।

न चैवंविधधर्माश्रयत्वाद्गुणाधिकरणत्वमपि स्यादिति वाच्यम्, प्रसङ्गस्य विपर्ययपर्यवसायित्वात्, न हि यद्गुणानधिकरणं तदेवंविधधर्माधिकरणं न भवतीति प्रतिवादिसंप्रतिपन्नमुदाहरणमस्ति येनायं प्रसङ्गो

* सर्वत्र स्थितस्थापक इति पा० ।

विपर्यये पर्यवसायी स्यात्, शक्तिव्यतिरिक्तस्य सर्वस्य पक्षकोटिनिक्षिप्तत्वात्, द्वितीयानुमानेऽपि मायावादिनं प्रति नेश्वरकारणकत्वेन सिद्धसाधनता, तस्योभयवादिसंमतकारणातिरिक्तत्वाभावात्, ईश्वरकारणत्वस्य वेदान्तिभिरभ्युपगमात्, जन्यभावजन्य इति विशेषणान्तरप्रक्षेपेण भाट्टस्यापि सिद्धसाधनत्वपरिहारसंभवात् ।

न चैवं सति नित्येषु शक्त्यभावप्रसङ्गः, अनित्येषु शक्तिसिद्धौ तद्दृष्टान्तावष्टम्भत एव नित्येष्वपि तत्सिद्धेः, सलिलपरमाणुरूपादिवन्नित्येषु तस्याश्च नित्यत्वोपपत्तेः, 'व्रीहीन् प्रोक्षती'त्यादिद्वितीयाश्रुतिभिश्च व्रीह्यादिष्वतीन्द्रियशक्तिसद्भावसिद्धिः ।

न चादृष्टस्य चेतनधर्मस्याचेतनेषु व्रीह्यादिष्वसंभवात् तद्विषयक्रियाजन्यतामात्रेण तदीयत्वप्रतिपत्त्युपपत्तेश्च द्वितीयाश्रुतिर्गौणीति वाच्यम्, धर्माधर्मलक्षणादृष्टविलक्षणस्यैव कस्यचिदतिशयस्य तण्डुलपिष्टपुरोडाशादिपरंपरया प्रधानापूर्वजननसामर्थ्यापरनामधेयस्याभ्युपगमात्, अन्यथा स्वरूपेणैव व्रीह्यादीनां तत्साधनत्वे प्रोक्षणादिविधानवैयर्थ्यप्रसङ्गात्, दृष्टान्तस्यासंभवे चादृष्टस्यैव कल्पनीयत्वात्, संभवति च मुख्ये लक्षणाश्रयणस्यानवकाशत्वात् । एतेन लीलावतीकारस्यापि निराकृतः प्रयोगः, प्रमाणानामागमार्थापत्त्यनुमानानां दर्शितत्वेन प्रमाणेनानुपलभ्यमानत्वादिति हेतोरसिद्धेः ।

तदेवमर्थप्रत्यायनशक्तिसद्भावात् पदानां तदभिहितेभ्यः पदार्थेभ्यः संनिधानादिसहकारिवशात् पदार्थानामन्योन्यान्वयप्रतिपत्तिर्लक्षणया सिध्यतीति सिद्धम् ।

ननु पदानामेवान्योन्यान्वितस्वार्थाभिधायकत्वसंभवे किमिति पदार्थानां लक्षणयान्योन्यान्वयप्रतिपत्तिजनकत्वमास्थीयते, तथाहि योग्येतरान्वितस्वार्थेषु पदानामावापोद्धारदर्शनात् तत्रैव सामर्थ्यमध्यवसीयते, यद्यपि प्रतिप्रयोगं विशेषान्तरतत्संसर्गयोर्व्यभिचारः, तथापि योग्येतरान्वितस्वार्थमात्रस्याव्यभिचारात् प्रथमावगतयोग्येतरान्वितस्वार्थाभिधानसामर्थ्यानुसारेण प्रयोगान्तरेष्वपि तथैव कल्पयिष्यते ।

ननु किमनभिहितेन पदार्थेनान्वितं स्वार्थमवबोधयति गोपदमुत पदान्तराभिहितेन ।

नाद्यः, एकस्मादेव पदात् तदर्थान्वितस्वार्थावबोधसंभवेन पदान्तरस्य वैयर्थ्यप्रसङ्गात् ।

न द्वितीयः, परस्पराश्रयप्रसङ्गात्, तथाहि गामानयेत्यत्र गोपदं यावदानयपदेन गोपदार्थान्वितस्वार्थो नाभिधीयेत न तावत् तदन्वितस्वार्थमभिधातुमर्हति, एवं तदपि पदं यावत् स्वार्थान्वितमर्थं गोपदं नाभिदध्यात् तावत् तदन्वितस्वार्थं नाभिधत्ते, ततश्च गोपदेन तदन्वितस्वार्थेऽभिहिते पश्चादानयपदेन तदन्वितस्वार्थोऽभिधातव्यः, सति च तस्मिन् गोपदेन स्वार्थोऽभिधातव्य इति व्यक्तमेव परस्पराश्रयत्वम्, पदार्थमात्राभिधानपूर्वके तु तदन्विताभिधाने द्विरभिधानमप्रमाणमनुपपद्यमानं चापद्येत ।

ननु द्विरभिधानं न पदजातस्य साहचर्यवशात् स्वार्थेषु प्रथमं स्मारकाणां पश्चादन्विताभिधायकत्वाभ्युपगमादिति चेत्, मैवम्, साहचर्यदर्शनदशायामन्वितानामेवानुभूततया तथैव स्मरणस्यावश्याश्रयणीयत्वात्, न हि पदं पदार्थमात्रप्रतिपत्तये प्रयुज्यते किंतु व्यवहाराय, स चान्वित एवेति कथमनन्वितानामेव पदार्थानां पदेभ्यः स्मृतिः स्यात्, तथा च गां पश्येति प्रयोगे गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मारितत्वात् पश्येति पदमनाकाङ्क्षितार्थमसंगतं प्रसज्येत, एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्थाभिधायकत्वात् पश्येति पदस्य न गोपदं तेन संबध्येत, तथा च वाक्यार्थः क्वापि परिनिष्ठितो न सिध्येत् ।

नन्वव्यभिचाराद्गोपदं स्वार्थमात्रमेव स्मारयति नार्थान्तराणि तेषां व्यभिचारित्वादिति चेत्, मैवम्, पदाभ्यासादरप्रत्ययैराहिताया भावनायाः प्रबोधवत्याः स्मरणहेतुत्वाङ्गीकारात्, तत्प्रबोधस्य[1] च व्यभिचारिण्यप्यर्थान्तरे परिगणिततत्प्रणिधानसाहचर्यादिजन्मनोऽविशेषात्, परिगणिता हि

[1] प्रबोध उद्बोधः परिगणितेभ्यः प्रणिधानसाहचर्यादिभ्यो जन्म यस्य तत् तथा ।

स्मृतिहेतवः[1] प्रणिधानाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रयिसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयव्याप्तिव्यवधानसुखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माः प्रमाणिकैः, अस्ति चेह योग्येतरान्वयस्यापि साहचर्यं स्मरणहेतुः ।

तस्मात् पदैरभिहिताः पदार्था एवाकाङ्क्षादिमन्तः परस्परान्वयं बोधयन्तीति युक्तमाश्रयितुम्, मैवम्, त्वयापि पदार्थविषयाः प्रत्ययाः प्रमाणविपर्ययसंशयादिष्वनन्तर्भावात् स्मृतय एष्टव्याः, ताश्चान्वितगोचरा न स्वरूपमात्रगोचरा इति तुल्यो दोषः ।

न च वाच्यमभिधानतः स्मारितमेव वाक्यार्थेऽन्वयि न साहचर्यमात्रादिति, गङ्गायां घोषः प्रतिवसतीत्यादौ पदानभिहिततीरादीनां वाक्यार्थानन्वयप्रसङ्गात्, अभ्यासातिशयश्च पदार्थस्मरणहेतुः, स च यथा पदानां स्वार्थेषु न तथार्थान्तरेषु, तेषां व्यभिचारित्वात्, तथा च स्वरूपमात्रेणैव पदेभ्यः स्मारिताः पदार्था आकाङ्क्षादिमन्तः पदैरन्विता अभिधीयन्त इति परस्पराश्रयता ।

नापि पदान्तरानाकाङ्क्षा, आकाङ्क्षा हि प्रतिपत्तुर्जिज्ञासा, सा चाभिधानापर्यवसानादभिहितार्थापर्यवसानाद्वा भवति, यथा वृक्ष इत्यत्र प्रातिपदिकार्थमात्रे प्रथमाविभक्तेः स्मरणात् तेनैव तस्यान्विताभिधानासंभवादन्यस्य चानभिधानादभिधानपर्यवसानायैवाकाङ्क्षा, यथा वा "विश्वजिता यजेते"त्यत्र कार्यस्य विषयकरणान्विततया प्रतीतस्यैवापर्यवसाना-

1 स्मृतिहेतवः, संस्कारोद्बोधनद्वारेति शेषः, प्रणिधानं मनोऽवधानम्, अभ्यासः प्रसिद्धः, लिङ्गाद् व्याप्तिसंस्कारः, लक्षणं धवलच्छत्रादि चिह्नं राजादिसंस्कारोद्बोधकम्, सादृश्यं शुक्लभास्वरतादि रजतादिविषयसंस्कारोद्बोधकम्, परिग्रहः स्वीकारः कलत्रादिसंस्कारस्य, एवमाश्रयाश्रयिणावपि परस्परसंस्कारस्य, संबन्धः सहचारः संबन्धी संस्कारस्य, आनन्तर्यं पूर्वतनसंस्कारस्य, वियोगः कामिन्यादौ, एककार्यमेकस्मादुत्पन्नकार्याणामन्यतमदन्यसंस्कारस्य, विरोधः सर्पनकुलादौ, अतिशयो नातिशयने, व्याप्त्या व्याप्यव्यापकयोः, व्यवधानं प्रियतमे व्यवहिते, सुखदुःखादि तज्जातीयस्य तद्धेतोश्च, अर्थित्वमपि प्राप्ते विषये पुनः पुनरिच्छा तेन नेच्छया पौनरुक्त्यम्, भयमपि भयान्तरविषयं तद्धेतुविषयं च, क्रियारागः क्रियासक्तिः स्वविषयस्य, धर्माधर्मौ शुभाशुभविषयसंस्कारोद्बोधकाविति ।

द्विशिष्टाधिकारकल्पना, तदेवंभूताकाङ्क्षावशात् पदानामन्विताभिधानं न विरुध्यते ।

ननु तथापि पदानामन्विताभिधानसामर्थ्यं न कल्पनीयम्, पदस्मारितानामेव पदार्थानामाकाङ्क्षादिवशादन्योन्यान्वयप्रत्यायकत्वोपपत्तेरिति चेत्, मैवम्, मानान्तराधिगतानां पदार्थानां वाक्यार्थप्रत्यायकत्वादर्शनात् ।

ननु पश्यतः श्वेति मारूपं हेषाशब्दं च शृण्वतः खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीरिति न्यायादस्त्येव पदार्थानां संसर्गबोधजनकत्वमिति चेत्, तन्न, अनुमानादर्थापत्तेर्वा तत्र संसर्गावगमात्, तथाहि-एषां पदार्थानामेकाधिकरणतयावगतानां प्रत्यायकत्वेनानुमानानतिरेकः, विशकलितावगतानां वार्थान्तराभावे निश्चितेऽर्थापत्तिरेव परिशिष्यते, अनिश्चिते त्वनध्यवसाय एव।

अपिच शब्दसामर्थ्याजन्यत्वे वाक्यार्थप्रत्ययस्य पदार्थाख्यं सप्तमं प्रमाणमभ्युपेयं स्यात्, प्रत्यक्षादिषु तस्यानन्तर्भावात् ।

किंच पदार्थानामनभिहितानां संसर्गबोधकत्वाभावादभिहितानामेव तदेष्टव्यम्, तथा च पदार्थानां संसर्गप्रत्ययजननसामर्थ्यं पदानां च पदार्थेषु तत्सामर्थ्याधानसामर्थ्यमिति द्वयं कल्पनीयमिति कल्पनागौरवमभिहितान्वयवादिनः ।

अन्विताभिधानवादिनस्तु पदानां योग्येतरान्वितस्वार्थाभिधानसामर्थ्यमेकमेव कल्पनीयमिति कल्पनालाघवमित्ययमेव पक्षः श्रेयानिति ।

अत्राभिहितान्वयवादिनः प्रत्यवतिष्ठन्ते ।

विनाभिधेयस्मरणमन्वयाप्रतिपत्तितः ।
तत्तत्पदार्थस्मृतयस्तेषामन्वयबोधिकाः ॥ ८ ॥

पदकदम्बकश्रवणसमनन्तरमपि कुतश्चिन्मानसापराधादनुपजनितपदार्थस्मृतेर्वाक्यार्थप्रत्ययानुदयाच्चोपजातपदार्थस्मृतेरन्वयव्यतिरेकाभ्यां पदार्थस्मृतीनां वाक्यार्थप्रत्ययहेतुत्वं तावदवसीयते ।

न च पदार्थस्वरूपमात्रविषयस्मृतीनामन्योन्यान्वयबोधकत्वमनुपपन्नम्· अन्यत्रादृष्टत्वादिति वाच्यम्, स्मरणमात्रस्य सामर्थ्याभावेऽपि समभिव्याहृतपदकदम्बकसमुपजनितपदार्थस्मृतीनामाकाङ्क्षादिसहकारिणीनां संभवत्येव तद्बोधकत्वं सहकारिभेदोपादानात्, कथमन्यथा संस्कारेन्द्रिययोरन्यत्र परस्परसंगतार्थाविषययोः प्रत्यभिज्ञायां पूर्वापरदेशकालसंसृष्टैकवस्तुबोधकत्वम्, परस्परसहकारितया तथात्वं तु प्रकृतेऽपि तुल्यम् ।

न च पदार्थस्मृतीनां स्मृतानां वा पदार्थानामन्वयबोधकत्वे सप्तमप्रमाणाभ्युपगमप्रसङ्गः, लिङ्गप्रकरणस्थानानामिव शब्दप्रमाणान्तर्भावोपपत्तेः ।

ननु लिङ्गादिषु श्रुतिं कल्पयित्वैव विनियोगप्रतीतेः स्वीकाराच्छब्दत्वं न विरुध्यते· इह तु पदार्थस्मृतीनां स्मृतानां वा पदार्थानामन्वयबोधकत्वमिति वैषम्यम्, शब्दावगतपदार्थजन्यत्वेनान्वयप्रतीतेः शाब्दत्वे चक्षुरवगतधूमजन्यस्यापि वह्निज्ञानस्य चाक्षुषत्वप्रसङ्ग इति चेत्, मैवम्, अन्वयप्रतीतिं जनयतां पदानामवान्तरव्यापारत्वात् पदार्थस्मरणानाम् ।

न च स्वव्यापारव्यवधानाद् व्यापारवतः करणत्वं विहन्यते, यागादीनामपूर्वव्यवधानेन फलसाधकानामकरणत्वप्रसङ्गात् ।

न च चक्षुषो लिङ्गज्ञानमवान्तरव्यापारः, अगृहीताविनाभावस्यानुमानानुदयात्, अचाक्षुषस्थलेऽपि लिङ्गस्य बोधकत्वात्, गुरुमतानुसारिभिरपि लिङ्गप्रकरणादीनामन्तरेणैव श्रुतिकल्पनं विनियोजकानां शब्दप्रमाणान्तर्भावाभ्युपगमाच्च ।

ननु त्वयाप्यभिहितान्वयवादे तिस्रः शक्तयः कल्पनीयाः; पदानां तावदर्थस्वरूपानुभवजननशक्तिरर्थानां चान्योन्यान्वयप्रत्यायनशक्तिस्तदाधानशक्तिश्चापरा पदानामिति, पदानां साहचर्येणार्थस्मारकत्वे पुनः शक्तिद्वयं कल्पनीयम्, पदार्थानामन्वयबोधनशक्तिस्तेषु तदाधानशक्तिश्च पदानाम्, अन्विताभिधाने तु पदानामन्योन्यान्वितस्वार्थाभिधानशक्तिरेकैवेति कल्पनालाघवमिति चेत्, मैवम्, त्वयाप्यर्थान्तरे तदन्वये स्वार्थे च पदशक्तीनां कल्पनीयत्वात् ।

न चार्थान्तरान्वितस्वार्थाभिधायकमपि पदं स्वार्थस्यैव वाचकं नार्थान्तरतदन्वययोर्जातिवाचकमपि पदं व्यक्तितदन्वययोरिवेति वाच्यम्, विकल्पासहत्वात्।

तथाहि किं जातिवाचकपदेन व्यक्तेरिव लक्ष्यत्वमर्थान्तरतदन्वययोरुत वाच्यत्वम्।

नाद्यः, पदानामन्विताभिधानभङ्गप्रसङ्गात्।

न द्वितीयः, वाच्यत्वे तयोरपि शक्तेरवश्यकल्पनीयतया गौरवस्य तादवस्थ्यात्।

किंचैकैकस्य पदस्य श्रूयमाणस्य स्मर्यमाणस्य वा तत्तत्पदार्थस्मरणजननशक्तिः पुनरेकस्मरणगोचराणां च तेषामेव पदानामन्योन्यान्वितपदार्थाभिधानशक्तिः सकलपदगोचरस्य स्मरणस्य पदैष्वन्विताभिधानशक्त्याधानशक्तिश्चेति शक्तित्रयकल्पनान्विताभिधानवादेऽपि तुल्या।

न चाभिहितान्वयवादेऽपि शक्तिकल्पनागौरवस्य तुल्यत्वाद्विनिगमनाभाव आशङ्कनीयः, विशिष्टार्थप्रत्यायनप्रयुक्तपदकदम्बकसमभिव्याहारान्यथानुपपत्त्या पदस्मारितानामर्थानामन्योन्यान्वयस्य लक्ष्यमाणत्वेनोपपत्तेः शक्तेरकल्पनीयत्वात्, अनन्यलभ्यः शब्दार्थ इति न्यायात्, उक्तं च "विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने" इति।

ननु नेयं लक्षणा भवितुमर्हति, तल्लक्षणाभावात्, तथाहि।

वाच्यस्यार्थस्य वाक्यार्थे संबन्धानुपपत्तितः।
तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते॥ २९॥

इति। न[1] चौदनं चैत्रः पचति पिठर[2] इत्यादौ चैत्रपिठरादीनामर्थानां वाक्यार्थसंबन्धानुपपत्तिः।

न[3] च पदार्थैर्लक्षितायाः पदार्थानामन्वितावस्थायाः पुनरन्वया-

---

१ प्रकृते च वाच्यार्थानां वाक्यार्थे संबन्धानुपपत्तिरूपलक्षणभागोऽस्तीत्याह न चौदनमिति।

२ पिठरं भाण्डम्।

३ यत्तु तत्संबन्धवशात् प्राप्तस्यान्वयादिति लक्ष्यमाणार्थस्य पुनर्वाक्यार्थेऽन्वय उक्तः सोऽपि भागो नास्तीत्याह न चेति।

न्तरशालिता, तेनेयं न लक्षणा, तल्लक्षणाविरहादिति चेत्, मैवम्, अव्यापकत्वादेतस्य लक्षणालक्षणत्वासंभवात्, न हि विषं भुङ्क्ष्वेत्यादावेतल्लक्षणमस्ति, तत्र सर्वेषां पदानां लक्षकत्वेन वाच्यार्थाभावात्, वाच्यार्थाविनाभूतस्य वाक्यार्थेन पुनरन्वयाभावाच्च ।

यदपि,

मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे ।
मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥

इति लक्षणालक्षणम्, तदप्यव्यापकम्, कुण्डपायिनामयने[१] "मासमग्निहोत्रं जुहुती"त्येतल्लक्षणाव्यापकत्वात्, "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुती"ति श्रूयमाणत्वात्, प्रसिद्धाग्निहोत्रे चोपसदामभावात्, कर्मान्तरे ऽग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रसाधर्म्याल्लक्षणया वर्तते ।

न च तत्र मानान्तरविरोधः, तदर्थस्य मानान्तरागोचरत्वात् । तस्मात् पदानां पदार्थस्वरूपमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिकेति तदेव लक्षणं लक्षणायाः, सर्वलौकिकवैदिकलक्षणानां व्यापकत्वात्, तथाहि गङ्गायां घोषः प्रतिवसति, आदित्यो यूपः कुण्डपायिनामयने 'मासमग्निहोत्रं जुहुती'त्यादावस्ति पदार्थमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिः ।

ननु तत्र वाच्यार्थान्वयानुपपत्तिरप्यस्ति तत् कथमिदमेव लक्षणमिति नियम्यत इति चेत्, मैवम्, वाच्यार्थान्वयानुपपत्त्यभावेऽपि लोकवेदयोर्लक्षणादर्शनात्, तथाहि लोके ।

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च योऽभिजानाति सेवितुम् ॥

इत्यादौ पदार्थानामन्वयसंभवेऽपि निष्प्रयोजने तात्पर्यासंभवेन वाक्यप्रामाण्यानुपपत्तेः प्रतीयमानवाक्यार्थं हित्वा शूरादित्वं संपदो हेतुरिति

---

१ अस्ति कुण्डपायिनामयनगतं कर्म मासमग्निहोत्रं जुहोतीति श्रूयमाणम्, तत्र चाग्निहोत्रशब्दो गौण्या प्रयुज्यत इति स्थितम्, प्रकरणान्तरे प्रयोजनान्यत्वमुक्तम्, क्रियाभिधानमित्यत्र गौणर्यापि हि गुणलक्षणायोगेन वर्तत इति लक्षणोच्यते, लक्षितलक्षणा हि गौणी ।

ध्वनिना सूच्यते, तथा च वेदे "वायुर्वै क्षेपिष्ठे"त्यादौ संभवत्येव वाच्यार्थान्वये कैमर्थक्यवशेन देवताप्राशस्त्यलक्षणया कर्मणः प्राशस्त्यं लक्ष्यते ।

तस्माद्वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिकेति निश्चिनुमः, अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थमात्रपरत्वे पदानां प्रामाण्यानुपपत्तिः, "विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने" इति न्यायात्, अस्ति च शब्दानामर्थरूपसंबन्धवशप्राप्तिरन्विताबस्थायाम्, तथा चार्थरूपबोधनसामर्थ्याच्चाधिकसामर्थ्यद्वयकल्पनापि ।

ननु पदानां संस्कारोन्मेषमात्रोपयोगान्नाभिधातृत्वम्, पदार्थानामपि स्ववाचकपदसंस्कारोन्मेषकाणां तत्स्मारकतयाभिधायकत्वप्रसङ्गादिति चेत्, न, पदानामेव पदार्थस्मारकाणामभिधातृत्वस्य लौकिकपरीक्षकप्रसिद्धिसिद्धस्यानिवारणीयत्वात्, शब्दविषयविज्ञानस्यैव पदार्थस्मरणजननशक्त्युपहितस्याभिधाव्यापारत्वेन स्वीकारात्, अन्यस्य च परिस्पन्दप्रयत्नलक्षणस्य व्यापारस्य विभौ विभुगुणे वा शब्दे चैतन्यानधिकरणे दुर्निरूपत्वात् ।

तस्मात् समभिव्याहृतपदकदम्बकस्मारितपदार्थानां परस्परान्वयप्रत्ययो लाक्षणिकः शाब्दश्चेति सर्वमवदातम्, तथा चोक्तं मीमांसावार्तिककारमिश्रैः,

"न विमुञ्चति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः" ॥

इति, प्रयोगश्च,

**शब्दास्तात्पर्यविषयव्यतिषङ्गस्य लक्षकाः ।**
**तत्तात्पर्याभिधानत्वात् त्वेलं भुङ्क्ष्वेति शब्दवत् ॥ ३० ॥**

विवादपदानि[1] पदानि लक्षणया पदार्थानाम्[2]न्योन्यान्वयप्रतिपत्तिपराणि· अन्वितप्रतिपत्तिपरत्वे सति पदत्वाद् विषं भुङ्क्ष्वेति पदकदम्बकवत् ।

१ श्लोकेन संगृहीतमनुमानं विवृणोति विवादपदानीति, विषं भुङ्क्ष्वेत्यादौ सिद्धसाधनतानिवृत्त्यै विवादपदग्रहणम्, अन्विताभिधानेनार्थान्तरतानिवृत्त्यै लक्षणयेत्युक्तम् ।

२ पदार्थानामिति, अन्वयिनां न पुनः स्वस्मारितानां तेन न दृष्टान्तस्य साधनवैकल्यम्, पक्षे च सामर्थ्यात् स्वस्मारितान्वयसिद्धिः, इतरस्यासंभवात्, गौरश्व इत्यादिपदैरनैकान्तिकतापरिहाराय प्रथमं विशेषणम्, लिङ्गव्यवच्छेदाय पदग्रहणमिति ।

न च पदानि स्वार्थपरित्यागेन लक्षणयान्वयप्रतिपत्तिपराणि उक्तसाधनत्वात् त्वदुदाहृतवाक्यवदित्याभाससमानयोगक्षेमता, अस्यैव त्वदुदाहृतानुमानवाक्यस्य स्वार्थपरित्यागापरित्यागयोस्तदनुपपत्तेः, तथा-हि स्वार्थपरित्यागे विशिष्टसाध्यप्रतीत्यभावादेवाविघातकत्वात्, अपरि-त्यागे च तत्रैवानैकान्तिकत्वात्, मुख्यार्थबाधोपाधिप्रयुक्तत्वाच्च स्वार्थपरि-त्यागस्य, इह च बाधाभावान्न स्वार्थपरित्यागानुमानम् ।

तस्मादभिहितान्वयवाद एव श्रेयानिति केचिदाचार्याः ।

न चैवमपसिद्धान्तः, भाष्यकारसंमतत्वात्, तथा च समन्वयसूत्रे वेदान्तवाक्यानि प्रस्तुत्य भाष्यकारः प्रतिपादयति स्म ।

न च तद्गतानां पदार्थानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽ-वगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्, तत्र च पदार्थानामेवान्योन्यान्वयप्रत्यायकता प्रतीयते, मण्डनमिश्रादिभिरप्यङ्गीकृ-तत्वात् ।

"पदार्थान्तरतुल्यत्वाद्विध्याकाङ्क्षानिबन्धनः ।
न संसर्गः पदार्थानां स्वशब्दैस्तु प्रदर्शिताः ॥
संबन्धयोग्यरूपेण तस्मात् संबन्धभागिनः ।
विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने" ॥

इति व्यवहारे भट्टनय इत्यङ्गीकारात्, भट्टपादैश्च वाक्यार्थस्य सर्वत्र लाक्षणिकत्वस्वीकारात्, "वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः"रिति ।

तस्मात् पौरुषेयवाक्येभ्य एवापौरुषेयेभ्यो वेदान्तवाक्येभ्यो लक्षणया यथोक्तलक्षणं ब्रह्म सिध्यतीति सिद्धम् ।

ननु कथमपौरुषेयत्वं वेदान्तानाम्, तत्प्रतिपादकप्रमाणाभावात् ।

नन्वपौरुषेया वेदाः संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादा-त्मवदित्यनुमानमस्तीति चेत्,मैवम्, विशेषणासिद्धेः, पौरुषेयवेदवादिभिः प्रलये संप्रदायविच्छेदस्याभ्युपगमात् ।

अस्मर्यमाणकर्तृकत्वं किमप्रमीयमाणकर्तृकत्वं विवक्षितम् उत स्मरणागोचरकर्तृकत्वम् ।

नाद्यः, "तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" "त्रयो वेदा अजायन्त" "ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यादिदं सर्वमसृजत ऋचो यजूंषि सामानी"त्यादिश्रुतिभिः कर्तुः प्रमीयमाणत्वात् ।

नापि द्वितीयः, विकल्पासहत्वात् ।

तथाहि किमेकेनास्मरणं विवक्षितमुत सर्वास्मरणम् ।

नाद्यः, मुक्तश्लोकादावनैकान्तिकत्वात् ।

न द्वितीयः, सर्वास्मरणस्यासर्वज्ञविज्ञानाविषयत्वात् ।

ननु "वाचाविरूपनित्यया" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" "नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् । अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा"॥ इत्यादिश्रुतिस्मृतिवाक्येभ्यो वेदस्य नित्यत्वावगमात् पौरुषेयत्वप्रतिपादकानि कल्पादौ तत्संप्रदायप्रवर्तकत्वपराणीति चेत्, मैवम्, "वाचाविरूपनित्यये"त्यस्य वाक्यस्य "वृष्णो चोदस्व सुष्टुति"मिति वाक्यशेषादग्निस्तुतिविधिपरत्वावगमात्, अन्यार्थदर्शनस्य प्राप्त्यभावे प्रमाणत्वानुपपत्तेः, 'यो वै वेदांश्च प्रहिणोती'त्यस्य च पौरुषेयत्वापौरुषेयत्वयोः साधारणत्वात्, स्वयं निर्मायापि वेदानां प्रदानसंभवात्, 'मृत्युप्रोक्तं सनातन'मित्यस्य वाक्यस्यो"क्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयत"इति वाक्यादुपाख्यानानुवचनश्रवणप्रशंसापरत्वात्, "अनादिनिधना नित्या"इति स्मृतेश्च, "प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयत" इति स्मृत्यन्तरविरोधेनानिर्णायकत्वात् ।

एवं च नित्यत्वप्रतिपादकानामन्यार्थपरतया पौरुषेयत्वप्रतिपादकवाक्याबाधकत्वात् पौरुषेयत्वमेव वेदानां निश्चिनुमः, अनुमानतोऽपि तथात्वमध्यवस्यामः, वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् कालिदासवाक्यवदिति, वेदवाक्यान्याप्तप्रणीतानि प्रमाणत्वे सति वाक्यत्वान्मन्वादिवाक्यवत् ।

ननु,

"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।

वेदाध्ययनवाक्यत्वादधुनाध्ययनं यथा" ॥

इत्यनुमानात् सम्प्रतिसाधनतेति चेत्, मैवम्, सर्ववेदाध्ययनपक्षीकारे दृष्टान्तासिद्धेः, अतीतकालीनाध्ययनपक्षीकारे चांशतः सिद्धसाधनत्वात्, सर्गकालीनाध्ययनपक्षीकारे सर्गमनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धेः ।

"भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।

भारताध्ययनत्वेन सांप्रताध्ययनं यथा" ॥

इत्याभाससमानयोगक्षेमत्वात्,

अथ तत्र कर्तृस्मृत्या बाधः,

"कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।

को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्" ॥

तर्हीहापि सकर्तृकताप्रतिपादकश्रुतिभिर्बाध इति समानम्, विपक्षे चाप्राप्रणीतत्वाद्बालोन्मत्तादिवदप्रामाण्यप्रसङ्गो बाधकस्तर्कः ।

अथ बालोन्मत्तादिवाक्यानामनाप्तप्रणीतत्वेनाप्रामाण्यम्, इह तदभावादाप्तवाक्यवत् प्रामाण्यमुपपद्यत इति चेत्, मैवम्, अनाप्ताप्रणीतवाक्यस्य जगत्याप्तप्रणीतत्वनियमदृष्टेः, अन्यथा वक्तुरभावे वाक्यस्योत्पत्तिप्रतीत्योरसंभवात् ।

अथाभिव्यक्तिरेवं शब्दानां वक्तृव्यापाराच्चोत्पत्तिः, मैवम्, एवं सति पाषण्डाद्यागमानामपि नित्यत्वप्रसङ्गात् ।

किंच शब्दोऽनित्यः कृतको वा सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वाद् घटवदित्यनुमानेन शब्दानां कृतकत्वेन पौरुषेयत्वसिद्धिः ।

न च मीमांसकं प्रति योगिव्यवच्छेदार्थमस्मदादिपदं व्यर्थं तेन योगिनामनभ्युपगमादिति वाच्यम्, स्वमते व्यभिचारनिवारणार्थत्वात्, तथा च चिरन्तनाचार्याणामपि स्वमते व्यभिचारनिवारणार्थं विशेषणोपादानं दृश्यते, नित्यः शब्दो ध्वनिधर्मान्यत्वे सति श्रावणत्वात् शब्द-

त्ववर्दिति, नहि वर्णानित्यत्ववादिनो मते वर्णातिरिक्ता ध्वनय उदात्ता-दयो वा तद्धर्माः सन्ति ये व्यावर्त्येरन्,स्वमते तु ध्वनेस्तद्धर्माणां चोदात्ता-दीनां सद्भावादुपपद्यते ध्वनिधर्मान्यत्वे सतीति विशेषणम् ।

न चोपान्त्यादिशब्देषु भागासिद्धिः, श्रोत्रग्राह्यशब्दविशेषस्यैव पक्षीकरणात् ।

न चैवमपि विशिष्टधर्मिहेत्वोरसिद्धिः, तत्तच्छ्रोत्रेष्वेकस्यैव शब्दस्य समवायानङ्गीकारादेकस्य शब्दस्य बहूनां प्रत्यक्षत्वानुपपत्तेरिति वाच्यम्, शब्दनित्यत्वानुमानेऽप्यस्य दोषस्य तुल्यतया स्वव्याघातकत्वेन जात्युत्तर-त्वापत्तेः ।

तथाहि भवदिन्द्रियग्राह्यः शब्दः पक्षोऽस्मदिन्द्रियग्राह्यो वा ।

नाद्यः, प्रतिवादिनं प्रत्यसिद्धेः ।

न द्वितीयः, वादिनं प्रत्यसिद्धेः ।

तस्माल्लोकप्रसिद्धशब्दत्वजात्याधार एव शब्दो नित्यत्वसाधने पक्ष इति वाच्यम्, एवमनित्यत्वसाधनेऽपीति न कश्चिद्दोषः ।

न च स एवायं गकार इति प्रत्यभिज्ञाप्रत्यक्षविरोधात् कालात्य-यापदिष्टमनित्यत्वानुमानम्, प्रत्यभिज्ञाया जातिविषयत्वेन व्यक्तिविषय-त्वेन वा संदिह्यमानाया बाधकतानुपपत्तेः ।

ननु विवादाध्यासितः कालो वेदाध्ययनयुक्तः कालत्वात् संप्रतिप-न्नकालवदिति प्रत्यनुमानविरोध इति चेत्, मैवम्, विकल्पासहत्वात् ।

तथाहि किं वेदप्रणयनात् प्राक् कालः किं वा तदुत्पादोत्तरकाल उत सर्गकालः पक्षीक्रियते, पक्षत्रयेऽपि मीमांसकस्य धर्म्यसिद्धिः, प्रथमे च प्रतिज्ञापदयोर्व्याघातोऽतिरिच्यते कालिदासादिवाक्यपाठेऽप्येवमनुमानो-त्थानादाभाससमानयोगक्षेमता चानुमानस्य ।

नन्वशरीरस्येश्वरस्य ताल्वादिविवृतिरूपवर्णोच्चारणासंभवात् कथं तत्प्रणीतत्वं वेदस्येति चेत्, मैवम्, स्वभावतोऽशरीरस्यापि परमेश्वरस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणोपपत्तेः ।

तदेवं वेदे पौरुषेयतानुमानस्य निरस्तसमस्तदूषणतया वेदाः पौरुषेया इति प्राप्तम्, अत्र समाधिरभिधीयते ।

श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम् ।
मानान्तरोपलब्धेऽर्थे रचना त्वनुमीयते ॥ ३१ ॥

इति ।

किमिदं पौरुषेयत्वं नाम यत्र श्रुतयः स्मृतयश्च प्रमाणत्वेनोदाहृताः, किं पुरुषाधीनोत्पत्तिमत्त्वं वेदानां पौरुषेयत्वमुत प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वम्, तत्राद्योऽङ्गीक्रियते, आकाशवन्नित्यत्वेन सर्वगतत्वेन च कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणप्रतिपत्तिक्रमविशिष्टानां पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्तत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां सांप्रतमपि पुरुषाधीनोत्पत्तिमत्तया सर्गसमयेऽपि श्रुत्या तथात्वस्य प्रतिपादयितुमुचितत्वात् ।

द्वितीयस्तु न, प्रमाणान्तरेणार्थमुपलभ्य तत्रेश्वरेण वेदा विरचिता इति श्रुतिभिरप्रतिपादितत्वात् ।

न च पुरुषाधीनोत्पत्तिमत्त्वश्रवणान्यथानुपपत्त्यैव प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं सिध्येत्, इदानीमस्मदादिभिरुच्चार्यमाणवेदवाक्येषु मालतीमाधवादिवाक्येषु च व्यभिचारात्, एतेन प्रमाणभूतवाक्यस्य रचनान्यथानुपपत्त्या मानान्तरोपलब्धार्थे विरचितत्वकल्पनापि प्रत्युक्ता, अस्मदादिभिरुच्चार्यमाणमन्वादिवाक्येषु व्यभिचारात् ।

किंच यदि विरचितत्वान्यथानुपपत्तिर्मानान्तरोपलब्धेऽर्थे रचनां कल्पयेत्, हन्तैव "ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्या"दिति वेदानामग्न्यादिभ्यो जन्मश्रवणात् तत्तत्कर्तृकतयेश्वरकर्तृकत्वनियमो न स्यात् ।

अथ "तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे" इत्यादिवाक्येभ्यो वेदानामीश्वरकर्तृकत्वाधिगमादधिष्ठातृदेवतापरं तत्तद्वाक्यमिति कल्प्येत, तर्हि "ब्रह्म स्वयंभु" "वाचाविरूपनित्यया" "अनादिनिधना नित्या

वागुत्सृष्टे"त्यादिश्रुतिस्मृतिशतेभ्योऽपि वेदानां नित्यत्वावगमात् "तस्माद्यज्ञा"दित्यादिवाक्यं संप्रदायप्रवर्तकत्वपरमिति कल्पना न प्रकृतेऽपि दण्डवारिता।

नन्वेषामन्यपरत्वान्नैतेभ्यो नित्यत्वसिद्धिरिति चेत्, मैवम्; देवताधिकरणन्यायेन प्रमाणान्तरप्राप्तिविरोधयोरसतोरन्यपराणामपि स्वार्थे प्रामाण्योपपत्तेः।

एतेन वाक्यत्वादिति पौरुषेयत्वानुमानमपि परास्तम्, पुरुषप्रणीतत्वमात्रे साध्ये सिद्धसाधनत्वात्, प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वसाधने च मालतीमाधवादिष्वनैकान्तिकत्वात्, तथा प्रमाणत्वे सति वाक्यत्वादाप्तप्रणीतत्वानुमानेऽपि सिद्धसाधनता, आप्तेनोच्चार्यमाणतया तत्प्रणीतत्वस्यापौरुषेयवादिभिरप्यभ्युपगमात्, प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वानुमाने तु हेतोरन्यथा सिद्धिः, अस्मदादिभिरुच्चार्यमाणेदानीन्तनवेदवाक्यानामिव सर्गकालीनानामपि तेषामीश्वरेणोच्चार्यत्वमात्रेणापि प्रमाणवाक्यत्वोपपत्तौ प्रमाणान्तराधिगतिपूर्वकविरचितत्वस्यानुमातुमशक्यत्वात्, तस्य च सर्वज्ञत्वादतीतकल्पान्तान्तर्गतवेदापरोक्ष्यसंभवात्, अविग्रहस्यापि तस्य भक्तानुकम्पितया लीलाविग्रहग्रहणेन तदुच्चारणोपपत्तेश्च, एतेन सर्गकालीनाध्ययनस्य पूर्वपूर्ववेदाध्ययनपुरःसरत्वमपि समर्थनीयम्।

न चाश्रयासिद्धिः, वेदान्तिभिः सर्गाङ्गीकारात्।

न च भारताध्ययनस्य तथात्वप्रसङ्गेनाभाससमानयोगक्षेमता, तत्र दृढतरकर्तृस्मरणेन बाधात्।

न चेहापि कर्तृश्रुत्या बाधः, तस्याः संप्रदायप्रवर्तकत्वपरतयाप्युपपत्तेः, अन्यथा नित्यत्वप्रतिपादकवाक्यानामनवकाशत्वप्रसङ्गात्, भारतस्य नित्यत्वप्रतिपादकप्रमाणाभावाच्च।

न च वेदानामनाप्ताप्रणीतत्वादाप्तप्रणीतत्वमनुमातुं युक्तम्, आत्माकाशादौ व्यभिचारात्।

अथ शब्दत्वे सतीति विशेषणाददोषः, मैवम्, आप्तप्रणीततामात्रस्य पूर्वोक्तन्यायेन वेदेऽप्यङ्गीकारात् ।

न चैवं सति पाषण्डाद्यागमानामपौरुषेयत्वम् । मानान्तरेणार्थमुपलभ्य तत्तत्पुरुषविरचितत्वस्य सौगतादिभिः स्वयमेवाङ्गीकारात्, प्रसिद्धेश्च ।

न च सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियप्रत्यक्षतया वर्णानां कृतकत्वानुमानम्, अस्मदादिबहिरिन्द्रियप्रत्यक्षस्य कालाकाशादेर्नित्यत्वेन भाट्टं प्रत्यनैकान्त्यात्, सत्प्रतिपक्षत्वाच्च, श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदिति भाट्टमतेन प्रयोगसंभवात् ।

न च श्रोत्रं न नित्यद्रव्यग्राहकम् अनित्यभूतविशेषगुणग्राहकं वा बहिरिन्द्रियत्वादिन्द्रियत्वाद्वा चक्षुर्वदिति प्रत्यनुमानबाधः, प्रथमानुमाने नयनस्य नित्यगगनादिग्राहकत्वेन दृष्टान्तस्य साध्यवैकल्यात्, द्वितीये च ध्वनिग्राहकतया सिद्धसाधनत्वात्, व्यक्तिभेदासिद्धौ च स एवायं गकार इति प्रत्यभिज्ञायां जातिविषयत्वकल्पनानुपपत्तेः, तद्विरोधश्चानित्यत्वानुमाने दुर्वारः ।

न च द्रुतो गकारो विलम्बितो गकार इति विरुद्धधर्मसंसर्गित्वाद्गकारव्यक्तिभेदसिद्धिः, तस्याप्रतीतेर्ध्वनिविषयतया वर्णविषयत्वाभावेन प्रामाणिकविरुद्धधर्मसंसर्गस्यासिद्धेः, प्रातीतिकस्य च तस्य मणिकृपाणादिष्विवानुमानस्य भेदासाधकत्वात्, वेदान्तवादिभिः सर्गस्य तद्विशेषितकालस्य चाङ्गीकारात्, अतीतकालशब्देन तत्पक्षीकारेणानुमानप्रवृत्तावपि न धर्म्यसिद्धिः ।

न चाभाससमानयोगक्षेमता, भारताध्ययनानामनादित्वनिरासेन पुरस्तान्निरस्तत्वात् ।

एवमपौरुषेयतया वेदान्तानामसंभाविताशेषपुरुषसंसर्गेभ्यस्तेभ्यो विगलितनिखिलभेदा विशुद्धब्रह्मप्रमितिः सिध्यतीति सिद्धम् ॥ १०५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां तत्त्वप्रदीपिकायां प्रथमः परिच्छेदः ॥ १ ॥

॥ श्रीः ॥

# ॥ योगवार्त्तिकम् ॥

( *Continued from page* 133. Vol. V. )

अपरवैराग्यमुक्त्वा परवैराग्यमाह ॥

## तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

तदिति वैराग्यं परामृश्यते, तथा चात्म*द्वयान्यतरसाक्षात्काराभ्यासाद्धेतोरुत्पद्यमानं सकलगुणेषु वैतृष्ण्यं परं श्रेष्ठं वैराग्यमित्यर्थः । पूर्वसूत्रोक्तवैराग्यादस्य भेदं दर्शयति । दृष्टेत्यादिना । पूर्वसूत्रे विषयदोषदर्शनाद्विषयेष्वेव वैराग्यमुक्तं न तु ज्ञाने, तदानीं ज्ञानेपि विनाशित्वादिदोषदर्शनसाम्येपि नालंबुद्धिरूपं वैराग्यं संभवति अविद्यानिवृत्त्याख्यप्रयोजनवत्त्वात्, अत्र तु सूत्रे ज्ञानेनाविद्यानिवृत्त्यादौ सिद्धे तेनैव दोषदर्शनेनानात्मत्वदृष्ट्या च ज्ञानसाधारणेष्वखिलकार्यकारणेष्वात्मतृप्तस्योपेक्षेति वैराग्ययोर्भेद इति वाक्यार्थः । तच्छुद्धीति । पुरुषशुद्धिप्रविवेकश्चितिशक्तिरपरिणामिनीत्यादिना दर्शितस्तेनाप्यायिता तृप्ता समाप्तपुरुषार्था बुद्धिर्यस्येति विग्रहः । व्यक्ताव्यक्तेति । व्यक्ताव्यक्ते स्थूलसूक्ष्मे कार्ये धर्मावाश्रिते येषु सत्त्वादिगुणेषु तेभ्यः, तैः कार्यैः सहितेभ्यस्तेभ्य इति यावत् । तद्द्वयमिति । तत्तस्मादुभयं परस्परभिन्नं वैराग्यमित्यर्थः । द्वितीयवैराग्यस्य परत्वे हेतुमाह । तत्र यदुत्तरमिति । ज्ञानप्रसादमात्रं वैराग्यमित्यागामिनान्वयः । ज्ञानस्य प्रसादश्च स्वयं व्याख्यास्यते । ननु वैतृष्ण्यं तृष्णाविरहरूपं वैराग्यं सूत्रकारेणोक्तं तद्विहाय कथं भाष्यकारेण ज्ञानरूपं तदुच्यतइति चेत्, न । शब्दभेदेप्यर्थाभेदात् । नह्यभावोस्मन्मतेतिरिक्तो

* सूत्रे पुरुषपदं बुद्धेरप्युपलक्षणं तदाह । आत्मद्वयेति । आत्मद्वयं बुद्धिपुरुषरूपं, बुद्धिश्च स्थूलसूक्ष्मभेदेन बुद्धिप्रकृतिरूपा । तथा च प्रकृतिबुद्ध्योः पुरुषस्य वा साक्षात्कारेत्यर्थः । केचिदन्यतरसाक्षात्कारस्यान्यत्र तत्प्रयोजकत्वानुक्तेरत्रात्मद्वयात्प्रकृतिबुद्धिरूपात् पुरुषस्य यः साक्षात्कारो विवेकेन दर्शनमित्यर्थमुपवर्णयन्ति । केचिच्चात्महेयान्यतरेतिपाठं प्रकल्प्य हेयपदेन बुद्ध्यादेः संग्रह इति वर्णयन्ति । आत्मसाक्षात्कारेतिपाठस्तु सूत्रभाष्यवाचस्पत्यादिसकलयोगग्रन्थानुगुणोऽत्र कल्प्य इति परे । रा० शा० ॥

ऽस्ति, अधिकरणस्यावस्थाविशेषस्यैवाभावत्वात् । तथा च चित्तस्यैव तादृशी ज्ञानावस्थैव तृष्णाविरह इति । यदि च सुषुप्त्यादौ तृष्णाविरहोपेक्षितस्तदा ज्ञानप्रसादयोग्यतैव परवैराग्यमुच्यतां योग्यता च निर्मलसत्त्वतेति । अपि च भवतु वैतृष्ण्यमेव वैराग्यं तथापि ज्ञानप्रसादेनैव वैतृष्ण्यगतो विशेषोऽनुमीयतइति लिङ्गलिङ्गिनोरभेदोपचारात्सूत्रभाष्ययोर्न विरोधः । विरामप्रत्ययाभ्यासपूर्व इत्यागामिसूत्रेऽपि परवैराग्यस्य प्रत्ययत्वलाभाच्चेति । ज्ञानप्रसादस्य लक्षणमाह । यस्योदयइति । यस्य ज्ञानप्रसादस्योदये सति । एतस्यैव विवरणं प्रत्युदितख्यातिरित्यन्नात्मज्ञानो योगीति । प्रापणीयं ज्ञानं प्राप्तं सिद्धं यतः क्षीणा अविद्यादयः क्षेतव्याः क्लेशाः । अतश्च श्लिष्टानि निःसंधीनि पर्वाणि यस्य स श्लिष्टपर्वा भवसंक्रमो देहाद्देहान्तरसंचाराख्यः संसारश्छिन्नः, पुनर्न भवितेति यावत् । यस्य संसारस्याविच्छेदात् जन्ममरणप्रवाहो ऽतिदुःखदो भवतीत्येवं मन्यतइत्यन्वयः । ज्ञानप्रसादमात्रमित्युक्तं शब्दान्तरेण विवृणोति । ज्ञानस्यैवेति । ज्ञानस्य परा काष्ठा च विवेकख्यातावलंप्रत्ययो दुःखात्मिकेयमपि शाम्यत्विति रूप इत्यर्थः । अस्य ज्ञानकाष्ठात्वे हेतुमाह । एतस्यैवेति । एतस्यैव यतो ज्ञानप्रसादस्य केवलं नान्तरीयकं नियतम् । एतस्मिन्नेव सति कैवल्यमावश्यकं नान्यस्मिन् ज्ञाने यमनियमादौ वैराग्ये वा तत्सत्त्वेऽप्यसंप्रज्ञातानुदयेनाशेषतः प्राचीनकर्मक्षयानियमतः कषायसंभवतश्च मोक्षे विलम्बसम्भवादिति । तदेवं सामान्यतो योगस्तत्साधनं चोक्तमिदानीं विशेषतो योगतत्साधने वक्तव्ये तत्रादौ योगगतमवान्तरं विभागं दर्शयिष्यति सूत्रकारः । तत्सूत्रावताराय पृच्छति । अथोपायेति । उपायद्वयेन अभ्यासवैराग्याभ्यां, निरुद्धराजसतामसवृत्तेः पुरुषस्य कथं कैः प्रकारभेदैः संप्रज्ञातयोगः शास्त्रेषु कथ्यतइत्यर्थः । अत्र प्रत्युत्तरं सूत्रम् ॥

वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञातः ॥ १७ ॥

अस्यार्थः । साक्षात्कारविशेषरूपैर्वितर्कादिभिरनुगमात् हेतोः सम्यक् प्रज्ञावत्त्वेन योगः संप्रज्ञातनामा भवति । वितर्कादिभूमिभेदैश्चतुर्धा विभक्त इत्यर्थादिति । अत्र रूपानुगमादिति पाठः प्रामादिकत्वादुपेक्ष

णीयः । भाष्ये वितर्कविकलः सविचार इत्यादिप्रयोगेषु रूपपदाप्रयोगात् आद्यसूत्रेपि भाष्यकृता वितर्कानुगतो विचारानुगत इत्यादेरेव प्रयोगाच्च । यच्च तत्र पाठे वितर्कादीनां रूपैरनुगमादिति कस्य चिद्व्याख्यानं तदपि वैयर्थ्यादुपेक्षणीयम् । वितर्कादिचतुष्टयं व्याचष्टे । वितर्कश्चित्तस्येत्यादिना । योनिजं वा विराजं वा चतुर्भुजादिकं वा स्थूलं षाड्विंशतितत्त्वसंघातमाश्रित्य प्रथमं भावना प्रवर्त्तते स आलम्बन,मदृष्टजातीयेषु चैतन्यपर्यन्तेषु विवेकेन पूर्वं चिन्तनासंभवात् । योगबलादेव हि तानि पश्चात्साक्षात् क्रियन्तइति न तान्यालम्बनानि । तथा चैकस्मिन्नेवालम्बने क्रमेण चतुष्प्रकारः संप्रज्ञातो भवति । तत्रालम्बने विराट्शरीरादौ प्रथमं यश्चित्तस्य स्थूलाकारत्वात्स्थूल आभोगः परिपूर्णता । स्थूलयोर्भूतेन्द्रिययोरदृष्टाश्रुतामताशेषविशेषसाक्षात्कारः सवितर्क इत्यर्थः । विशेषेण तर्कणमवधारणं वितर्कस्तेनानुगतो युक्तो निरोधो वितर्कानुगतनामा योग इति भावः । सवितर्कनिर्वितर्कस्यावान्तरभेदौ वक्ष्यति । तत्र च वितर्कशब्दो विपरीततर्कणार्थकः । शब्दार्थज्ञानविकल्पस्यैव तस्मिन्सूत्रे विकल्पशब्दार्थावगमात् । सूक्ष्मो विचार इति । तत्रैवालम्बने कारणत्वादिनानुगता ये प्रकृतिमहदहंकारपञ्चतन्मात्ररूपा भूतेन्द्रिययोः सूक्ष्मा अर्थास्तदाकारत्वात्सूक्ष्मो यश्चित्तस्याभोगः सूक्ष्मगताशेषविशेषसाक्षात्कारः स विचार इत्यर्थः । विशेषेण चरणं सूक्ष्मवस्तुपर्यन्तमिति विचारस्तेनानुगतो युक्तो निरोधो विचारानुगतनामा योग इति भावः । सविचारनिर्विचारौ चास्य विचारस्यावान्तरभेदौ वक्ष्यति तत्र च विचारशब्दो मन्दचरणार्थकस्तान्त्रिकपरिभाषा वा । तद्भाष्ये सूक्ष्मविषयकसमाधेः कार्याद्युपरागस्यैव विचारशब्दार्थत्वावगमात् । आनन्दो ल्हाद इति । तत्रैवालम्बने यश्चित्तस्य विचारानुगतभूम्यारोहात्सत्त्वप्रकर्षेण जायमाने ल्हादाख्यसुखविशेषे आभोगः साक्षात्कारो भवति स आनन्दविषयकत्वादानन्द इत्यर्थः । तेनानुगतो युक्तो निरोध आनन्दानुगतनामा योग इति भावः । तदानीं चानन्दगोचर एवाहं सुखीति चित्तवृत्तिर्भवति न सूक्ष्मवस्तुष्वपीति विचारानुगतात् विशेषः । तथा च गीता ।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
तं विद्याद् दुःखसंयोगं वियोगं योगसंज्ञितम् ।

इति । आनन्दस्य च सानन्दनिरानन्दत्वेन भेदो नास्ति सूत्रभाष्ययोरवक्ष्यमाणत्वादिति । अत्र कश्चित् ल्हादो ल्हादवानिन्द्रियवर्गः । तथा च इन्द्रियाकारत्वादिन्द्रियरूपो यश्चित्तस्याभोगः साक्षात्कारः स आनन्द इत्यर्थं वदति । तन्न । एतादृशलक्षणायां प्रमाणादर्शनात् । इन्द्रियस्यापि स्थूलतया तत्राभोगस्यापि वितर्कमध्यएव प्रवेशाच्च कारणत्वमेव सूक्ष्मत्वमिति भाष्ये वक्ष्यमाणत्वेन केवलविकृतित्वरूपस्यास्थूलत्वस्येन्द्रियसाधारण्यादिति । किं च । इन्द्रियगोचरसंप्रज्ञातस्यानन्दानुगतत्वे सति परोक्तरीत्या तत्रापि वृत्त्युपरागानुपरागाभ्यां सानन्दनिरानन्दरूपावान्तरविभागसंभवात्तदवचनेनागामिसूत्रभाष्ययोर्न्यूनता स्यात् । अस्मद्व्याख्याने चावान्तरविभागो न संभवतीति न तदवचनन्यूनता । यत्तु ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिरितिसूत्रे ग्राह्यात् पृथगिन्द्रियेषु संप्रज्ञातो वक्ष्यते तत्प्रकारान्तरेण संप्रज्ञातस्याखिलविषयसंकलनार्थमेव न तु वितर्कानुगतविचारानुगताभ्यामिन्द्रियसमापत्तेरानन्दानुगतरूपभेदमभिप्रेत्य तथा तात्पर्यग्राहकलिङ्गाभावादिति दिक् । एकात्मिका संविदस्मितेति । एकशब्दोऽत्र केवलवाची एकात्मिका एक एवात्मा अस्यां विषयत्वेनास्तीत्येकात्मिका । तथा चोक्तम् । एकालम्बने या चित्तस्य केवलपुरुषाकारा संवित् साक्षात्कारो ऽस्मीत्येतावन्मात्राकारत्वादस्मितेत्यर्थः । सा च जीवात्मविषया परमात्मविषया चेति द्विधा वक्ष्यते तेनानुगतो युक्तो निरोधो ऽस्मितानुगतनामा योग इति भावः । अस्य अस्मिताया अपि सास्मितनिरस्मितरूपो विभागो नास्ति सूत्रभाष्ययोरवक्ष्यमाणत्वात् केवलपुरुषज्ञानस्य निर्विकल्पकमात्ररूपतया द्विविधत्वासंभवाच्च । देहेन्द्रियाद्युपरागे तु सविकल्पानां योगानां वितर्कानुगतादिभूमित्रयएवान्तर्भावादिति । अत्र चास्मिताशब्दो विविक्तचेतनाकारतामात्रोपलक्षकस्तेनोदासीनभावेन य ईश्वरचेतनस्वसाक्षात्कारस्तस्यापि

संग्रहः सोपाधिकेश्वरसंप्रज्ञातस्य च विचारानुगते प्रवेशः । एताश्च संप्रज्ञातभूमय आनन्दानुगते विचारानुगते प्रवेश्य मोक्षधर्मवाक्येनोक्ताः ॥

वितर्कश्च विवेकश्च विचारश्चोपजायते ।
मुनेः समादधानस्य प्रथमं योगमादितः ॥

इति । प्रथमं योगं संप्रज्ञातं समादधानस्य कुर्वतः । आदितः क्रमाज्जायतइत्यर्थः ॥

योगारम्भे मूर्त्तहरिममूर्त्तमथ चिन्तयेत् ।
स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे शनैर्नयेत् ॥

इति । स्मृतिद्वयं चास्मिन्नेवोत्सर्गिकक्रमे प्रमाणमिति । इदानीं 'संवेद्ये केवले ध्यानं न कुर्याद्रघुनन्दने'त्यादिस्मृत्यनुसारेण पूर्वपूर्वभूमिकासूत्तरोत्तरभूमिविषयस्य चिन्तनमुत्तरोत्तरभूमिषु च पूर्वपूर्वविषयस्य परित्यागं विदधाति । तत्र प्रथमश्चतुष्टयानुगत इत्यादिना । तत्र प्रथमः सवितर्को वितर्कानुगतः समाधिश्चतुष्टयानुगतो वितर्कादिचतुष्टयेनानुगतो भवति । तप्तायःपिण्डवदेकीभावेन स्थूलसाक्षात्कारे पुरुषपर्यन्तानां सर्वेषामेव भानात् । अत्र च विचारादित्रयविषयग्राहकतामात्रेण विचारादित्रयानुगतत्वं विवक्षितमन्यथा सांकर्यापत्तेः । वितर्कानुगते समाधौ केवलात्मपर्यन्तसाक्षात्काराभावाच्च । एवमुत्तरेष्वपि बोध्यम् । द्वितीय इति । द्वितीयो विचारानुगतो वितर्कविकलः वितर्कभूमिजयात्तत्परित्यागेन तद्विषयविकलः । तृतीय इति । तृतीय आनन्दानुगतो विचारविषयेणापि विकलः । चतुर्थ इति । चतुर्थोस्मितानुगतस्तद्विकल आनन्देनापि विकल इत्यतोस्मितामात्र इत्यर्थः । असंप्रज्ञातात्संप्रज्ञातस्य भेदमाह । सर्व एतइति । सालम्बनाः साधारणा एकाग्रवृत्तियुक्ता इति यावत् । समाधयो योगाः कार्यकारणयोरभेदादिति प्रागेव व्याख्यातम् । क्रमप्राप्तमसंप्रज्ञातमवतारयितुं पृच्छति । अथेति ॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोन्यः ॥ १८ ॥

वृत्त्यापि विरम्यतामिति प्रत्ययो विरामप्रत्ययः परं वैराग्यं ज्ञानेप्यलंबुद्धिर्ज्ञानमपि शाम्यत्वित्येवंरूपा तस्या अभ्यासात् पौनःपुन्याज्जायत-

इत्याद्यविशेषणार्थः । तथा चाद्यविशेषणेनोपायकथनं मध्येन लक्षणकथनमन्त्येन लक्ष्यकथन,मन्यो ऽसंप्रज्ञात इत्यर्थः । अन्त्यं विशेषणद्वयं व्याचष्टे । सर्वेति । समाधिर्योगः । आद्यविशेषणस्य पर्यवसितार्थमाह । तस्य परं वैराग्यमुपाय इति । नन्वेकाग्रतारूपोऽभ्यासो ऽप्यत्र साक्षात्कारणं कथं न भवति संप्रज्ञातद्वेत्याकाङ्क्षायामाह । सालम्बन इति । पुरुषपर्यन्तं कस्मिंश्चाप्यालम्बने चित्तस्यैकाग्रतारूपो ऽभ्यासो नासंप्रज्ञातस्य साक्षात्साधको भवति आलम्बनवृत्त्यविरोधित्वात् । अतः पुरुषख्यातिपर्यन्तास्वखिलवृत्तिषु अलंबुद्धिरूपो विरामप्रत्ययः परवैराग्याख्य एवासंप्रज्ञातेन साधनतयालम्बनीक्रियते आश्रीयते । स यतो निर्वस्तुको, नास्ति वस्तु चिन्तनीयं यत्रेत्यर्थः । ननु तस्य निर्वस्तुकत्वं कथं तदाश्रयणे हेतुस्तत्राह । सर्वार्थशून्य इति । सोऽप्यसंप्रज्ञातो ध्येयार्थशून्यः । अतोऽखिलध्येयवैराग्यमेव तत्र हेतुर्युक्त इत्यर्थः । सूत्रस्य फलितार्थमाह । तदभ्यासेति । कृतवैराग्याभ्यासं चित्तं निरालम्बनं निर्विषयमभावप्राप्तमिव वृत्तिरूपकार्याकरणात् मृतकवद्भवति इत्येषोऽवस्थाविशेष इत्यादेरयमर्थः* । निर्बीज इति । संस्कारद्वारा जन्म बीजं ज्ञानकर्म तच्छून्यावस्थेत्यर्थः । संस्काराख्यसंसारबीजोन्मूलक इति वार्थः । असंप्रज्ञातस्यापि निमित्तभेदात् द्वैविध्यं सूत्राभ्यां सूत्रकारो वक्ष्यति । तदेव द्वैविध्यं युक्तिसिद्धं पूर्वाचार्योक्तक्रमेण दर्शयति तयोः सूत्रयोरवतारणाय । स खल्वयं द्विविध इति । सोयमसंप्रज्ञातः, आगामिसूत्रेऽस्य प्रज्ञापूर्वकत्वदर्शनात् † । उपायप्रत्ययो वक्ष्यमाणश्रद्धाद्युपायकारणको योगिनामिह लोके भवति । इह लोके योगभ्रष्टानां च देवताविशेषतापन्नानां देवलोके भवप्रत्ययो जन्ममात्रकारणक इति क्रमः । तत्रोपायप्रत्ययं विस्तरेण वदिष्यन् सूत्रकारः सूचीकटाहन्यायेनादौ भवप्रत्ययं वदिष्यतीति

* इत्यादेरयमर्थ इत्यस्य स्थाने इत्यर्थ इति पाठकल्पनं तु युक्तम् । यथाश्रुतपाठे इत्यस्यादेरिति व्युत्पत्त्या तदभ्यासेत्यादिग्रन्थस्य अयमर्थो निर्बीज इतिग्रन्थरूप इत्यर्थः । के चित्तु इत्यादेः पूर्वोक्तग्रन्थस्य अयमर्थः इत्यर्थ इति वर्णयन्ति । रा० शा० ॥

† वचनादिति पाठान्तरम् ।

सूत्रभाष्ययोः क्रमभेदो न दोषायेति मन्तव्यम् । उत्पत्तिक्रमानुसारेण सोऽत्रं क्रममुल्लङ्घ्य पूरयित्वा सूत्रमुत्थापयति । तत्रेति । तत्रोपायप्रत्ययो योगिनां प्रकृष्टयोगानां भवति । स च पश्चाद्वक्ष्यतइति शेषः ॥

## भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

भवो जन्म तदेव प्रत्ययः कारणं यस्येति विग्रहः । विदेहप्रकृतिलयानामिति विभज्य व्याचष्टे । विदेहानामिति । शरीरनैरपेक्ष्येण बुद्धिवृत्तिमतो विदेहा इति विभूतिपादे स्पष्टीभविष्यति । ते च महदादयो देवास्तेषां साधनानुष्ठानं विनैवासंप्रज्ञातयोगो जन्ममात्रनिमित्तको भवति योनिसादृश्येनौत्पत्तिकज्ञानात् । ते हि दैनन्दिनप्रलये कदा चिच्च सर्गकालेपि स्वसंस्कारमात्रोपगतेन चित्तेन संस्कारशेषेण निरोधावस्थेन चित्तेन कैवल्यपदमिव प्राप्नुवन्तो व्युत्थानकाले च स्वसंस्कारस्य देवभावप्रापकसंस्कारस्य विपाकं फलमैश्वर्यं भोगं प्रारब्धकर्मपर्यन्त्वेन अतिवाहयन्ति अतिक्रामन्ति ततो मुच्यन्तइति शेषः । तथा च प्रकृतिलया इति । ईश्वरोपासनया प्रकृतिदेवतोपासनया वा ये ब्रह्माण्डं सावरणं त्यक्त्वा लिङ्गशरीरेण सह प्रकृत्यावरणे गताः तेत्र प्रकृतिलीनाः तेपि च असमाप्तकार्ये चेतसि स्वेच्छयैव प्रकृतिलीने संस्कारशेषे सति असंप्रज्ञातयोगे कैवल्यपदमिव प्राप्नुवन्ति यावदधिकारशेषवशात् चित्तं पुनर्व्युत्थितं न भवति तस्यापि भवप्रत्यय इतिशेषः । अधिकारसमाप्तौ च तेपि मुच्यन्तइत्याशयः । के चित्तु भवन्त्यस्यामिति भवोऽविद्या, तथा चेदं सूत्रमिन्द्रियादिप्रकृत्यन्तचिन्तकानामविद्याकारणकमसंप्रज्ञातं वदन्तीत्याहुः । तन्न । परवैराग्यस्यासंज्ञातहेतुतया तस्याविदुष्य संभवात् । यच्च वायुपुराणे ॥

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकाश्च शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते ।

इति वाक्यं, तद् इन्द्रियाद्युपासकानामनुत्पन्नज्ञानानां कर्मदेवानां तत्तत्पदावस्थितिकालमेव परिच्छिनत्ति न तु तेषामसंप्रज्ञातसमाधिकालान् देहाद्यभावेन वृत्त्यभावकालान् वा इन्द्रियादिचिन्तामात्रेणासंप्रज्ञातानुपपत्तेः वृत्त्यभावस्य कादाचित्कस्य प्रलयमरणादितुल्यत्वेनापुरुषार्थत्वाच्च इन्द्रियाद्युपासकानामिन्द्रियाद्यभिमानिसूर्यादिपदप्राप्तेरेवान्यत्र फलवत्त्वश्रवणाच्चेति ॥

( शेषमग्रे )

काशीस्थराजकीयपाठशालायां { साङ्ख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री । आङ्गलभागे संस्कृताध्यापकः केशवशास्त्री च ।

## ॥ माधवीयधातुवृत्तिः ॥

(*Continued from page* 168. Vol. V.)

चदि आह्लादने दीप्तौ च ॥ चन्दति । चचन्द । चन्दितेत्यादि । चन्दनः । करणे ल्युट् । चन्द्रः । स्फायितञ्चीत्यादिना रक् । चन्द्रकम् । संज्ञायां कन् । चन्द्रिका । टापि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति इत्वमकारस्य, असुप इत्यापो विशेषणम्, स चेदाप् सुपः परो न भवतीति । चन्दिरः । इषिमुषीत्यादिना किरच् ॥ ६९ ॥

त्रदि चेष्टायाम् । त्रन्दति । तत्रन्द । त्रन्दितेत्यादि ॥ ७० ॥

कदि क्रदि क्लदि आह्वाने रोदने च ॥ आह्वाने सकर्मकः । कन्दति । चकन्द । कन्दितेत्यादि । चिकन्दिषति । चाकन्द्यते । चाकन्दीति । चाकन्ति । कन्दयति पुत्रन्देवदत्तेन । गतिबुद्धीत्यत्र शब्दकर्मेति साधनकर्मणोग्रहणात् प्रयोज्यस्य न कर्मत्वं, शाकटायनमते त्वस्यैव सर्वमेतद्वृत्तौ प्रतिपादितं तत एवावगन्तव्यम् । क्रन्दतीत्यादि पूर्ववत् । संक्रन्दयतीति संक्रन्दनः । नन्द्यादित्वाद् ल्युः । आक्रन्दत्यस्मिन्नित्याक्रन्दो देशः । आक्रन्द्यतेरत्तणार्थमाह, आक्रन्द्यतइत्याक्रन्दः शरणम् । कर्मण्यधिकरणे वा घञ् । आक्रन्दं धावति आक्रन्दिकः । 'आक्रन्दाट्ठञ्चे'ति ठञ्ठकौ । अनयोः

स्वरे विशेषः । कन्दरः । बाहुलकाद्दरः । यद्वा । कन्दं वैक्लव्यं राति भीरूणामिति कन्दरः । कन्दलः । बाहुलकाद् लप्रत्ययः । यद्वा पूर्ववद्रातेः कः । कपिलकादीनां संज्ञाछन्दसोरिति लत्वम् । अथ वा लातेरन्तर्भावितण्यर्थात्कः । कन्दली । गौरादित्वाद् ङीष् । एते घटादयो ऽपि । आद्यावेवेत्यपरे ॥ ७३ ॥

क्लिदि परिदेवने ॥ क्लिन्दतीत्यादि । अस्यानुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः, स्वरितेत्सु पाठः क्रियाफलस्य कर्तृगामित्वे ऽपि परस्मैपदं यथा स्यात् ॥ ७४ ॥

शुन्ध शुद्धौ ॥ शुन्धति । शुशुन्ध । शुन्धितेत्यादि ॥ आशीर्लिङि कित्त्वादनिदितामिति उपधालोपे शुध्यात् । तथा यक्यङोरपि शुध्यते, शोशुध्यतइति ॥ यङ्लुकि लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च प्रत्ययलक्षणेन लघूपधगुणो न भवति संयोगान्तलोपस्य पूर्वत्रासिद्धत्वात् । शुधितः । शुधितवान् । शुधित्वा । उदुपधादिति निष्ठायाः कित्त्वविकल्पो न भवति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । अत्र कित्त्वसन्निपातनिमित्तमुदुपधत्वं यदिदं कित्त्वाश्रये नलोपे भवति ॥ धान्तप्रकरणमपहाय संयोगान्तप्रकरणानुरोधेनायमिह निर्दिष्टः । अयं शौचकर्मणि युजादौ । शुध शौचइति दिवादौ । अनुषङ्गो नेह ॥ अतादय उदात्ता उदात्तेतो गताः ॥ ७५ ॥

प्रथमं माङ्गलिकमेधतिं पठित्वा मातृकापाठक्रमेण कवर्गीयान्तानाह ॥

शीकृ सेचने ॥ तालव्यादिः । दन्त्यादिरिति धनपालकाश्यपौ । अत एव षोपदेशलक्षणे सृपिसृजिस्तृस्त्यासीकृसेकृसृवर्जमिति पेठतुः । पुरुषकारस्तु तन्न मृष्यति यदाह । सीकृ इत्यार्या इति धनपालः । तत्र चायं पक्षः शीकर इति प्रयोगाननुगुणः । यो ऽपि षोपदेशलक्षणे सीकृपाठः सो ऽप्येवं प्रत्युक्त इति ॥ शीकते । शिशीके । शीकिता । शीकिष्यते । शीकताम् । अशीकत । शीकेत । आशिषि । शीकिषीष्ट । अशीकिष्ट । अशीकिष्यत । कर्मणि शीक्यतइत्यादि । शिशीकिषते । शेशीक्यते । शेशीकीति । शेशीक्ति । लुङि अशेशीकीत् । हल्ङ्यादिलोपः ।

अशीशीकत् स्यादित्यत्र स्कोरिति लोपो न भवति । निमित्तनिमित्तिनोर्भिन्नपदस्थत्वात् । उक्तं चैवं 'परेश्च घाङ्कयोरि'त्यत्र कैयटे । पदस्येत्यधिकारात् प्रत्यासत्तिन्यायाश्रयणादेकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणमिति । शीकयति । अशिशीकत् । शीका । गुरोश्च हल इत्यकारः । शीकायते । तत्करोत्यर्थे ऽटाट्टाशीकाकोटापोटासोटाप्रुष्टाग्रहणं कर्तव्यमिति क्यङ् । अयमपि पाठस्तालव्यादित्वे प्रमाणम् । अयं क्यङ् तत्करोतीति णिचोऽपवाद इत्येके, सोऽपीष्यत इति न्यासादौ । कान्तत्वादस्मात् क्विप् नोदाहर्तव्यः, स्थितं चैवं 'परेश्च घाङ्कयोरि'त्यत्र भाष्यकैयटयोः, तथा स्कोः संयोगाद्योरित्यत्र वृत्तितद्व्याख्यानेष्वपि । मर्षणार्थोऽयं युजादौ ॥ ७६ ॥

लोकृ दर्शने ॥ लोकते । लोकः । भाषार्थोऽयं चुरादौ ॥ ७७ ॥

श्लोकृ संघाते ॥ श्लोकते । संघातो ग्रन्थः, स चेह ग्रथ्यमानव्यापार इति स्वाम्यादयः । काश्यपादयस्तु ग्रन्थितृव्यापार इति ग्रन्थातिवत्सकर्मक इति, श्लोकैरुपश्लोकाति, उपश्लोकयति । 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिजि'ति णिच् ॥ ७८ ॥

द्रेकृ ध्रेकृ शब्दोत्साहयोः ॥ शब्दोत्साह इति केचित् । यदाह काश्यपः । द्रेकते । शब्देनोत्साहं करोतीति । उत्साहो वृद्धिरिति चन्द्रः । औद्धत्यमिति स्वामी ॥ द्रेकते । दिद्रेके । द्रेकितेत्यादि । द्रेकणः । रषाभ्यामिति णः । एवं ध्रेकत इत्यादि ॥ ८० ॥

रेकृ शङ्कायाम् ॥ आङ् पूर्वः संशये । आरेकं संशयं प्राहुरिति वचनात् । रेकत इत्यादि ॥ ८१ ॥

सेकृ स्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः ॥ अन्त्यौ तालव्यादी । अन्ये दन्त्यादयः । सेकते । सिसेके । सेकिता । स्रेकते । सिस्रेके । स्रङ्कते । सस्रङ्के । स्रङ्किता । श्रङ्कते । शश्रङ्के । श्रङ्किता । श्लङ्कते । शश्लङ्के । श्लङ्किता । इत्यादि । अत्र मैत्रेयः ॥ तृतीयं सेकृ इति तालव्यादिमेकारोपधं पठति । अत्र क्व चित्सीकृ इति दन्त्यादिरपरोऽपि धातुः पठ्यते, तदनार्षम् । सृसृजिस्तृपिस्तृस्त्यासेकृस्त्रवर्जमिति णोपदेशपर्युदासे भाष्यादिष्वपाठात् । अत्र क्षीरस्वामी । अत्र दन्त्यादेः स्थाने तालव्यादिं

पठित्वा अर्थभेदात्पुनः पाठ इत्युक्त्वा पेक्ष इत्यन्ये विकल्पेन बोपदेशं कार्यार्थं पेठुरिति ॥ ८६ ॥

शकि शङ्कायाम् ॥ शङ्कते । शशङ्के । शङ्कितेत्यादि । शिशङ्किषते । शाशङ्क्यते । शाशङ्कीति । शाशङ्कि । लङि ईडभावे । अशाशन् । शङ्कुः ॥ खलशङ्कुपीयुनीलङ्गुलिगु इत्युप्रत्ययान्तो निपातितः । शङ्कुला । बहुलकाद्‌ उलच् । शक्ल शक्ताविति स्वादौ । शक विभाषितो मर्षणइति दिवादौ ॥ ८७ ॥

अकि लक्षणे ॥ अङ्कते । आनङ्के । अङ्कितेत्यादि । अञ्चिकिषते । अनुस्वारपरसवर्णयोः पूर्वत्रासिद्धत्वात् न न्द्राः इति निषेधात् ककारादिर्द्विरुच्यते । न च पूर्वत्रासिद्धीयमद्विर्वचनइति असिद्धत्वनिषेधः । न न्द्रा इत्यस्य निषेधरूपत्वादित्यततै स्थापितम् । आहुश्चात्र स्वामिकाश्यपादयोपि, न न्द्रा इति निषेधात् कादेर्द्विर्वचनम् । प्राङ्कनम् । 'कृत्यच' इति णत्वस्य इजादेः सनुमः, हलन्ताद्धातोः सनुमो यदि भवति तर्हि इजादेरेवेति नियमादभावः । अङ्कुरः । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरजित्युरच् ॥ अकि कुटिलायां गतावित्यये । अङ्क लक्षणइति चुरादौ ॥ ८८ ॥

वकि कौटिल्ये ॥ वङ्कते । ववङ्के । वङ्कितेत्यादि । प्रवङ्कनम् । पूर्ववदणत्वम् । वङ्किः । वङ्क्यादयश्चेति किवन्तो निपातितः । अयं गत्यर्थः पठिष्यते ॥ ८९ ॥

मकि मण्डने ॥ मङ्कतइत्यादि प्रमङ्कनम् । अङ्किवदणत्वम् । मङ्कनः । 'क्रुधमण्डार्थेभ्यश्चे'ति युच् । कर्मकर्त्तरि भूषाकर्मेति यक्‌चिणोर्निषेधाद् मङ्कते कन्या स्वयमेव, अमङ्किष्ट कन्या स्वयमेवेति शप्सिचौ भवतः । मङ्किः । इचितीन् ॥ ९० ॥

कक लौल्ये ॥ लौल्यं गर्वश्चापल्यं च । ककते । चकके । ककितेत्यादि । काकः, घञ् । बाहुलकात्कर्तरि, गत्यर्थः पठिष्यते तस्माद्वा घञ् ॥ ९१ ॥

कुक वृक आदाने ॥ कोकते । चुकुके । कोकितेत्यादि । चुकुकिषते । चुकोकिषते । कुकित्वा । कोकित्वा ॥ रलो व्युपधादिति

किस्त्वविकल्पः । कुकितमनेन, कोकितमनेन । प्रकुकितः । प्रकोकितः । प्रकुकितवान् । प्रकोकितवान् । उदुपधादिति किस्त्वविकल्पः । प्रकोकनम् । प्रकोकणम् ॥ 'हलश्चेजुपधात्' ॥ हलादेरिजुपधात्परो यः कृत् तत्स्थस्य नकारस्य उपसर्गस्थान्निमित्तात्परस्य वा णः इति णत्वविकल्पः । 'कृत्यचः' इत्यस्यापवादः । कोकः । देवसेवमेषादयः पचादिषु द्रष्टव्या इत्यादिशब्दस्य प्रकारार्थत्वादिगुपधात्कं बाधित्वा ऽच् प्रत्ययः । कोकिलः । सलिकल्यनिमहिवडिभडिसण्डिपिण्डिकुकिभूभ्य इलजिति इलच् । कोकिला । जातिलक्षणं ङीषं बाधित्वा ऽजादित्वाट्टाप् । वृक । वर्कते । ववृके । वर्कितेत्यादि । विवर्किषते । वरीवृक्यते । 'रीगृदुपधस्य च' ॥ ऋत्वतोऽभ्यासस्य रीगिति रीगागमः, वरीवृको वक्र इत्यादावल्लोपस्य स्थानिवत्त्वान्न धातुलोप इति वा गुणाभावः । वर्वर्क्ति । वरिवर्क्ति । वरीवर्क्ति । वर्वृकीति । वरिवृकीति । वरीवृकीति । 'रुग्रिकौ च लुकी'ति ऋत्वतोऽभ्यासस्य रुग्रिकौ चकाराद्रीक् । ईटि नाभ्यस्तस्याचि पितीत्यगुणत्वम् । एवं वर्वृक्त इत्यादि ॥ वर्वृकां चकारेत्यादौ यङ्लुकोऽनैमित्तकत्वात् न धातुलोप इति गुणनिषेधाभावः । अवर्वृकीत् । अवर्वर्क् स्यातेत्यत्र स्कोरिति कलोपो भिन्नपदत्वान्नेति सीकतावुक्तम् । लुङि सार्वधातुकाश्रये गुणे नाभ्यस्तस्येति निषिद्धेऽपि सिजाश्रयो भवत्येव प्रत्ययलक्षणेन, अवर्वर्कीत् । अवर्वर्किष्टामित्यादि । हलन्तलक्षणा वृद्धि'र्नेटी'ति निषिध्यते । वर्कयति । अववर्कत् । अवीवृकत् ॥ 'उर्ऋत्' ॥ चङ्परे णावुपधाया ऋकारस्य वा ऋकार इत्यृकारः । इररारामपवादः । वृकः । इगुपधलक्षणः कः । मृगविशेष आयुधजीविसंघविशेषश्च । तत्र द्वितीयार्थाभिधायिनो 'वृकाट्टेण्यणि'ति स्वार्थे टेण्यणि वार्केण्यः । 'ञ्यादयस्तद्राजाः' । 'पूगाञ्ञ्यो ग्रामणीपूर्वादि'त्यारभ्यापादपरिसमाप्तेर्वक्ष्यमाणाः प्रत्ययास्तद्राजसंज्ञा इति टेण्यस्य तद्राजत्वे 'तद्राजस्य बहुषु तेनैवास्त्रिया'मिति लुकि बहुषु वृकाः । तेनैवेति वचनाद्यदि बहुत्वं तद्राजकृतमेवेत्यवगतेर्वार्केण्यमतिक्रान्ता अतिवार्केण्या इत्यादावर्थान्तरकृते बहुत्वे लुग् न भवति । तथा अस्त्रियामितिवचनात् स्त्रियां

टित्वात् ङीपि 'हलस्तद्धितस्य' । हल उत्तरस्य तद्धितयकारस्य लोपो भवतीति परत इत्यादेः परस्येति यकारलोपे यस्येति चेत्यकारलोपे वार्कंणी । वार्केण्यौ । वार्केण्य इति भवति । वर्करस्तरुणः पशुः । बाहुलकादरच् ॥ ९३ ॥

चक तृप्तौ प्रतिघाते चेति धनपालमैत्रेयादयः । चक तृप्तावित्येव क्षीरस्वामिशाकटायनौ । चकते । चेके । चकितेत्यादि । चकोरः । कटिचकिभ्यामोरजित्योरच् । अयं घटादावपि ॥ ९४ ॥ (शेषमग्रे)

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 160. Vol. V.)

३८६ आकूत्यै त्वेत्यादिमन्त्रेण निरुप्तानभिमृशति व्रीहीन् शूर्पे निधाय ब्रह्मणे जुष्टं प्रोक्षामीति मन्त्रावृत्त्या चतुर्वारं प्रोक्षति चर्माभ्युक्ष्य निरस्यति चर्मणि उलूखलं निधाय व्रीहीनवहन्ति त्रिष्फलीकृतान् त्रिः प्रक्षालयति तन्दुलान् चरुस्थाल्यां पवित्रवत्यां निर्वपणपात्रेण निर्वापवदुदकमानयति स्थालीमग्नावधिश्रित्य तिरःपवित्रं निधाय तन्दुलानावपति आज्यं निरुप्याधिश्रयति उभयं पर्यग्निकृत्वा मेक्षणं स्रुवं च संमृज्य चरुं संस्कृताज्येनाभिघार्योदगुद्वासयति अथ परिकर्मिणः गवामागमनकाले ऋत्विग्भ्यः पक्वो ब्रह्मौदन इत्याहुः अध्वर्य्वादयः सर्वे सहागत्य उत्तरत उपविशन्ति ब्रह्मा निरसनोपवेशने करोति यजमानः उद्धरणपात्र्यामुपस्तीर्य ब्रह्मौदनं तस्यां स्थालीमचालयन् उद्धृत्य ओदनमध्ये गर्तं कृत्वा प्रभूतमाज्यमानीय मेक्षणेनावदाय ध्रुवेधसे कवय इति मन्त्रेण जुहोति ततोऽध्वर्य्वादीन् उत्तरतो

ऽनुदिशं परस्परामिमुखमुपविष्टान् आनुपूर्व्येणाचमय्य ओदनसहितां उद्धरणपात्रीं तेषां मध्ये भूमिमुपस्पृशन्नाकर्षन्निव प्रवेशयति यज्ञो मोपनमत्विति मन्त्रेण ओदनं चतुर्धा कृत्वा पृथक् पृथक् पात्रेषु परिवेषयति ऋत्विज ओदनमध्याद् ग्रासत्रयं प्राश्य यजमानं प्रशंसन्ति राद्धस्ते ब्रह्मौदन इति इदं ब्रह्मौदनप्राशनमित्युच्यते ॥

३६० यजमानः ऋत्विग्भ्यः षाण्डं वत्सतरं ददाति ऋत्विजो भुक्त्वाचम्य वत्सतरं प्रतिगृह्णन्ति अन्यः कश्चिद्ब्राह्मण उत्तरत आसीनः चरुस्थाल्यां संलग्नं क्षामकायमोदनं प्राश्नाति यजमानस्तस्मै किंचिद्ददाति ततः संस्कृताज्यशेषं उद्धरणपात्र्यामुर्वरिताज्ये समानीय प्रसिद्धाश्वत्थस्य तिस्रः समिधो ऽभ्यज्य समिधाग्निमित्यृचा अग्नौ जुहोति उप त्वाग्न इत्यृचा द्वितीयान्तं त्वा समिद्भिरित्यृचा तृतीयां वत्सतरीं ददाति ततो ऽध्वर्युर्यजमानमाह वाचंयमो भविष्यसि संशाधि यत्ते संशिष्यां इति यजमानः परिकर्मिणः प्राह ब्राह्मणान् आशयत अश्वं तदभावे अनड्वाहं तदभावे अजं तदभावे अजां तदभावे कमण्डलुं वा गोपायत संभारान्निधत्त इति ततो यजमानः अध्वर्योः सकाशादरणी गृह्णन् मही विश्पत्नीत्यादि यथा यज्ञे इत्यन्तं जपति ऋत्वियवती स्थ इति मन्त्रेण सुवर्गे लोक इत्यन्तेन अरणी उरसि श्लेषयति इदं कर्म अरणीग्रहणमित्युच्यते ॥

३६१ अध्वर्युर्यजमानमाह अनृतं विहाय सत्यं वद न संकल्पः कार्यः मानुषं कार्य विहाय दैवमेव कार्यं कर्तव्यं इति ततो यजमानः इदमहममृतादित्यादिमन्त्रं जपति ऋत्विजः यजमानं वाचंयमं रात्रिं जागरयन्त आसते यजमानः शुष्ककाष्ठैस्तां

राणिं अग्निं समिन्धे शल्कैरग्निमित्यादिमन्त्रेण अध्वर्युर्गार्हप-
त्यस्योत्तरतः कल्माषमजं बद्धा यजमानं प्रति दर्शयति प्रजा
अग्ने समिति मन्त्रेण वाचंयमत्वादि अरणीप्रदानादि च अपर-
रात्रे वा भवति अध्वर्युः अपररात्रे यजमानहस्ताद्दक्षिणेन ह-
स्तेन उत्तरारणिं सव्येनाधरारणिं गृहीत्वा अरण्योर्ब्रह्मौदनाग्निं
समारोपयति जातवेदो भुवनस्य रेत इत्यृग्भ्यां अयमग्निसमा-
रोपो नाम अनयोरग्निः प्रविष्ट इति भावनया यत् अरण्यो-
र्गार्हपत्ये प्रतपनम् ॥

३६२ ततः ब्रह्मौदनाग्निं शरावे निधाय गार्हपत्याद्दक्षिणतः परि-
कर्मिणः तं ज्वलयन्त आसते यद्यस्माद्दक्षिणाग्नेराधानं तदा
नो चेदुपशामयेत् ततो ऽग्न्यायतनानि गोमयेन अपेत वीते-
त्यृचा लेपयति इदमायतनोपलेपनमित्युच्यते ॥

३६३ अध्वर्युर्यजमानेनान्वारब्धः संभाराणां तृतीयं भागमादाय
गार्हपत्यायतने यत्पृथिव्या इत्यृचा निदधाति ततः सपत्नी-
को यजमानः अध्वर्युमन्वारब्धो ऽभिमन्त्रयते यददश्चन्द्रमि-
ति मन्त्रेण यजमानः दिवस्त्वा वीर्येणेति मन्त्रेण संभारान-
ग्नित्वेन निश्चिनोति सं वः सृजामीत्यृग्भ्यां संभारान् मिश्रयति
ततः कल्पेतां द्यावापृथिवी इति यजुषा संभारान् समान् क-
रोति अध्वर्युर्यजमानेनान्वारब्धः अवशिष्टानां संभाराणां अर्ध-
मादाय दक्षिणद्वारेणापनिहृत्य अन्वाहार्यपचने यदन्तरिक्षस्ये-
त्यृचा निदधाति अभिमन्त्रणादि गार्हपत्यवद्भवति अध्वर्युर्य-
जमानान्वारब्धः अवशिष्टान् संभारान् पूर्वद्वारेण निहृत्य आ-
हवनीयायतने यद्दिवो नेत्यृचा निदधाति अभिमन्त्रणादि
गार्हपत्यवत् अध्वर्युर्गोप्तारमाह एतत्सर्वं रक्षणीयमिति गोप्ता

आह विहृता अग्नयो मा कश्चनान्तरेण संचारीदिति इदंकर्म आयतने संभारनिधानमित्युच्यते ॥

३६४ अध्वर्युः प्रदक्षिणमावृत्य गार्हपत्यसंभारेषु पश्चात्कृष्णाजिने वा मुञ्जकुलायं निधाय तस्योपरि प्रागायतामधरारणीं तूष्णीं निदधाति पश्चिममन्थनप्रदेशे दशहोतारं व्याख्याय वाचस्पते विध इत्यादि नृम्णंधात्स्वाहेत्यन्तेन मन्त्रेण उत्तरारणीं निदधाति अध्वर्युराह मन्थेति मन्थनदेशे अध्वर्युरधरारणीं प्रतीचीनप्रजननां अग्नेर्जनित्रमित्यादिमन्त्रेण स्थापयति उर्वश्यस्यायुरसिपुरूरवा इति मन्त्रेण मन्थं गृहीत्वा घृतेनाक्ते इति मन्त्रेण प्रजननं वृषणौ स्थ इति मन्त्रेण अधरारण्यां मन्थस्थापनं वृषणं दधाथामिति मन्त्रेण निष्पीडनस्थापनं गायत्रं छन्द इत्यादिमन्त्रेण रज्जुभ्रमणं होतारं प्रेष्यति अग्नये मथ्यमानायेत्यादिना यजमानः प्रथमं मन्थयति होता सामिधेनीस्थानस्य पश्चात्पदमात्रे ऽवस्थाय अभिहिंकृत्य सामिधेनीवत् अभि त्वा देव सवितरित्यृचं त्रिवारमभ्यस्य मही द्यौरित्यृचं त्वामग्ने पुष्करादित्यृचं तमु त्वा दध्यङ्ङित्यृचं तमु त्वा पाथ्य इत्यृचं एतावता यद्यग्निर्न जायते तर्हि अग्ने हंसीतिसूक्तमावपेत उतिष्ठसि स्वेत्यृचं स आहुतो वीत्यृचं घृतेनाग्निरित्यृचं जरमाणः समित्यृचं तं मर्ता इत्यृचं अदाभ्येन शोचिषेत्यृचं स त्वामग्न इत्यृचं तं त्वा गीर्भिरित्यृचं त्रिरभ्यस्यति एता ऋचः अग्निमन्थनाय हिता इति हेतोः अग्निमन्थनीया इत्युच्यन्ते ॥

( शेषमग्रे )

॥ श्रीः ॥

# कैवल्यरत्नम् ।

(*Continued from page* 179. Vol. V.)

पञ्चदशषोडशावध्यायौ परित्यज्य लिख्यते ॥

श्रीपराशर उवाच ।

अतः साक्षात्परं तत्त्वं समस्तजगदाश्रयम् ।
प्रवक्ष्यामि समासेन शृणु तच्छ्रद्धया सह ॥
दृश्यं जगदिदं सर्वं शुक्तिकारजतादिवत् ।
अज्ञानेनैव कस्मिंश्चित्कल्पितं नैव तत्त्वतः ॥
कल्पितस्य समस्तस्य यदधिष्ठानमास्तिक ।
तत्कल्पितपदार्थेन भिन्नलक्षणमेव हि ॥
अधिष्ठानमसत्यस्य सत्यमेव न संशयः ।
शुक्तिकाव्यवहारे तु सती न रजतोपमा ॥
केवलं सत्यता शुक्तौ दृष्टान्तत्वेन गृह्यते ।
न व्यावहारिकत्वं च सा तस्या अन्यहेतुजा ॥
सर्वसाक्षिस्वरूपस्य प्रागभावाद्यसंभवात् ।
जन्मनाशाद्यभावेन सदा सत्यं परं पदम् ॥
कल्पितस्य समस्तस्य भासकत्वात्परं पदम् ।
स्वयंप्रकाशचैतन्यं तद्धि सर्वावभासकम् ॥
यस्य शेषतया सर्वमिदं प्रेमास्पदं भवेत् ।
शेषिरूपं तु तत्साक्षात्सुखवत्सुखमेव हि ॥
ब्रह्मणः शेषभूतं हि जगत्सर्वं चराचरम् ।

अत: शेषिपदं तत्त्वं परानन्दस्वलक्षणम् ॥
सत्तया च प्रकाशेन प्रियेण च परं पदम् ।
इदं सर्वं जगद्व्याप्य शुक्र तिष्ठति हि स्तिमम् ॥
वस्तुगत्या जगत्तेन विना नैव प्रतीतित: ।
सद्भावो जगतस्तस्मादनन्तं हि परं पदम् ॥
सत्ताज्ञानं सुखं वापि स्वरूपं परमात्मन: ।
न धर्मो भेदशून्यत्वाद्वस्तुतो धर्मधर्मिणो: ॥
भिन्नयोर्धर्म्मधर्म्मित्वं खलु लोके प्रतीयते ।
नैव भेदस्तयोरस्ति भेदत्वस्यानिरूपणात् ॥
ययोर्भेदस्तयोर्भेदप्रकाशात्पूर्वमेव तु ।
विभेदेन प्रकाश: स्याद्भेदे भाति भिदा तयो: ॥
द्वयोर्भेदो न चेत्तर्हि भेद एकस्य वस्तुन: ।
भेद एकस्य य: प्राप्त: स मृषा चन्द्रभेदवत् ॥
तस्मात्सत्यचिदानदा गुणा न परवस्तुन: ।
स्वरूपमेव भेदस्तु तस्य मायाविजृम्भित: ॥
मायामात्रमिदं द्वैतमद्वैतं परमार्थत: ।
इत्याह हि परा शुद्धा श्रुति: सत्यार्थवादिनी ॥
स्वत: प्रमाणभूतेन वेदेनैव प्रकाशितम् ।
यत्तदेव खलु प्राज्ञ सत्यवस्तु न चापरम् ॥
अतीन्द्रियार्थे धर्म्मे च तथा ऽधर्म्मे परात्मनि ।
प्रमाणं वेद एवैक: खलु नान्यत्तपोधन ॥
यदुक्तलक्षणं तत्त्वं तस्य साधारणानि च ।
नामान्येतानि हे विप्र न हि तैस्तस्य संगति: ॥

शिवः शम्भुः परं ब्रह्म सत्यमीशान ईश्वरः ।
एवमादीनि नामानि तानि हूत्वा परात्मनः ॥
के चिद्रूढ्या च योगेन प्रवदन्ति महर्षयः ।
के चिद्रूढिं च योगं च नैव वाञ्छन्ति सत्तम ॥
निर्विशेषं निरालम्बं निर्मलं निर्गतद्वयम् ।
स्वानुभूत्यैकसंसिद्धं कथं शब्दस्य गोचरः ॥
नारायणो हरिर्विष्णुर्मुकुन्दः केशवो ऽच्युतः ।
एवमादीनि नामानि नैव तत्त्वपराणि वै ॥
परतत्त्वोपदेशस्य सन्निधौ पठिता अपि ।
शब्दाः कथं चिद्योगेन प्रवर्तन्ते न मुख्यतः ॥
इति सप्तदशाध्याये अपेक्षिताखण्डवाक्यार्थो दर्शितः ॥
अष्टादशो ऽध्यायः प्रदर्श्यते ॥
श्रीपराशर उवाच ॥
अथ शास्त्रार्थसंक्षेपं प्रवक्ष्यामि समासतः ।
मुमुक्षुभिर्महाप्राज्ञैर्वेदितव्यो विशेषतः ॥
शासनाच्छंसनाच्छास्त्रं शास्त्रमित्युच्यते बुधैः ।
शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः ॥
तत्त्वेकं विधिरूपेण तदन्यत्प्रतिषेधतः ।
शंसनं भूतवस्त्वेकविषयं न क्रियापरम् ॥
विधिरूपस्य शास्त्रस्य प्रतिषेधात्मकस्य च ।
केवलं भूतवस्त्वेकविषयस्य तथैव च ॥
अज्ञो ऽधिकारी न प्राज्ञो नैवात्मा नैव विग्रहः ।
चातुर्वर्ण्यं समालम्ब्य किं चिच्छास्त्रं प्रवर्तते ॥
किं चित्सांकर्यमालम्ब्य किं चिदाश्रममास्तिक ।

वयोविशेषमालम्ब्य तथावस्थं तथा परम् ॥
विशेषालम्बनं शास्त्रं विशेषेण च सत्तम ।
प्रवर्त्तते स्वभावेन न तस्यास्ति निवर्त्तकम् ॥
देहावलम्बनेनैव केवलं न प्रवर्त्तते ।
शास्त्रं नश्यति देहोऽत्र फलमन्यच्च हीरितम् ॥
वर्णाश्रमवयोऽवस्थाविशेषाध्यासवर्जितः ।
ब्रह्मवित्सकलं शास्त्रं कटाक्षेणापि नेक्षते ॥
केवलात्मानमालम्ब्य मुनेः शास्त्रं न किं चन ।
प्रवर्त्तेत ह्यदृश्यत्वादितोऽसौ भ्रान्तिमाश्रितः ॥
आत्माशास्त्राधिकारी स्यात्स हि संसारविभ्रमात् ।
मुच्यते स हि संसाराद्बन्धमोक्षौ हि कल्पितौ ॥
शास्त्रमापाततो भाति मुने बहुमुखं नृणाम् ।
निरूपितेन न्यायेन विभात्येकमुखं पुनः ॥
शास्त्रनिर्णायकन्यायकलापं मुनिसत्तम ।
सूत्ररूपेण कुर्वन्ति शिवस्यैवाज्ञयैव तु ॥
अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
मुनयश्च मनुष्याश्च प्रसादादेव शूलिनः ।
सूत्रार्थं भाष्यरूपेण यथावद्दर्शयन्ति च ॥
सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥
प्रसादादेव रुद्रस्य भवानीसहितस्य तु ।
कुर्वन्ति केचिद्व्याख्यानं भाष्यस्यैव तपोबलात् ॥
पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।

आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥
केचिद्वार्त्तिकरूपेण भाष्यार्थं प्रथयन्ति च ।
प्रसादादेव रुद्रस्य पूर्वपूर्वतपोबलात् ॥
उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥
स्वबुद्ध्याधीतभाष्यार्थं संग्रहेणैव वाथवा ।
विस्तरेण च कुर्वन्ति केचित्प्रकरणात्मना ॥
शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम शास्त्रवेदविपश्चितः ॥
सूत्रभाष्यादिभिः शास्त्रं साक्षाद्वेदसमाहृतम् ।
शृणुयात्स्वगुरोः स्वात्मस्वरूपप्रतिपत्तये ॥
आत्मलाभात्परं नास्ति किं चिन्मात्रमपि द्विजाः ।
अतः स्वात्मानमीशानं लभते स्वात्मना स्वयम् ॥
लब्धस्य लाभो ऽलब्धः स्याल्लब्धत्वस्य तथैव च ।
द्विधा लाभः स्वकं रूपं लब्धुर्लब्धं हि संततम् ॥
लब्धत्वा लब्धता ज्ञानाल्लब्धिस्तस्यैव वेदनात् ।
आत्मलाभस्ततः स्वात्मवेदनोत्पत्तिरेव हि ॥
स्वात्मालाभनिमित्तं यद्बन्धनं पुरुषस्य तु ।
स्वात्मलाभेन नष्टं स्यात्स्वात्ममात्रथैव तु ॥
स्वात्ममात्रतया नष्टं स्वात्मलाभेन बन्धनम् ।
अपि स्वात्मैव नैवान्यद्वस्तु तत्त्वनिरूपणे ॥
व्यावहारिकरूपेण विभाति स्वात्मनः पृथक् ।
समस्तं तच्च भातत्वाद् भानं स्वात्मैव केवलम् ॥
स्वस्वरूपस्य लाभेन स्वात्मानन्दो महत्तरः ।

स्वयं भाति न चाभाति सापरा मुक्तिरात्मनः ॥
आत्मा नान्यजडस्य स्यात्प्रकाश्यस्य प्रकाशकः ।
स्वयं ज्योतिः सदानन्दः सत्यः संपूर्णलक्षणः ॥
अस्यैवोपाधिभेदेन विभेदः कल्पितः स्थिरः ।
नैव स्वाभाविको भेदो यतो दृष्टः स आत्मना ॥
दृश्यभूतस्तु नैल्यादिधर्म्मो दृश्यस्य हि द्विज ।
धर्म्मो न द्रष्टृस्त्वधर्मः स्यात्स तु लोके व्यवस्थितः ॥
एवं भेदो ऽपि दृश्यत्वाद्दृश्यधर्म्मो न संशयः ।
द्रष्टृधर्म्मो न दृश्यः स्यात् द्रष्टृबोधो यथा तथा ॥
द्रष्टृबोधो ऽपि दृश्यश्चेद्द्रष्टृकमेव न सिध्यति ।
विरुद्धरूपमेकस्य सर्वथा घटते न हि ॥
भेदो दृष्टो न चेत्तस्याभाव एव प्रसज्यते ।
द्रष्टृभेदो न भातश्चेदभेदः सत्य एव हि ॥
द्रष्टृमात्रं भवेद्भेदस्तदा नैव हि सिध्यति ।
स भेदो यद्यसत्यस्याद्वस्तु भेदस्तु नैल्यवत् ॥
दृश्यधर्मो न दृग्धर्मस्तस्मादात्माद्वयः सदा ।
औपाधिकेन भेदेनाभिन्नमेव परं पदम् ॥
जीव ईश्वर इत्यादिविशेषव्यपदेशभाक् ।
जीवः संसारदोषेण दुष्टवत्प्रतिभासते ।
व्यवहारदशायां तु न दुष्टः परमार्थतः ॥
व्यवहारदशायां च न दुष्टः परमेश्वरः ।
यथाकाशस्थितः सूर्यश्चलनादिविवर्जितः ॥
सूर्य एकः शरावादिभाजनस्थोदकेषु च ।
भिन्नवद्भाति जीवानां तथा भेदः प्रकल्पितः ॥

अर्कस्य प्रतिबिम्बं हि चलतीव प्रकाशते ।
संसारी च तथा भाति जीव एव न चेश्वरः ॥
लेपश्च पुण्यपापाभ्यां जन्मनाशौ च दुःखिता ।
जीवस्यैव न देवस्य बिम्बभूतस्य सतम ॥
बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम् ।
ईश्वरत्वं च जीवत्वं तथा कल्पितमात्मनि ॥
विनष्टे जलपात्रे तु यथादित्यस्य नश्यति ।
बिम्बत्वं प्रतिबिम्बत्वमुभयं च तथैव तु ॥
अज्ञानोपाधिनाशे तु नश्यत्येव परात्मनः ।
ईश्वरत्वं च जीवत्वमुभयं च न संशयः ॥
बिम्बत्वादिविनिर्मुक्तः स्वस्वरूपेण भास्करः ।
यथादित्यः स्थिरः शुद्धः स्वयमेवावशिष्यते ॥
ईश्वरत्वादिनिर्मुक्त आत्मा स परमः स्वयम् ।
सत्यानन्तचिदानन्दस्वरूपेणावशिष्यते ॥
प्रतिबिम्बादपि श्रेष्ठो बिम्बभूतस्तु भास्करः ।
ततोऽपि भगवान्भानुर्वरिष्ठः केवलस्तथा ॥
ईश्वरः सर्वभावेभ्यो वरिष्ठः केवलस्ततः ।
वरिष्ठः सच्चिदानन्दः साक्षिसाक्ष्यविवर्जितः ॥
बिम्बभूतस्य सूर्यस्य प्रतिबिम्बमपेक्ष्य तु ।
वैशिष्ट्यमपि वैशिष्ट्यं स्वभावः केवलस्य हि ॥
अपेक्ष्य जीवमीशस्य वैशिष्ट्यमपि साक्षिणः ।
केवलस्य तु वैशिष्ट्यं स्वभावस्तद्वदेव हि ॥
साक्ष्यापेक्षं तु साक्षित्वं साक्ष्याभावेऽपि गच्छति ।
स्वाभाविकं तु साक्षित्वं कदाचिन्नापगच्छति ॥

भास्यपेक्षं रवेर्यद्वद् भासकत्वं विनश्वरम् ।
अपि स्वाभाविकं तत्तु तस्य नैव विनश्यति ॥
स्वाभाविकं तु साक्षित्वमात्मनः सार्वकालिकम् ।
अपि साक्ष्यमपेक्ष्यैव खलु तद्व्यपदिश्यते ॥
भासकत्वं तु सूर्यस्य भास्याभिव्यक्त्यपेक्षया ।
स्वाभाविकं यथा लोके मनुष्यैर्व्यपदिश्यते ॥
स्वाभाविकं तु साक्षित्वं साक्ष्याभावे विनैव तु ।
व्यपदेशं स्वरूपेण केवलं तिष्ठति ध्रुवम् ॥
भासकत्वं ततः सिद्धं भास्याभावे विनैव तु ।
व्यपदेशं यथार्कस्य स्वरूपेणावतिष्ठति ॥
स्वभावादेव यः साक्षी स एव परमेश्वरः ।
तदैक्यं हि परा मुक्तिर्जीवसंज्ञस्य देहिनः ॥
स्वत एव ह्यभिन्नस्य तदैक्यं परमात्मनः ।
तदैक्याज्ञाननाशेन स्वत एव प्रकाशते ॥
जीवब्रह्मैक्यविज्ञानाद्यदज्ञानं विनश्यति ।
तदनादि स्वतोऽनन्तं नापि सत्सद्विलक्षणम् ॥
महदादिजगच्छून्यपर्यन्तमखिलं जडम् ।
ब्रह्मात्मैक्यापरिज्ञानमहामायाविजृम्भणम् ॥
संसारहेतुभूतस्य मूलाज्ञानस्य बाधकम् ।
ब्रह्मात्मैक्यपरिज्ञानं वेदादेव विजायते ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि ब्रह्मज्ञानोदये सति ॥
ब्रह्मज्ञानेन विध्वस्तमपि सर्वमिदं जगत् ।
भाति चाभासरूपेण प्रारब्धान्तं न संशयः ॥

यानि कर्माणि संसारफलहेतूनि सन्तम ।
तानि तत्साधनत्वेन देहमुत्पादयन्ति वै ॥
विद्यारम्भककर्माणि शमादीन्यखिलानि तु ।
विनैव साधनं देहं विद्यामुत्पादयन्ति वै ॥
अन्यैः संपादिते देहे विद्याहेतूनि यानि तु ।
तानि तान्यनुसृत्यैव विद्यामुत्पादयन्ति वै ॥
प्रारब्धफलपर्यन्तं प्रपञ्चस्यावभासनम् ।
प्रदग्धुं नैव शक्ता सा विद्या वेदान्तवाक्यजा ॥
देहहेतूनि कर्म्माणि स्वातन्त्र्येणैव वेदने ।
निःशेषदाहकाकारं प्रतिबध्नन्ति सन्तम ॥
विद्यास्वोदयमात्रेण संसारस्य निवर्त्तिका ।
परतन्त्वसमुत्पन्ना दहत्यखिलसत्यताम् ॥
सत्यत्वे तु प्रलये ऽपि प्रतीत्यारम्भकाणि वै ।
कर्माणि फलहेतूनि वसन्ति च न संशयः ॥
वास्तवांशस्य दग्धत्वात्प्रतीत्या भोगसंभवात् ।
जीवन्मुक्तिकथा प्रोक्ता प्रारब्धान्तमनिन्दिता ॥
जीवन्मुक्तस्य पुण्यं वा पापं वा नैव विद्यते ।
कर्तुरेव हि कर्म्माणि कर्तृतानात्मवेदिनः ॥
कर्तृताहंकृतेरेव कर्ताहमिति भासनात् ।
अहमः कर्तृरूपस्य साक्ष्येवात्मा स्वयंप्रभः ॥
सर्वदा साक्षिता तत्त्वमेव शुद्धात्मवस्तुनः ।
इति ज्ञानवतः पूर्वमपि नैव हि कर्तृता ॥
कर्तृताज्ञानवेलायां विभाता विद्ययैव तु ।
बाधिता हि ततः कर्म्म प्रदग्धं पूर्वकालजम् ॥

शरीरारम्भकं कर्म योगिनो ऽयोगिनो ऽपि च ।
विना फलोपभोगेन नैव नश्यत्यसंशयम् ॥
वर्त्तमानशरीरेण संपन्नं कर्म्म देहिनः ।
इह वामुत्र वान्यस्य ददाति स्वफलं शुक ॥
इहैव फलदं कर्म्म प्रारब्धं प्रतिबध्य च ।
फलं ददाति स्वप्ने वा जाग्रत्काले ऽथ वानघ ॥
निवृत्तप्रतिबन्धं तु प्रारब्धं कर्म्म सत्तम ।
निरुद्धांशफलं स्वप्ने ददाति स्थिरमुत्तमम् ॥
निरुद्धांशसमो भागो यदोद्भूतश्च जाग्रति ।
तदा निरुद्धं तेनैव सह कर्म्म ददाति वै ॥
एवं निरुद्धभागं तु स्वप्ने जाग्रति चाफलम् ।
प्रारब्धस्यानुगुण्येन भुङ्क्ते देही न संशयः ॥
अत्युत्कटैरिहत्यैस्तु पुण्यपापैः शरीरभृत् ।
प्रारब्धं कर्म्म विच्छिद्य भुङ्क्ते तत्तत्फलं बुध ॥
प्रारब्धशेषं विच्छिन्नं पुनर्देहान्तरेण तु ।
भुङ्क्ते देही न भुङ्क्ते न तल्लङ्घयति कः पुमान् ॥
अवश्यमनुभोक्तव्यं प्रारब्धस्य फलं जनैः ।
देहेनान्येन चान्येन युगपद्वा क्रमेण वा ॥
श्वसूकरखरोष्ट्रादिविरूढैर्विग्रहैरपि ।
भोक्तव्यस्य फलस्यैव शुक कर्म्माणि कानि चित् ॥
कारणानि भवन्त्येव तानि तत्तनुविग्रहम् ।
आरभन्ते क्रमेणैव तेषां नाशस्तु भोगतः ॥
संचितेषु समस्तेषु प्रबलं कर्म्म देहिनः ।
फलमारभते देहमपि तत्साधनं बुध ॥

दुर्घटं सकलं शक्तिर्माया माहेश्वरी जडा ।
घटयत्येव संदेहो नास्ति सा तादृशी खलु ॥
माया तस्याश्च कार्यं च सहते न निरूपणम् ।
अनिरूपितरूपा हि माया माहेश्वरी शुक ॥
व्यवहारदशायां तु श्रुत्युक्तेनैव वर्त्मना ।
कर्मणां फलहेतुत्वं मयैव कथितं तव ॥
प्रारब्धकर्मणि क्षीणे सति भोगेन विद्यया ।
मायालेशो निवर्तेत निवृत्तप्रतिबन्धया ॥
स्वयमेकापि सा माया बह्वाकारा विलक्षणा ।
जगद्विवर्तनस्यैव हेतुरेकः प्रकीर्तितः ॥
आकारो ऽन्यस्तु सत्यत्वप्रतिभासस्य कारणम् ।
जगदर्थक्रियाहेतुरपरः पण्डितोत्तम ॥
परतत्त्वापरोक्षस्य कश्चिद्वै प्रतिबन्धकः ।
कश्चिदात्मस्वरूपस्य साक्षादाच्छादकः शुक ॥
जगत्प्रतीतिमात्रस्य हेतुः कश्चित्तपोधन ।
आकारा अपराः सूक्ष्माः स्थूलाश्च बहवः खलु ॥
आकारास्ते मया वक्तुं न शक्याः कल्पकोटिभिः ।
कार्यस्यैवानुगुण्येन कल्प्या एव हि केवलम् ॥
प्रारब्धकर्मणि क्षीणे मायालेशो ऽपि सुव्रत ।
जगत्प्रतीतिमात्रस्य हेतुभूतः प्रणश्यति ॥
विश्वमायानिवृत्तिस्तु मुक्तिः परतरा स्मृता ।
विद्ययैव च सा सिध्येद्विद्या वेदान्तवाक्यजा ॥
वेदान्तवाक्यतो विद्या मुमुक्षोरेव जायते ।

मुमुक्षुत्वं तु मर्त्यानां मन्दं मन्दतरं बुध ॥
तीव्रं तीव्रतरं चैव तथाचैवोत्तरोत्तरम् ।
मुमुक्षुत्वस्य वैशिष्ट्यं मया वक्तुं न शक्यते ॥
विद्यासाधनपौष्कल्ये मुमुक्षुत्वे महत्तरे ।
सति साक्षात्परा विद्या प्रसादादेव जायते ॥
देवतानां प्रसादेन विप्रर्षीनां प्रसादतः ।
वेदान्तानां प्रसादेन स्वगुरोश्च प्रसादतः ॥
साक्षात्परतरस्यैव शिवस्य परमात्मनः ।
स्वविलक्षणशून्यस्य स्वयं भातस्य साक्षिणः ॥
आविर्भवतिरोभावरहितस्याक्रियस्य च ।
अहमर्थस्य चित्सत्यसुखस्यैव प्रसादतः ॥
परविद्याजनिता चेद्विद्वानेव परं पदम् ।
स्वयं भवति कल्याण विद्वत्तामपहाय हि ॥
स्वप्नदृक् स्वप्नमुज्झित्वा स्वप्रबोधेन केवलम् ।
स्वयं भवति हे विप्र यथा तद्वत्परात्मवित् ॥
स्वात्मनो ऽन्यतया भातं समस्तं स्वपनोपमम् ।
स्वात्ममात्रतयोज्झित्वा स्वयमेवावशिष्यते ॥
एवमुक्त्वा मुनिः श्रीमान् शक्तिपुत्रः पराशरः ।
सर्ववेदान्तरत्नानामाकरः करुणानिधिः ॥
स्वस्वरूपमहानन्दप्रकाशपरमाम्बुधौ ।
निमग्नो निश्चलस्तूष्णीमास्ते केवलमास्तिक ॥
मुनेः पराशरस्यास्य स्वानुभूतिप्रदायिनी ।
पार्वती परमा देवी तत्रैवाविरभूत्तदा ॥

स्वानुभूतिपरानन्दविलीनकरणात्वतः ।
नापश्यत्परमामेतां पार्व्वतीं स पराशरः ॥
पराशरं परानन्दपरमानुभवप्रियम् ।
विलोक्य शुकमाल्हादादिदं वचनमब्रवीत् ॥
श्रीपार्व्वत्युवाच ॥
मुनिनाऽनेन कल्याण यदुक्तं परमादरात् ।
सत्यमेवमसत्यर्थः संस्कृतः समयैव तु ॥
पराशरसुतस्यैव व्यासस्याक्लिष्टकर्म्मणः ।
पुत्रः खलु शुक त्वं हि किं न सिध्यति ते ऽनघ ॥
मत्प्रसादेन वेदान्तवचनोत्पत्तिवेदनम् ।
करामलकवल्लब्धं भवता भाग्यगौरवात् ॥
नास्ति लोकत्रये किं चित्त्वालभ्यमितः परम् ।
चित्तपारिप्लवं त्यक्त्वा पश्यस्यात्मानमद्वयम् ॥
स्वात्मतत्त्वानुसंधानादनेके भवबन्धनात् ।
विमुक्ता मुनयः पूर्वं तादृशो हि भवानपि ॥
दुर्लभं हि परं ज्ञानं नराणामविवेकिनाम् ।
सद्यो मुक्तिकरं साक्षात्प्रसादेन विना मम ॥
इत्युक्त्वा पार्वती देवी शक्तिपुत्रं शुकं च सा ।
अनुगृह्य महाप्रीत्या तत्रैवान्तरधीयत ॥
देव्यामन्तर्हितायां तु गलितः स्वानुभूतितः ।
पराशरो मुनिः श्रीमानालोक्य शुकमब्रवीत् ॥
इतः परं न वक्तव्यं किं चिन्मात्रमपि द्विज ।
श्रोतव्यं च तथा नास्ति शुक सत्यं न संशयः ॥
महादेवप्रसादेन पाराशरसमाह्वयम् ।

मया पराशरेणैव पुराणमिदमीरितम् ॥
व्यासपुत्रः शुकः श्रुत्वा पाराशर्यं पराशरात् ।
पुराणदण्डवद्भूमौ प्रणाममकरोद्गुरोः ॥

इति कैवल्यरत्ने जीवन्मुक्तिपर्यन्तं ब्रह्मात्मैक्यप्रकाशकपाराशर्याख्यपुराणसारोद्धारः समाप्तः ॥

## सटीकसंक्षेपशारीरकम् ।

( *Continued from page* 191. Vol. V. )

मू० ॥ अस्यैव तत्त्वविनिवेदनशक्तिभाजः
संसारमूलविनिवृत्तिफलप्रसूतौ ॥
सामर्थ्यमस्ति पटुभिः परिवृंहितत्वा-
द्वेदान्तभूमिगतपञ्चविधार्थवादैः ॥ २५८ ॥

टी० ॥ एवं निषेधवाक्यस्य निर्विशेषे महावाक्यतात्पर्यप्रमित्यनुकूलतया तच्छेषत्वं मुक्तिफलज्ञानप्रसवस्तु तत्त्वमादेरेवेत्युक्तमत्रैवोपपत्त्यन्तरमाह । अस्यैवेति । तत्त्वमादेरेवेत्यर्थः । तत्त्वविनिवेदनशक्तिभाजः तत्त्वं परमार्थसद्वस्तु तद्भ्रंशबलनिवेदनशक्तिभाज इत्यर्थः । संसारमूलस्य विनिवृत्तिः फलं यस्य ज्ञानस्य तत्प्रसूताविन्यर्थः । अस्यैव तत्सामर्थ्ये युक्तिमाह । पटुभिरिति । समर्थैरित्यर्थः । परिवृंहितत्वात् । उपोद्बलितत्वात् । वेदान्तभूमिषु गताः, अवगताः पठिता इति यावत् । पञ्चविधा ये अर्थवादा भूतार्थवादास्तैरित्यर्थः । अर्थवादानां हि विधिनैवान्वय इति प्रसिद्धं वेदान्तभागे च सन्ति वक्ष्यमाणाः पञ्चविधार्थवादास्तैश्च तत्त्वमस्यादिवाक्यस्यैवाऽज्ञातज्ञापकतया विधिस्थानीयस्योपोद्बलनं दृश्यते न तु निषेधवाक्यस्येति तत्त्वमादेरेवाऽर्थवादाऽन्वितस्य फलवत्प्रमितिजनकत्वमित्यर्थः ॥ २५९ ॥

मू० ॥ सृष्टिस्थितिप्रलयसंयमनप्रवेश-
व्यापारजातकथनच्छलतः प्रवृत्तेः ॥
सानुग्रहादवगतिः खलु तत्त्वमादे-
र्वाक्यात्परस्य घटते न ततोऽपरस्मात् ॥२६० ॥

टी० ॥ तानेवार्थवादान्दर्शयंस्तत्त्वमादेस्तदनुग्रहात्पुरुषार्थसाधनज्ञानहेतुत्वं युज्यते न तु निषेधस्येत्याह । सृष्टिस्थितीति । सृष्टिर्वियदादेः सर्जनं, स्थितिस्तस्य तत्रैव स्थितिस्तत्पालनमिति यावत् । प्रलयस्तस्य तत्रैव लयस्तत्संहरणमिति यावत् । संयमनं नियन्तृत्वं प्रवेशो जीवरूपेण प्रतिफलनं त एव व्यापारास्तेषां जातं समूहः तत्कथनच्छलतः तद्व्याजेन प्रवृत्तैरर्थवादैः कृतो योऽनुग्रहस्तत्सहितात्तत्त्वमादेर्वाक्यादिति योजना । वेदान्तेषु हि यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः स एष इह प्रविष्ट आनखाग्रेभ्य इत्यादयः श्रूयन्ते, ते चार्थवादा एव, निर्गुणब्रह्मप्रकरणगतत्वात्, स्वतः प्रयोजनशून्यतया वेदान्तार्थशेषत्वाच्च, तत्र सृष्ट्यादित्रयेण कारणस्य ब्रह्मणः प्रपञ्चभेदनिषेधः कार्यकारणानन्यत्वन्यायेन सिद्ध्यति । नियमेन नियन्तुः कारणस्य चैतन्यप्रवेशेन तस्य जीवानन्यत्वमित्येभिरद्वयचैतन्यात्मकप्रत्यग्ब्रह्माभेदपरतत्त्वमादेरेवार्थदृढीकरणात्तस्यैव तत्कृतोपकारभाक्त्वं न तु निषेधवचनस्य कथमपि तत्र सृष्टिस्थित्योः कथं चित्तत्र निषेध्यप्रसञ्जकतया तदनुग्राहकत्वेऽपि प्रलयादीनां तदनुपयोग एव । एवं संयमनादिविशेषोपन्यासस्येति तत्त्वमादेरेव वाक्यात्तदर्थस्याऽद्वयब्रह्मणोऽवगतिर्घटते न ततोऽपरस्मान्निषेधादित्यर्थः ॥ २६० ॥

मू० ॥ सूत्रं तत्तु समन्वयादिति विधिव्यापारनिष्ठं वचो
मोघायेति निवेदनाय कृतवान् वेदान्तवेदी मुनिः ॥
न्यायेनाकलयन्नशेषवचनव्यापारमूरीकृत-
स्वातन्त्र्यः सकलेऽपि वेदशिरसि स्वैरं चरन्नीश्वरः ॥ २६१ ॥

टी० ॥ एवं सूत्रकारस्याशयादपि विधिवाक्यस्यैव प्राधान्यं निश्चीयत इत्याह । सूत्रमिति । वेदान्तवेदी वेदान्तानां सम्यगर्थवेदनशीलः, अनेनास्य तद्विषयेऽज्ञानादिराहित्यं सूचितम् । मुनिर्बादरायणः तत्तु समन्वयादिति सूत्रं कृतवानिति संबन्धः । किमर्थमिति तदाह । विधीत्यादि निवेदनायेत्यन्तम् । स हि भगवांस्तत्तु समन्वयादिति सूत्रे तत्पदेन निर्विशेषाद्वयं सत्यज्ञानानन्दात्मकं ब्रह्म शास्त्रप्रमाणकं प्रतिज्ञाय तत्र समन्वयादिति हेतुं दर्शयति न तु निषेधादिति । न हि निषेधवाक्यसमन्वयमात्रात्सत्यज्ञानानन्ताऽनन्दं ब्रह्म सिद्ध्यतीति विधिव्यापारमेव वचनं ब्रह्मणि प्रमाणमिति दर्शितवानित्यर्थः । ननु स च केन बलेनैवमुक्तवानित्याशङ्क्याकृन्यायेनेत्याह । न्यायेनेति । आकलयन्नशेषवाक्यार्थं निश्चिन्वन्, तस्याप्यखिलवचनव्यापाराकलने सामर्थ्यमाह । ऊरीकृतस्वातन्त्र्यः, स्वतः स्वीकृतस्वातन्त्र्यः अत एव तस्येश्वरत्वं स्मर्यते । कोह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् इति । अत एव सकलेऽपि वेदशिरसि सर्ववेदान्तार्थे स्वैरं चरन् स्वत एवाऽवगच्छन्नशेषवचनेनेति पूर्वेण संबन्धः ॥ २६१ ॥ :: ॥

मू० ॥ वाक्याऽर्थान्वयितत्पदार्थकथने नेतीति वाक्यं पुनः
साक्षात्सूचयति स्म सूत्रकृदतस्तत्तत्परं निश्चितम् ॥
एवं हस्ततलाऽर्पिताऽऽमलकवत् तात्पर्यसंवेदने
सत्यन्याद्गुरुदीरयन्ति यदि तत्क्षन्तुं कथं शक्नुमः ॥ २६२ ॥

टी० ॥ एवं वाक्यतात्पर्यनिरूपकसमन्वयसूत्रबलाद्विधिप्राधान्यमुक्तं, संप्रति तत्पदार्थशोधनप्रस्तावे एव सूत्रकारस्य प्रकृतैतावत्त्वं हि प्रतिषेधति । ततो ब्रवीति भूय च इत्यादि सूत्रेण निषेधवाक्यविचारदपि निषेधवचनं विधिशेष एवेत्याह । वाक्याऽर्थेति । पुनरपि सूत्रकृन्नेतीति वाक्यं साक्षात्त्वमस्यादिवाक्यार्थाऽन्वयी यस्तत्पदार्थः । तत्कथने तच्छोधनार्थं प्रतिषेधतीत्यनेन सूचयति स्म यतो ऽतस्तन्निषेधवाक्यं तत्परं तत्पदार्थपरं नतु वाक्यार्थपरमित्यर्थः । सूत्रकारो ह्युदाहृतसूत्रेण अथात आदेशो

नेतिनेतीति वचनं मूर्त्तादिकं कारणब्रह्मस्वरूपमेव प्रतिषेधति न तु रूपि-ब्रह्मेति प्रतिपादयंस्तत्पदार्थमेव शोधयामासेति न तत्प्रधानमिति भावः । ननु विधिर्वा* प्रधानमस्तु निषेधो वा किं तत इत्याशङ्क्य निषेधप्राधान्ये-ऽपसिद्धान्तः स्यादित्याशयेनोपसंहरति । एवमिति स्पष्टम् ॥ २६२ ॥

मू० ॥ सत्यं ज्ञानमनन्तमित्यभिहिते संभावना नीयते
नाऽस्थूलादिवचःसमुद्भवधिया द्वैतोपमर्दं विना ॥
तेनावान्तरवाक्यलक्ष्यविषयां बुद्धिं दृढीकुर्वता
सर्वद्वैतनिषेधकेन वचसा वाक्यार्थधीर्जन्यते ॥ २६३ ॥

टी० ॥ ननु तत्पदार्थसंशोधनस्य सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्यैरेव सिद्धत्वात्किं तदर्थं निषेधवाक्यविचारेणेत्याशङ्क्याऽनन्तपदार्थ-दृढीकरणाय तदपेक्षितमित्याह । सत्यं ज्ञानमनन्तमिति । सत्यादिरूपेणाऽ-भिहितेऽपि न संभवाना नीयत इति संबन्धः । आनीयत इति पदमन-न्तमाकाशमितिवदन्यथासिद्धिशङ्कासंभवादित्यर्थः । अस्थूलादिविनान्त-मादौ योजनीयम् । फलितमाह । तेनेति । येन निषेधवाक्यानां सत्यादि-वाक्याऽर्थाऽनन्त्यसंभवबुद्धिहेतुत्वं तेनेत्यर्थः । अवान्तरवाक्येन सत्यादि-वाक्येन या लक्ष्यानन्तब्रह्मविषया बुद्धिस्तां दृढीं कुर्वता । वाक्यार्थधीः तत्त्वमादिवाक्यार्थधीः परंपरया जन्यत इत्यर्थः ॥ २६३ ॥

मू० ॥ अस्थूलादिवचोनिरस्तनिखिलद्वैतप्रपञ्चं† परं
जाग्रत्स्वप्नसुषुप्तिवर्जितमिदं प्रत्यक्स्वरूपं तथा ॥
एकीकृत्य परस्परेण पदयोरर्थद्वयं तत्त्वतः
प्रत्यक्चाद्वयमद्वयं च तदिति प्रेक्षस्व निःसंशयम् ॥ २६४ ॥

टी० ॥ नन्वेवं तत्पदार्थे संशुद्धावप्यवस्थात्रयतद्धर्मकलुषीकृत-जीवस्वरूपस्य कथमखण्डवाक्यार्थप्रवेश इत्याशङ्क्य शुद्धं तत्पदार्थमनुवद-

* विधिरेव । पा० २ ॥

† वचस्या । पा० २ ॥

स्तस्याऽपि ज्योतिर्ब्राह्मणतात्पर्येण जाग्रदाद्यवस्थातद्धर्मकामकर्तृत्वादिर-हिताऽसंगज्ञप्तिमात्रतया सिद्धत्वादखण्डमात्मतत्त्ववाक्यादवेहीत्याह । अस्थूलादिवच इति । परं परमात्मतत्वम् । तथेति समुच्चये । पदार्थद्वय शोधनफलमाह । एकीकृत्येति । परस्परेण परस्परम् पदयोस्तत्त्वंपदयोः । एकीकरणप्रकारमेवाह । तत्त्वत इत्यादिना । निःसंशयं यथा स्यात्तथे-त्यर्थः ॥ २६४ ॥

मू० ॥ अद्वैतं परिशोधितं भगवतो विष्णोः परं यत्पदं
तच्छब्देन समर्पितं परिगृहीतादेयमात्मप्रभम् ॥
यच्चोपाधिविवर्जितं तव निजं साक्षात्स्वरूपं तयो-
रेकत्वं परिवर्जितव्यवधिकं प्रत्यक्षमीक्षस्व भोः ॥ २६५ ॥

टी० ॥ नन्वस्तु शुद्धमपि पदार्थद्वयं पृथगेव तत्कथं निःसंशयं प्रेक्षणं स्यादित्याशङ्क्य पदद्वयलक्ष्ये भेदकाभावात् कथमपि भेदो न संभवतीति कथं न निःसंशयं प्रेक्षणमित्याशयेनाह। अद्वैतमिति। भगवतो विष्णोर्यत्परं पदं परिशोधितं सत्यादिवाक्येनेति शेषः । तदेव भागल-क्षणया तत्पदेनोपादेयमित्याशयेनाह । परिगृहीतादेयमिति । परिगृ-हीतमादेयमुपादेयांऽशो यथा स्यात्तथा समर्पितमित्यर्थः । उपाधिवर्जित-महंकारादिरहितमत एव साक्षादित्युक्तम्। परिवर्जितव्यवधिकं निरस्तपर-स्परभेदकम् । एतच्चैकत्वविशेषणमत्यन्ताऽभेदाऽभिप्रायम् ॥ २६५ ॥

मू० ॥ अनृतजडविभक्तदुःखतुच्छाऽ-
सहनवपुः परमं पदं मुरारेः ॥
परिहृतसकलप्रपञ्चमात्मा
तव तदवेहि तमो निरस्य वाक्यात् ॥ २६६ ॥

टी० ॥ परिगृहीतादेयमित्यनेन सूचितं सत्याद्यवान्तरवाक्यसिद्धं परमं पदं सत्यादिपदानामनृतादिव्यवच्छेद एव प्रातिस्विकं प्रयोजनमिति दर्शयन्ननृताऽऽदिव्यावृत्तिमुखमखण्डवाक्यार्थप्रपञ्चनमुपसंहरति । अनृत-

जडेति । विभक्तेत्यनन्तपदव्यवच्छेद्यं परिच्छिन्नमुक्तम् । तुच्छेति सत्यव्या-वर्त्यम् । एतानानृतादीन सहत इत्यसहनम् एतद्विलक्षणमिति यावत् । एवंविधं वपुर्यस्य तदित्यर्थः । तमः पदार्थाऽविवेकं तद्विवेचनेन निरस्य यत्सत्यज्ञानानन्ताऽमन्दसद्रूपं परिहृतसकलप्रपञ्चमद्वयं मुरारेः परमं पदं तत्त्वात्मेति तत्त्वमादिवाक्यादवेहीति संबन्धः ॥ २६६ ॥

मू० ॥ श्रद्धत्स्व सोम्येति हि शास्ति शास्त्रं
श्रद्धाधनत्वश्रुतिरस्ति चान्या ॥
श्रद्धा तु यस्येत्यपरं चवाक्य-
मधीयते संशयकृत्सनाय ॥ २६७ ॥

टी० ॥ एवंखण्डवाक्यार्थं निरूप्य तस्यातिसूक्ष्मतया पुनः सन्दिहानं प्रत्युपससाद चतुष्टयसाधन इत्यनेन साधनसंपन्नमध्यस्यतयोक्तायामपि श्र-द्धायां तस्याः प्राधान्येन कर्त्तव्यतामभिप्रेत्य तत्र प्रमाणमाह । श्रद्धत्स्वेति । छान्दोग्ये यं वै सोम्यैतमणिमानं न निभालय स एतस्य वै सोम्यैषोणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येत्यतिसूक्ष्मस्य जगन्मूलस्य ब्रह्मणो दुर्विज्ञेयतया तद्विज्ञानसाधनं श्रद्धामिदं वाक्यं विधत्ते । तथा बृह-दारण्यके श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदित्याह । तदिदमाह । श्रद्धाधनत्वश्रुतिरिति । एवं यस्य स्यादद्धा न विचिकित्सास्तीति संशय-निवृत्तयेऽपरमपि वाक्यं छन्दोगा अधीयते ततस्त्वं वर्णितेऽखण्डवाक्यार्थे संशयनिवृत्तये श्रद्धां कुर्विन्यर्थः ॥ २६७ ॥

मू० ॥ अज्ञो विनश्यति पुमानतिमूढभावा-
दश्रद्धयोपहतबुद्धिरतोऽपि कष्टः ॥
कष्टाच्च कष्टतर एव तु संशयात्मा
दुःखी सदेति भगवानपि वासुदेवः ॥ २६८ ॥

टी० ॥ एवं तमो निरस्येत्यज्ञानस्य संशयकृत्सनायेति संशयस्य च निवृत्तिं सूचयता तयोरनर्थहेतुत्वं सूचितं श्रद्धायाश्चानुष्ठेयत्वं सू-

चयता तदभावस्यापि तत्सूचितं तन्नितयं भगवतोऽपि संमतमित्याह । अज्ञो विनश्यतीति । अविवेकी परमपुरुषार्थाद्भ्रश्यतीत्यर्थः । अतिमूढभावात्त्वं पदार्थाविवेकादज्ञोऽपि यदि वैदिकं कर्म श्रद्दध्यात्तस्य कदाचिद्वेदपि पुरुषार्थो न त्वश्रद्दधानस्य, तस्य नास्तिक्यप्रसङ्गेनानर्थसम्भवादित्याह । अश्रद्दयोपहतबुद्धिरिति । बुद्धिर्वैदिकी । कष्टः अतिदुःखीत्यर्थः । यदि कश्चिच्छ्रद्धामपि संपाद्य विवेकादिसाधनचतुष्टयो भूत्वा संन्यस्यानिश्चयरूपाऽऽपातज्ञानेन कृतार्थं मन्यमानः श्रवणादिकं नानुतिष्ठति असावन्ततः सन्दिग्धात्मोभयपुरुषार्थसाधनशून्यत्वात् सर्वथा भ्रष्ट एवेत्याह । कष्टाच्चेति । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मन इति श्रीभगवान्वासुदेव आहेत्यर्थः ॥ २६८ ॥

(शेषमग्रे)

## ॥ माधवीयधातुवृत्तिः ॥

*(Continued from page 221, Vol. V.)*

ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः ॥ कङ्कते । चकङ्के । कङ्कितेत्यादि । वङ्कते । ववङ्के । वङ्कितेत्यादि । प्रवङ्कनम् । प्रावङ्कनम् । 'कृत्यच' इति णत्वम् 'इजादेः सनुम' इति नियमान्न भवति । कङ्कतम् । बाहुलकादतच् । कङ्कत एव कङ्कतिका । संज्ञायां कनि टापि प्रत्ययस्थादितीत्वम् । श्वङ्कते । शश्वङ्के । श्वङ्किता ॥ त्रङ्कते । तत्रङ्के । त्रङ्किता ॥ ढौकते । डुढौके । ढौकिता ॥ त्रौकते । तुत्रौके । त्रौकिता ॥ ष्वष्कते । षष्वष्के । ष्वष्किता । सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेध इति सत्वनिषेधः । वस्कते । ववस्के । वस्किता ॥ मस्कते । ममस्के । मस्किता ॥ टेकते । टिटिके । टेकिता । 'असंयोगाल्लिट् किदि'ति कित्त्वान्न गुणः ॥ टीकते । टिटीके । टीकिता ॥ रङ्घते । ररङ्घे । रङ्घिता ॥ लङ्घते । ललङ्घे । लङ्घितेत्यादि । ढौकतित्रौकत्योर्यङ्लुकोरभ्यासस्य ह्रस्वे गुणः । न च ह्रस्वस्य 'दीर्घा-

क्कित' इत्यनेन बाधः । अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्तइति तत्राक्कित इत्यनेन ज्ञापितत्वात् । अस्ति च दीर्घस्य दीर्घत्वे प्रयोजनं ह्रस्वनिवृत्तिः । कृते तु ह्रस्वे तस्य दीर्घ उकारो न भवति, 'गुणो यङ्लुकोरि'त्यस्य निर्विषयत्वप्रसङ्गात् । ढौकतित्रौकतिटेकति-टीकतीनामृदित्त्वाण्णौ चङ्युपधाया ह्रस्वाभावः । अडुढौकत् ॥ अतुत्रौ-कत् । अटिटेकत् ॥ अटिटीकदित्यादि । लघु । लङ्घिबंह्योर्नलोपश्चेत्यु-प्रत्ययनलोपौ । लघिमा । 'पृथ्वादिभ्य इमनिज्वे'ति भावकर्मणोरि-मनिच् । 'टे'रितीष्ठेमेयस्सु लोपः । वायहृणा'दिगन्ताच्च लघुपूर्वा'दिति अणि लाघवमिति, लघुपूर्वान्तादिति सूत्रार्थः ॥ रघुः । बालमूललघ्वङ्गु-लीनां वा लो रत्वमापद्यतइति पक्षे लकारस्य रेफः । श्वङ्कतिः संमतायां दन्त्यादिः पठ्यते । अत्र दण्डके तिक्क तीक्ष्ण इति क्व चित्पठ्यते, तदपि तिकः प्रतीक इति दर्शनाद् ग्राह्यमेव इगुपधलक्षणकान्तौ । तिकस्याप-त्यं, तैकायनिः । 'तिकादिभ्यः फिञि'ति फिञ् । फस्यायनादेशः । तैकायन-यश्च कैतवायनयश्च तिककितवाः 'तिककितवादिभ्यो द्वन्द्व'इति द्वन्द्वे बहुषु फिञो लुक् । लघि भोजननिवृत्तौ चेति स्वाम्यादयः । लघि शोष-णाद्दत्यये । भाष.र्थ.यं चुरादौ ॥ १०९ ॥

अघि वघि मघि गत्याक्षेपे । आक्षेपो निन्दा, गतौ गमनारम्भे चेति स्वामी । अङ्घते । आनङ्घे । अङ्घितेत्यादि । अञ्जिघिषते । न न्द्रा इति नवर्जं द्विरुच्यते । अभ्यासस्य चुत्वेन झकारे जशत्वे जकारः । अङ्घयति । आञ्जिघत् । वङ्घते । मङ्घते । इत्यादि । प्राङ्घनमित्यादौ 'इजादेः सनुम' इति नियमादणत्वम् । मघि कैतवे च ॥ ११० ॥

राघृ लाघृ सामर्थ्ये ॥ राघते । रराघे । राघितेत्यादि । रिराघिषते । राराघ्यते । राराघीति । रारागिध । लङि । अराराक् । राघयति । अरराघत् । ऋदित्त्वादुपधाह्रस्वनिषेधः । एवमितरयोरपि । उल्लाघः । 'अनुपसर्गा-त्फुल्लक्षीबकृशोल्लाघा' इति क्ते इडभावस्तलोपश्च निपात्यते । उल्लाघेति वचनाद् अनुपसृष्टादन्योपसृष्टाच्च लाघितः प्रलाघित इति भवति । द्राघृ

आयामे च । आयामो दैर्घ्यक्रियेति कौशिकः । कदर्थनमिति स्वामी । धाघृ इति तवर्गचतुर्थादिमपि के चित्पठन्ति ॥ ११२ ॥

श्लाघृ कत्थने ॥ कत्थनं श्लाघनम् । देवदत्ताय श्लाघते । देवदत्तं स्तुवन्तं स्तुतिमवबोधयितुमिच्छतीत्यर्थः । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः'। श्लाघादीनां प्रयोगे ज्ञीप्स्यमानो ज्ञापयितुमिष्यमाणः संप्रदानमिति देवदत्ताच्चतुर्थी, के चिदाहुः । आत्मानं परं वा स्तुवन् तां स्तुतिं बोधयितुमिच्छतीत्यर्थ इति । तथा च भट्टिः, श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसेश्वर इति । देवदत्तं श्लाघत इति ज्ञीप्स्यमानत्वाविवक्षायां कर्मत्वम् ॥ शीकाद्य उदात्ता अनुदात्तेतो गताः ॥ ११३ ॥

अथ परस्मैपदिन आह ॥ फक्क नीचैर्गतौ ॥ इतः शिघ्यन्ता उदात्ता उदात्तेतः । नीचैर्गतिर्मन्दगमनमसद्व्यवहारो वेति स्वामी । फक्कति । पफक्क । फक्किता । फक्किष्यति । फक्कतु । अफक्कत् । फक्केत् । आशिषि फक्क्यात् । अफक्कीत् । अफक्किष्यत् । कर्मादौ फक्क्यत इत्यादि । पिफक्किषति । पाफक्क्यते । पाफक्कीति । पाफक्ति । फक्कयति । अपफक्कत् ॥ ११४ ॥

तक हसने ॥ तकति । तताक । तेकतुः । तकिता । अतकीत् । अताकीद् इत्यादि । अतो हलादेरिति वा वृद्धिः । व्यतितकन्ति । प्रतिषेधे हन्यादीनामिति तङ्निषेधः । तक्यम् । तकिशसीति यत् ॥ ११५ ॥

तकि कृच्छ्रजीवने ॥ तङ्कति । ततङ्क । तङ्कितेत्यादि । यङ्लुकि लङि ईडभावे अतातन् । अस्यानन्तरं मैत्रेयः शुक गताविति पठित्वा शोकति शुकः शुक्र इत्युदाजहार, अस्मिन्हि सति शुकवल्कोल्का इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्याद् इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्, तथा शुकेरग्विधानेनापि शुक्रशब्दे सिद्धे ऋज्रेन्द्रैः शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठो ऽनार्ष इव प्रतीयते ॥ ११६ ॥

बुक्क भषणे ॥ भषणमिह श्वरवः । बुक्कति । बुबुक्क । बुक्कितेत्यादि । अयं चुरादावपि ॥ ११७ ॥

कख हसने ॥ कखति । चकाख । कखितेत्यादि । अकखीत् । अकाखीत् । अतो हलादेरिति वा वृद्धिः ॥ ११८ ॥

ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः ॥ ओखति । ओखां चकार । ओखितेत्यादि । ओचिखिषति । ओखयति । मा भवानोचिखत् । 'द्विर्वचनेचो'ति णिलोपस्य स्थानिवत्त्वात् खिशब्दस्य द्वितीयस्यैकाचो द्विर्वचनमृदित्त्वाच्चोपधाह्रस्वः । इदमेव ऋदित्त्वं ज्ञापकमन्तरङ्गादपि द्विर्वचनात्पूर्वमुपधाह्रस्वत्वं भवतीत्यस्य । अस्य च प्रयोजनं मा भवानिदिधिधदिति सिद्धिरित्येधतावुक्तम् । प्रोखति । 'एङि पररूपम्' । अवर्णान्तादुपसर्गादेङि परे पूर्वपरयोः पररूपमिति पररूपत्वम् । राखति । अराखत् । लाखति । द्राखति । ध्राखतीत्यादि ॥ १२४ ॥

शाखृ श्लाखृ व्याप्तौ ॥ शाखति । श्लाखतीत्यादि । शाखा । गुरोश्चेत्यकारः । शाखेव शाख्यम् । 'शाखादिभ्यो य' इति इवार्थे यः । प्रतिशाखं भवं प्रातिशाख्यम् । 'अव्ययीभावाच्चे'ति भवार्थे ण्यः । शाखा अस्य सन्तीति, शाखी 'व्रीह्यादिभ्यश्चे'ति इनिः । विशिष्टा शाखा विशाखा । सा प्रयोजनं प्रयोजिका यस्य वैशाखो मन्थः । 'विशाखाषाढादण्मन्थदण्डयो'रिति प्रयोजने णप्रत्ययः । विशाखेति नक्षत्रं तत्र जातः । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि'त्यण् । तस्य श्रविष्ठाफल्गुनीत्यादिना लुकि 'लुक् तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुकि विशाखो माणवकः ॥ १२६ ॥

उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः ॥ द्वितीयान्ताः पञ्चदश तृतीयान्तास्त्रयोदश ॥ ओखति । प्रोखति । 'एङि पररूपम्' । उवोख । ऊखतुः । उवोखिथ । उवोख । गुणविषये 'ऽभ्यासस्यासवर्णे'इति अभ्यासस्येवर्णोवर्णयोरसवर्णेऽचि परत इयङुवङावित्युवङ् । लिटि पित्सुवचनेषु गुणः, गुरुमानयं धातुरिति तेषां स्थानिवत्त्वेन लिट्त्वाद् आम् प्राप्तः सन्निपातपरिभाषया निवर्त्तते । आमि गुणनिमित्तप्रत्ययस्य 'आम' इति लुक् स्यात् । ऊखतुरित्यादौ सवर्णदीर्घस्यान्तवत्त्वेनाभ्यासत्वाद् ह्रस्वो न भवति, अभ्यास-

मात्राश्रयत्वेनान्तरङ्गेऽस्मिन् पूर्वपराश्रयस्य बहिरङ्गस्य सवर्णदीर्घस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् । ओखितेत्यादि । लुङि 'नेटी'ति वृद्धिनिषेधे लघूपधगुणेन मा भवानोखीदिति भवति । ओचिखिषति । लघूपधगुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् । ओखयति । मा भवानुचिखत् । द्विर्वचनात् पूर्वमेवोपधाह्रस्वत्वमिति ज्ञापितम् । ओखित्वा । 'न क्त्वा सेडि'ति अकित्त्वाद्गुणः । भावादिकर्मणोर्निष्ठायामुदुपधादिति कित्त्वविकल्पनादुखितमनेन, ओखितमनेनेत्यादि नेयम् । उखो मुनिः । इगुपधत्वात्कः । उखेन प्रोक्तः औखीयः श्लोकः । 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्'इति तृतीयान्तात् प्रोक्तार्थे छण्, णित्त्वाद्वृद्धिः । यदा तु प्रोक्तं छन्दो ब्राह्मणं वा तदा 'छन्दोब्राह्मणानि च तद्विषयाणी'ति नियमाद् अध्येतृवेदितृप्रत्ययविषयमेव, तेन 'तदधीते तद्वेदे'ति औखीयशब्दाद् द्वितीयान्ताद् अध्येतृवेदित्रोरण्, तस्य 'प्रोक्ताल्लुगि'ति प्रोक्तप्रत्ययाच्छणः परत्वेन लुकि औखीयो माणवकः । औखीया ब्राह्मणीत्यत्र प्रत्ययलक्षणेनाणन्तत्वाद् टिड्ढाणञ् इति न ङीप् भवति, अत इत्यनुवर्त्याणोऽकारस्य च विशेषणविशेष्यत्वाश्रयणाद् वर्णाश्रयत्वाद् 'वर्णाश्रये नास्ति प्रयलक्षण'मिति प्रत्ययलक्षणनिषेधात् ॥ उखायां संस्कृतमुख्यम् । 'शूलोखाद्यदि'ति सप्तम्यन्तात्संस्कृतमित्यर्थे यत् ॥ प्रोखणम् । 'कृत्यच' इति णत्वम् । उङ्खति । उङ्खां चकार । उङ्खिता । उञ्चिखिषति । उङ्खयति ॥ ओञ्खिखदित्यादि । प्रोङ्खणम् । 'इजादेः सनुम' इति णत्वम् । वखति । ववाख । वखितेत्यादि, ववखतुरित्यादौ क्ङिति लिटि वकारादित्वादेत्वाभ्यासलोपौ न । लुङ्यतो हलादेरिति वा वृद्धिः । अवखीत् । अवाखीदिति । एवं परेषामनिदिताम् । वङ्खयति । प्रवङ्खनम् । इजादेरिति नियमादणत्वम् । मखति । ममाख । मखितेत्यादि । मङ्खति । नखति । नङ्खति । मूर्धन्यादेरुपदेश उपसर्गादिति णत्वेन प्रणखतीत्याद्यपि यथा स्यादिति । रखति । रङ्खति । प्ररङ्खणम् । रषाभ्यामिति णत्वम् । इजादेरिति नियम उपसर्गात्कृत्यच इति प्राप्तस्यैव । लखति । लङ्खति । इखति । इयेख । इखितेत्यादि । ओखतिवत् । इङ्खति । इङ्खां चकार । ईखति । ईखां चकार । यद्यपि

मैत्रेयेणादितस्त्रय इदित उखिवखिमखयः । मूर्द्धन्यादिर्नेखिरनिदित्, इखिश्च न पठ्यते, तथापि इतरानेकव्याख्यातॄणां प्रामाण्यादस्माभिः पठितः । अत्र चन्द्रो मुखिमपि पपाठ । संमतायां तु त्रख त्रखि शिखि इति त्रयः पठ्यन्ते । द्रविडास्तु रिखमपि पठन्ति,एवमेकोनविंशतिः खन्ताः । वल्गति । रङ्गति । रङ्गन्त्यस्मिन् प्रेक्षकाणां मनांसीति, रङ्गः । 'हलश्चे'ति संज्ञायामधिकरणे घञ् । रञ्जेर्वा घो द्रष्टव्यः । लङ्गति । विलगितः । 'अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानमिति' नलोपः । उपतापादन्यत्र लङ्गितः । अङ्गति । अङ्गन्त्यत्रावयवीत्यङ्गम् । रङ्गवद् घञ् । अङ्गन्त्यत्रेति अङ्गा जनपदः । पूर्ववद् घञ् । अङ्गिरगतौ विपरीतलक्षणया प्रवर्तते, दर्श इत्यत्र दृशिवत् । न दृश्यतेऽस्मिन् चन्द्र इति हि दर्शशब्दो धूर्त्तस्वामिना व्युत्पादितः । कल्याण्यङ्गान्यस्याः सन्तीति अङ्गना । 'अङ्गात् कल्याणे'इति पामादिपाठान्मत्वर्थीयो नः, विशिष्टं विहीनं वा ऽङ्गमस्येति व्यङ्गः, तस्यापत्यं व्याङ्गिः'अत इञ्' 'स्वागतादिनां चे'ति वृद्धिप्रतिषेधैजागमयोर्निषेधः । एवं स्वाङ्गिरित्यत्रापि । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणः स्नायुः, 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोती'ति सर्वादेः पथ्यादन्तात् द्वितीयान्ताद्व्याप्नोतीत्यर्थे खः । अग्निः । अगेर्निर्न-लोपश्चेति निप्रत्ययो नलोपश्च । अग्निर्देवता अस्य, आग्नेयं हविः । सर्वत्राग्निकलिभ्यां ढग्वक्तव्य'इति ढक् प्रत्ययः । सर्वत्रेति वचनादर्थान्तरेप्ययमेव । अग्नीषोमौ । अग्नीवरुणौ । 'ईद्ग्नेः सोमवरुणयो'रिति देवताद्वन्द्वलक्षणस्यानङोपवाद ईकारः । अग्नीवरुणौ देवता अस्याग्निवारुणम् । 'देवताद्वन्द्वे चे'त्युभयपदवृद्धिः । 'इद्वृद्धा'विति वृद्धिमत्युत्तरपदे अग्नेरिकार ईत्वापवादः । अग्नायी । 'वृषाकप्यग्निकुसितकुसिदानामुदात्त'इति पुंयोगे ङीष्युदात्तऐकारान्तादेशे आयादेशः । अग्नायी देवता अस्य आग्नेयम् । लिङ्गविशिष्टपरिभाषया 'सर्वत्राग्निकलिभ्यां ढगि'ति ढकि 'भस्याढे तद्धित' इति पुंवद्भावपर्युदासे स्त्रीभ्यो ढको ग्रहणमिति कैयटादावुक्तत्वात्पुंवद्भावः । अग्निमिन्द्ध इत्यग्निमिन्द्धः । 'भ्राष्ट्राग्न्योरिन्धे मुम्वक्तव्य' इति मुम् । अग्रम् । ऋज्रेन्द्राग्रेति निपातनाद्रकि नलोपः । अग्रे भव-

मङ्गिमम् । 'अयादिपश्चाड्डिमजि'ति डिमच् । अङ्गारः । 'अगिमगिनन्दिभ्य-आर'चित्यारन् । अङ्गुलिः । रुतन्यञ्जीत्यादिना उलिप्रत्ययः, अङ्गुरिः । बालमूलेत्यादिना पत्ते रः । पञ्चाङ्गुलयः प्रमाणमस्य पञ्चाङ्गुलः । 'तद्धि-तार्थोत्तरपदसमाहारे च' तद्धितार्थे विषयभूते उत्तरपदे परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन समं समस्येते इति प्रमाणे तद्धितार्थे विषयभूते समासः । 'सङ्ख्यापूर्वो द्विगु'रिति द्विगुत्वे 'द्विगुश्चे'ति तत्पु-रुषश्चार्थोत्तत्र 'प्रमाणे द्वयसज्दघ्नञ्मात्रच' इति प्रमाणोपाधिका-दस्मात्प्रमाणानि मात्रच्, तस्य 'द्विगोर्लुङ् नित्य'मिति लुकि 'तत्पुरुष-स्याङ्गुलेः सङ्ख्याव्ययादे'रित्यचि 'यस्येति चे'तीकारलोपः । अत्यङ्गुलम् । अत्यादयः क्रान्ताद्यर्थेइति तत्पुरुषः, अव्ययादित्वादच् । शोभनाङ्गुलिः स्वङ्गुलिः । 'न पूजनात्' । यान् शब्दानुपादाय समासान्ता विधीयते ते यदा पूजावचनात्परे भवन्ति तदा समासान्तो नेत्यत्राचोभावः । कुत्सि-ताङ्गुलिः किमङ्गुलिः । 'किं क्षेपे' । क्षेपे यः किंशब्दः स समानाधिकरणेन सुबन्तेन समर्थेन समस्यतइति तत्पुरुषः । किमः क्षेपइति क्षेपवचना-दस्मात्परस्य समासान्तनिषेधाद् अज्ञ भवति । नाङ्गुलिः, अनङ्गुलिः । तत्र 'नञस्तत्पुरुषा'दिति समासान्त निषेधः । नञः परे ये वर्तमाना ऋगादयस्तदन्तात्तत्पुषाचेति सूत्रार्थः । पञ्चाङ्गुलिसदृशा अवयवा अस्य पञ्चाङ्गुल एरण्डः । धान्यादीनां विक्षेपदारु च पञ्चाङ्गुलमाहुः । अङ्गुलेर्दारुणीति बहुव्रीहौ षच् । अङ्गुलीयमेवाङ्गुलीयकम् । संज्ञायां कन् । 'जिह्वामूलाङ्गुलेश्छ' इति सप्तम्यन्ताद्भवार्थे छः । वङ्गतीति वङ्गाः जनपदः । अङ्गवद्व्युत्पत्तिः । मङ्गतीति मङ्गलम् । 'मङ्गेरलजि'त्यलच् । तङ्गति । त्वङ्गति । श्रङ्गति । श्लङ्गति । इङ्गति । रिङ्गति । लिङ्गति । लिगि चित्रीकरणे-ति चुरादौ च ॥ १५३ ॥

त्वगि कम्पने च ॥ त्वङ्गति ॥ १५४ ॥

युगि जुगि वुगि वर्जने ॥ युङ्गति । जुङ्गतीत्यादि ॥ १५७ ॥

घघ हसने ॥ घघति । जघाघ । घघितेत्यादि ॥ १५८ ॥

मघि मण्डने ॥ मङ्घति । मङ्घते कन्या स्वयमेव । अमङ्घिष्ट

क्न्या स्वयमेव, भूषाकर्मत्वाच्च यक्चिणौ। मङ्कुनः। 'क्रुधमण्डार्थेभ्यश्चे'ति युच् ॥ १५९ ॥

शिघि आघ्राणे ॥ शिङ्घति। शिङ्घानको रोगविशेषः। लूमिङ्घिधाभ्यश्चेत्यादिना नक् प्रत्ययः॥ फक्कादय उदात्ता उदात्तेतः॥ १६० ॥

अथ क्रमप्राप्तांश्चवर्गान्तानात्मनेपदिन आह ॥ वर्च दीप्तौ ॥ एतदादय ईजन्ता उदात्ता अनुदात्तेतः। वर्चते। ववर्चे। वर्चिता। वर्चिष्यते। वर्चताम्। अवर्चत। वर्चेत। आशिषि वर्चिषीष्ट ॥ अवर्चिष्ट। अवर्चिष्यत। भावे वर्च्यते इत्यादि। विवर्चिषते। वावर्च्यते। वावर्चीति। वावर्क्ति। अवावर्चीत्। अवावर्क् 'रात्सस्ये'ति नियमान्न संयोगान्तलोपः। अवार्क् स्यातेत्यादौ कुत्वस्यासिद्धत्वात्स्कोरिति कलोपो न भवति, यद्वा तत्र निमित्तनिमित्तिनोः समानपदस्थत्वएव सलोप इतीह नैव प्रसङ्गः। वर्चयति। अववर्चत्। वर्चः दीप्तिः पुरीषं च। असुनित्यसुन्। वर्चस्कः पुरीषम्। संज्ञायां कन्, 'सोपदादा'विति विसर्जनीयस्य सत्वं, कुप्वोरित्यस्यापवादः। ब्रह्मवर्चसम्। हस्तिवर्चसम्। 'ब्रह्महस्तिभ्यां वर्चस' इत्यच् समासान्तः। पल्यवर्चसम्। राजवर्चसम्। पल्यराजभ्याञ्चेत्यच्। ब्रह्मवर्चसनिमित्तं संयोग उत्पातो वा ब्रह्मवर्चस्यम् ॥ तस्य निमित्तप्रकरणे ब्रह्मवर्चसादुपसङ्ख्यान'मिति यत् ॥ वर्च्यम्। ण्यति'चजोः कुघिण्ण्यतो'रिति कुत्वं न भवति। न क्वादेरित्यत्र क्वाद्यजिव्रजियाचिरुच्यादीनां न प्रतिषेधो निष्ठायामनिटः कुत्ववचनात्। अस्यार्थः। चजोः कुघिण्ण्यतोर्निष्ठायामनिट इति सूत्रं कर्त्तव्यं तेन न क्वादेः अजिव्रज्योश्चेति योगद्वयं 'यजयाचरुचप्रवचर्चश्चे'त्यत्र याचिरुच्यृचिग्रहणं न कर्त्तव्यं भवतीति। तेषां सेट्त्वादित्यभिप्रायः। अयमत्र विवेकः। ये क्वादयोऽन्ये वा निष्ठायामनिटस्तेषां कुत्वं ये तु सेटस्तेषां नेति। एवञ्चात्र मते ग्लुचादीनां कवर्गादित्वेपि निष्ठायामनिट्त्वात्कुत्वेन भाव्यम्। अत्र हरदत्तः। यथोत्तरं मुनीनां प्रामाण्यमिति वार्त्तिककारानुसारेण कुत्वस्यभावाभावौ व्यवस्थाप्याविति। कथन्तर्हि शोकः समङ्ग इति। यतः शुच्युब्जी निष्ठायां सेटौ ॥ अत्र भाष्यं शुच्युब्ज्योर्घञि कुत्वं वक्तव्यमिति। अत्र हरदत्तः। तच्च

यथान्यासेपि वक्तव्यं घञ्येव यथा स्यात् ण्यति माभूदिति तदेव वार्त्तिककारपत्ते विध्यर्थं भविष्यतीति ॥ १६१ ॥

षच सेचने ॥ अयं सेवनार्थोपि, तथा च त्रय एनां महिमानः सचन्त इत्यत्र उरभट्टभास्करीययोः सचते सेवतइति निरुक्ते च सक्तः सचित इति, सेव्यमानस्येति । अस्यैतौ वाचकावित्यर्थः । "प्रनूमहित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्त" इति ॥ सचते । सेचे । सचिता । सचिष्यते । सचताम् ॥ असचत । सचेत । आशिषि सचिषीष्ट । असचिष्ठ । सिसचिषते । स्तौतिण्योरेवेत्यषत्वम् । सासच्यते । सासक्ति । साचयति । असीषचत् । सक्तुः । सितनिगमिमसिसच्यविति तुन् । तितुत्रेतीण्निषेधः । सक्तुलः । 'सिध्मादिभ्यश्चे'ति मत्वर्थे लः । सचिवः । बाहुलकाद्वप्रत्ययः । यद्वा सचिः सेवा, इन् प्रत्ययः, तां वातीति सचिवः, 'आतानुपसर्गे कः' । यद्वा 'केशाद्वोन्यतरस्या'मिति वप्रत्ययः 'अन्येभ्योपि दृश्यत'इति मणिवराजीवादिवदस्मादपि । अयं समवाये स्वरितेदयं ॥ १६२ ॥

लोचृ दर्शने ॥ लोचते । लुलोचे । लोचितेत्यादि । लुलोचिषते । लोलोच्यते । लोलोचीति । लोलोक्ति ॥ लोचयति । अलुलोचत् । ऋदित्वाण्णौ चङि ह्रस्वाभावः । भाषार्थोयं चुरादौ ॥ १६३ ॥ (शेषमग्रे)

## ॥ अथ चित्सुखी ॥

### ॥ तत्र द्वितीयपरिच्छेदारम्भः ॥

*(Continued from page 208. Vol. V.)*

ननु कथं विगलितनिखिलभेदब्रह्मप्रतिपत्तिः, प्रत्यक्षादिविरोधात्, तथाहि प्रत्यक्षेण तावदिदमस्माद्भिन्नमिति नीलपीतादेर्भेदमध्यवस्यामः, अथ मतम्, किं प्रत्यक्षं भेदमेव गोचरयत्युत वस्त्वपि, यदि वस्त्वपि तदा भेदपूर्वकं तद्गोचरयेत् तत्पूर्वकं वाभेदं युगपदेव वोभयम् ।

नाद्यः, धर्मिप्रतियोगिवस्तुप्रतिपत्तिमन्तरेण भेदस्य प्रत्येतुमशक्यत्वात्, अत एव न भेदग्रहपूर्वको वस्तुग्रहः ।

न च वस्तुग्रहपुरःसरो भेदग्रहः, बुद्धेर्विरम्य व्यापाराभावात् ।

नापि युगपदुभयग्रहः, कार्यकारणबुद्ध्योर्यौगपद्यायोगात्, धर्मिप्रतियोगिप्रतिपत्तिर्हि भेदप्रतिपत्तेः कारणम्, संनिहितेऽपि धर्मिण्यसंनिहितप्रतियोगिप्रतिपत्तिमन्तरेण भेदप्रतिपत्त्यतिरेकस्य वादिप्रतिवादिनोः संमतत्वादिति, मैवम्, स्वरूपभेदवादिनं प्रत्येतेषां विकल्पानामनवसरदुःस्थत्वात्, वस्तुग्रहस्यैव भेदग्रहत्वात् ।

न च वस्तुस्वभावस्यैव भेदत्वे तद्ग्रहस्य प्रतियोग्यनपेक्षत्वप्रसङ्गः, वस्तुस्वभावतया भेदस्यानपेक्षदृष्टिदृष्टस्य सविकल्पके व्यवहारे प्रतियोगिसापेक्षत्वोपपत्तेः, दृश्यते हि प्रादेशमात्रपरिमाणवस्तुनोऽनपेक्षदृष्टिदृष्टस्य ह्रस्वं दीर्घमिति सविकल्पके व्यवहारे न्यूनाधिकपरिमाणवस्तुग्रहसापेक्षता ।

न च धर्मभेदवादिनं प्रत्यप्येते विकल्पाः प्रसरमर्हन्ति, युगपदुभयग्रहेऽपि विरोधाभावात्, असंनिहिते धर्मिणि प्रतियोगिनि वा युगपदुभयग्रहाभावेऽपि संनिहितस्थले दण्डी देवदत्त इतिवदपर्यायमेवोभयग्रहोपपत्तेः ।

न च धर्मभेदवादे तस्य स्वभेदस्य भेदान्तरभेद्यत्वादनवस्थादोषापत्तिः, मूलक्षतेरभावात्, "मूलक्षतिकरीं प्राहुरनवस्थां हि दूषण"मिति न्यायात् ।

ननु धर्मपक्षेऽपि धर्मिणो भेदेन प्रतिपन्नस्य प्रतियोगितायां परस्पराश्रयो दोषः, स्तम्भात् कुम्भस्य भेदसिद्धौ कुम्भात् स्तम्भस्य भेदसिद्धिरिति ।

अप्रतिपन्नभेदस्य तु प्रतियोगितायां दुष्परिहरः स्वात्मनोऽपि तत्प्रसङ्ग इति चेत्, मैवम्, विद्यमानभेदयोरपि स्वरूपेण स्वस्फुरतोर्धर्मिप्रतियोगित्वोपपत्तावेकस्मिन् भेदग्रहप्रसङ्गाभावात् ।

ननु क्षीरनीरयोर्विद्यमानभेदयोरपि स्वरूपग्रहणे भेदग्रहो न दृश्यत इति चेत्, मैवम्, तत्र समानाभिहारलक्षणदोषप्रतिबन्धादेव तदग्रहोपपत्तेः, एतेन दूरस्थवनस्पत्योरपि भेदग्रहप्रसङ्गः प्रत्युक्तः, उक्तं तु ।

"अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च" ॥

इति ।

किंचैकस्यामेव निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपत् प्रतिभासे सत्येकं भेदिनं प्रतियोगीकृत्यैतस्मादयं भिन्न इति सविकल्पकबोधोत्पत्तौ कुतः परस्पराश्रयो दोषः, एतेन भेदभेदिनोर्भेदान्तरप्रतीतिमन्तरेण विशेषणविशेष्यभावासंभवाद्भेदस्य विशेषणत्वेन विशेष्यत्वेन वा प्रतीतिनियमादनवस्था मूलक्षयकरी स्यादित्यपि प्रत्युक्तम्, विद्यमानभेदयोः स्वरूपेण स्फुरतोरेव धर्मप्रतियोगित्ववद्विशेषणविशेष्यभावस्याप्युपपत्तेः ।

तदेवं प्रत्यक्षप्रमितिगोचरो भेदः, अनुमानमपि लिङ्गविशेषाल्लिङ्गिविशेषप्रत्यायकत्वाद्भेदे प्रमाणम्, आगमोऽपि शब्दान्तराभ्याससंख्यागुणप्रक्रियाभेदैर्नामधेयैः कर्मोपासनादिभेदमेव बोधयति, उपमानमपि प्रत्यक्षदृष्टगवयसादृश्यविशिष्टपरोक्षगोविषयमनेन सदृशी मदीया गौरिति भेदमेव गृह्णाति. अर्थापत्तिरपि तिलेभ्य एव तैलं पयस एव दधीति व्यवस्थान्यथानुपपत्तिप्रभवा भेदमेवालिङ्गते, योग्यानुपलब्धिरप्यन्योन्याभावलक्षणं भेदं बोधयन्त्येव, तदेवं भेदग्राहकप्रत्यक्षादिविरोधाचाद्वैतं प्रतिपादयितुमर्हन्ति वेदान्ताः, प्रयोगश्च, घटो घटनिष्ठमिथ्याभेदातिरिक्तभेदाश्रयो दृश्यत्वात् पटवत् । अत्राभिदध्महे ।

सापेक्षत्वात् सावधेश्च तत्त्वे द्वैतप्रसङ्गतः ।
एकाभावादसंदेहान्न रूपं वस्तुनो भिदा ॥ १ ॥

न तावत् स्वरूपभेदः,प्रतियोग्यनपेक्षत्वप्रसङ्गात् ।

न च प्रादेशमात्रपरिमाणस्य ह्रस्वदीर्घादिव्यवहार इव सविकल्पकव्यवहारे भेदस्यापि प्रतियोगिसापेक्षत्वं वैषम्यात्, तथाहि[1] प्रादेश-

[1] स्वतो न्यूनपरिमाणेन स्वतोऽधिकपरिमाणेन च सहैकद्रव्ये समवायविरोधाद्धर्मद्वयं दीर्घत्वह्रस्वत्वात्मकमस्य प्रादेशमात्रपरिमाणस्य तद्विशिष्टतया प्रतीतावेव, तत्रापि प्रतियोग्यपेक्षा न स्वरूपमात्रप्रतीताविति न भेदस्योदाहरणं तदित्यर्थः ।

मात्रपरिमाणं स्वतो न्यूनाधिकपरिमाणाभ्यामेकद्रव्यसमवायविरोधिधर्मद्वयविशिष्टतयोपलम्भे प्रतियोगिनमपेक्षत इत्यस्त्येव तत्र मेयभेदः, प्रकृते तु न तथा, स्वरूपस्यैव भेदत्वात् ।

यदि चास्मादयं भिन्न इति प्रतियोगिघटिततया प्रतीयमानो भेदो वस्तुनः स्वरूपं स्यात् तदा तस्य सपरिकरस्य भेदस्य स्वरूपेऽन्तर्भावात् प्रतियोगिनोऽपि स्वरूपतया निमज्जनादद्वैतमेव पर्यवस्येत् ।

अथ प्रतियोगी स्वरूपे नान्तर्भूतः किंतु तटस्थ एव तन्निरूपकस्ततो नाद्वैतापत्तिरिति चेत्, मैवम्, प्रतियोगिनो भेदस्वभावानन्तर्भावेऽपि स्वभावभूतस्य भेदस्य वस्तुस्वभाववदेवान्यनिरूप्यत्वानुपपत्तेः ।

किंच कुम्भं प्रति स्तम्भस्य यत् प्रतियोगित्वं तदपि स्तम्भस्य स्वरूपेऽन्तर्भूतं चेत्, कुम्भस्यापि स्तम्भात्मना पर्यवसानादद्वैतापत्तिः, धर्मत्वे च कुम्भोऽपि स्तम्भधर्मतामनुप्रविशेत्, कुम्भविशेषितस्य प्रतियोगित्वस्य स्तम्भधर्मत्वात् ।

अथ विशेष्यांशस्य धर्मतायामपि न विशेषणस्य तद्धर्मता, देवदत्तश्चित्रगुरित्यादौ बहुव्रीहिसमासाभिहितस्वामित्वस्य देवदत्तधर्मतायामपि गवां चित्रतायाश्च देवदत्ताद्भिन्नत्वेन धर्मत्वादर्शनादिति सत्यमेषा विभीषिका तदा समुन्मिषेद्यदि लोके क्वापि कमपि भेदं परमार्थसत्यमभ्युपगच्छेम, यदा पुनरद्वैतमेव परमार्थमवलम्ब्य समस्तं भेदजातं प्रत्याचिख्यास्यामस्तदा घटस्य स्तम्भधर्मतायां गवां देवदत्तधर्मतायां वा कं विशेषमवलोकयसि येनैवमुपालभसे, दृष्टचरं चैतद्विशिष्टस्य धर्मतायां विशेषणानामपि तद्धर्मत्वं तेषु तेषु बहुषु स्थलेषु तद्यथा शब्दोऽनित्यो भावत्वे सति कृतकत्वात्, नित्यो ध्वनिधर्मान्यत्वे सति श्रावणत्वात्, अनित्यः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादित्यादिषु, तदेवं स्तम्भस्य कुम्भधर्मता कुम्भस्यापि स्तम्भधर्मतेति सर्वस्यान्योन्यधर्मतायामशेषवस्तुधर्मकमेकमेव धर्मि पर्यवस्येत्, न चैवमुपलभ्यते ।

किंच विदारणात्मकभेदस्य भावस्वभावतायां न किंचनैकं वस्तु स्यात्, अभेदैकार्थसमवायिन्या एकताया भेदेन विरोधात् परमाणुरपि नैक

इति न तत्समाहाररूपोऽनेकोऽपि स्यात्. भेदस्य च वस्तुस्वभावत्वेऽन्यापेक्षत्वनिरासादेवान्यापेक्षं वस्तुस्वरूपं भेदो न तु केवलमतो नोक्तदोष इत्यपि निरस्तम् ।

यदि च स्वरूपं भेदस्तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति न क्वचिदपि संशयावकाशः, तथा विपर्ययस्यापि भेदस्वभावस्य वस्तुनस्तथैवावभासनात्, तस्मान्न स्वरूपभेदे प्रत्यक्षं प्रमाणम्, तथा धर्मभेदेऽपि ।

युगपद्ग्रहणायोगादनवस्थाप्रसङ्गतः ।
परस्पराश्रयत्वाच्च धर्मभेदेऽपि नाक्षधीः ॥ २ ॥

यद्यपि दण्डदेवदत्तौ तुल्योपलम्भयोग्यत्वेन युगपद्गृह्येते तथापि न तयोर्विशेषणविशेष्यभावस्तदैव प्रत्येतुं युक्तः, विशिष्टप्रत्ययस्य विशेषणविशेष्यस्वरूपप्रत्ययाधीनत्वात्, ।

विशेषणं[1] विशेष्यं च संबन्धं लौकिकीं स्थितिम् ।
गृहीत्वा संकलय्यैतत् तथा प्रत्येति नान्यथा ॥

इति भट्टमतानुसारिभिः स्वीकारात्, तथा तार्किकैरपि[2] "समवायिनः श्वैत्यात् श्वैत्यबुद्धेः श्वेतबुद्धिस्ते कार्यकारणभूते" इति काणादसूत्रात्, अस्यायमर्थः, पटसमवायिनः श्वैत्याच्छौक्ल्यगुणात् कर्मकारणभूतात् तस्मिन् गुणे शौक्ल्यमिति मतिरुपजायते, तस्याश्च श्वैत्यबुद्धेर्हेतोर्गुणविशिष्टे शुक्लमिदमिति बुद्धिरुपजायते, ते च बुद्धी कार्यकारणभूते इति, तथा च सुरभि चन्दनमिति सौरभस्य गुणस्य घ्राणेन्द्रियैकगोचरस्यैकेन्द्रियाविषयत्वात् क्रमेण गृहीतयोरेव विशेषणविशेष्यभावप्रतीतिरित्यनिच्छ-

---

१ विशेषणमिति, विशेषणं दण्डं विशेष्यं च देवदत्तं तयोः संबन्धं च संयोगलक्षणं गृहीत्वा पश्चात् संकलय्यैकज्ञानेनापरोक्षितयानुभूय दण्डीति प्रत्येति, नान्यथेत्यन्वयः । ननु संयोगस्य द्विष्ठतया दण्डी पुरुष इतिवत् पुरुषो दण्ड इति व्याहारव्यवहारौ किमिति न स्यातामित्यत आह लौकिकीं स्थितिमिति, अनादिपारम्पर्यायाताया लोकव्यवस्थितेरेव तत्र नियामकत्वाच्च वैपरीत्येन प्रत्ययावित्यर्थः ।

२ स्वीकारादित्यनुषङ्गः ।

नाप्यभ्युपेयम्, तथा च[1]सर्वत्र विशेषणविशेष्यभावप्रतीतावयमेव न्याय इत्यस्मादिदं भिन्नमिति धर्मिप्रतियोगिज्ञानपुरःसरमेव तद्विशिष्टभेदज्ञानमेष्टव्यम्, तथा च सति न युगपदुभयग्रहसंभवः, भेदभेदिनोश्च भेदेऽनवस्थापि तदवस्थैव ।

न चानन्तभेदाभ्युपगमेऽपि मूलक्षतेरभावादनवस्थादोषाय भेदस्य, इदमतो भिन्नमयमनयोर्भेद इति वा विशिष्टत्वेनैव प्रतीतिनियमात्, भेदेनैव च प्रतिपन्नस्य विशेषणत्वात्, ततश्च पूर्वपूर्वभेदप्रतीतिमन्तरेणोत्तरोत्तरभेदप्रतीतेरसंभवाद् युगप[2]दनन्तभेदप्रतीतेरसंभवाच्च जातैव मूलक्षतिः ।

अथ विद्यमानभेदस्य स्वरूपेण गृहीतस्य विशेषणतोपपत्तौ भेदाप्रतीतिः किं करिष्यतीति, तन्न, क्षीरनीरयोर्दूरस्थवनस्पत्योश्च तथात्वाप्रतीतेः ।

न च तत्र दूरत्वादिदोषप्रतिबन्धात् तदग्रह इति वाच्यम्, विद्यमानभेदयोरपि भेदेनाप्रतिपत्तौ विशेषणविशेष्यभावाग्रहे सिद्धे कारणविशेषोपन्यासस्य निष्प्रयोजकत्वात्, न ह्युभयवादिसंमतं तथाविधं स्थलमस्ति यत्र विद्यमानभेदयोः स्वरूपप्रतिपत्तिमात्रेण विशेषणविशेष्यभावग्रहणम्, एतेन भिन्नतया प्रतिपन्नयोरेव धर्मिप्रतियोगिभाव इतीतरेतराश्रयदोषो वज्रलेपायते ।

न च निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासमानादिदमस्माद्भिन्नमिति सविकल्पकव्यवहारोपपत्तेः कथमितरेतराश्रयतेति वाच्यम्, निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वान्नित्यं प्रतियोगिघटित एव तस्मिन् प्रमाणप्रसरात् ।

कश्चायं धर्मभेदः, किमन्योन्याभावः किं वा वैधर्म्यमुत पृथक्त्वमाहोस्विद्भिन्नलक्षणयोगिता ।

तत्र तावत्,

---

१ विवादाध्यासितं विशिष्टज्ञानं विशेषणज्ञानजन्यं प्रत्यक्षत्वे सति विशिष्टज्ञानत्वात् सुरभिचन्दनमिति ज्ञानवदित्यनुमानेन सर्वस्यापि विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वसिद्धेः, न च भिन्नेन्द्रियजन्यत्वमुपाधिः, यदेकेन्द्रियजन्यं तद्विशेषणज्ञानजन्यं न भवति यथा निर्विकल्पकमिति व्यतिरेके प्रत्यक्षत्वे सति वैशिष्ट्यग्राहित्वस्यैवोपाधित्वात् ।

२ अस्तु पूर्वभेदप्रतिपत्तिपूर्विकैवोत्तरभेदप्रतीतिरित्याशङ्क्याह युगपदिति, क्रमेणानन्तभेदप्रतीतौ विषयान्तरसंचारसुषुप्तिमूर्छामुक्तीनामभावप्रसङ्ग इति चकारार्थः ।

नान्योन्याभावरूपोऽयं द्वैताभावप्रसञ्जनः ।
तादात्म्यस्याप्यमानत्वात् प्रतियोग्यनिरूपणात् ॥ ३ ॥

अन्योन्याभावोऽपि हि यस्माद्भेदस्तं प्रतियोगिनमपि धर्मतया स्वस्मिन्नन्तर्भावयेत्, तथा च विश्वप्रतियोगिघटितान्योन्याभावस्य वस्तुनो भेदेऽनवस्थाप्रसङ्गात्, वस्तुतावन्मात्रत्वे कथं नाद्वैतं पर्यवस्येत् । किंच तादात्म्यप्रतियोगिकोऽभावोऽन्योन्याभाव इति तद्वादिभिरभ्युपेयते, तथा चाभावप्रतियोगिभूतं स्तम्भकुम्भयोस्तादात्म्यं यदि न प्रमाणगोचरस्तदा कथं तदभावः प्रामाणिकः स्यात्, एवं कुम्भस्य विश्वप्रतियोगिकं तादात्म्यमादावेव प्रमितमित्यद्वैतसिद्धावूर्ध्वमपि तद्विरोधिनोऽन्योन्याभावग्रहस्य न समुदयः स्यादुपजीव्यविरोधात् ।

ननु कुम्भः स्तम्भो न भवतीति स्तम्भप्रतियोगिकोऽभावो यः कुम्भमाश्रितः सोऽन्योन्याभाव इति कथमप्रमितप्रतियोगित्वप्रसक्तिः, मैवम्, प्रतियोगिभेदाभावादन्योन्याभावसंसर्गाभावयोर्भेदाभावप्रसङ्गात्, स्तम्भः कुम्भो नास्ति कुम्भः स्तम्भो न भवतीत्युभयत्रापि स्तम्भस्यैव प्रतियोगिताङ्गीकारात् ।

प्रतियोगिनिष्ठोऽभावोऽत्यन्ताभावः प्रतियोग्यनिष्ठत्वे सत्यकादाचित्कोऽभावोऽन्योन्याभाव इति लक्षणभेदादभावयोर्भेद इति चेत्, मैवम्, यत्किंचित्प्रतियोगिनिष्ठत्वस्यान्योन्याभावेऽपि भावादतिव्याप्तेः ।

स्वप्रतियोगिनिष्ठत्वं विवक्षितमिति चेत्, मैवम्, स्वशब्देनात्यन्ताभावोपपादनेन तत्प्रतियोगिनिष्ठत्वस्यान्योन्याभावेऽपि भावेनातिव्याप्तेस्तदवस्थत्वात्, पटे घटो नास्तीत्यत्यन्ताभावस्य घटः प्रतियोगी, पटप्रतियोगिकान्योन्याभावोऽपि घटे वर्तत इति ।

किंचेदं प्रतियोगित्वम्, निरूपकत्वं चेत्, धर्मिणोऽपि प्रतियोगित्वप्रसङ्गः ।

अथ पञ्चम्यन्तशब्दवाच्यत्वम्, तर्हि घटः पटो न भवतीत्यत्रान्योन्याभावे पटस्य प्रतियोगिता न स्यात्, पञ्चम्यन्तशब्देनानिर्देशात् ।

अथ धर्मिणोऽन्यत्वे सति निरूपकत्वं प्रतियोगित्वम्, तदपि न, प्रतियोगित्वस्यानिरूपणादेव धर्मिप्रतियोगिकान्यत्वस्याव्याप्यसिद्धेः, तदेवं नान्योन्याभावो भेदः ।

नापि द्वितीयः, वैधर्म्ये वैधर्म्यान्तराभ्युपगमेऽनवस्था, अनभ्युपगमे च वैधर्म्ययोरैक्तापत्त्या तद्धर्मिणोरप्येकतापत्तावद्वैतप्रसङ्गः ।

नापि तृतीयः, पृथक्त्वे पृथक्त्वान्तराभावादेव धर्मिणस्तस्यैकतापत्तेः ।

किंच पृथक्त्वस्य गुणत्वान्निर्गुणेषु गुणादिषु पृथक्त्वगुणासंभवेन भेदो न स्यात् ।

तत्रान्योन्याभावनिबन्धनो भेदव्यवहार इति चेत्, तर्हि द्रव्येष्वपि तन्निबन्धन एव तद्व्यवहारोऽस्तु कृतं पृथक्त्वेन, तत्सत्तावेदकप्रमाणाभावाच्च ।

अथाकाशः[1]स्पर्शवद्गुणासमवायिकारणाद्विष्ठगुणयोराश्रयो द्रव्यत्वाद्धतत्वाद्वा पटारम्भकतन्तुवत्, तेन वियद्धतयोरेकत्वपृथक्त्वयोः सिद्धिं मानमनोहरकारः प्रत्यतिष्ठिपदिति चेत्, न, वेदान्तिनं प्रति दृष्टान्तस्य साध्यविकलत्वात्, तेन कारणगुणानां कार्ये गुणान्तरारम्भस्यानभ्युपगमात्, स्पर्शवत्त्वोपाध्युपहतत्वाच्च ।

न चान्त्यावयविनामनारम्भकत्वादेव तादृशगुणानधिकरणानामपि स्पर्शवत्त्वेन साध्यसमव्याप्त्यभावादेवानुपाधित्वम्, विषमव्यापकोपाध्यङ्गीकारेऽपि दोषाभावात् ।

---

१ अथाकाश इति, गुणयोराश्रय इत्युक्ते संयोगविभागाश्रयत्वे सिद्धसाधनता तद्व्यावृत्त्यर्थमद्विष्ठपदम्, तथापि शब्दपरममहत्परिमाणयोराश्रयत्वेन सिद्धसाधनता तत्परिहारार्थं स्पर्शवद्गुणासमवायिकारणपदम्, परममहत्परिमाणस्यानारम्भकत्वात्, आरम्भकत्वेऽपि शब्दस्य शब्दमात्रासमवायिकारणतया स्पर्शवद्गुणासमवायिकारणत्वाभावाद्व्यभिचारः परिहृतो भवति, स्पर्शवद्गुणासमवायिकारणगुणयोराश्रय इत्युक्ते तन्तुसंयोगविभागाश्रयत्वेन सिद्धसाधनता, तयोरपि स्पर्शवत्पटसंयोगविभागासमवायिकारणत्वात्, तन्निवृत्त्यर्थमद्विष्ठपदम्, तथा च संयोगविभागशब्दपरिमाणातिरिक्तगुणयोरेकत्वपृथक्त्वयोः स्पर्शवत्पटादिनिष्ठद्वित्वाद्विपृथक्त्वासमवायिकारणभूतयोः सिद्धिरिति तात्पर्यार्थः ।

न चैतत्पर्वतान्यत्वादेः पक्षेतरस्याप्युपाधित्वप्रसङ्गो दोषः, य एतत्पर्वतोऽसावनग्निमानिति व्यतिरेकासिद्धयैव तस्य दुष्टत्वात्,

'एकसाध्या[१]विनाभावे मिथः संबन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः' ॥

इति चोपाधिलक्षणस्य समासमव्यापकयोस्तुल्यत्वात्, समवायः समवेतः संबन्धत्वात् संयोगवदिति प्रयोगे संबन्धत्वे सति समवेतत्वे कार्यत्वमुपाधिरिति विषमव्यापकोपाधेरुद्द्योतकराचार्यैरङ्गीकारात् ।

अपिच, अन्योन्याभावादयो भेदाः किं भिन्नमेव धर्मिणं परिभन्ते· उताभिन्नम् ।

नाद्यः, अनन्तभेदाभ्युपगमप्रसङ्गात् ।

अस्तु किं नश्छिन्नमिति चेच्छृणु, क्रमेण तेषां धर्मिणा संबन्धे धर्मिणश्च घटादेः कादाचित्कत्वेन तत्संबन्धासंभवः, संभवे वातीतानागतानां च भेदानां क्रमसंबन्धाय घटोऽनादिरनन्तश्च स्यात् ।

अथ युगपदेव धर्मिणा सर्वे भेदाः संबध्येरन्, तर्हि भिन्ने भेदस्थितिरिति पक्षक्षतिः, भेदसंबन्धं विना तस्य भिन्नत्वानुपपत्तेः, तत्संबन्धेनैव च भिन्नत्वे किंभेदविशिष्टे किंभेदस्थितिरिति नियामकाभावादेकोऽपि भेदो न भवेत्, उत्तरोत्तरेणैव च भेदेन पूर्वपूर्वभेदोपयोगोपपत्तावनन्तभेदाभ्युपगमोऽपि निष्फलः स्यात्, एवमपि भेदाः स्वीक्रियेरन् यदि भेदपरंपराभरमन्यरा क्वापि संविदुदयमासादयेत्, तथा चाहुः खण्डनकाराः ।

"प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् ।
अनवस्थितिमास्थातुरर्चाचिकित्सा त्रिदोषता" ॥

इति ।

न द्वितीयः, अभिन्नेऽपि चेद्भेदो निविशेत तदा तदपि नैकं स्यादित्येकाभावादनेकमपि न सिध्येत् ।

१ एकसाध्येति, परस्परं व्याप्यव्यापकभावशून्ययोर्निषिद्धत्वहिंसात्वयोर्लौकिकहिंसायामेकेनाधर्मत्वलक्षणसाध्येन सह चरमाभावे सति यस्य निषिद्धत्वस्यात्ययोऽभावः साध्यस्याधर्मत्वस्याभावेनाविनाभावी भवति स तत्राधर्मत्वलक्षणसाध्ये निषिद्धत्वलक्षण उपाधिरिति योजना ।

नापि वैलक्षण्यम्, भेद आत्माश्रयत्वात्, नानालक्षणयोगो हि वैलक्षण्यम्, नानात्वं च भिन्नत्वापरपर्यायमन्याप्यसिद्धम्, तेन च तत्सिद्धौ तत्सिद्धिरिति ।

किंच नानालक्षणयोगोऽपि दुर्निरूपः, तथाहि द्रव्यादीनां षण्णां लक्षणानि नानाविधान्यभ्युपगम्यन्ते, तत्र तावद्गुणाश्रयो द्रव्यमित्यलक्षणम्, यतः ।

अव्याप्तेरप्यतिव्याप्तेर्द्रव्यं नैव गुणाश्रयः ।
आद्ये क्षणे गुणाभावाद्गुणादावपि वीक्षणात् ॥ ४ ॥

उत्पन्नमात्रं द्रव्यं क्षणमगुणं तिष्ठतीत्यङ्गीकारादव्याप्तेः, गुणादिष्वपि "चतुर्विंशतिगुणा" इत्यादिसंख्यागुणान्वयवीक्षणादतिव्याप्तेः ।

न च तत्र संख्यावत्त्वप्रतीतिर्विभ्रमः, नवैव द्रव्याणीत्यादाविव बाधकादर्शनात् ।

अथ मतम् · आस्तामिदमृजुपथप्रस्थितानां दूषणाभिधानम्, अस्माकं पुनरभिनववक्रनयवर्त्मानुसारिणां नैषा विभीषा समुन्मिषति, यतो गुणवत्त्वात्यन्ताभावानधिकरणतामेवाधिकरणतामाचक्ष्महे, तेन नाव्याप्तिर्नाप्यतिव्याप्तिः, "गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे" इति प्रशस्तपादभाष्यदर्शनादिति, मैवम्, तत्रैवात्यन्ताभावेऽतिव्याप्तेः, सोऽपि हि गुणवत्त्वात्यन्ताभावस्तस्यानधिकरणम्, स्वस्य स्वस्मिन्नवृत्तेः ।

अथानेकत्वादत्यन्ताभावानामत्यन्ताभावेऽप्यत्यन्ताभावोऽस्ति, मैवम्, विकल्पासहत्वात्, किमेकैकगुणवत्त्वात्यन्ताभावानधिकरणत्वं द्रव्यलक्षणमुत सर्वगुणवत्त्वात्यन्ताभावानधिकरणत्वम्, नोभयमुभयत्राप्यव्याप्तेः, तथाहि रूपादीनां गुणानामनेकत्वात् तदेकगुणाधिकरणस्यापि तदितरगुणात्यन्ताभावाधिकरणत्वादेव तदत्यन्ताभावानधिकरणत्वाभावात्, सर्वगुणवत्त्वात्यन्ताभावानधिकरणत्वस्य सर्वस्मिन्नसंभवात्, सति हि सर्वगुणाधिकरणत्वे सर्वगुणात्यन्ताभावानधिकरणता स्यात्, न च सर्वगुणाधिकरणत्वमेकैकस्यास्तीति कथं नाव्याप्तिः ।

अथ चतुर्विंशतिगुणानामन्यतमगुणवत्त्वात्यन्ताभावानधिकरणता

विवक्षिता, तदपि न, अन्यतमशब्देन रूपादेरेकैकस्य सर्वस्य वा विवक्षायां पूर्वाभिहिताव्याप्तिदोषस्य तदवस्थत्वात् ।

किंचास्मिन्नपि वक्रलक्षणे गुणादिष्वपि संख्यापृथक्त्वगुणयोः प्रतीतेः कथं नातिव्याप्तिः ।

न च प्रशस्तपादभाष्यं मनुवचनं येन निर्गुणता गुणानां प्रामाणिकी स्यात् ।

न च मन्तव्यं गुणेष्वपि गुणाभ्युपगमेऽनवस्थाप्रसक्तेः संख्यापृथक्त्वप्रतीतिर्भ्रान्तिरिति, रूपादिषु तदभ्युपगमेऽपि संख्यापृथक्त्वयोः संख्यापृथक्त्वान्तरानभ्युपगमेनैवानवस्थापरिहारात्, यथा भवतां संबन्धे संबन्धान्तरमङ्गीकुर्वतामपि समवाये तदनभ्युपगमादेवानवस्थापरिहारः ।

द्रव्यगतसंख्यापृथक्त्वाभ्यामेव तदेकार्थसमवायलक्षणप्रत्यासत्त्या गुणादिष्वपि तद्व्यवहारोपपत्तौ व्यर्था तत्कल्पनेति चेत्, मैवम्, विपर्ययस्यापि सुवचत्वात् ।

अथ गुणानामनेकत्वेऽपि द्रव्यस्यैकत्वदर्शनात् कथं गुणसंख्यया द्रव्ये तद्व्यवहारः,तर्हीहापि माध्यस्थ्यमवलम्ब्य किमिति न दीयते दृष्टिः, नवैव द्रव्याणि चतुर्विंशतिगुणा इति संख्यावैषम्यात् ।

अथावान्तरद्रव्यसंख्यासंभवनिमित्तोऽयं व्यवहारः, तर्हि परार्धसंख्याव्यवहारोऽपि गुणेषु स्यात्, द्रव्येषु तत्संभवात्,द्रव्यगतसत्तासामान्यादिभिरेव गुणकर्मणोरपि सद्व्यवहारोपपत्तौ तत्र सत्तासामान्यकल्पनावैयर्थ्यप्रसङ्गाच्च, एतेन समवायि कारणं द्रव्यमित्यपास्तम्, जातमात्रस्य तदभावात्, तदत्यन्ताभावानधिकरणत्वस्य चात्यन्ताभाव एव व्यभिचारात्, रूपादिगुणानामपि संख्यापृथक्त्वसमवायिकारणत्वसंभवात् ।

अस्तु तर्हि द्रव्यत्वजातियोगित्वं द्रव्यलक्षणम्, न, यतः ।

( शेषमग्रे )

॥ श्रीः ॥

# ॥ योगवार्त्तिकम् ॥

(*Continued from page* 216. Vol. V.)

उपायप्रत्ययमसंप्रज्ञातं तदधिकारिणं चाह ।

## श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥

इतरेषां विदेहप्रकृतिलयातिरिक्तानां देवानां वा मनुष्यादीनां वा न जन्ममात्रादसंप्रज्ञातो भवति किं तु श्रद्धादिभ्यः[1] प्रज्ञापर्यन्तेभ्य इत्यर्थः । संक्षेपतः सूत्रवाक्यार्थमाह । उपायेति । उपायः[2] श्रद्धादिः । श्रद्धादीन् पञ्च क्रमेण व्याचष्टे । श्रद्धा चेतस इत्यादिना । संप्रसादः प्रीतिः योगो मे भूयादित्यभिलाषा । सा च समर्था मातेव योगिनं पाति प्रतिबन्धसहस्राणि तिरस्कृत्य रक्षति, यथा योगभङ्गो न भवतीत्यर्थः । श्रद्धातश्च वीर्यं भवतीत्याह । तस्य हीति । श्रद्दधानस्य विवेके जीवेश्वरान्यतरपुरुषतत्त्वज्ञाने योगसाधने र्ऽर्थितया वीर्यं प्रयत्नो धारणारूपो भवतीत्यर्थः । समुपजायतेति । वीर्यतश्च स्मृतिर्ध्यानं ततश्च समाधिर्योगस्य चरमाङ्गं भवति । तदेवं श्रद्धामूलकाद्धारणाद्यन्तरङ्गत्रयात्संप्रज्ञातयोगे जायमाने प्रज्ञा जीवब्रह्मान्यतरात्मतत्त्वसाक्षात्काररूपो विवेक उपावर्त्तते उपजायते येन विवेकेन यथार्थं वस्तु जानाति विषयीकरोति विद्वानित्यर्थः । तदेवं श्रद्धादीन् व्याख्याय तत्पूर्वकत्वमसंप्रज्ञातस्य व्याचष्टे । तदभ्यासादिति । प्रज्ञाया अभ्यासात्तत्सिद्धा तद्विषयकादपि विरामप्रत्ययरूपादलंबुद्ध्याख्याद्वैराग्यादसंप्रज्ञातो भवतीति सूत्रार्थः । आसन्नसमाधिसिद्धौ स्वातिशयेनोपायानुष्ठानं हेतुरिति सूत्रद्वयेन प्रतिपादनीयं, तयोरादिसूत्रमवतारयितुमुपक्रमते । ते खल्विति । उपायः श्रद्धादिः । तस्य मृदुत्वमल्पता, मध्यत्वं प्रसिद्धमेव, अधिमात्रत्वमतिप्रमाणता अतिशयितत्वमिति यावत् । संवेगश्चोपायानुष्ठाने शैघ्र्यम् । कश्चित्तु संवेगो वैराग्यमिति व्याचष्टे । तन्न । योगिनो नवधात्वानुपपत्तेः । उपायकार्यतया वैराग्यस्योपायमृदुत्वादिकं

[1] पञ्चभ्य इत्यधिकं पुस्तकान्तरे । [2] उपायान् श्रद्धादीन् पञ्चेति पाठान्तरम् ।

विहाय स्वातन्त्र्येण मृदुत्वाद्यसंभवात् संवेगशब्दस्य वैराग्यवाचकत्वाभावा-च्चेति । तथा मध्येति । मृदुसंवेगत्वादिरूपैस्त्रिविध इत्यर्थः । तथाऽधिमा-त्रोपाय इति । अधिकप्रमाणकोपायेऽपि मृदुसंवेगत्वादिरूपैस्त्रिविध इत्यर्थः । तत्र तेषु नवसु मध्ये, सूत्रेण सहान्वयः ॥

**अधिमात्रोपायानां तीव्रसंवेगानामासन्नः ॥ २१ ॥**

नवयोगिमध्ये चरमाणामेवासन्नो ऽसंप्रज्ञातो भवतीत्यर्थः । समा-धिलाभः, तन्निष्पत्तिः । न केवलं समाधिरासन्नो ऽपि तु मोक्षोऽपीत्याह । समाधिफलं चेति । 'विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि' इत्यादिवि-ष्णुपुराणादिभ्य इति भावः । अत्र कश्चित् अधिमात्रोपायानामिति सूत्रमध्ये न प्रवेशयति । तन्न । तथा सति संवेगस्य त्रिधा विभागेनैव सूत्रोपपत्तौ भाष्ये नवधा विभागप्रदर्शनवैयर्थ्यापत्तेः ॥

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥**

पूर्वसूत्रोक्तविशिष्टेऽन्तर्गतस्य तीव्रत्वस्य मृदुमध्याधिमात्रत्वेन त्रैवि-ध्यात्ततोऽप्यासन्नादपि विशेषस्तरतमरूपो भवति । पूर्वसूत्रोक्तस्य नवम-योगिन इत्यर्थः । एतदेव व्याचष्टे ततोऽपि विशेष इत्यन्तेन भाष्येण । फलितार्थमाह । तद्विशेषादपीति । तस्माद्विशेषादपि नवमस्य त्रिविध-स्यान्तिमानामासन्नतम इत्यर्थः । अपिशब्द आगामिसूत्रस्थसाधना-पेक्षया । अत्र तीव्राधिमात्रसंवेगस्येत्यपपाठः । अधिमात्रतीव्र इत्युक्त-भाष्यतोऽधिमात्रतीव्रसंवेगस्येत्येव पाठादिति । सूत्रान्तरमवतारयितुं पृ-च्छति । किमेतस्मादेवेति । किमेतस्मादेव तीव्रसंवेगस्याधिमात्रत्वादेवा-सन्नतमः समाधिर्भवतीत्यादिरर्थः । न वेति वैकल्पिकत्वार्थः । विकल्प-मेव सिद्धान्तयति सूत्रेण ॥

**ईश्वरप्रणिधानाद्वा ॥ २३ ॥**

विशेष इत्यनेनान्वयः । प्रणिधानमत्र न द्वितीयपादवक्ष्यमाणं किं तु असंप्रज्ञातकारणीभूतसमाधिर्भावनाविशेष एव । तज्जपस्तदर्थभावन-मित्यागामिसूत्रेणैवास्य प्रणिधानस्याचलक्षणीयत्वात् । तथा च सूत्रद्वयस्या-

र्थमर्थः । प्रज्ञान्तो यो योगोपायो जीवात्मपरमात्मसाधारणविषयक उक्तः तत्र जीवात्मप्रज्ञान्तस्योपायस्याधिमात्रतीव्रसंवेगत्वे सत्येवासन्नतमो ऽसंप्रज्ञातो भवति । परमात्मप्रज्ञान्तस्योपायस्य तु अधिमात्रतीव्रसंवेगत्वाभावेपि आसन्नतमो ऽसंप्रज्ञातो भवतीति । एवं च सति मुख्यकल्पानुकल्पभेदेन परमात्मजीवात्मप्रज्ञयोर्योगमोक्षहेतुत्वं बोध्यम् । उभयप्रज्ञयोरेव देहाद्यभिमाननिवर्त्तकत्वेन परवैराग्यद्वारकत्वसाम्येपि अतितीव्राभ्यासं विनापि परमात्मप्रज्ञाया आसन्नतमयोगहेतुतया श्रेष्ठात् । 'ततः प्रत्यक्चेतनाधिगमोप्यन्तरायाभावश्चे'त्यागामिसूत्रेणाधिकद्वारकीर्त्तनात् । अत एव श्रुतिस्मृतीतिहासादिषु प्रायशो ब्रह्मज्ञानमेव मोक्षहेतुतयोपदिश्यते कदाचिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति । यदि च उभयोरेव तुल्यवद्विकल्पः स्यात्तर्हि "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय" "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु"रित्यादिश्रुतयो व्याकुप्येरन् । तथा

स ईश्वरो व्यष्टिसमष्टिरूपो ऽव्यक्तस्वरूपाप्रकटस्वरूपः ।
सर्वेश्वरः सर्वविशेषवेत्ता समस्तशक्तिः परमेश्वरात्मा ॥
प्रज्ञायते येन उदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाप्यवगम्यते वा तज्ज्ञानमज्ञानमतोन्यदुक्तम् ॥

इत्यादिस्मृतयोपि वाकुप्येरन् । मुख्यकल्पत्वे तु राजमार्ग एव मम इति वाक्यवत् तादृशवाक्यानां मुख्यसाधनपरतयोपपत्तिरिति दिक् । ननु जीवप्रज्ञा आसन्नतमयोगोत्पादनार्थमभ्यासस्यातितीव्रत्वमपेक्षते ईश्वरप्रज्ञा तु नापेक्षते इत्यत्र का युक्तिरित्याकाङ्क्षायामाह । प्रणिधानादित्यादि । ब्रह्मात्मना चिन्तनरूपतया प्रेमलक्षणभक्तिरूपादुक्तमाणात्प्रणिधानादावर्जितोभिमुखीकृत ईश्वरस्तं ध्यायिनमभिध्यानमात्रेण अस्य समाधिमोक्षौ आसन्नतमौ भवेतामितीच्छामात्रेण रोगाशक्त्यादिभिरुपायानुष्ठानमान्द्येप्यनुगृह्णाति आनुकूल्यं भजते अतस्तस्मादभिध्यानादपि प्रणिधाननिष्पत्त्यादिद्वारा योगिनामासन्नतमौ समाधिमोक्षौ भवत इत्यर्थः । ननु प्रधानपुरुषातिरिक्तं तत्त्वं नास्तीति त्वयाप्यभ्युपगम्यते तत्र चेश्वरो न प्रधानं

चेतनत्वाभ्युपगमात् । नापि पुरुषः, सर्वेषां पुरुषाणां चिन्मात्रस्वरूपत्वे-नेश्वरत्वानीश्वरतयोः स्वतो ऽसंभवात् । नहि वैशेषिकादिवत् नित्ये च्छादिमान् स्वत एवेश्वरस्त्वयाप्यभ्युपगम्यते । औपाधिकत्वे तूपाधि-मुक्त्या पुरुषाख्यजीवानामेवैश्वर्यमस्तु तत्परत्वेनैव श्रुतिस्मृत्युपपत्तेः । अतः प्रधानजीवातिरिक्त ईश्वरो नास्तीति सांख्याक्षेपनिरासकतयोत्तरसूत्रमव-तारयति । अथ प्रधानेति । क इत्याक्षेपे । अथ वा प्रकृतिपुरुषातिरिक्त-स्येश्वरस्य किं लक्षणमिति प्रश्नेन लक्षणसूत्रमुत्थापयति । अथ प्रधानेति ॥

## क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥

पुरुषविशेष एवेश्वरः, तथा चेश्वरस्य पुरुषेन्तर्भावस्तदुपाधेः प्रधान इति भावः । यच्चोक्तं सिद्धजीवमादायेश्वरप्रतिपादकश्रुतिस्मृत्योरुपपत्ति-रिति तन्निराकरणार्थमपरामृष्ट इत्यन्तं विशेषणम् । क्लेशाद्यपरामृष्टतया श्रुतिस्मृतिगीत ईश्वरो न सिद्धजीवो भवितुमर्हति कादाचित्कक्लेशादिसं-बन्धादित्यर्थः । अपरामृष्टान्तं विशेषणं व्याचष्टे । अविद्यादय इति । अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा इति वक्ष्यति । कुशलाकुशलसा-धनत्वात् कुशलाकुशलानि धर्माधर्माः तयोः क्लेशकर्मणोः फलं विपाकः स च जात्यायुर्भोगाः । भोगश्चात्र विषयसत्त्वादिभिश्चित्तपोषणं शब्दाद्या-कारवृत्तिर्वा न तु सुखाद्यनुभवः, ते च मनसि वर्तमाना इति वक्ष्यमा-णात्स हि तत्फलस्य भोक्तेत्यनेन विपाकफलयोः सुखदुःखयोर्भोगस्य पुरुषे वक्ष्यमाणत्वाच्चेति । चित्तभूमौ शेरते इत्याशया वासनास्ताश्च विपाका-नुगुणाः तत्कारणानि, यतस्तत्तच्छरीरसाध्यभोगवासनामुद्बोध्यैव कर्मणा वि-पाको दीयते इति । ननु क्लेशाद्यपरामृष्टत्वं सर्वपुरुषसाधारणमित्याश-ङ्क्याह । ते च मनसीति । एकस्यैवान्तःकरणस्य वृत्तिभेदाच्चातुर्विध्यमि-त्याशयेन पूर्वं चेतस्युक्ता अविद्यात्र मनस्युक्तेति बोध्यम् । तथा चायमर्थः । ते चाविद्यादयो यद्यपि मनस्येव सन्ति न कुत्रापि पुरुषे तथापि पुरुषे सांसारिके व्यपदिश्यन्तइति । व्यपदेशबीजं च स्वामित्वापरनामकं भोक्तृ-त्वमित्याह । स हीति । हि यस्मात् स पुरुषस्तस्य क्लेशादेः फलस्य सुखदुः-

त्वयोः स्वस्मिन्प्रतिबिम्बितयोर्भोक्ता भवतीत्यर्थः । स्वामित्वसंबन्धेनाधारत्वे दृष्टान्तमाह । यथेति । तथा च राजा जयी पुरुषो धनीत्यादिवदेव पुरुषः क्लेशादिमान् सुखी दुःखी मूढ इत्यादिविद्वद्व्यवहार इति भावः । समवायसंबन्धेन पुरुषे सुखादिमत्त्वबुद्धिरेवाविद्येति । एवं च सत्त्वाख्येन क्लेशसंपर्केण शून्यता नान्यपुरुषेऽस्ति किं त्वीश्वर एवेत्याह । यो ह्यनेनेति । अनेन भोगेन क्लेशादिफलभोगेनेत्यर्थः । अत्रानेनेति विशेषणादीश्वरस्य भोगोऽस्तीत्यवधार्यते । सर्वविवेकग्रहणे सत्येव स्वोपाधिसुखसाक्षितामात्रं चिदवसानो भोग इति सांख्यसूत्रात् । तथा च

उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः ।

परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥

इति गीताद्युक्तः परमेश्वरे भोग उपपद्यतइति । अत एवेश्वरस्यापि भोगप्रतिपादिका ऋतं पिबन्ताविति श्रुतिः यथाश्रुतैवोपपद्यते । अनश्नन्नन्यो अभिचाकशीति श्रुतिस्तु मुख्यमेव भोगं प्रतिषेधति, मुख्यभोगश्चाभिमानपूर्वकः सुखाद्यनुभवः, लोकैस्तत्रैव भोगव्यवहारात् सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोग इत्यागामिसूत्रेण तस्यैव लक्षयितव्यत्वात् । अथ वा जीवभोग्यदुःखादिभोक्तृत्वमेवानश्नन्निति वाक्येन प्रतिषिध्यते । एकशरीरस्थत्वेन तद्भोगस्यैव प्रसक्तत्वादिति जीवन्मुक्तस्यापीश्वरसदृश एव भोगो दुःखभोगमात्रमीश्वरादिलक्षणमिति । अपरामृष्टत्वं परामर्षशून्यता, तत्र परामर्षशब्दफलं प्रतिपादयितुं शङ्कते । कैवल्यमिति । यदि क्लेशादिशून्य ईश्वरः श्रुतिस्मृतिभ्य एष्टव्यस्तर्हि कैवल्यं ज्ञानं प्राप्ता बहवो हिरण्यगर्भादयोऽकेवलिनः केवलानां जीवन्मुक्तानामध्यक्षाः क्लेशादिशून्याः सन्ति तएवेश्वरतया श्रुत्यर्थाः सन्त्विति पूर्वपक्षिणो भावः । तथा च सांख्यसूत्रं 'मुक्तात्मनः प्रशंसासिद्धस्य वे'ति । "आद्यस्तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् । कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम्" इतिपञ्चशिखाचार्यधृतवाक्ये च ज्ञानस्यापि कैवल्यमोक्षादिशब्दार्थत्वात् हिरण्यगर्भादयोऽपि कैवल्यमुक्त्यादिमन्त उच्यन्ते। केवलिनइतिपाठे केवलस्यायमिति

केवलो ऽत्र द्वितीयमोचो रागादिक्लेशशून्यतेति । परिहरति । ते हीति । ते हि हिरण्यगर्भादयः प्राकृतिकानि बन्धनानि पूर्वस्थितानि छित्त्वैव मुक्ताः न तु क्लेशादिपरामर्शशून्याः, ईश्वरस्तु सर्वदैव क्लेशात्मकबन्धनत्रयशून्यतया श्रुत्यादिसिद्ध इत्यर्थः । ईश्वरस्य सदा क्लेशादिशून्यत्वे मानं

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ।
कर्मात्मा पुरुषो योऽसौ मोक्षबन्धैः स युज्यते ॥

इत्यादिवाक्यशतानि । निर्गुणो गुणाभिमानशून्यः गीतायां गुणाभिमानशून्यतयैव गुणातीतत्ववचनात् । 'परस्तु निर्गुणः प्रोक्तो ह्यहंकारयुतो ऽपर' इति नारदीयादिष्वपि ईश्वरजीवयोरिच्छादिसाम्येपि तदनभिमानाभिमानाभ्यां निर्गुणसगुणत्वसिद्धेश्च । बन्धनत्रयं चोक्तं सांख्ये, प्रकृतिलयानां प्राकृतिको बन्धः । विदेहानां वैकारिको बन्धः । दिव्यादिव्यविषयभाजां दक्षिणाबन्ध इति । तत्राद्यो ऽष्टप्रकृतिष्वभिमानरूपः । द्वितीयः शब्दादिविषयरागः । तृतीयो गृहस्थानां कर्मदक्षिणादानाध्ययनादिष्वनुरागः । तथा चोक्तम् 'प्रकृतेर्वैत बन्धेन तथा वैकारिकेण च । दक्षिणाभिस्तृतीयेन बद्धो जन्तुर्विवर्त्तत' इति । ईश्वरस्य तुद्रेश्वरेभ्यो वैलक्षण्यं बन्धापरामर्षरूपं विवृणोति । यथा मुक्तस्येति । निरस्ताविद्यस्येत्यर्थः । प्रज्ञायते निश्चीयते संभाव्यतइति प्रकृतिलीनस्याभिमानसंबन्धेन पश्चाद्बन्धसंभावनेति भावः । सदैव मुक्त इति । दुःखशून्य इत्यर्थः । सदैवेश्वरइति । सदैवाप्रतिहतेच्छया युक्तः । अत्र केचित् सदैवेश्वर ऐश्वरशक्तिमानित्यर्थः । नहि वेदान्तिभिरिव प्रलये योगैरपि ईश्वरस्य नित्यमिच्छादिकमभ्युपगन्तुं शक्यते प्रकृतेर्गुणसाम्यरूपत्वाभ्युपगमविरोधात् इत्येकदेशिनः । तच्च । यतो 'नैवाहस्तस्य न निशा नित्यस्य परमात्मन' इत्यादिवाक्यशतैरीश्वरसत्त्वस्य नित्यमेव ज्ञानेच्छादिकं यथाश्रुतभाष्यानुरोधाच्च विसदृशपरिणामाभावरूपाच्च साम्यावस्थानिच्छेत्यादिमचित्यसत्त्वव्यक्तिसत्त्वेप्युपपद्यतइति स्वकार्याकरणमेव च तस्य द्विपरार्द्धान्तलय इति, किं बहुना 'आत्मा वा इद मेक एवाग्रआसीन्नान्यत् किं चन मिषदि'ति श्रुत्या प्राग्लये परमात्मनोर्थद्रष्टृत्वंसिद्धमत ईश्वरोपाधेर्ज्ञानलक्षणा वृत्तिः प्रलयेप्यस्ति न

वोपाधिश्रुतिं विनैवेशस्य ज्ञातृत्वमेष्टव्यं बाधकं विना दृष्टानुसार-त्यागानौचित्यात् । ज्ञानशक्तिरहं परेति प्रकृत्यभिमानिदेवतावाक्यविरोधाच्च । किं चेत'त्तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरितं विषयत्व प्रयाती'त्यादिश्रुतिष्वेव परमेश्वरप्रयत्नेनैव गुणवैषम्य श्रूयते, तथा ।

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥

इत्यादिना प्रकृते वैषम्यहेतुः क्षोभोपीश्वरेच्छात एव । स्मर्यते च, अतः साम्यावस्थायामप्यगत्येश्वरोपाधेर्ज्ञानादि स्वीकार्यमिति । अपि च एवं सति प्रलये स्वसंकल्पेन स्वोपाधिं स्वस्माद्वियोज्येश्वरः शेते पूर्वसर्गीय संकल्पसंस्काराभ्यां च सर्गादावुपाधिरीश्वरेण सह स्वयं संयुज्यते इत्यभ्युपेयं, तच्चायुक्तं तस्य हेतुरविद्येत्यागामिसूत्रेणाविद्याया बुद्धिपुरुष-संयोगहेतुत्ववचनेनेश्वरस्याप्यविद्वत्त्वापत्तेः । न चाहार्यज्ञानरूपोविद्यया संयोगः स्यात् सा चाविद्या मायेति न कस्याः क्लेशत्वमिति वाच्यम् । संयोगहेत्वविद्याया विवेकख्यातिनाश्यत्वबोधकसूत्रविरोधात् । किं च सूत्रकारेण

क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ॥

इति योगियाज्ञवल्क्यादिभिश्चेश्वरोपाधौ संस्कारस्य प्रतिषिद्धत्वात् तदभ्युपगमोऽपि तेषामपसिद्धान्त एव, तथा आगामिसूत्रप्रतिषिद्धं कालावच्छिन्नत्वं चेशे स्यात् उपाधिवृत्त्यभावेनैव चेतनस्य कालानवच्छिन्नत्वात् इत्यादीन्यत्र दूषणानि सन्ति, तस्मात् प्रलये निरुद्धोप्युपाधिः पूर्वसर्गीय-संकल्पवासनाभ्यां स्वयं व्युत्थितो भवतीति यच्छास्त्रं तद्दैनंदिनप्रलये योग-निद्रया शयानस्य स्वयंभोरुपाधिपरमेव न परमेश्वरोपाधिपरमिति दिक् । शास्त्रप्रामाण्यसिद्धौ शास्त्रप्रणेतृश्वरसिद्धिरीश्वरसिद्धौ चैतत्प्रत्यक्षपूर्वकतया शास्त्रप्रामाण्यसिद्धिरित्यन्योन्याश्रयं मन्वानो नास्तिक ईश्वरे प्रमाणमस्ति न वेति पृच्छति । योसाविति । सर्वपुरुषाणां स्वत एकरूपतयैश्वर्य-

मुपाधिधर्म एवेति प्रतिपादयितुं प्रकृष्टसत्त्वोपादानादित्युक्तं, प्रकृष्टसत्त्व-संबन्धात्तदौपाधिकः शाश्वतिको नित्य उत्कर्ष ऐश्वर्यमित्यर्थः । ईश्वरस्य चोपाधौ प्रमाणं 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुत्यादयः । 'तदैक्षत' 'सोऽकामयत' 'तदात्मानं स्वयमकुरुत' 'स एको ब्रह्मण आनन्द' इति श्रुत्याद्युक्तस्य आनन्दान्तस्य ब्रह्मणि स्वतोऽनुपपत्तिश्च । साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिभिरीश्वरस्य निर्गुणत्वचिन्मात्रत्वसिद्धेरिति सनिमित्तकः सप्रमाणकः । उत्तरं, तस्य शास्त्रं निमित्तमिति । शास्त्रं श्रुति स्मृतीतिहासपुराणानि । पुनः पृच्छति । शास्त्र पुनरिति । शास्त्रस्यैव प्रामाण्यं कुत इत्यर्थः । उत्तरं, प्रकृष्टसत्त्वनिमित्त इति । ईश्वरस्योपाधिर्य-त्प्रकृष्टसत्त्वं तत्प्रत्यक्षरूपवाक्यार्थज्ञानजन्यत्वाच्छास्त्रस्य प्रामाण्यमित्यर्थः । नन्वेवमन्योन्याश्रयः शास्त्रप्रामाण्ये सिद्धे प्रकृष्टसत्त्वसिद्धिः तत्सिद्धौ च तन्मूलकतया शास्त्रप्रामाण्यसिद्धिरिति चेन्न । मन्त्रायुर्वेदप्रामाण्यत ईश्वर-सिद्धेः प्रागेव शास्त्रस्य प्रामाण्यसिद्धेः प्रकृष्टसत्त्वस्य च शास्त्रप्रामाण्यनि-र्वाहकतामात्रमत्रोक्तमिति । तथा च न्यायसूत्रं 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य'मिति । एतयोरिति । विषयत्वेन समवायसंबन्धेन च परमेश्व-रसत्त्वे वर्त्तमानयोरेतयोः शास्त्रोत्कर्षयोरनादिर्निमित्तनैमित्तिकभावः संब-न्धः शास्त्रं नैमित्तिकं सत्त्वोत्कर्षश्च निमित्तं कारणत्वादित्यर्थः । ततः किमित्याकाङ्क्षायामाह । तस्मादिति । सदैवेश्वरः प्रलयेऽपि ज्ञानेच्छाकृ-तिमान् सदैव मुक्तोऽनादिकाले क्लेशादिमुक्तश्चेत्यर्थः । ईश्वरस्याद्वितीय-त्वमपि प्रतिपादयति । तच्चेति । नास्ति साम्यमतिशयश्च यस्मात् तादृ-शमित्यर्थः । अतिशयनिर्मुक्तौ हेतुमाह । न तावदिति । उक्ते हेतुमाह । यदेवेति । यस्माद्धेतोर्यदेवातिशयि निरतिशयं तदेव तत ऐश्वर्यं स्यादिति योजना । सातिशयत्वे सत्यैश्वर्यमेव न भवति अप्रतिहतेच्छत्वस्यैवाभावात् । अतो यदेव निरतिशयि तदेव मुख्यमैश्वर्यमित्यर्थः । उपसंहरति । तस्मा-दिति । ऐश्वर्येण यत्र काष्ठा प्राप्यते स ईश्वर इत्यर्थः । साम्यनिर्मुक्तौ हेतु-माह । न चेति । द्वयोरिति । नवमल्पकालस्थायि पुराणं दीर्घकालस्थायि । एवमस्त्वित्येवंरूपेणैकस्मिन्नर्थे क्व चिद्द्वाभ्यां तुल्याभिमताभ्यां कामिते

सति एकस्य सिद्धौ संकल्पसिद्धावितरस्येच्छाविघातादूनत्वं न्यूनत्वं स्यादतो न समानानेकेश्वरसंभव इत्यर्थः । ननूभयोः संकल्पावचत्वं पुराणत्वं चोभयमेव भवतु तत्राह । द्वयोश्चेति । तस्य पुरुषविशेषत्वमुपसंहरति । स चेति । स्यादेतत् । यदि प्रकृष्टसत्त्वोपादानादेव शाश्वतिको जीवेभ्य उत्कर्षश्चेतनविशेषस्य त्वयाप्यभ्युपगतस्तथा जीवानामप्यपकर्षो मलिनकार्यसत्त्वनिमित्तक इत्यर्थादागतः । तथा च श्रुतिरपि 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति । तर्हि किमर्थं पुरुषविशेष ईश्वर इत्युच्यते एकस्यैवात्मन आकाशस्येवोपाधिभेदैर्जीवेश्वरादिविभागसंभवेन लाघवादैकात्म्यकल्पनस्यैवौचित्यात् 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमानि'त्यादिश्रुतिस्मृतिशतैरात्मैक्यस्यैव प्रतिपादितत्वाच्च । भेदाभेदोभयश्रुतिस्मृतिमध्ये भेदनिन्दया ऽभेदज्ञानस्य मोक्षफलकत्वकथनेन चाभेदवाक्यान्येव स्वार्थपराणि भेदवाक्यानि त्वनुवादमात्राणीति । अत्रोच्यते । जीवेश्वरयोरंशांशिनोस्तावद्व्याप्यव्यापकभावस्वीकारेण जीवोपाधिनावच्छेद्यस्यात्मप्रदेशस्येश्वरोपाध्यवच्छिन्नत्वं वक्तव्यं, तथा च यथा ब्रह्माण्डाकाशस्य गर्दभमुखावच्छेदेन दुस्स्वरत्वं यथा वा पाय्ववच्छेदेनौपाधिकं दुर्गन्धत्वमेवं कारणसत्त्वावच्छिन्नचिदाकाशस्यापीश्वरस्य जीवोपाध्यवच्छेदेन संसारित्वं स्यात् । यदि च जीवेश्वरौ चैतन्यस्यैवांशौ न तु जीव ईश्वरस्य साक्षादंशो ऽतो घटकुण्डाकाशवदेवान्योन्यव्यावृत्तौ जीवेश्वरौ स्वीक्रियेतां तदापीश्वरस्य जीवान्तर्यामित्वानुपपत्तिः जीवप्रदेशेपीश्वरासत्त्वादिति । एवमेव सर्वजीवानामप्यैक्यं न संभवति एकस्यैव चिदाकाशस्यैकान्तःकरणादिमुक्तेपि प्रदेशे संसार्यन्तःकरणान्तरसंबन्धात् बन्धप्रसङ्गेन श्रुत्युक्तबन्धमोक्षादिव्यवस्थानुपपत्तेः, नह्याकाशस्य भग्नघटप्रदेशेष्वन्यघटसंबन्धो न भवतीति नियमः संभवति प्रत्यक्षविरोधात् पर्यायैश्चैकस्मिन्नेव देशेनेकलिङ्गदेशसंबन्धस्य समानदेशीयभोगेनानुमानाच्च । तदेतदुक्तं कपिलाचार्यैः । जन्मादिव्यवस्थातः पुरुषबहुत्वम् उपाधिभेदेप्येकस्य नानायोग आकाशस्येव घटादिभिरित्यादिसूत्रैरिति । ननूपाधिविशिष्ट-

येऽ.रेव जीवेश्वरत्वे वक्तव्ये इति चेत्, न । विकल्पासहत्वात् । विशिष्टानतिरेके जीवेश्वरत्वं बन्धमोक्षादिसांकर्यतादवस्थ्यात् । अतिरेके तु तदनित्यं नित्यं वा । आद्ये विनाशितया तस्य बन्धमोक्षाद्यनुपपत्तिः । अन्त्ये वृश्चिकभिया पलायमानस्याशीविषमुखनिपातः । यदि हि विशिष्टा अनेकआत्मानः कल्पनीयास्तर्हि अस्मादुपन्यस्तगौरवं भवतामप्यापतितमधिकं तु सामान्यैकात्मकल्पनमिति । न चात्माद्वैतश्रुत्यनुरोधेन तदप्युचितमिति वाच्यम् । विशिष्टात्मभ्यः सामान्यात्मनोऽत्यन्तभेदे तत्त्वमस्याद्यभेदवाक्यानुपपत्तितादवस्थ्यात् । अत्यन्तमभेदे च विशिष्टातिरिक्तताविरोधात् । भेदाभेदे चास्मन्मतप्रवेशादिति, अस्माभिरपि हि सामान्यरूपेणाभेदो वैधर्म्यलक्षणभेदनिरासायेष्यते विशेषतस्तु भेद इति । तथा चोक्तं कपिलाचार्यैः । नाद्वैतश्रुतिविरोधो जातिपरत्वादिति । एवं तावदवच्छेदवादो निरस्तः । प्रतिबिम्बवादस्त्वत्यन्तं विकल्पासहः । प्रतिबिम्बस्य तुच्छत्वे प्रतिबिम्बरूपजीवस्य ब्रह्मणा सहाभेदानुपपत्तिः सदसतोरभेदानुपपत्तेः । अतुच्छत्वे चात्मनानात्वस्य शब्दभेदेन स्वीकारापत्तिरद्वैताद्यनुपपत्तिश्चेति । अत्र च मूढानामुपर्युपरि कक्षाः ब्रह्ममीमांसाभाष्येऽस्माभिर्निराकृताः । तत्त्वमस्यादिवाक्यानि तत्र विस्तरेण व्याख्यातानि संक्षेपतस्त्वत्रापि* व्याख्यास्यामः । न्यायानुग्रहेण बलवद्भिरग्निविस्फुलिङ्गादिभिः सांशदृष्टान्तैः विरोधादाकाशसूर्यादिदृष्टान्ता अखण्डतापरा न भवन्ति किं तु ब्रह्मणि सर्वजीवानामविभागलक्षणाभेदस्य सर्वकालस्यापि तथा पारमार्थिकत्वेऽपि यत्किंचिदवच्छेदेन फेनबुद्बुदादिवत् अतिभङ्गुरस्य विभागलक्षणभेदस्यापारमार्थिकस्यौपाधिकत्वमात्रं प्रतिपादयन्तीति । एतेन भेदनिन्दावाक्यानि प्रकरणभेदैर्विभागवैधर्म्यादिभेदपराण्येव । यच्चोक्तमभेदज्ञानान्मोक्षः श्रूयत इति तत्परंपरयैव न तु साक्षात् । अथात आदेशो नेतिनेति नह्येतस्मादिति नेत्यन्यत्परमस्ति

प्रधानपुरुषव्यक्तकालानां परमं हि तत् ।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥

---

* त्वत्रापीत्यधिकं पुस्तकान्तरे ।

इत्याद्यैः श्रुतिस्मृतिवाक्यैर्विवेकाख्यभेदज्ञानस्यैव मुख्यत्वात् ॥

परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।

मिथ्यैतदन्यद् द्रव्यं हि नैति न द्रव्यतां यतः ॥

इति विष्णुपुराणादिष्वत्यन्ताभेदस्यापि निन्दितत्वाच्चेति । किं बहुना

अन्यश्च राजन् प्रवरस्तथान्यः पञ्चविंशकः ॥

तस्यत्वाच्चानुपश्यन्ति एक एवेति साधवः ॥

इति मोक्षधर्मादिष्वन्योन्याभावाविभागरूपतयैव भेदाभेदयोर्व्याख्यातत्वेन भेदवाक्याभेदवाक्ययोरर्थनिर्णयेनाधुनिककुतर्कापेक्षेति दिक् ॥ पुरुषान्तरेभ्य ईश्वरस्य निरतिशयसार्वज्ञरूपविशेषान्तरं प्रतिपादयन् सूत्रमवतारयति । किं चेति ।

तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

बीजं लिङ्गं सर्वज्ञानुमापकं वक्ष्यमाणं यत्सातिशयजातीयं ज्ञानं तत्तत्रेश्वरे निरतिशयमित्यर्थः । सार्वज्ञबीजमिति पाठेप्ययमेवार्थः । यत्तु बीजं कारणं तथा च सर्वज्ञत्वकारणं सत्त्वमिति तस्यार्थ इति कश्चित् । तन्न । ज्ञानस्य बहुत्वतयैव बीजतयात्र भाष्यकारैर्व्याख्यास्यमानत्वादिति, व्याचष्टे । यदिदमिति । यत् अतीतानागतवर्त्तमानानां प्रत्येकसमुच्चितानामतीन्द्रियार्थानामल्पं बहुत्वं ग्रहणं ज्ञानमिदं सर्वज्ञबीजमित्यर्थः । कथं बीजं तदाह । तदिति । एतत्सर्वज्ञबीजं सातिशयज्ञानं विवर्धमानं यत्र निरतिशयं भवति स सर्वज्ञोन्यथानवस्थानादिति युक्तिरुक्ता । प्रयोगमप्याह । अस्तीति । सर्वज्ञबीजं सातिशयज्ञानं क्वचित्प्राप्तकाष्ठं सातिशयत्वात् परिमाणवदित्यर्थः । अत्र बाधकाभावे सतीति हेतुर्विशेषणीयस्तेन गुरुत्वसंस्काररूपादिषु न व्यभिचारस्तेषां चैकत्र काष्ठाप्राप्तौ कार्यमात्रे अतिशयित्वमेव बाधकं सामग्र्यास्तारतम्याव्यवस्थित्या कार्यतारतम्ये व्यवस्थानुपपत्तेः । ज्ञानेच्छापरिमाणानां तु नित्यानामपि सिद्धतया क्वचित् काष्ठाप्राप्तौ नास्ति बाधकम् । वस्तुतस्तु यथाश्रुतभाष्यादनवस्थापत्तेश्च गुरुत्वादिष्वप्यतिशयानां क्वचित्काष्ठानुमीयते सामग्रीतारतम्यकाष्ठाया अप्य-

नवस्थापत्त्यैवानुमानसाम्यात् अतो न हेतौ विशेषणापेक्षेति । अस्मिंश्चानुमाने श्रुत्यादिस्तर्क इति, सूत्रतात्पर्यमाह । यत्रेति । ननूक्तानुमानेन सामान्यतः सर्वज्ञपुरुषसद्भावेऽपि तस्य संज्ञाविशेषः कथमवधार्यतइत्याकाङ्क्षायामाह । सामान्येति । सामान्यमात्रेणोपसंहारे निश्चये कृतपर्यवसानमनुमानं न संज्ञादिविशेषप्रतिपादनक्षममित्यत इत्यादिरर्थः । संज्ञा ब्रह्मान्तर्यामिपरमात्मादिरूपा आदिशब्देन पूर्णानन्दत्वपरमकारुणिकत्वपारमार्थिकात्मत्वजगदाधारकारणत्वादयो ग्राह्याः । हरिहरादिसंज्ञामूर्त्तयस्तु शक्तिशक्तिमदाद्यभेदेनोपासनार्थमेव परमेश्वरस्योच्यन्ते न तु साक्षादेव ॥

> ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः ।
> ततो न्यूनाश्च मैत्रेय देवा दक्षादयस्ततः ॥
> ब्रह्मविष्णुशिवादीनां यः परः स महेश्वरः ।

इत्यादिवाक्येभ्यः । आगमतो वेदान्ततः । यत्तु आधुनिकाः केचन परस्य साक्षादपि लीलाविग्रहं कल्पयन्ति । तदप्रामाणिकं, विष्ण्वादीनामेव लीलावतारश्रवणात् । विष्ण्वादीनां च परमात्मन्येवाहंभावात्तेषामवतारा एव परमेश्वरावतारतया श्रुतिस्मृतिषूच्यन्ते तेन तु ते भ्रान्ताः 'न तस्य कार्यं करणं च विद्यते' इत्यादिश्रुतिभ्यः परमेश्वरस्य कार्यकारणाख्यशरीरद्वयप्रतिषेधात् । 'अनादिमत्परं ब्रह्म सर्वदेहविवर्जित' मित्यादिस्मृतिभ्यश्चेति दिक् ॥ ननु नित्यमुक्तश्चेदीश्वरस्तर्हि पुरुषार्थाभावात् तस्य प्रवृत्तिर्न घटते । तथा च सांख्यसूत्र 'स्वोपकारादधिष्ठानं लोकव' दितीति पूर्वपक्षः । तन्न । प्रवृत्त्यादिनित्यत्वात् तत्र निमित्तापेक्षा नास्तीति मुख्यसमाधाने सत्यपि प्रौढ्या प्रकारान्तरेणापि समाधानमाह । तस्मात्स्वेति । आत्मानुग्रहः स्वोपकारः । तस्येश्वरस्य स्वोपकाराभावेऽपि भक्तान्पुरुषानुद्धरिष्यामीत्याशयेन ज्ञानधर्मयोरुपदेशतो भक्तभूतानुग्रहः प्रयोजनं, पुरुषाणां विशेषणं कल्पेत्यादि । कल्पप्रलयेषु दैनंदिनप्रलयेषु महाप्रलयेषु प्राकृतप्रलयेषु च संसारिणः स्वकारणगामिनो ऽतस्तदा मरणदुःखभाज इत्यर्थः । ननु स्वेष्टसाधनताज्ञानाभावे कथं व्यापारः स्यादिति चेन्न ।

तृणारणिमणिन्यायेन स्वेष्टसाधनताज्ञानपरदुःखज्ञानयोर्विजातीयेच्छाद्वयं प्रत्येव फलबलेन हेतुतायाः क्लृप्तत्वात् । तथा च ब्रह्मसूत्रं 'लोकवत्तु लीलाकैवल्यम्' इति । ननु तथापि भक्तानेवानुगृह्णाति नान्यान् प्रत्युत तान्निगृह्णात्यपि स्वभक्तैश्वर्यदानेनेत्यतो वैषम्यादिना नेश्वरस्य नित्यमुक्तत्वं भवतीति चेत् । मैवम् । अग्नेरौष्ण्यस्वाभाव्यवत् विशुद्धसत्त्वे भक्तवशतास्वभावस्यापर्यनुयोज्यत्वात् । वैषम्यं च रागद्वेषाभ्यामेव भवति न तु प्रवृत्तिमात्रेणेति । अत एव गीता

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥

इति । यच्च हिरण्यगर्भाद्यैश्वर्यदानात् अन्येषां दुःखं भवति तत्रापि हिरण्यगर्भादीनामेव वैषम्यं बीजम् । ईश्वरस्य तु परदुःखप्रहाणेच्छा विद्यमानापि भक्तवशतया कुण्ठिता स्वकार्याय विलम्बत इति सर्वं समञ्जसम् । यच्च सर्वेश्वरस्य कर्मसापेक्षतया वैषम्यं नैर्घृण्यं च ब्रह्ममीमांसासूत्रेणापाकृतं तत्राप्ययमेवाशयः । लोकानां विहितनिषिद्धरूपाणि कर्माणि देवानां सुखदुःखसाधनानि अत ईश्वरेण स्वभक्तदेवेषु अपराद्धाय यत् दुःखं दीयते ऽनपराद्धाय सुखं तद्भक्तपारवश्यनिमित्तकमिति स्वप्रयोजनाभावेऽपि विदुषां प्रवृत्तौ पञ्चशिखाचार्यवाक्यं साक्ष्यस्यं प्रमाणयति । तथा चोक्तमिति । आदिविद्वान् स्वयंभूः सर्गादावाविर्भूतो विष्णुर्निर्माणचित्तं योगबलेन स्वनिर्मितं चित्तमधिष्ठाय स्वांशेन प्रविश्य कपिलाख्यपरमर्षिर्भूत्वा कारुण्याज्जिज्ञासवे आसुरये तत्त्वं प्रोवाचेत्यर्थः ॥

( शेषमग्रे )

काशीस्थराजकीयप्रधानपाठशालायां { साङ्ख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री । आङ्गलभागे संस्कृताध्यापकः केशवशास्त्री च ।

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(Continued from page 224. Vol. V.)

३६५ उद्गाता मन्थनारम्भकाले अरणी स्पृष्ट्वा अरण्योरिति साम गायति मथ्यमाने अग्निं नर इति साम गायति धूमे उत्पन्ने सति त्वेषस्ते धूम ऋण्वतीति साम गायति अग्नौ जाते यजमानो वरं ददामीति वाचं विसृजते उद्गाता प्रज्वलिते ऽग्नौ अदर्शि गातुवित्तम इति साम गायति अध्वर्युर्यजमानश्च जातमग्निमुपतिष्ठाते अजीजनन्नमृतमिति मन्त्रेण एतावत्कर्म अग्निमन्थनमित्युच्यते ॥

३६६ यजमानः अग्नेरुपरि नासापुटाभ्यां वायुं निष्क्रामयति प्रजापतेस्त्वा प्राण इति मन्त्रेण यजमानः गार्हपत्यं निदधाति निधीयमाने गार्हपत्ये उद्गाता अग्निमीडइति साम गायति अध्वर्युरुद्गातारमाह रथन्तर ब्रूहीति तत उद्गाता रथन्तरं साम गायति उद्गातुरभावे ब्रह्मन् छन्दांसि ब्रूहीति ब्रह्मा हिंङ् इति ब्रवीति योनिं वा द्विर्ब्रवीति समस्तव्याहृतीर्वा त्रिर्ब्रवीति अध्वर्युर्गार्हपत्यं स्पृष्ट्वा भूर्भुवो धर्म इत्यादिमन्त्रं जपति तत्र मन्त्रे भृगूणां भृगूणां त्वा व्रतपते इति अङ्गिरसां तु अङ्गिरसां त्वा व्रतपते इति एतद्द्वयभिन्नानां तु आदित्यानां त्वा व्रतपते इति गायत्रेण छन्दसेत्यादि यथायजमानगोत्रोच्चारणम् । अथाग्नेरुत्तरतः अग्नौ वा सौवर्णं शकलं स्वया तनुवेति मन्त्रेण निदधाति राजतं शकलं मूर्खाय ब्राह्मणाय वृषलाय वा प्रयच्छति अध्वर्युर्यजमानश्च गार्हपत्यं अहं त्वदस्मीत्यृग्भ्यामुपतिष्ठाते एतद् गार्हपत्याधानमित्युच्यते ॥

३६७ अथ अध्वर्युः गार्हपत्यात् अन्वाहार्यपचनं निदधाति तं स्पृष्ट्वा भूर्भुवो वात इत्यादिमन्त्रं जपति यथर्षि यथागोत्रं गायत्रेण छन्दसेति पूर्ववत् हिरण्यशकलं निदधाति राजतं ददाति अध्वर्युर्यजमानश्च इमा उमामित्यृचा अन्वाहार्यपचनमुपतिष्ठाते इदं दक्षिणाग्न्याधानमित्युच्यते ॥

३६८ ततः गार्हपत्यं प्रति यथेतमेत्य गार्हपत्ये प्रणयनीयमिध्मं मूलतो ऽभ्यादधाति यथा अर्धोदिते सूर्ये अग्निप्रणयनयोग्यो भवति तथा ज्वलयति मृत्पर्णपात्रं उपयमनं च समीपे गार्हपत्यस्य सादयति स्थापितस्तरुणो ऽश्वः गार्हपत्यस्य पुरस्तात् स्थापितो भवति अश्वाभावे अनड्वान् अजो वा अविर्वा कमण्डलुर्वा अग्न्युद्धरणे प्रारब्धे उद्गातारमाह वामदेव्यं ब्रूहीति उद्गातुरभावे ब्रह्मन् छन्दांसीति विकल्पः पूर्ववत् यजमानः प्रदीप्तमिध्मं मृत्पर्णपात्रे निधाय अग्रत उपयमनेनोपयम्य ओजसे बलायेत्यादिना मन्त्रेणोद्यच्छते अग्निपात्रं जानुमात्रमुद्धृत्य गार्हपत्याहवनीययोर्मध्यदेशं त्रेधा विभज्य प्रथमभागं गच्छति नाभिमात्रमुद्धृत्य द्वितीयभागं गच्छति ग्रीवामात्रमुद्धृत्य तृतीयं भागं गच्छति अश्वं पूर्वं ब्रह्मादयः उत्तरेण नयन्ति तं अश्वं प्राचीमनुप्रदिशमित्यृचानुमन्त्रयते विक्रमस्व मह्यमित्यृचा गमनमध्ये उपरमन्ति अन्वग्निरुषसामित्यृचा ततो गच्छन्ति अग्निपात्रं अन्यस्य हस्ते दत्वा प्राङ्मुखमश्वं दक्षिणेन पूर्वपादेन संभाराणामुत्तरदेशे अतिसन्निहिते आक्रमयति यजमानः प्रदक्षिणमावृत्य अश्वं द्विरभ्युत्य उत्तरत उत्सृज्य अध्वर्यवे ददाति अन्यमश्वं ब्रह्मणे ततो ब्रह्मा आहवनीयं परीत्य आहवनीयस्य दक्षिणतः मन्त्रेण निरसनोपवेशने कृत्वा

बृहस्पतिर्ब्रह्मेत्यादि जपति यजमानः अर्धोदिते सूर्ये प्रदक्षिणमावृत्य प्रत्यङ्मुखस्तिष्ठन् तमग्निं गृहीत्वा संभारेषु प्रतिष्ठापयति यदिदमित्यादि गुप्त्यै इत्यन्तेन मन्त्रेण तत उद्गातारमाह बृहद्रथन्तरीयं श्यैतं ब्रूहीति उद्गातुरभावे पूर्ववत् ब्रह्मणो विकल्पाः उद्गाता सामानि गायति आहितमग्निं स्पृष्ट्वा भूर्भुवः सुवरर्के इत्यादिमन्त्रं जपति ततो राजतशकलदानान्तं पूर्ववत् अध्वर्युर्यजमानश्चाहवनीयं आनशे व्यानश इत्यादिमन्त्रेणोपतिष्ठाते रथचक्रं प्रवर्तयति सन्ततं गार्हपत्यादाहवनीयात् एतदाहवनीयाधानमित्युच्यते ॥

३९९ ततः अग्नीन् परिसमुह्य पर्युक्ष्य परिस्तीर्य यजमानः तिलमाषादीनि पूर्वोक्तानि धान्यानि स्वाहाकारान्ताभिर्व्याहृतिभिः सर्वेष्वग्निषु जुहोति अयमुत्तरसर्वौषधिहोम इत्युच्यते ॥

४०० ततोऽध्वर्युर्यजमानेनान्वारब्धः गार्हपत्ये आज्यं संस्कृत्य स्रुवं जुहूं च संमृज्य एकैकस्मिन्नग्नौ पञ्च पञ्च अश्वत्थोदुम्बरपलाशशमीविकङ्कतवृक्षाणां समिधः संस्कृताज्येनाभ्यज्यादधाति तत्र आदौ गार्हपत्ये समिध्यमानः प्रथम इत्यृचा आश्वत्थीं घृतप्रतीको घृतयोनिरित्यृचा औदुम्बरीं त्वामग्ने समिधानमित्यृचा पालाशीं त्वामग्ने प्रदिव इत्यृचा शमीमयीं घृतप्रतीकं व इत्यृचा वैकङ्कतीं एतैरेव मन्त्रैः अन्वाहार्यपचने आहवनीये च समिद्धोमः अयं पञ्चसमिद्धोम इति प्रसिद्धः ॥

४०१ यजमानः प्रदक्षिणमावृत्य गार्हपत्यस्य पश्चात्तिष्ठन् उपतिष्ठते ये ते अग्ने इत्यादि त्वा दधे इत्यन्तैर्मन्त्रैः एवमन्वाहार्यपचनाहवनीयावुपतिष्ठते इदमाहितसर्वोपस्थानमित्युच्यते ॥

४०२ ततो यजमानो द्विष्यं ध्यायन् गार्हपत्यसमीपे यास्ते घोरा इत्यादि द्विष्म इत्यन्तान् मन्त्रान् जपति एवमेवान्वाहार्यपचनाहवनीयसमीपे उपविश्य जपति अयमाहितसर्वाग्निजप इत्युच्यते ॥

४०३ ततोऽप उपस्पृश्य तिष्ठन् गार्हपत्यमुपतिष्ठते नर्य प्रजामित्यादिमन्त्रः अथर्वपितुमित्यादिमन्त्रैर्दक्षिणाग्निं शंस्य पशूनित्यादिमन्त्रैराहवनीयं इदं आहितप्रत्येकोपस्थानमित्युच्यते ॥

४०४ ततो गार्हपत्ये गृह्योक्तप्रकारेणाज्यं संस्कृत्य स्रुचि चतुर्गृहीत्वा आहवनीये समिधमाधाय आहवनीयमद्भिः परिषिच्य सप्त ते अग्न इत्यृचा जुहोति अध्वर्यवे वरं ददाति इयमाहुतिः पूर्णाहुतिपदेनोच्यते ॥

४०५ पुनराज्यं संस्कृत्य स्रुवेण आहवनीये जुहोति यद्वा देवहेडनं यददीव्य नृणां आयुष्टे विश्वतो दधदिति पूर्वोक्तैस्त्रिभिरनुवाकैः प्रत्यृचं ततो वैश्वानराय प्रतीत्यनुवाकेन पूर्ववदुपस्थाय समिधमाधाय वरं ददाति अयमुत्तरकूश्माण्डहोम इत्युच्यते ॥

४०६ पूर्वकूश्माण्डहोमादि एतावत्पर्यन्तं कर्म अग्न्याधानमित्युच्यते ॥

४०७ अग्न्याधानस्य पूर्णाहुत्या पूर्वोक्तया यदि समाप्तिस्तदा पूर्णाहुत्यन्तमग्न्याधानमित्युच्यते ॥

४०८ होमान्तत्वपक्षे अग्निसंस्कारकसायंप्रातर्होमौ समस्य करिष्ये इति संकल्प्य वक्ष्यमाणसायंप्रातर्होमौ समस्य सायंहोमतन्त्रेण करोति तदा अग्निहोत्रहोमान्तमग्न्याधानमित्युच्यते ॥

४०९ इष्ट्यन्तत्वपक्षे आश्वलायनेन इष्टित्रयं विहितं तत्र द्वितीया इष्टिराश्वलायनेन विकल्पिता तथा च आद्यान्त्ययोरेकतन्त्रेण अनुष्ठानं प्रसिद्धं तयोर्बौधायनमतानुसारेण प्रधानदेवताः षट् सर्वं पौर्णमासतन्त्रं तत्र प्रधानदेवतास्थाने अग्निः । अग्निः पवमानः । अग्निः पावकः । अग्निः शुचिः । इन्द्राग्नी ।

अदितिः । एता देवता भवन्ति ताश्च उपांशुधर्मेण इज्यन्ते सप्तदशसामिधेन्यो भवन्ति इध्मसंभरणकाले एकविंशतिधेत्यस्य स्थाने त्रयोविंशतिधेत्यूहः पात्रासादने विशेषः त्रिचत्वारिंशत्कपालानि चरुस्थाली मेक्षणं च यथादैवतं निर्वापादि भवति आग्नेयादयश्चत्वारोऽष्टाकपालाः ऐन्द्राग्न एकादशकपालः अदित्यै चरुः आज्यभागान्ते अग्नेः अग्निर्मूर्धेति पुरोनुवाक्या अयमग्निः सहस्रिण इति याज्या अग्नेः पवमानस्य अग्न आयूंषीत्यनुवाक्या अग्ने पवस्वेति याज्या अग्नेः पावकस्य स नः पावकेत्यनुवाक्या अग्ने पावकेति याज्या अग्नेः शुचेः अग्निः शुचिव्रततम इत्यनुवाक्या उदग्ने शुचयस्तवेति याज्या इन्द्राग्न्योः इन्द्राग्नी अवसेत्यनुवाक्या गीर्भिर्विप्रः प्रमतिमिति याज्या अदित्याः उत त्वामदिते महीमित्यनुवाक्या महीमू षु मातरमिति याज्या अग्नेः स्विष्टकृतः प्रेद्धो अग्न इत्यनुवाक्या इमो अग्न इति याज्या अन्वाहार्यमासाद्य दक्षिणादाने विशेषः अग्नीदिदं ते उपबर्हणं ब्रह्मन्नयं ते अश्वः होतरेषा ते धेनुः अध्वर्यो एष ते ऽनड्वान् उद्गातरेते ते हिरण्यवाससी हिरण्यं चात्र शतमानं भो सर्वे ऋत्विजः युष्माकमेतौ मिथुनौ गावौ वासः पञ्चगावश्च यथाभागं प्रतिगृह्णीध्वं इति सर्वान् पदार्थान् दर्भेणाभिमन्त्र्य ददाति प्रतिग्रहे विशेषः देवस्य त्वेत्यादिमन्त्रेणान्वाहार्यं प्रतिगृह्य पुनर्देवस्य त्वेत्यादिमन्त्रे ब्रह्मण ओदनमित्यस्य स्थाने ब्रह्मण उपबर्हणमित्याग्नीध्रः ब्रह्मणे ऽश्वमिति ब्रह्मा ब्रह्मणे ऽनड्वाहमित्यध्वर्युः ब्रह्मणे धेनुमिति होता ब्रह्मणे हिरण्यवाससी इत्युद्गाता ततः सर्वे देवस्य त्वेति मन्त्रे उक्तस्थाने ब्रह्मणे मिथुनौ गावौ पुनस्तत्र स्थाने ब्रह्मणे गाः इत्यादि पठित्वा प्रतिगृह्णीयुः एतादृग्दक्षिणादानासामर्थ्ये एकां गां ददाति तत्राप्यशक्तौ चरुं इयमग्न्याधेयदक्षिणेत्युच्यते ॥ (शेषमग्रे)

॥ श्रीः ॥

# कैवल्यरत्नम् ।

*(Continued from page 238. Vol. V.)*

श्रीमत्साम्बपुराणे ऽपि ब्रह्मात्मैक्यविषयसारोद्धारः क्रियते ॥

सूत उवाच ॥

कैलासशिखरे रम्ये देव्या परमया सह ।
आसने विमले रम्ये भ्राजमानमनोपमम् ॥
प्रणम्य दण्डवद्भूमौ भक्त्यापृच्छदिदं पुरा ।
अगस्त्यः परमप्रीत्या देवदेवं महेश्वरम् ॥
भगवन्वेदवेदान्तैः शास्त्रैस्तदनुसारिभिः ।
सुनिश्चितो ऽर्थो यस्तं मे ब्रूहि कारुण्यतः परम् ॥
देवदेवो ऽपि संतुष्टः प्राह कारुणिकोत्तमः ।
तस्मै लोकोपकाराय मुनये ऽमलचेतसे ॥

पराशर उवाच ॥

शृणु गुह्यतमं वक्ष्ये तव वेदोदितं मुने ।
श्रद्धया सह कल्याण मया नोक्तमतः पुरा ॥
अस्ति कश्चित् नद्यन्तस्वभावादेव निर्मलः ।
अप्रमेयः स्वयं भातः स्वविलक्षणवर्जितः ॥
स नास्तीति प्रतिज्ञा मे सर्वथा नैव शक्यते ।
यस्तं वदति चास्तीति स एव हि मम्आस्तिकः ।
यस्तं वदति नास्तीति सो ऽपि नास्तीति चेन्मतम् ॥
सो ऽपि नास्तीति यो वक्ति सो ऽस्त्येव न हि संशयः ।

अन्यथा व्यवहारस्य लोप एव प्रसज्यते ॥
प्रतीयते हि सर्व्वेषां व्यवहारस्तपोधन ।
व्यवहाराश्रयत्वेन सर्वदा यः प्रकाशते ॥
स्वयमेव स एवात्मा स एव सकलं जगत् ।
दृश्यभूतमिदं सर्वं दृश्यतेहि पटो मृषा ॥
ज्ञातरूपेण सो ऽज्ञातस्वरूपेण च सत्तम ।
ज्ञाताज्ञातार्थरूपं हि केवलं न प्रकाशते ॥
ततो ऽन्यादृक् स्वतः सिद्धा न विभातीति चेन्मतम् ।
दृङ्मतं भाति दृग्भानाभावो यस्यावभासते ॥
स भातो न विभातो वा भातश्चेत्स हि दृक्परः ।
न भातश्चेत्स दृग्भानाभावः कस्य प्रकाशते ॥
कस्य चिद्भासते सो ऽयं दृग्भानाभावसंज्ञितः ।
सत्तया वर्त्तमानस्य भाति नास्फुरितात्मनः ॥
भानशून्यस्य सत्ता च सर्वथा नैव सिध्यति ।
वन्ध्यासूनोर्न सत्तास्ति भानहीनस्य हि द्विज ॥
स्वतश्च परतश्चापि बन्ध्यासूनोः प्रथा न हि ।
कदा चिदपि यत्तस्मात्सत्ताभानं च युज्यते ॥
भासते यस्य दृग्भानाभावस्तस्यान्यवेदनात् ।
कदा चिदपि वा भानं संभवत्येव सर्वथा ॥
अतः सिध्यति सत्ता च तस्य सर्व्वं विभाति चेत् ।
वेदनं भासकं तस्य यदुक्तं तद्घटादिवत् ॥
वेदनान्तरवेद्यं चेत्स्यादेव तदवेदनम् ।
वेदनाभावतस्तस्य कदा चिदपि वामुने ॥
नास्ति भानं ततः सत्ता वापि तस्य न सिध्यति ।

वेदनं भासकं तस्य यदुक्तं तत्स्वयंप्रभ ॥
इति चेत्तर्हि दृक् सैव स एवात्मा न चापर: ।
स्वयंप्रकाशं चैतन्यं दृग्रूपं सर्वसाधकम् ॥
गुणा एवात्मनो नात्मा जन्मनाशादिमान्यत: ।
स्वयं प्रकाशरूपस्य प्रागभावाग्रहणेन तु ॥
जन्म नास्ति तथा तस्य प्रध्वंसाग्रहणेन तु ।
नास्ति नाशस्ततोऽनित्यवेदनं सर्वसाधकम् ॥
नित्यवेदनमेवात्मा स्वयंभानं न चापर: ।
स्वप्रागभावप्रध्वंसं स्वप्रकाशेन भाति चेत् ॥
प्रागभावादिसाक्षित्वात्प्रागभावादयो नहि ।
किं च वेदनसद्भावे प्रागभावादयो न हि ॥
प्रागभावादिसद्भावे वेदनं न हि सिध्यति ।
स्वप्रागभावप्रध्वंसं कथं विद्या न वेदनम् ॥
वेदनान्तरवेद्यं चेत्प्रागभावोदितस्य तु ।
न वेदनान्तराभावाद्दृश्यजन्मादिसंभवे ॥
वेदनान्तरसद्भाव: सद्भावे जन्म चास्य हि ।
अत एव स्वयंज्योति:स्वरूपा सर्वसाधिका ॥
दृगवश्यं महाप्राज्ञैरभ्युपेया न संशय: ।
सर्वस्य व्यवहारस्य स एव परमाश्रय: ॥
स एवात्मास एवाहं स एव सकलं जगत् ।
तस्य का चिन्मुने शक्तिरस्ति दुर्घटकारिणी ॥
तयैव जगदुल्लासविलास: सर्वसाक्षिण: ।
न सती सा परा शक्ति: सद्वयत्वप्रसङ्गत: ॥

अद्वयत्वं हि वेदानामभिप्रेतार्थमास्तिक ।
यश्च वेदविरुद्धार्थः स भ्रमः खलु सत्तम ॥
वेदस्यैव हि मानत्वं नेतरस्य न संशयः ।
केनापि कारणेनास्य दोषः कश्चिन्न विद्यते ॥
सुप्रसिद्धं हि वेदस्य प्रामाण्यं परमस्य च ।
नासती सा परा शक्तिर्जगन्निर्वाहिका यतः ॥
निर्वाहकत्वं तुच्छस्य नैव तत्संमतं खलु ।
सदसत्त्वं तु तस्याश्च दोषद्वयसमागमात् ॥
नैव सिध्यत्यतः शक्तिर्दुर्निरूपा न चापरा ।
स्वाभिन्नरूपया शक्त्या स्वयमेव परः पुमान् ॥
जगदात्मतया भातीत्याहुरन्ये न तत्पटु ।
अभेदो वास्तवस्तस्यास्तेन विप्र न सिध्यति ॥
तया वा तेन वाऽभेदस्तया चेत्सैव केवलम् ।
तेन वेदात्ममात्रं स्याच्छक्तिरस्य न सिध्यति ॥
अभेदः कल्पितस्तस्माच्छक्तिशक्तिमतोरपि ।
कल्पिताभेदवच्छक्तिः स एव परमार्थतः ॥
नास्ति तद्व्यतिरेकेण ममैषा मतिसत्तम ।
काश्च श्रुतिस्मृतीनां च पुराणानां न संशयः ॥
इयं वस्तुगतिः शुद्धा नापरा परमास्तिक ।
इतोऽतिरिक्ता मर्त्यानां मोहायैव न संशयः ॥
चिद्रूपापि परा शक्तिरस्ति तस्य महात्मनः ।
सा नामात्मनि बाध्यं वा जडशक्तौ परात्मनः ॥
अप्रच्युतात्मना येन स्थितस्य प्रतिबिम्बनम् ।
प्रतिबिम्बस्य बिम्बस्य वस्तुगत्या भिदा न हि ॥

उपाधिना तयोर्भेदः सत्यवत्परिकल्पितः ।
जलसूर्यस्य सूर्यस्य यथा भेदः प्रकल्पितः ॥
शक्तिशक्तिमतोर्भेदो वास्तवो यदि पूर्ववत् ।
सद्वयत्वं प्रसज्येत न हि तस्य निवर्तकम् ॥
चितश्चिन्न हि भिद्येत चिद्रूपेणैव केवलम् ।
भिद्यते यदि चिद्रूपमचिद्रूपं भवेत्खलु ॥
रूपान्तरेण चेद्भिन्नं तदचित्स्यान्न संशयः ।
तथा सति चितोर्भेदः कल्पितो नैव वास्तवः ॥
तथा चिद्रूपया शक्त्या शिवः साम्ब इतीरितः ।
शक्तिशक्तिमतोर्भेदं यः पश्यति समोहितः ॥
शक्तिशक्तिमतोरैक्यं यः पश्यति स पश्यति ।
नास्ति तस्य विनिर्मोक्षः संसारात्कल्पकोटिभिः ॥
कार्यस्यानुपपत्त्यैव यो हेतुः परिकल्प्यते ।
जन्मरूपा तु सा शक्तिरिति शक्तिः प्रकीर्त्तिता ॥
चैतन्यप्रतिबिम्बं तच्छक्तिरित्यभिधीयते ।
व्यवहारे तु चिद्भिः केवलं शक्त्युपाधिना ॥
आकारा बहवः सन्ति जडशक्तेर्द्विजोत्तम ।
तेषु मायात्मकाकार ईश्वरत्वस्य कारणम् ॥
तेष्वविद्यात्मकाकारः साक्षाज्जीवत्वकारणम् ।
अत एवेश्वराद्भेदो जीवस्य परिकल्पितः ॥
जीवैः सर्वैः शिवः साम्बः संसारोदधितारकः ।
उपासितव्यो मन्तव्यः श्रोतव्यश्च मुमुक्षुभिः ॥
साक्षात्तद्विषयं ज्ञानं वेदान्तवचनादिना ।
जायते योग्यशिष्यस्य प्रसादादीश्वरस्य तु ॥

न कर्मणा न पुत्रेण न धनेन मुनीश्वर ।
संन्यासेन विना ज्ञानं यथावन्नैव जायते ॥
तस्मात्कुर्वीत संन्यासं विरक्तो यदि कर्मणां ।
चतुर्विधस्तु संन्यासो विद्यते वृत्तिभेदतः ॥
कुटीचको हि प्रथमः सन्यासी मुनिसत्तम ।
द्वितीयो भिक्षुको नाम्ना बहूदक इतीरितः ॥
तृतीयो हंससंज्ञस्तु चतुर्थः परहंसकः ॥
गोवालरज्जुसंबद्धं त्रिदण्डं वैणवं शुभम् ॥
कुटीचकस्तु संन्यासी धारयेच्च बहूदकः ।
धारयेत् शिखां नित्यं स्वहस्ताङ्गुलिमानतः ॥
सशिखं वपनं कुर्याद्धंसः परमसंज्ञकः ।
पौर्णमास्यामृतुष्वेषां वपनं परिकीर्तितम् ॥
कुटीचकश्च हंसश्च तथैव च बहूदकः ।
नित्यं नैमित्तिकं कुर्यात्कर्म श्रद्धापुरःसरम् ॥
नित्यमेकं परित्यज्य कर्म्म शास्त्रोक्तवर्त्मना ।
कुर्याद्वेदान्तवाक्यानां श्रवणं परहंसकः ॥
नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्तमानस्तु संन्यासी पतत्येव न संशयः ॥
ब्रह्मचर्यं च काषायधारणं शौचमेव च ।
स्नानं च भिक्षुकाणां तु समानं परिकीर्तितम् ॥
परहंसातिरिक्तानामुपवीतस्य धारणम् ।
कर्तव्यं परहंसस्य नास्ति यज्ञोपवीतकम् ॥
ज्ञानमेव शिखा तस्य परहंसस्य सर्वदा ।
उपवीतं च नैवान्यदिति चाहापरा श्रुतिः ॥

स्वपुत्रदत्तं मित्रैश्च प्रदत्तं भित्तयागतम् ।
एकवारं तु भुञ्जीत द्विवारं वा कुटीचकः ॥
सप्तागारं चरेद्भैक्षं एकान्नं तु विवर्जयेत् ।
बहूदकस्तु संन्यासी बन्धुपुत्रादिवर्जितः ॥
अष्टौ ग्रासान् सकृद्धंसः समश्नीयाद्दिने दिने ।
एकवारं द्विवारं वा भुञ्जीत परहंसकः ॥
येन केन प्रकारेण ज्ञानाभ्यासी भवेत्सदा ।
तस्यैवानुगुणं नित्यं युञ्जीत परहंसकः ॥
प्रणवः परहंसस्य मन्त्रो जप्यो न चापरः ।
प्रणवः सर्वमन्त्राणां बीजं नैवास्ति संशयः ॥
परहंससमाख्यस्तु हंसं चाथ बहूदकम् ।
कुटीचकं वा प्राप्नश्चेत् पतत्येव न संशयः ॥
परहंसातिरिक्तानां खननं दहनं तु वा ।
कर्त्तव्यं परहंसस्य खननं केवलं मतम् ॥
यतीनां यस्तु संस्कर्त्ता गृहस्थः स विमुच्यते ।
स्नानमात्रेण शुद्धिः स्यान्नाशौचं नोदकक्रिया ॥
इति प्रथमद्वितीयावध्यायौ ॥

परमेश्वर उवाच ॥

अथाध्वनामहं वक्ष्ये स्वभावं संग्रहेणतु ।
श्रुतिभिः स्मृतिभिर्गीतं पुराणैरखिलैरपि ॥
अध्वानः पञ्च वेदेषु पठिताः सकलेषु च ।
अध्वानस्तेषु चत्वारः कर्म्मजन्या इति स्मृताः ॥
शाम्भवो वेदजस्त्वन्यः तत्तु विज्ञानमेव हि ।
पापानामेव बहुल्यात् स्थावरादिष्वहंमतिम् ॥

कुरुते ब्रह्मविज्ञानहीनः सर्वाधमा गतिः ।
समाभ्यां पुण्यपापाभ्यां मनुष्यो ऽहमिति भ्रमम् ॥
कुरुते ज्ञानहीनस्तु सा तु मध्यगतिः स्मृता ।
तथैव पुण्यबाहुल्याद्देवत्वाद्यभिमानिता ॥
भवेद्विज्ञानहीनस्य तृतीया गतिरुत्तमा ।
अर्चिरादिगतिः शुद्धा देवयानसमाह्वया ॥
चतुर्थी मानवा वर्तमान यस्यां समागताः ।
कल्पान्ते मानवास्ते ऽपि ह्यावर्तन्ते तया गताः ॥
तेषामपक्वचित्तानामेताश्च गतयः स्मृताः ।
पक्वचित्तस्य शुद्धस्य पञ्चमाध्वसमाह्वयम् ॥
प्राप्नुयादप्रमादेन प्रसादात्पारमेश्वरात् ।
पञ्चमाध्वप्रसिद्धानां नैव गत्या गतिर्नृणाम् ॥
घृतवत्कर्मतत्स्वस्मिन् लीयते सकलं मलम् ।
पञ्चमाध्वप्रसिद्धानां यतीनामूर्ध्वरेतसाम् ॥
महात्म्यं मुनिभिर्देवैः न शक्यं परिभाषितुम् ।
पञ्चमाध्वप्रसिद्धानां पापलेपो न विद्यते ॥
पुण्यलेपश्च नैवास्ति सत्यमेव न संशयः ।
इति पञ्चमो ऽध्यायः ॥

षष्ठोध्यायः ॥

प्रणवेनैव चार्चायां सुगन्धिकुसुमेन च ॥
समाराध्य शिलालिङ्गे मुच्यते सर्वपातकैः ।
ग्रहणे चैव गायत्र्या व्याहृत्या विषुवायने ॥
व्यतीपाते तु हंसेन मुच्यते सर्वपातकैः ।
अप्ये स्वरेव कार्याकुम्भकोणे च पर्वणि ॥

श्वेतारण्ये सकृत्स्नात्वा मुच्यते सर्वपातकैः ।
स्वशुद्धिरात्मनो ज्ञानात्सदा सर्वस्य साक्षिणः ॥
ज्ञानादेव परा शुद्धिस्तस्माज्ज्ञानं सदाभ्यसेत् ।
इति दशमोध्यायः ॥
वैदिकं प्रथमं प्राप्तं मार्गमाजन्मतः स्वतः ॥
कदा चिदपि मोहाद्वा मनुष्यो न परित्यजेत् ।
यदिहास्ति न तदन्यच यन्नेहास्ति न तत्क्वचित् ॥
यतः परमधर्मिष्ठः श्रेयस्कामश्च बुद्धिमान् ।
सर्वार्थसाधकं वेदं सादरं नित्यमाश्रयेत् ॥
ज्ञानभागः क्रियाभागश्चास्य भेदस्य विद्यते ।
उभयत्राप्यनुक्तांशो न कश्चिदपि विद्यते ॥
ज्ञानक्रियातिरेकेण न वक्तव्यस्तु विद्यते ।
उभयं तदिहैवास्ति श्रद्धया परिपश्यताम् ॥
अप्रत्यक्षश्रुतेरर्थं स्मरन्ति च महर्षयः ।
कल्पसूत्रप्रणेतारस्तथा पौराणिका अपि ॥
वेदेन सदृशो मार्गः सत्यमेव न विद्यते ।
मत्समः सर्वदेवेषु यथा नास्ति तथैव तु ॥
नास्ति वेदात्परो मार्गः सत्यमेव न संशयः ।
वैशिष्ट्यं वेदमार्गस्य मया वक्तुं न शक्यते ॥
तथा नारायणेनापि ब्रह्मणा च महामुने ।
देवैश्च सकलैः प्राज्ञैर्मुनिभिश्च तपोधन ॥
वेदेनैव स्ववैशिष्ट्यं शक्यते वक्तुमास्तिक ।
वेदः शुद्धः स्वयंज्योतिःस्वरूपस्य वपुर्मम ॥
विना तं मम विज्ञानं जायते नैव कस्य चित् ।

क्षेत्रज्ञस्य मम ज्ञानाद्विशुद्धिः परमा मता ॥
अतो विज्ञानसिद्ध्यर्थं वेदमेकं समाश्रयेत् ।
स्वतः प्रमाणभूतेन स्वात्मज्ञानप्रदेन तु ॥
विना वेदेन संसारं कः पुमान् तरति स्वतः ।
षोडशोऽध्यायः ॥
ध्यानेन भक्तियोगेन विज्ञानं पारमेश्वरम् ॥
साक्षाद्वेदान्तवाक्येन जायते भवभेषजम् ।
भवः स्वात्मापरिज्ञानप्रसूतः सर्वदेहिनाम् ॥
नैव स्वाभाविकः साक्षी चिद्रूपो जायते कथम् ।
वस्त्वेकत्वापरिज्ञानाद् द्वैतं वस्तु प्रजायते ॥
द्वैतवासनया कालविपाकात्कर्मपाकतः ।
तत्र तावन्महत्तत्वं प्रपञ्चविषयं मुने ॥
अज्ञानाख्यमहामाया जाता सत्वगुणादपि ।
ईषद्रजोगुणस्पृष्टान्महद्वासनयापि च ॥
कालपाकेन सर्वेषां कर्मपाकबलेन च ।
मायाधिष्ठानचिद्रूपसत्तासंबन्धवत्तया ॥
मम चिच्छक्तिसंबन्धबलेन मुनिसत्तम ।
जायते तत्र चैतन्यं मायाधिष्ठानमद्वयम् ॥
परिस्फुरति तद्रूपमगम्यं द्विविधं भवेत् ।
स्वप्रधानस्वरूपेण तच्छायाधिप्रजानतः ॥
स्वप्रधानं तु चिद्रूपं शास्त्रेषु मुनिसत्तम ।
ईश्वितेति समाख्यातं सोऽयं सर्वेश्विता पुनः ॥
सृष्टिस्थित्यन्तसिध्यर्थं ब्रह्मविष्णुशिवात्मना ।
रजसा तमसा सत्वगुणेनापि त्रिधा भवेत् ॥

ते ऽप्युपाधिप्रधानेन वपुषा स्वप्रधानतः ।
द्वैविध्यं लोकरक्षार्थं प्राप्नुवन्ति द्विजर्षभ ॥
स्वप्रधानस्वरूपाणि यानि तानि महामुने ।
शुद्धतत्त्वात्मना नित्यं प्रस्फुरन्ति न संशयः ॥
यान्युपाधिप्रधानानि रूपाणि ब्रह्मवित्तम ।
यानि रुद्रादिरूपेण स्फुरन्ति सततं मुने ॥
किं चित्परित्यज्य ।
अपञ्चीकृतभूतेभ्यः शब्दादिभ्यः क्रमेण वै ॥
अण्डभेदाः प्रजायन्ते व्योमादिभ्यः पुनस्तथा ।
विराट् स्वराट् तथा सम्राट् अपि पश्चात्प्रजायते ॥
अण्डमध्ये प्रजायन्ते क्रमाल्लोकाश्चतुर्दश ।
तेषु तेष्वजरा मर्त्या जायन्ते तिर्यगादयः ॥
भूतप्रेतपिशाचाश्च तथा ऽन्ये सर्वजन्तवः ।
बहुप्रकारं जायन्ते यथापूर्वं तु मायया ॥
सर्गवैचित्र्यमस्माभिर्यथावन्मुनिसत्तम ।
कल्पकोटिशतेनापि न शक्यं परिभाषितुम् ॥
यथा स्वप्नप्रपञ्चस्य विचित्रस्य तपोधन ।
सृष्टिस्थितिविनाशाश्च तथास्य जगतो ऽपि च ॥
मायामयस्य सर्वस्य प्रपञ्चस्य निवर्तकम् ।
मायाधिष्ठानतत्त्वस्य वेदनं वेदमार्गजम् ॥
तस्मात्स्वात्मापरिज्ञानजनितस्य भवस्य तु ।
निवर्तकं मम ज्ञानं साधयेदप्रमादतः ॥

॥ इति सप्तदशो ऽध्यायः ॥

( शेषमग्रे )

# बालसरस्वतीभवनसभाप्रस्तावः ॥

(१) अहो ! महदद्य कल्याणं दिनं यद् वयं सकलभारतभूमण्डनायमानायाः प्रबलकलिकरालकरवालदरद्रुतायाश्चिरंतनीं स्वीयाभिजनभुवं परित्यज्य द्वीपान्तरे शरणमन्वेषयन्त्याः स्वनिदानभूतसंस्कृतनिबन्धविलोपनेनोत्तरोत्तरं ह्रसीयस्या गीर्वाणभाषायाः परित्राणाय महतापि द्विषता दुर्जयं दुर्गं रचयितुमिव कैलासवासिनोऽतिलौकिकप्रज्ञश्रौतस्मार्ताचार्यपण्डितवरश्रीबालशास्त्रिणः स्मारककार्यहेतुना श्रीबालसरस्वतीभवनं व्यवस्थापयितुं प्रवृत्ताः ॥

(२) तत्र प्रथमं तावदशेषधिषणाधीश्वरदिगन्तविख्यातकीर्तिज्योतिष्टोमयाजिसर्वविद्या धरित्र्या इव क्षमाशीलायाः सततमुपकारपरायणाया गुरुवरश्रीईबालशास्त्रिणो मातुर्धन्यवादान् प्रकाशीकरोमि या किल सर्वेभ्यः प्रथममधिकतमं च साहाय्यमस्मिन् बालसरस्वतीभवने मुद्राणां त्रिशत्याः प्रतिश्रुत्या ततस्त्रिगुणितादप्यधिकं द्रव्यं व्ययीकृत्य पुस्तकस्थापनोचितं गृहं सभाद्युपवेशनाय सुविस्तीर्णां शालां च निर्मायात्मनो धर्मशालाकल्पोक्तफलावाप्तये श्रीपरमेश्वरप्रीत्युद्देशेनोत्सिसृक्षुः प्रतिश्रुतार्थं क्रमशः पूरयितुं वर्धमानोत्साहतया चाकरोत् ॥

(३) द्वितीयतश्च विविधविद्यापारदृश्वनः श्रीयुत डाक्तरजालीसाहिबाभिधधर्मशास्त्रमहाध्यापकान् परमादरपुरःसरमभिनन्दामि यैरस्मिन्महति कार्ये परमोदारसाहायकमवलम्बितम् । विशेषतश्च वाराणसेयसंस्कृतपाठशालाध्यक्षप्रभुवरडाक्तरथिबोसाहिबमहाशयानां धन्यवादान् गायामि । यैः किल कैलासवासिपण्डितचक्रवर्तिबालशास्त्रिणां महनीयकीर्तेः स्मरणस्य द्वीपान्तरेऽपि जिगमिषोर्द्वारमनर्गलीकृतम् ॥

४ तृतीयतश्च श्रीमन्महाराजाधिराजेत्यादिविविधविरुदावलीविराजमानमानोन्नतान् श्रीऽ१मिथिलाधीश्वरान् स्वसमानगुणशालिचिरायुष्मत्पुत्रपौत्रमहैश्वर्यैः सततमुत्तरोत्तरमुपचीयमानैः सममेधन्तामित्यादिभिर्विविधाभिराशीराजिभिरभिनन्दामि । ये हि बालसरस्वतीभवनव्यवस्थापन-

वार्ताश्रवणमात्रेणापरान् महाराजान् यथाशक्ति यथोत्साहं निजामात्यपुरोहितादिप्रेरणानपेक्षं वितरणमादिशन्त इव सर्वेभ्यो महाराजेभ्यः प्रथमं मुद्राणां त्रिशतीं श्रीबालसरस्वतीभवनव्यवस्थापनसंपत्तये महतोत्साहेन प्राहिण्वन् । उत्तरोत्तरभाविनोंमितस्य बालसरस्वतीभवनस्योन्नतिं श्रुत्वा निरन्तरं प्रातिवर्षिकव्ययार्थमपि किमपि यथोत्साहं वार्षिकं देयं प्रतिश्रोष्यन्तीत्यपि वाराणस्यां पाठशालास्थापनादिभिर्विविधैरुपायैर्विलुप्तप्रायशास्त्राणां पुनरुज्जीवनाय बद्धपरिकरतया बाढं विश्वसिमि । इच्छामि चैवंविधमहाराजस्य सुकीर्तेरनुवादकं कविनामोल्लसितप्रबन्धं महासभायां विस्तरेण प्रकाशयितुम् ॥

(५) एतस्य स्मारककृत्यस्य मुख्य उद्देश उक्तशास्त्रिवरेष्वनुरागिणामत्र भवने दुर्लभपुस्तकानां च संख्या यथा यथा महीयसी संपत्स्यते तथा तथा परमामुन्नतिमापत्स्यतइति मनसिकृत्य प्रेमपूर्वकं कथमपि स्वस्वसंबन्धो ऽनेन पुस्तकालयेन सहावश्यं विधेय इति मुहुर्विनयेन विज्ञापयामि ॥

(६) प्रतिशृणोमि च मदीयवंशपरंपरासादितानि सुदुर्लभधर्मशास्त्रनिबन्धप्रभृतिविविधविचित्रविषयकाणि लघूनि बृहन्ति च संपूर्णानि असंपूर्णानि च मिलितानि पञ्चशत्या अन्यूनानि पुस्तकानि श्रीमद्बालसरस्वतीभवनाय वितरीतुमधोनिर्दिष्टोपधिभिः । यदि तेषामुपधीनामेकस्याप्यतिक्रमं बालसरस्वतीभवनसभा कुर्यात्तर्हि मद्रिक्थाधिकारपरंपरागतः पुरुषो दत्तानि पुस्तकानि परावर्तयितुं शक्नुयाद् ॥

१ मद्रिक्थाधिकारिपरंपरागतानामेकतमो ऽवश्यं बालसरस्वतीभवनकार्यसभासभ्यो भवेत् ॥

२ मद्रिक्थाधिकारिपरंपरागताः सर्वे पुरुषा यस्मिन् २ शास्त्रे अभ्यासपरा भविष्यन्ति तस्य तस्य शास्त्रस्य यद्यत्र भवने अनेकानि पुस्तकानि स्युस्तर्ह्येकैकं पुस्तकं सर्वेषां पठनीयग्रन्थानामाश्विनसुदिद्वादशीमारभ्याश्विनवदिद्वादशीपर्यन्तमभ्यासार्थं स्वगृहे संस्थाप्य सरस्वतीपूजनाय प्रत्यर्प्य पुनर्ग्रहीतुं शक्नुयात् । एवं शास्त्राभ्यासविरक्तिपर्यन्तं कर्तुमर्हेयुः ।

३ श्रीविश्वनाथेश्वरपार्श्ववर्तिस्थानादन्यत्र यदि बालसरस्वतीभवनं न भवेत् ॥

४ सभ्यानां पुस्तकालयाध्यक्षस्य वा प्रमादादिना पुस्तकानां संरक्षणस्याव्यवस्था न भवेत् ॥

५ अपूर्णपुस्तकानां परिपूरणाय यदि सभा यावच्छक्यं प्रयतेत ॥

(७) सदृढमाशासे च मन्मित्राणि बहवो ऽन्ये चेहामुत्रसुखप्रदोपायं पुस्तकवितरणं महता समुत्साहेन कुर्वन्तो मामनुकरिष्यन्तीति ॥

(८) बालसरस्वतीभवनव्यवस्थापनस्य बहूनि साधुफलानि मनसिकृत्य राजकीयपुस्तकसंग्रहप्रबन्धो ऽपि साधु साहाय्यमस्मिन् दास्यतीति बाढं संभावयामि ॥

(९) अभ्यर्थये च परेशमेतत्सभासभ्यान् श्रीयुतबाबूसाहिबप्रमदादासमित्रमहाशयश्रीयुतपण्डितवरबापूदेवशास्त्रिमुखान् भूरिधनेन मनसा कर्मणा वाचा च सर्वभावेनैतत्कार्यस्योन्नतौ प्रयतमानान् उत्तरोत्तरं महोत्साहशालिनश्चिरायुषश्च कुर्यादिति । शम् । चै० सु० ५ म्याम् । सं० १९४० ॥

काशिकराजकीयसंस्कृतपाठशाला-
सरस्वतीभवनाधिकारी धर्माधिकारि-
ढुण्ढिराजशास्त्री ॥

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ दृष्टिप्रकरणम् ।

*(Continued from page 290. Vol. V.)*

४१० प्रकृतिभूतपौर्णमासेष्टिवत् ब्राह्मणसन्तर्पणान्तं कर्म भवति इयं पवमानेष्टिरिति गीयते ॥

४११ आधानाद् द्वादशरात्रमजस्रा इत्याश्वलायनसूत्रात् आधानदिनप्रभृति द्वादशरात्रं त्रयो ऽप्यग्नय ऽजस्रा भवन्ति तावत्पर्यन्तं

नानृतं वदेदित्यादिनिषेधपरिपालनात्मकं व्रतं द्वादशरात्रमध्ये आधानदिने वा पौर्णमासीप्राप्तौ अजस्रधारणं न भवति सततं प्रज्वलिता अग्नय: अजस्रा इत्युच्यन्ते ॥

४१२ गार्हपत्यस्तु अजस्र एव भवति अग्निहोत्रहोमादिकार्यकाले गार्हपत्याद्दक्षिणाग्निमुद्धृत्य गार्हपत्यादेव आहवनीयायतने आहवनीयं प्रणीय उद्धृतं दक्षिणाग्निं दक्षिणाग्न्यायतने निदधाति एतत्कर्म विहरणमित्युच्यते ॥

४१३ गतश्रियस्तु यजमानस्य अग्नित्रयस्याप्यजस्रधारणं अत्यन्तं तु गतश्रिय इत्याश्वलायनसूत्रात् सोऽयमजस्रधारणपक्ष इत्युच्यते अन्यो ऽग्नीनां प्रणयनाद् विहरणपक्ष इत्युच्यते उद्धरणपक्ष इति च ॥

४१४ अथ सायमग्निहोत्रहोमारम्भ: तदादौ सूर्यास्तात्पूर्वं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि कृत्वा पुण्याहवाचनं करोति तत्र प्रजापति: प्रीयतामित्यस्य स्थाने अग्निसूर्यप्रजापतय: प्रीयन्तामिति विशेष: गार्हपत्यस्य पश्चात् पत्न्या सह दर्भेषूपविश्य या: पुरस्तादित्यादि जपित्वा सत्यां शक्तौ यावज्जीवमग्निहोत्रं होष्ये इति संकल्पयति शक्त्यभावे तु यथेष्टकालमुद्दिश्य संकल्पयति ततोऽग्नीन् परिसमुह्य पर्युक्ष्य परिस्तीर्य गार्हपत्येस्मार्तवदाज्यं संस्कृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये समिधमाधाय यजमानश्चित्तिरित्यादिदशहोत्रा जुहोति तत आहवनीयएव यद्देवा यद्दीव्यमायुष्टे इति त्रिभिरनुवाकै: कूष्माण्डसंज्ञकैर्हुत्वा वैश्वानरायेत्युपतिष्ठते एतावत्कर्म सर्वं अग्निहोत्रहोमारम्भ इत्युच्यते ॥

४१५ यजमानस्तीर्थेन प्रविश्य अग्निहोत्रहवणीं स्रुवं च प्रक्षाल्य आचम्य प्राणानायम्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंप्रातरग्निहोत्रहोमौ होष्ये इति संकल्प्य तत्रेदानीं सायमग्निहोत्रहोमं करिष्ये इति संकल्पयति प्रातस्तु पूर्वसंकल्पितं प्रातरग्निहोत्रहोमं करिष्ये इति गार्हपत्याद् दक्षिणाग्नेरादौ तूष्णीं विहरणं कृत्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरति देवं त्वेति यजुषा उद्ध्रियमाण उद्धरेति मन्त्रेण प्रणयति अमृताहुतिमिति मन्त्रेण आहवनीयायतने स्थापयति ततो दक्षिणाग्निं सोदकेन अवाङ्मुखेन पाणिना तूष्णीं त्रिः परिसमुह्य तथैव गार्हपत्यमाहवनीयं च परिसमुह्य दक्षिणाग्निं उत्तानेन सोदकेन पाणिना ऋतसत्याभ्यां त्वेति त्रिः पर्युक्षति ततः गार्हपत्यादाहवनीयपर्यन्तं तन्तुं तन्वन्नित्यृचा अविच्छिन्नामुदकधारां हरति एतदविच्छिन्नोदकधाराहरणमित्युच्यते ॥

४१६ गार्हपत्यस्य पश्चाद्दक्षिणोत्तरेणोपस्थेनोपविश्य गार्हपत्यादुदक्पात्रान्तरे तदीयानङ्गारान् सुहुतकृतस्थेत्यादियजुषा अपोहति अधिश्रितमित्यादियजुषा इळायास्पदमित्यृचा च अङ्गारेषु होमद्रव्यं पयोधिश्रयति पयसा नित्यहोमो यवागूरोदनोदधिसर्पिर्ग्रामकामान्नाद्यकामतेजस्कामब्रह्मवर्चसकामानामित्याश्वलायनसूत्रात् काम्येन नित्यसिद्धिरिति न्यायात् ग्रामकामादेः यवाग्वा होमकरणे नित्यहोमः सिध्यति तत्र दध्यधिश्रयणे आश्वलायनेन विकल्प उक्तः ततो गार्हपत्ये प्रदीप्तेन काष्ठेन अग्निष्ट इत्यादियजुषा अधिश्रितमवज्वलयति शान्तिरसीत्यादियजुषा होमद्रव्ये स्रुवेणोदकं सिञ्चति अन्तरितं रक्ष इत्यादियजुषा तेनैव ज्वलता काष्ठेन त्रिः पर्यग्निकरोति ततो होम-

द्रव्यपात्रं कर्षन्निवोदगुद्रास्य दिवे त्वा अन्तरिक्षाय त्वेति मन्त्राभ्यां आकाशे निधाय पृथिव्यै त्वेति मन्त्रेण भूमौ निदधाति सुहुतकृतस्येत्यादियजुषा पूर्वमपोहितानङ्गारान् गार्हपत्ये निदधाति प्रत्युष्टं रक्ष इत्यादियजुषा अग्निहोत्रहवणीं स्रुवं च गार्हपत्ये निष्टपति स्थाल्या उत्तरतो ग्निहोत्रहवणीं निधाय स्रुवहस्त आह ओमुन्नयानीति ऋत्विक्कर्तृकहोमे यजमान एतस्मिन् काले आचम्य अपरेण वेदिमतिव्रज्य दक्षिणत उपविश्य ओमुन्नयेति वदति ततो होमकर्ता होमद्रव्यादुत्तरत आसादितायामग्निहोत्रहवण्यां स्रुवेण चत्वारि अवदानानि चतुर्भिर्मन्त्रैः भूरिळा, भुव इळा, स्वरिळा, वृध इळा, इति गृह्णाति पञ्चावत्ती तूष्णीं पञ्चमं ततः स्थालीमभिमृश्य अग्निहोत्रहवण्यां प्रादेशमात्रीं समिधमामाद्य अग्निहोत्रहवणीं गृहीत्वा गार्हपत्यस्योपरिष्टात् सामीप्येन नीत्वा नासिकासंमितामग्निहोत्रहवणीं कृत्वा आहवनीयपर्यन्तं गत्वा आहवनीयस्य पश्चात्प्रागग्रेषु कुशेषु अग्निहोत्रहवणीं निधाय दक्षिणं जान्वाच्य रजतां त्वेत्यादिमन्त्रेण आहवनीये तां समिधमादधाति तेन ऋषिणेत्यादिमन्त्रेण अनुमन्त्रयते विद्युदसीत्यादिमन्त्रेणाप उपस्पृश्य प्रदीप्तायां समिधि ह्रुह्रुनमात्रे समिन्धले भूर्भुव इत्यादिमन्त्रेणाभिजुहोति ता अस्य सूददोहस इत्यृचा हुतामाहुतिमनुमन्त्रयते कुशेषु अग्निहोत्रहवणीं निधाय पशून्मे यच्छेति मन्त्रेण गार्हपत्यमवेक्षते इयं पूर्वाहुतिरित्युच्यते ॥

४१७ ततः पूर्वाहुतेर्भूयसीं पूर्वाहुत्यसंसृष्टां पूर्वाहुतेरुत्तरत ऐशान्यां वा प्रजापतिशब्दं चतुर्थ्यन्तं उक्त्वा स्वाहेति जुहोति उत्थाय स्रुग्धस्त एवाहुतिमनुमन्त्रयते कटाक्षेणेक्षमाणः भूर्भुव इत्या-

दिमन्त्रेण अग्नआयूंषीति तिसृभिश्च ततः अग्निहोत्रहवणीं आहवनीयोपरि त्रिरनुकम्प्य तां कुशेषु निधाय पुष्करलेपं अग्निहोत्रहवण्या अधोमुखेन दक्षिणेन पाणिना अवमृज्य पाणितललेपं कुशमूलेषु पशुभ्यस्त्वेति मन्त्रेण निमार्ष्टि कुशमूलानां दक्षिणत उत्ताना अङ्गुलीः करोति इयमुत्तराहुतिरित्युच्यते ॥

४१८ ततः प्राचीनावीती भूत्वा कुशमूलानां दक्षिणतः अवाचीनेन पाणिना स्वधा पितृभ्य इत्यपो निनयति यज्ञोपवीती भूत्वा ऽप उपस्पृशति वृष्टिरसीति मन्त्रेण गार्हपत्यस्य पश्चादुपविश्य दक्षिणं जान्वाच्य प्रजापतिं मनसा स्मरन् समिधमाधाय स्रुवेण होमद्रव्यं अग्नये गृहपतये स्वाहेति मन्त्रेण जुहोति चतुर्थ्यन्तं प्रजापतिशब्दं मनसा उच्चार्य स्वाहाकारेण द्वितीयाहुतिं हुत्वा दक्षिणाग्नेर्दक्षिणत उदङ्मुख उपविश्य दक्षिणं जान्वाच्य प्रजापतिं स्मृत्वा समिधमाधाय अग्नये संवेशपतये स्वाहेति हुत्वा प्रजापतिशब्दं मनसा चतुर्थ्यन्तं स्मरन् स्वाहेति हुत्वा उदङ्ङावृत्य अग्निहोत्रहवण्यां स्थापितं द्रव्यं आयुषे त्वेत्यादिमन्त्रेण प्राश्याचम्य अन्नाद्याय त्वेत्यादिमन्त्रेण पुनः प्राश्याचम्य स्वसंमुखं अग्निहोत्रहवण्या सर्पदेवेत्यादिमन्त्रावृत्त्या अपस्त्रिर्निक्षिपति इदं अग्निहोत्रशेषप्राशनमित्युच्यते ॥

४१९ ततो ऽग्निहोत्रहवणीं कुशैः प्रक्षाल्य विहारस्य ऐशान्यां दिशि अग्निहोत्रहवण्या चतस्र उदकाहुतीः ऋतुभ्यः स्वाहेति चतुर्भिर्मन्त्रैः क्षिपति आहवनीयस्य पश्चात्कुशेषु पृथिव्याममृतमित्यादिमन्त्रेण पञ्चमीं गार्हपत्यस्य पश्चात् प्राणममृत इति षष्ठीं ततः अग्निहोत्रहवणीं स्रुवं च आहवनीये प्रताप्य अन्तर्वेदि निदधाति सो ऽयमुदकाहुतिहोम इत्युच्यते ॥

४२० प्रादेशमात्रं समित्त्रयं गृहीत्वा आहवनीयपूर्वदेशेन गत्वा दक्षिणत उदङ्मुखस्तिष्ठन् दीदिहि स्वाहेति मन्त्रेण एकां समिधमाहवनीये आधाय प्रजापतिमुद्दिश्य द्वे समिधौ आदधाति ततः यथेतं प्रत्येत्य गार्हपत्यस्य दक्षिणत उदङ्मुखस्तिष्ठन् स्वाहान्तेन दीदायेति मन्त्रेण गार्हपत्ये एकां समिधमाधाय समिद्वयं पूर्ववदादधाति ततः प्रदक्षिणमावृत्य दक्षिणाग्नेर्दक्षिणत उदङ्मुखस्तिष्ठन् स्वाहान्तेन दीदायेति मन्त्रेण एकां समिधमाधाय पूर्ववत्समिद्वयमादधाति । इदं उदकहोमानन्तरं समिदाधानमित्युच्यते ॥

४२१ परिसमूहनपर्युक्षणे पुनः पूर्ववत्कार्ये द्वादशदिनानन्तरं सायं प्रातरुद्धरणं द्वादशरात्रमध्ये पौर्णमासीप्राप्तौ नाजस्रधारणं आधानदिने च अन्वाधानयोग्यपौर्णमासीप्राप्तौ यागानन्तरं सायंप्रातरुद्धरणं देवं त्वा देवेभ्य इत्यादिमन्त्रेण उद्धरणं गार्हपत्यभस्मापाकरणं उद्धरणमित्युच्यते ॥

४२२ दक्षिणाग्नेरादौ तूष्णीं विहरणं कृत्वा पश्चादाहवनीयस्य समन्त्रकं तत्र उद्ध्रियमाण उद्धरेत्यादिर्मन्त्रः तत्र मन्त्रे दिवा उद्धरणे अह्ना यदेन इत्यस्य स्थाने रात्र्या यदेन इति विशेषः । अमृताहुतिममृतायां जुहोमीत्यादिमन्त्रेण आदित्याभिमुखः आहवनीयायतने अग्निं स्थापयति सायं सूर्यास्तमयात्पूर्वः प्रातस्तु सूर्योदयात्पूर्वः संनिहितः कालः उद्धरणविहरणकाल इत्युच्यते ॥

४२३ अग्निहोत्रहवणीस्रुवप्रक्षालनप्रभृति एतावत्कर्म अग्निहोत्रहोम इत्युच्यते ॥

४२४ दर्शपूर्णमासावारप्स्यमानो ऽन्वारम्भणीयामित्याश्वलायनसूत्राद्दर्शपूर्णमासाभ्यां प्राक् अन्वारम्भणीयेष्टिः क्रियते तत्र पौर्णमास्याः पूर्वेद्युर्नान्दीमुखं रात्रावुदकशान्तिं प्रतिसरबन्धं च कृत्वा प्रातः स्नानादिपञ्चकं कृत्वा यः पुरस्तादित्यादि जपित्वा सत्यां शक्तौ यावज्जीवं दर्शपूर्णमासाभ्यां यक्ष्ये इति संकल्प्य दर्शपूर्णमासावारप्स्यमानो ऽन्वारम्भणीयया यक्ष्ये इति संकल्पयति विहरणपक्षे अग्निद्वयं विहृत्य अन्वारम्भणीयापौर्णमासयोस्तन्त्रेणान्वाधानव्रते करोति अन्वारम्भणीयायाः अग्नाविष्णू, सरस्वती, सरस्वान्, अग्निर्भगी, इति प्रधानदेवताः पत्नीसंयाजवदुपांशु यष्टव्याः अध्वर्युः अन्वाधानानन्तरं गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये समिधमाधाय पर्युक्ष्य यजमानेनान्वारब्ध उपांशु पृथिवी होतेत्यादि जज्ञनदिन्द्रमिन्द्रियाय स्वाहेत्यन्तेन मन्त्रेण जुहोति यद्देवा यद्दीव्यमायुष्ट इति त्रिभिरनुवाकैः प्रत्यृचं स्रुवेणाहवनीये जुहोति यजमानः स्वायतने तिष्ठन् समित्पाणिर्वैश्वानरायेत्युपस्थानादिवरदानान्तं करोति ततो ऽध्वर्युश्चतुर्गृहीतं गृहीत्वा पूर्णापश्चादित्यृग्द्वयान्ते स्वाहाकारेणाहवनीये हुत्वा पुनश्चतुर्गृहीतेन निवेशनीसंगमनीत्यृग्द्वयेन स्वाहाकारान्तेन जुहोति सो ऽयं सारस्वतहोम इत्युच्यते ॥

४२५ आग्नावैष्णव एकादशकपालः सरस्वत्यै चरुः सारस्वतो द्वादशकपालः अग्नये भगिने अष्टाकपालः पौर्णमासतन्त्रं अग्नाविष्णवोः अग्नाविष्णू सजोषसेत्यनुवाक्या अग्नाविष्णू महिधाम प्रियं वामिति याज्या सरस्वत्याः पावकानः सरस्वतीत्यनुवाक्या

पावीरवी कन्या चित्रायुरिति याज्या सरस्वतः पीपिवांसं सरस्वत इत्यनुवाक्या दिव्यं सुपर्णं वायसं बृहन्तमिति याज्या-ग्नेर्भगिनः आसवं सवितुर्यथेत्यनुवाक्या स नोराधांस्याभरेति याज्या अन्वाहार्यमासाद्य मिथुनो गावो दक्षिणां ददाति मिथुनयोर्गवोः प्रतिग्रहे देवस्य त्वेत्यादिमन्त्रे ब्रह्मणे मिथुनो गावै ताभ्याममृतत्वमिति विशेषः ब्राह्मणतर्पणान्तं अन्यत्सर्वं समानं पैार्णमासीयागान्वाधानस्य जातत्वात्पैार्णमासीयागपर्यन्तं न पवमानयः स्थाप्याः व्रतविसर्गोऽपि तावन्न क्रियते पैार्णमसीयागः प्रतिपदि कर्तव्यः यजमानस्यानुकूलं यद्दर्शपूर्णमासयागारम्भणं तदुपकारकत्वात् इत्थंभूतायाः इष्टेर्नाम अन्वारम्भणीयेति ॥

४२६ यस्य यजमानस्य आधानकालादारभ्य संवत्सरसमाप्तेरर्वाक् कस्यचित्पदार्थस्य हानिर्भवति महारोगो वा जायते अन्यानि वा अग्न्यनुगत्यादीनि निमित्तानि भवन्ति स पुनराधानं करोति तस्य कालः आषाढ्याः पैार्णमास्याः पुरस्तात् अमावास्याप्रतिपद्द्वितीयान्यतमतिथैा आहवनीयाधानकाले अर्धोदिते सूर्ये उदिते वा पुनर्वसुनक्षत्रयोगः तादृशयोगालाभे उदगयन आपूर्यमाणपक्षे पुनर्वसुयुक्ते कस्मिंश्चिद्दिने करोति आधानोक्ताः सर्वे-संभाराः रथः वासः अनड्वान् तिस्रो दर्भमय्यो रज्जवः एते पुनराधानसंभारा इत्युच्यन्ते ॥

४२७ पुनर्वसुयुक्तदिनात्पूर्वेद्युः यः पुरस्तादित्यादि जपित्वा ऋद्धिकामोऽग्नीन् पुनराधास्य इति त्रिरुपांशु त्रिरुच्चैरुक्त्वा ऋत्विग्वरणमर्हणं च कृत्वा अयं ते योनिरिति मन्त्रेण अरण्योरग्नीनुत्पत्त्यनुक्रमेण समारोप्य स्थानान्तरं प्राप्य विहारं कल्प-

यित्वा अग्निन् मथित्वा विहृत्य परिसमुह्य पर्युक्ष्य परिस्तीर्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये समिधमाधाय मनोज्योतिरिति मन्त्रेण जुहोति इदं पुनराधानारम्भकर्मेत्युच्यते ॥

४२८ ततः अग्न्युद्वासनेष्टिः क्रियते आग्नेयोष्टाकपालः अग्नये वैश्वानराय द्वादशकपालः प्रधानहविरुपांशु अग्नेः अग्निर्मूर्धा भुवो यमस्येति याज्यानुवाक्ये अग्नेर्वैश्वानरस्य वैश्वानरो अजीजनत्पृष्टोदिवि पृष्टो ऽग्निः पृथिव्या मिति याज्यानुवाक्ये अन्वाहार्यमासाद्य हिरण्यं ददाति अग्नये हिरण्यमिति प्रतिग्रहमन्त्रे विशेषः पौर्णमासनन्त्रं ब्राह्मणतर्पणान्ता इयमग्न्युद्वासननिमित्तकत्वात् अग्न्युद्वासनेष्टिरिति गीयते ॥

४२९ तदानीमेवाद्भिरग्नीन् समुक्ष्य पुनः संस्कृते पूर्वस्मिन्नेवाग्न्यगारे तत्क्षणसंस्कृतानि पूर्वपात्राणि कृत्वा अध्वर्युर्गार्हपत्यायतनादीन्युद्धन्ति उद्धन्यमानमित्यादिमन्त्रेण संभारसंभरणमग्न्याधानवत् मुञ्जकुलायस्थाने दर्भकुलायं तन्मन्त्रेण संभरति गोपितृयज्ञो विकल्पितः गार्हपत्यस्य पश्चाल्लौकिकाग्नौ ब्रह्मौदनं पचति अपणादिविहृता अग्नयो मा कश्चनान्तरेण संचारीदित्यन्तं समानं अध्वर्युर्गार्हपत्यस्य पश्चाद्ब्रह्मौदनाग्निं भस्मसहितमुद्वास्य तत्र दर्भकुलायं निधाय तस्मिन् पूर्ववदरणी निधाय मन्थेत् चितिः स्रुगित्यादि उद्गाता रथन्तरं ब्रूहीत्यन्तं समानं रथन्तरे गीयमाने दर्भमयीं रज्जुं ज्वलयित्वा तया रज्ज्वा भूर्भुवो घर्मः शिर इत्यृचा भूमिर्भूम्ना द्यौरित्यृचा आयं गौरित्यृचा त्रिंशद्धामेत्यृचा अस्य प्राणादित्यृचा भृगूणामित्यादि पूर्वोक्तयजुषा च गार्हपत्यमादधाति इदंगार्हपत्यपुनराधानं इत्युच्यते ॥

( शेषमग्रे )

# सटीकसंक्षेपशारीरकम् ।

( Continued from page 244. Vol. V. )

मू० ॥ रूपं तावकमुज्झितद्वयमभूदद्वैतमेवाञ्जसा
तत्त्वाद्वैतमपास्य मोहजनितं पारोक्ष्यमात्मा ह्यभूत् ॥
एवं वेदशिरःपदान्वयवशादेकत्वमेकान्ततः
सिद्धं प्रत्यगनन्तयोरिति तव श्रेयः समाप्तिं गतम् ॥ २६८ ॥

टी० ॥ नन्वग्निहोत्रादिवाक्यार्थनिश्चयानन्तरमिव अद्वैतवाक्यार्थसाक्षात्कारानन्तरमपि किं कर्तव्यतान्तरमस्तीति शङ्कमानं प्रति तदन्तरमेवाद्वयं निरतिशयानन्दं ब्रह्म प्राप्तस्य कर्तृकरणादिसाधनाभावात्तदधिकश्रेयसोऽभावाच्च नैवास्तीत्याह । रूपं तावकमिति । तावकं रूपं स्वरूपमुज्झितद्वयं परित्यक्ताहङ्कारतद्धर्मादिद्वैतं यथा स्यात्तथाऽञ्जसा स्वभावतो द्वैतमेव पूर्णं ब्रह्मैवाभूत्तत्त्वाद्वैतं मोहजनितं पारोक्ष्यमपास्याञ्जसा तदात्माभूद्धीति संबन्धः । हीति वैदिकप्रसिद्धौ एवं च सति तत्त्वमस्यादिवाक्यादहं ब्रह्मास्मीति साक्षात्कार उदिते पूर्णपुरुषार्थलाभ इत्याह । एवं वेदशिर इति । तव श्रेय इति । तावतैवेति शेषः । समाप्तिं गतं निरवशेषं प्राप्तमित्यर्थः । प्रतीचः परमानन्दाद्वयब्रह्मप्राप्तेरेव श्रेयःसमाप्तित्वात् । सा काष्ठा सा परा गतिरितिश्रुतेः । आत्मलाभान्न परं विद्यते एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारतेति स्मृतेश्च । अग्निहोत्रादिज्ञानमात्रात्तु नैवंविधपुरुषार्थलाभ इति तत्रानुष्ठानापेक्षेति भावः ॥ २६९ ॥

मू० ॥ संबद्धः समवाय इत्यपि पदे वैशेषिकोच्चारिते
नाखण्डव्यतिरिक्तवस्तु वदितुं शक्तोऽनवस्थाभयात् ॥
पञ्चानां समवायितेति वचनव्याघातभीतेरपि
संबन्धान्तरमस्य नाभिमनुते वैशेषिकः कातरः ॥ २७० ॥

टी० ॥ एवं वेदान्तानामखण्डे ब्रह्मणि समन्वयो दर्शितः । अखण्डार्थतायाश्च वाक्यस्य लोकवादिप्रसिद्धिर्दर्शिता । इदानीमन्त्येऽपि तद्वा-

ख्यार्थे वादिप्रसिद्धिं दर्शयति। तत्रादावेकपदलक्षणया वैशेषिकमते तामाह। संबद्ध इति। संबन्धविशिष्ट इत्यर्थः। समवायपदेन वैशेषिकप्रसिद्धो नित्यः संबन्धः कथितः। कुतो न शक्तस्तत्राह। अनवस्थाभयादिति। वैशेषिकैर्ह्यवयवावयव्यादिसंबन्धः समवाय इत्युच्यते तत्र समवायस्यासंबद्धत्वाच्च तत्कृतावयवादिविशिष्टबुद्धिः स्यात्। न च समवायस्यापि समवायाचासंबद्धत्वमिति वाच्यम्। स्वस्य स्वस्मिंस्तदसंभवेन समवायान्तराभ्युपगमे तस्य तस्यापि समवायान्तरमभ्युपेयमित्यनवस्था स्यादिति चोद्यपरिहाराय स्वरूपसंबन्धाभिप्रायेण संबद्धः समवाय इत्युच्येत। तत्र संबद्धपदं समवायस्वरूपमात्रं लक्षणया वर्तते समवायपदमपि तत्रैवेति कथं नाखण्डार्थता तदभ्युपेयेति भावः। न केवलं समवायान्तराभ्युपगमेऽनवस्था किंतु तेषामभ्युपगमविरोधोऽपि स्यादित्याह। पञ्चानामिति। वचनस्य स्ववचनस्य व्याघातभयादित्यर्थः। अस्य समवायस्यावयवावयविगुणगुणिक्रियाक्रियावज्जातिव्यक्तिविशेषनित्यद्रव्याणां पञ्चयुग्मानामेव समवाय इति हि ते वदन्ति तस्यैवं व्याघातः स्यात् तत्परिहाराय समवाये समवायान्तरं कातरः स्वसिद्धान्तसंरक्षाव्याकुलचित्तो वैशेषिकः कथमङ्गीकुर्यादित्यर्थः ॥ २९० ॥

मू० ॥ शब्दो गकार इति लौकिकमस्ति वाक्यं
विस्पष्टमस्ति च पदद्वयमत्र वाक्ये ॥
प्राभाकरे च समये न गकारमात्रा-
दन्यत्पदद्वयनिगद्यमभीष्टमस्मिन् ॥ २९१ ॥

टी० ॥ प्राभाकरमतेऽप्यखण्डार्थताप्रसिद्धिमाह। शब्दो गकार इति। अस्त्वेवंविधवाक्यस्य लोकप्रसिद्धिस्तस्यापि संसृष्टार्थतैव किं न स्यात् तत्राह। प्राभाकरे चेति। प्राभाकरे समये चास्मिन्वाक्ये पदद्वयनिगद्यं शब्दो गकार इति पदद्वयप्रतिपाद्यमन्यदभीष्टमिति संबन्धः। अस्मिन्पदद्वयात्मक एतद्वाक्ये शब्दो गकार इति वाक्ये हि प्रयुक्तपदद्वयेन प्राभाकरैर्गकारव्यक्तिमात्रमभिधेयमित्यङ्गीकृतमितीदं वाक्यमखण्डार्थमभ्युपेयमिति भावः ॥ २९१ ॥

मू० ॥ शब्दत्वजातिवचनो न हि शब्दशब्दः
श्रोत्रोपलम्भनतया तु निबन्धनेन ॥
वर्णोऽन्त्रवीति न हि जातिरिहाभ्युपेता
साक्षाद्गकारमयमाह गकारशब्दः ॥ २०२ ॥

टी० ॥ ननु द्रव्यं घट इति वाक्यमिव शब्दो गकार इति वाक्यमपि परापरजातिद्वयविशिष्टाभेदं प्रतिपादयिष्यतीति नाखण्डार्थमिति तत्राह । शब्दत्वजातिवचन इति । गत्वजातेरप्युपलक्षणम् । शब्दशब्दः शब्द इति शब्दः एतद्गशब्दस्याप्युपलक्षणम् । शब्दशब्दस्य जातिवचनत्वाभावे व्यक्तिष्वानन्त्यव्यभिचाराभ्यां कथं वृत्तिरित्यत आह । श्रोत्रोपलम्भनतयेति श्रोत्रोपलभ्यत्वेन तटस्थेनोपाधिनेत्यर्थः । निबन्धनेन निमित्तेन । ननूपाध्यपेक्षया जातिर्न्यायमतीति सत्यं किं तु जातेः संस्थानव्यङ्ग्यत्वनियमेनाद्रव्ये शब्दे तदसम्भव इत्याह । न हि जातिरिति । अत एव गत्वमपि न जातिरिति गकारशब्दोऽपि साक्षाद्गकारव्यक्तिमेवाह । सा च व्यक्तिरेका संभवतीति नानन्त्यव्यभिचारदोषोऽपीत्याशयेनाह । साक्षाद्गकारमिति । प्राभाकरैरद्रव्यवृत्तिजात्यनभ्युपगमाच्छ्रोत्रग्राह्यत्वस्य शब्दप्रवृत्तिनिमित्तस्य तच्छब्दादप्रतीतेर्गकारशब्दस्य चैकगकारमात्रनिष्ठत्वादधिकार्थाभावात्तस्याऽखण्डाऽर्थतैव वक्तव्येति भावः ॥ २०२ ॥

मू० ॥ तस्मादखण्डविषये वचने विवादं
प्राभाकराः परिहरन्तु न चेदशक्यम् ॥
निर्वोढुमेतदिह वाक्यमितोऽन्यथा चे-
दस्याऽर्थकल्पनमभीप्सितसिद्धहानिः ॥ २०३ ॥

टी० ॥ प्राभाकरं प्रत्यखण्डाऽर्थप्रसिद्धिसमर्थनमुपसंहरति । तस्मादिति । यस्मादुक्तविधयाऽखण्डाऽर्थता तैरभ्युपेया तस्मादित्यर्थः । परिहरन्तु त्यजन्तु । न चेद्यदि न परिहरेयुः इह तर्हि एतदुदाहृतवाक्यं निर्वोढुमुपपादयितुमशक्यम् । यदि परापरजातिनिबन्धनं पदद्वयसामानाधिकरण्यं तैरभ्युपगम्येत तर्हि तत्सिद्धान्तक्षतिरित्याह । इत इति । उक्तप्रकारा-

दित्यर्थः । अस्य प्रस्तुतवाक्यस्येतोऽन्यथार्थकल्पनमभीप्सितं चेदिष्टहानिरिति संबन्धः ॥ २७३ ॥

मू० प्रातिपदिकान्यनतिरिक्तविषयाणि
प्राह भगवान्प्रथमशब्दितविभक्त्या ॥
पाणिनिरतः सकलतर्कमयज्ञो
वष्टि वचसोरनतिरिक्तविषयत्वम् ॥ २७४ ॥

टी० ॥ अखण्डार्थत्वे प्रागुदाहृतामपि पाणिनिसंमतिमन्ते पुनरप्युदाहरति तस्याऽन्यथासिद्धत्वशङ्कानिरासाय । प्रातिपदिकेति । भगवान्पाणिनिः प्रातिपदिकानि विभक्तिवर्जितवृक्षादिशब्दान् प्रथमशब्दितविभक्त्या प्रथमेत्युक्तया विभक्त्या स्वादिरूपयाऽनतिरिक्तविषयाणि एकार्थविषयाणीति प्राहेति संबन्धः । पाणिनिः खलु प्रातिपदिकाऽर्थमात्रे प्रथमेति तदर्थं प्रथमां विभक्तिं विधत्त इति प्रकृतिप्रत्ययाऽऽत्मकं तद्वाक्यमखण्डार्थम् । न चैवं विभक्तेस्तत्पर्यायत्वं तत्सिद्धानुवादत्वं चेति न तयोर्वाक्यतेति वाच्यम् । तया सहैव प्रातिपदिकस्य प्रयोगनियमेन स्वार्थप्रतिपादकत्वेन च तदुभयाभावात् । यस्मादयं पाणिनिः प्रातिपदिकप्रथमयोरेकार्थत्वमाह । अतोऽयं सकलन्यायाऽभिज्ञोऽन्यत्राऽप्यपर्यायपदयोस्तादृशपदानां चानतिरिक्तविषयत्वं वष्टीच्छतीत्युपसंहरति । अत इति ॥ २७४ ॥

मू० ॥ इयं घटव्यक्तिरितीदृशेषु च
प्रसिद्धमेवैकरसार्थगोचरम् ॥
पदद्वयं लोकवचःसु तेन च
प्रशस्यते नात्र विवादसंग्रहः ॥ २७५ ॥

टी० ॥ किं च लोकेऽपर्यायपदवद्वाक्यप्रयोगस्यैकार्थे दर्शनाचात्र वादिभिर्विवादः कार्य इत्युपसंहरन्नाह । इयं घटव्यक्तिरिति । इयं घटव्यक्तिरित्येवमादिषु लोकवचःसु पदद्वयमेकरसार्थगोचरमेवेति प्रसिद्धं येन तेनाऽत्राऽस्मिन्नर्थे विवादसंग्रहो नैव प्रशस्यते न युज्यते वादिनामिति

शेषः । इयमिति पुरःस्थितवस्तुमात्रं परामृश्य तस्य घटव्यक्त्यभेदमात्रं विवक्षितमिदं वाक्यं प्रतिपादयतीति तद्देकरसार्थमित्यर्थः ॥ २७५ ॥

मू० ॥ न च प्रमाणान्तरयोग्यतायां
प्रयोजकं स्यात्परिनिष्ठितत्वम् ॥
यतः प्रमाणान्तरयोग्यतायां
प्रयोजकं रूपरसादिमत्त्वम् ॥ २७६ ॥

टी० ॥ एवं वेदान्तानामखण्डैकरसे श्रुतिन्यायाभ्यां तात्पर्यं निरूपितम् । इदानीं किं च प्रमान्तरमपेक्ष्य गिरः प्रवृत्तिः सिद्धेषु वस्तुषु जगत्युपलब्धपूर्वेत्यनेन सिद्धवस्तुविषयवाक्यस्य मानान्तरसंवादायत्तार्थवत्त्वनिश्चयतया वेदान्ता यदि सिद्धब्रह्मपराः स्युस्तर्हि मानान्तरसापेक्षाः स्युर्लौकिकसिद्धवाक्यवदिति यदुक्तं तत्र मानान्तरयोग्यार्थत्त्वोपाधेः । न च तदपि सिद्धार्थत्वेन वेदान्तेष्वनुमेयमिति साधनव्यापकतोपाधेरिति वाच्यम् । यतो न यत्परिनिष्ठितं तत्प्रमाणान्तरयोग्यमिति नियमोऽस्ति येन तत्प्रमाणवेदान्ते मानान्तरसापेक्षता स्यादित्याशयेनाह । न च प्रमाणान्तरेति । प्रयोजकं गमकं व्याप्यमिति यावत् । परिनिष्ठितत्वं सिद्धत्वम् । कुत इत्यत आह । यत इति । रसः आदिर्यस्य स्पर्शादेः सः, रूपं च रसादिश्च रूपरसादी, तावस्य स्तः स रूपरसादिमान्, तस्य भावस्तत्त्वमित्यतद्गुणसंविज्ञानो बहुव्रीहिः । रूपादिविशेषो हि द्रव्ये प्रत्यक्षप्रमाणस्य प्रवृत्तौ मूलं व्याप्यादिविशेषश्चानुमानादेरित्यर्थः ॥ २७६ ॥

मू० ॥ ततोऽस्तु रूपादिविहीनरूपे
प्रमान्तराऽगोचरचित्स्वरूपे ॥
वचः प्रमाणान्तरनिस्पृहं स-
त्प्रमाणमचाऽऽत्मनि निर्विवादम् ॥ २७७ ॥

टी० ॥ फलितमाह । तत इति । यतो रूपादिमत्त्वमेव शब्दातिरिक्तप्रमाणप्रवृत्तौ मूलं ततस्तद्रहिते अत एव प्रमाणान्तराऽयोग्येऽस्मिन्

चैतन्यात्मनि सापेक्षत्वाऽनुमानस्योक्तोपाधिदुष्टत्वेन वेदान्तवाक्यं प्रमाणान्तरनिरपेक्षं सन्निःसंदिग्धं प्रमाणं भवतीत्यर्थः ॥ २७७ ॥

मू० ॥ लोकप्रसिद्धपदगोचरतानिमित्त-
मन्यप्रमाणविषयत्वमिह प्रसिद्धम् ॥
लोकप्रसिद्धपदगोचरता न चास्मिन्
ब्रह्मात्मनीति च तदत्र निवारणीयम् ॥ २७८ ॥

टी० ॥ किं च । लोके मानान्तरस्याऽन्यथासिद्धत्वान्न तत्सिद्धाऽर्थशब्दप्रामाण्यनिमित्तमित्याह । लोकप्रसिद्धेति । लौकिकमानसिद्धा या पदगोचरता तन्निमित्तं तद्व्यापकमित्यर्थः । ततः किं तत्राह । लोकप्रसिद्धपदेति । अस्मिन्निर्विशेषे वेदान्तलक्ष्ये । फलितमाह । इति चेति । तदन्यप्रमाणविषयत्वं सर्वपदलक्ष्ये ब्रह्मणि संगतिग्रहस्यानपेक्षत्वाच्च तन्निमित्तमानान्तरापेक्षा तत्र शब्दस्येति भावः ॥ २७८ ॥

मू० ॥ लोकप्रयुक्त*पदगोचरताऽस्ति कार्ये
तेनाऽस्तु कार्यपरवाक्यमशेषतस्ते ॥
मानान्तरेषु परतन्त्रतयाऽप्रमाणं
स्वार्थे न दूषणमिदं श्रुतिमस्तकेषु ॥ २७९ ॥

टी० ॥ एवं स्वपक्षे शब्दस्य लक्ष्ये ब्रह्मणि मानान्तरनिरपेक्षं प्रामाण्यमुपपाद्य येषां वादिनां कार्यमेव वेदार्थस्तच्च लिङाद्यभिधेयमिति मतं तेषामिदं सापेक्षत्वदूषणं दुष्परिहरमित्याशयेनाह । लोकप्रयुक्तेति । मानान्तरसिद्ध एव संगतिग्रहो वक्तव्य इति कार्ये लोकप्रसिद्धपदगोचरताऽस्तीत्युक्तम् । फलितमाह । तेनेति । लोकप्रयुक्तपदगोचरत्वेन ते सापेक्षत्वप्रसंगेन सिद्धे वेदाप्रामाण्यमभ्युपेत्य कार्ये तत्प्रामाण्याभ्युपगन्तुस्तवाशेषतः अशेषेषु मानान्तरेषु परतन्त्रतया मानान्तरापेक्षतया स्वार्थेऽप्रमाणमस्तु स्यादिति संबन्धः । अप्रमाणमिति पदच्छेदः स्वपक्षे चोक्तविधया नेदं दूषण-

* प्रसिद्ध । पा० २ ॥

मस्तीत्याह । न दूषणमिति । मानान्तरायत्तं स्वार्थे प्रामाण्यमित्येवंरूपमिदं दूषणं श्रुतिमस्तकेषु वेदशिरस्सु न ब्रह्मपदस्य लिङादिपदवल्लौकिकपदत्वाभावादित्यर्थः ॥ २७९ ॥

मू ॥ न च क्रियाकारितसंहतीनि
पदानि लोके नियमेन वक्तुम् ॥
समीहते पक्कमतिः पदानां
क्रियां विनाऽप्यन्वयदर्शनेन ॥ २८० ॥

टी० ॥ यत्पुनरुक्तं किं च क्रियापदमपेत्य पदानि वाक्यभावेन सम्यगिह संगतिमाप्नुवन्तीत्यादिना वेदान्तेषु क्रियापदाभावाच्च तन्निमित्तः पदानां परस्परसमन्वय इति कुतस्ततो वाक्यार्थप्रमितिस्त*त्राऽऽह । न च क्रियाकारितेति । क्रिया तिङन्तं पदं तन्निमित्ता संहतिः समन्वयो येषां पदानां तानि समीहते इच्छति वक्तुं न समीहत इति संबन्धः । पक्कमतिः लौकिकन्यायाभिज्ञः । कुत इत्यत आह । पदानामिति ॥ २८० ॥

मू० ॥ महीभुजोऽयं पुरुषो मनस्वी
वनस्पतेस्तत्फलमित्यपीह ॥
क्रियां विनाऽप्यन्वयवन्ति लोके
पदानि दृष्टानि वहूनि वक्तुः ॥ २८१ ॥

टी० ॥ तदेव दर्शनमुदाहरति । महीभुजोऽयमिति । कस्याऽयं पुरुषः कस्येदं फलमिति तत्संबन्धिविशेषमात्रजिज्ञासायामयं मनस्वी पुरुषो महीभुज इत्यादिना संबन्धिविशेषमात्रनिष्ठोऽयं प्रयोग इति क्रियापदापेक्षाभावाच्च तन्निमित्तस्तत्पदसमन्वयः, लोके वक्तुः पदानि वक्त्रा प्रयुक्तानि बहूनि पदानीति संबन्धः । आकाङ्क्षायोग्यतासंनिधिमत्त्वं हि पदानां परस्परान्वये निमित्तं न क्रियापदं न वा तद्विशेषः । तस्याप्याकाङ्क्षादि-

* तिरिति त । पा० २ ।

युक्तस्यैवाऽन्वयित्वेन लाघवेन तावन्मात्रस्यैव तत्प्रयोजकत्वादतो वेदान्तपदानां परस्परान्वये न किंचिद्बाधकमिति भावः ॥ २८१ ॥

मू० ॥ क्रियापदं वेदशिरःस्वपीष्यते
विवक्षितार्थानुगुणं तु तन्मतम् ॥
विवक्षितार्थप्रतिपत्तिघाति तु
क्रियापदं स्वीकृतमप्यनर्थकम् ॥ २८२ ॥

टी ॥ एवं तात्त्विकं परिहारमुक्त्वा तदभ्युपगम्याप्याह । क्रियापदमिति । न चैवं वेदान्तानामपि क्रियानिष्ठत्वप्रसङ्ग इत्याह । विवक्षितार्थेति । परं तु तत्क्रियापदं वेदान्तेन प्रतिपिपादयिषितोऽर्थोऽखण्डैकरसं ब्रह्म तदनुगुणं तत्र वेदान्तप्रामाण्याविरोधीत्यर्थः । अनुगुणपदव्यावर्त्यमाह । विवक्षितार्थप्रतिपत्तीति । उपासीतेत्यादि क्रियापदं स्वीकृतं पठितमपि तत्रानर्थकमित्यर्थः ॥ २८२ ॥ (शेषमग्रे)

काशीस्थराजकीय प्रधानपाठालयाध्यापकेन द्विवेदहरिनाथशर्म्मणा

॥ श्रीः ॥

## ॥ योगवार्त्तिकम् ॥

*(Continued from page 275. Vol. V.)*

परमेश्वरस्यापरं विशेषं प्रतिपादयति सूत्रकारः ॥

**स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥**

पूर्वेषां पूर्वपूर्वसर्गोत्पन्नानां ब्रह्मविष्णुमहेश्वरादीनामपि गुरुः पितान्तर्यामी विद्यया ज्ञानचक्षुःप्रदश्च । कुतः । कालेनानवच्छेदात् । ब्रह्मादयोहि द्विपरार्द्धादिकालेनावच्छिन्नाः कालानवच्छिन्नं गुरुं विना न संभवन्तीत्यर्थः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादिश्रुतिभ्य इति भावः । न च प्रकृतिस्वातन्त्र्यक्षतिः । निमित्तमप्रयोजकं प्रकृतीनामित्यागामिसूत्रात् निमित्तकारणस्येश्वरादेस्तत्स्वातन्त्र्याविघातकत्वात् । एतदेव व्याचष्टे । पूर्वे हीति । अवच्छेदशब्दार्थेनावच्छेदप्रयो-

जनेन कालेनापावर्तते न संबध्यते । तात्पर्यार्थमाह । यथास्येति । अस्य वर्त्तमानस्य सर्गस्यादौ पूर्वं प्रकर्षगत्या ज्ञानोत्कर्षप्राप्त्या स्वतःसिद्ध इत्यर्थः । अत्रेश्वरस्य सर्वजीवपितृत्ववचनात् श्रुत्युक्ताग्निविस्फुलिङ्गदृष्टान्तानुसारेण च जीवब्रह्मणोरंशांशिभावस्तयोरभेदश्च पितापुत्रवदेवेति भावः । तथा च स्मृतिः ।

यथा दीपसहस्राणि दीप एकः प्रसूयते ।
तथा जीवसहस्राणि स एवैकः प्रसूयते ॥
सलिले करकाश्मेव दीपोऽग्नाविव तन्मयः ।
जीवो मोहात् पृथग्बुद्धो युक्तो ब्रह्मणि लीयते ॥

इत्यादिः । अयं चाभेदो नाखण्डता अपि त्वविभागएव, अविभागो वचनादिति वेदान्तसूत्रेण जीवानां ब्रह्मण्यविभागलक्षणाभेदस्यैव वचनात् । अविभागश्च दुग्धं जलमभूदित्यादिप्रत्ययनियामकः स्वरूपसंबन्ध आधारतादिवत्, किं वा लक्षणानन्यत्वमिति । अनेन पितृत्वान्तर्यामित्वरूपेण गुरुत्वेन जीवानामप्यात्मेश्वर इति वेदान्तमहावाक्यार्थोपि सूचितः । यो हि यस्यांशो अधिष्ठाता वा भवति स तस्यात्मेति दृष्टं, यथा सूर्यश्चक्षुषः यथा वा जीवो देहस्येति दिक् । ईश्वरशब्दार्थो विस्तरेण व्याख्यात इदानीं तत्प्रणिधानं व्याख्यातुमादौ प्रणिधानाङ्गं मन्त्रं दर्शयति ।

तस्य वाचकः प्रणवः ॥ २७ ॥

तस्येश्वरस्य प्रणवो नामेत्यर्थः ।

अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योंकारः स्मृतो नाम तेनाहूतः प्रसीदति ॥

इति योगियाज्ञवल्क्यादिभ्यः । अदृष्टविग्रहोऽद्भुतशरीरो देवः परमात्मा भावग्राह्यो भक्तिमात्रग्राह्यो मनोमयो मनस्तुल्यकारणोपाधिशबलोऽयःशबलाग्निवदित्यादिरर्थः । कर्त्तव्यविचारोपयोगिनमर्थं पूरयति । वाच्य ईश्वरइति । नित्य एव प्रणवेन सहेश्वरस्य वाच्यवाचकभाव इति ।

श्रद्धातिशयोत्पादनाय संशयपूर्वकमवधारयति । किमस्येति । ईश्वरप्रणवयोर्वाच्यवाचकता शक्तिः किमस्येश्वरस्य संकेतेनाहार्यान्योन्याध्यासरूपेण कृता आगन्तुकी यथा पिण्डविशेषे देवदत्तादिनामवाच्यता पितृसंकेतकृता तद्वत् । अथ वा प्रदीपस्य प्रकाशवत्स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः । विमृश्य सिद्धान्तमाह । स्थित इति । अर्थसंबन्धमेवाभिनयति प्रकाशयतीत्यर्थः । स च शक्त्याख्यसंबन्ध आधाराधेयवत्स्वरूपसंबन्धो ऽतिरिक्तपदार्थ एव वास्तु घटादिनाम्नामप्येवं बोध्यं देवदत्तादिनाम्नां तु नैवं यतः पुरुषसंकेतभेदेनार्थभेदा भवन्तीति । संकेतेनेति । अयमस्य पितेत्याद्येवंरूपेणेत्यन्वयः । ननु शक्तिनित्यत्वेपि कदा चित्संकेतभेदाद्देवदत्तादिशब्दवदर्थभेदोऽपि प्रणवस्य स्यादित्याशङ्कायामाह । सर्गान्तरेष्वपीति । अयं संकेतो लौकिको न भवति अपि तु सर्वज्ञश्चेतनाशक्तिं पूर्वसिद्धामनुसृत्यैव संकेतं कुर्वन्तीत्याशयः । संबन्धनित्यत्वे संप्रतिपत्त्याख्यकार्यनित्यत्वं प्रमाणयति । सम्प्रतिपत्तीति । देवदत्तादिशब्दवद्वाच्यवाचकभावस्यानित्यत्वे कदा चित्संकेतवैपरीत्येन व्यवहारवैपरीत्यमपि स्यादित्याशयः । तथा च सति सर्वत्र शब्दार्थे नाश्वासः स्यादित्यागमिनः प्रतिजानते अवधारयन्तीति समयवाक्यार्थेनान्वयः । प्रणिधानाङ्गमन्त्रं प्रदर्श्य साङ्गप्रणिधानस्य स्वरूपं सूत्रकारो वक्ष्यति तत्सूत्रं पूरयित्वोत्थापयति । विज्ञानेति । सूत्रेण सहान्वयः ॥

## तज्जपस्तदर्थभावनम् ॥ २८ ॥

सूत्रार्थं व्याचष्टे । प्रणवस्येति । प्रणवजपेन सह ब्रह्मध्यानं प्रणिधानं तच्च वाच्यवाचकभावं ज्ञात्वा कर्त्तव्यमिति समुदायार्थः । 'प्रणवेन परं ब्रह्म ध्यायीत नियतो यति'रिति स्मरणादिति । प्रणवार्थश्चावान्तरभेदैः श्रुत्यादिषु बहुधोक्तः संक्षेपात्तु गारुडोक्तोऽर्थोऽत्र कथ्यते । यथा गारुडे

> व्यक्ताव्यक्ते च पुरुषस्तिस्रो मात्राः प्रकीर्त्तिताः ।
> अर्धमात्रा परं ब्रह्म ज्ञेयमध्यात्मचिन्तकैः ॥

इति । प्रणवार्थचिन्तनं च मुख्यतो द्विविधं, तत्रैकमंशांशिकार्यकारणशक्तिशक्तिमदाद्यभेदेन तप्तायःपिण्डवदविभागलक्षणैकीभावादहं ब्रह्म

सर्वं खलु ब्रह्मेत्यादिरूपं भवति तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्म चात्मनोमित्येकीकृत्येत्यादि श्रुतेः । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यादिश्रुतेश्च ।

एकः समस्तं यदिहास्ति किं चित्तदच्युतो नास्ति परं ततोन्यत् ।
सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

इत्यादिस्मृतेश्च । अपरं प्रकृतितत्कार्यपुरुषेभ्यो विवेकेन केवले ब्रह्मचिन्मात्रे आत्मत्वचिन्तनम् । ओमित्येवं ध्यायथ आत्मनं स्वस्ति वः पारायतमसः परस्मात् । अथात आदेशो नेतिनेति नह्येतस्मादिति नेत्यन्यत्परमस्ति तमेवैकं जानथ आत्मानं आत्मेत्येवोपासीतेति श्रुतेः ॥

प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते ॥
यः सर्वभूतचित्तज्ञो यश्च सर्वहृदि स्थितः ।
यश्च सर्वान्तरे * ज्ञेयः सोहमस्मीति चिन्तयेत् ॥

इति गारुडादिभ्यश्च । तथा 'आत्मेति तूपयन्ति ग्राहयन्ति चे'ति ब्रह्ममीमांसासूत्राच्च । अत्र गारुडवाक्ये पुरुषस्य ब्रह्मणि न्यासो लय एव न त्वभेदः ॥

विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥

इत्यादिवाक्येषु जीवविलापनेन ब्रह्मात्मचिन्तनस्य स्मरणात् प्रकृतिस्थापनसाहचर्याच्च । अम्बरदृष्टान्तश्च नाखण्डत्वे ॥

यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ।
तथात्मा साम्यमभ्येति योगिनः परमात्मना ॥

इत्यादिवाक्योक्तस्याग्निवायुजलादिबहुलदृष्टान्तस्य साम्यस्य च विरोधात् न्यायानुग्रहेणाग्न्यालयादिदृष्टन्तानामेव बलवत्त्वाच्च । किं तु

* अंशांशिभावस्याभिमतत्वेनात्र सर्वारणिरिति पाठः साधुरिति भाति । रा० शा० ॥

एकरूपस्यैौपाधिकमिथ्याविभागनिवृत्तिमात्रे इति, विलापनेन च प्रकृत्यादिवज्जीवानामनात्मत्वमेव लभ्यते । तदुक्तं मात्स्ये

तत्त्वैः संपादितं भुङ्क्ते पुरुषः पञ्चविंशकः ।
ईश्वरेच्छावशात्सोऽपि जडात्मा कथ्यते बुधैः ॥

इति । मोक्षधर्मे च

ते चैनं नाभिनन्दन्ति पञ्चविंशकमच्युत ।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः ॥

इति । एतेन प्रकृतिपुरुषौ विलाप्य यच्छिष्टं ब्रह्म तस्मिन्नेवाहंभावे वचनाच्च न जीवे मुख्योऽहंशब्द इति, ध्यानयोश्चिन्तनयोर्मध्ये प्रथमचिन्तनमुपासना द्वितीयं तत्त्वज्ञानमिति । ब्रह्मात्मताज्ञानं चातिदुर्लभं, मोक्षधर्मे चोक्तं

भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरामयाः ।
ऐकात्म्यं नाम कश्चिद्धि कदा चित्प्रतिपद्यते ॥

इति दिक् । ईश्वरप्रणिधानादिति पञ्चम्युक्तमसंप्रज्ञातपर्यन्तयोगहेतुत्वं तत्त्वप्रणिधानस्य येन द्वारेण तदाह । तदस्येति । प्रणिधानादिभिश्चैकाग्र्यो भवति ततश्च परमात्मसाक्षात्कारः ततः परवैराग्यादसंप्रज्ञातयोग इति शेषः । स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशतइति वक्ष्यमाणवाक्यस्वरसात् । उक्तार्थे स्वपितुर्वाक्यं विष्णुपुराणस्थं प्रमाणयति । तथा चोक्तमिति । योगजपयोरेकदा न संभव इति योगस्याद्यन्तयोर्व्युत्थानकाले जप उक्तः । ननु परमात्मसाक्षात्कारात् परवैराग्यं भवतीति यदुक्तं तन्नोपपद्यते आत्मसाक्षात्कारेणैवाभिमानानिवृत्त्या परवैराग्यसंभवादिति । अत्रोच्यते । ब्रह्मज्ञानं ताटस्थ्येनात्र न विवक्षितं किं त्वात्मत्वेनैव, तथा च जीवात्मतत्त्वज्ञानात् बुद्धिपर्यन्तमभिमाननिवृत्तिवत् परमात्मज्ञानात् जीवपर्यन्तेष्वभिमानो निवर्त्तते, पञ्चविंशतितत्त्वानि विलाप्यैव सोऽहमित्यात्मतयाऽधिष्ठानब्रह्मसाक्षात्कारादिति । नन्वेवं जीवस्याप्यनात्मत्वं प्रसक्तमिति चेत्, न । व्यावहारिकपारमार्थिकभेदेना-

त्मद्वयाभ्युपगमात् । आत्मत्वं हि संघाताध्यक्षत्वं क्षेत्रज्ञत्वं च । तच्चेश्वरस्यैवास्ति ईश्वरत्ववत्, जीवात्मनां परतन्त्रत्वात् धर्माधर्माद्यज्ञातृत्वाच्च । जीवानां च चितिशक्तिमत्तामात्रेणैवात्मत्वं गौणं बुद्ध्याद्यपेक्षिकं च यथा हिरण्यगर्भादीनामीश्वरत्वं तद्वज्जीवानामात्मत्वं बन्धमोक्षभोगादिभागितया सिद्धं लोकव्यवहारगोचरतया च व्यावहारिकमेव । एवमेवाहंत्वंशब्दोपि परमात्मन्येव मुख्यो न तु जीवे, प्रयोगादिषु स्वातन्त्र्याभावेन प्रयोक्तात्मत्वादिरूपस्याहमादिशब्दप्रवृत्तिनिमित्तस्य जीवेष्वभावादिति । तथा चोक्तम् ।

त्वामात्मानं परं मत्वा परमात्मानमेव च ।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता ॥

इति । परमनात्मानम् । यद्यपि जीवो मुख्यात्मा न भवति तथापि तज्ज्ञानादपि धर्माधर्मरागादिनिवृत्त्या मोक्षस्तु भवत्येवेति । एतेन व्यवहारपरमार्थभेदादैकात्म्यनानात्मतावादौ श्रुतिस्मृतिदर्शनेष्वविरुद्धावित्यपि सिद्धम् । अधिकं तु ब्रह्ममीमांसाभाष्ये विज्ञानामृते द्रष्टव्यमिति दिक् । तदिदमीश्वरप्रणिधानाद्वेत्यादिसूत्रगणोक्तमर्थजातं लिङ्गपुराणे स्पष्टं प्रदर्शितम् । यथा ।

अविद्ययेशस्य योगो नातीतो नाप्यनागतः ।
नाप्यस्त्यस्मितया चैवं रागेणापि त्रिकालता ॥
कालेषु त्रिषु संबन्धस्तस्य द्वेषेण नो भवेत् ।
तथैवाभिनिवेशेन संबन्धो न कदा चन ॥
कुशलाकुशलैश्चैव संबन्धो नैव कर्म्मभिः ।
भवेत् कालत्रये शंभोरविद्यामतिवर्जनात् ॥
विपाकैः कर्मणां तस्य न भवेदेव संयमः ।
कालेषु त्रिषु शर्वस्य शिवस्य शिवदायिनः ॥
सुखदुःखैर्न संस्पृश्यः कालत्रितयवर्तिभिः ।
तथैव भोगसंस्कारैर्भगवानन्तकान्तकः ॥
पुंविशेषः परो देवो भगवान् परमेश्वरः ।
चेतनाचेतनोन्मुक्तः प्रपञ्चादखिलात्परः ॥

लोके सातिशयत्वेन ज्ञानैश्वर्ये विलोकिते ।
शिवे नातिशयित्वेन * स्थिते आहुर्मनीषिणः ॥
प्रतिसर्गं वस्तुभानं ब्रह्मणोशास्त्रविस्तरम् ।
उपदेशात्स एष्टव्यः कालावच्छेदवर्त्तिनाम् ॥
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।
सर्वेषामपि सर्वेशः कालावच्छेदवर्जितः ॥
अनादिरेव संबन्धो विज्ञानोत्कर्षयोः परे ।
स्थितयोरीदृशः शर्वः परिशुद्धः स्वभावतः ॥
आत्मप्रयोजनाभावे परानुग्रह एव हि ।
प्रयोजनं समस्तानां क्रियाणां परमेष्ठिनः ॥
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ।
शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः ॥
शंभोः प्रणववाच्यस्य भावना तज्जपादपि ।
आशु सिद्धिः पराप्राप्या भवत्येव न संशयः ॥
एकं ब्रह्ममयं ध्यायेत्सर्वं विप्र चराचरम् ।
चराचरविभागं च त्यजेदहमिति स्मरन् ॥
सप्ताण्डावरणान्याहुरण्डस्यात्माम्बुजासनः ।
कोटिकोट्ययुतानीशे चाण्डानि कथितानि तु ॥
तत्रतत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः ।
सृष्टाः प्रधानेन तथा प्राप्य शंभोस्तु सन्निधिम् ॥
असंख्याताश्च रुद्राख्या असंख्याताः पितामहाः ।
हरयश्चाप्यसंख्याता एक एव महेश्वरः ॥
ब्रह्मेन्द्रविष्णुरुद्राद्यैरपि देवैरगोचरम् ।
आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ॥
शिवतत्त्वमिति ख्यातं शिवादपि परं पदम् ।

* अत्राऽनतिशयित्वेनेति पाठः कल्प्यः । नातिशयित्वेनेति वेतदर्थकं बोध्यमिति । रा० शा० ॥

इति । तदेवं जीवप्रज्ञायाइवेश्वरप्रणिधानादपि प्रज्ञाद्वारा योगस्तत्फलं मोक्षश्च भववीत्युक्तमिदानीं तयोर्मध्ये ईश्वरप्रणिधानस्य मुख्यकल्पत्वं प्रतिपादयितुं तत्र द्वाराधिक्यं सूत्रेण प्रतिपादयति । किं चास्येति । अन्यच्चास्य प्रणिधानिनो भवतीत्यर्थः ॥

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

तत ईश्वरप्रणिधानात्तत्साक्षात्कारद्वारा तद्दृष्टान्तेन जीवतत्त्वमप्यनायासेन पूर्णतया साक्षात्क्रियतइति प्रथमदलार्थः । अपिशब्द आसवतमसमाध्यपेक्षया । यद्यपि प्रति प्रतिवस्तु अञ्चति अनुगच्छतीति व्युत्पत्त्याऽसंकुचितसर्वानुगतः परमात्मैव मुख्यः प्रत्यक्शब्दार्थः । 'प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ती'त्यादिष्वपीश्वरे प्रत्यक्प्रयोगदर्शनाच्च । तथापीश्वरादिशब्दवदेव प्रत्यक्शब्दोपि जीवे गौणो विभुत्वात् । अत एव प्रकृतिव्यावर्त्तनाय चेतनेत्युक्तम् । यदि च प्रत्यक्शब्दः पश्चिमवाची तथापि सर्वप्रलयावधिभूते ब्रह्मण्येव मुख्यो ऽन्यत्र गौण इति । अन्तरायाभाव एकाग्रतासामान्यस्यैव फलमिति वक्ष्यते 'तत्प्रतिषेधार्थमेकतत्त्वाभ्यास'इति सूत्रेणेत्यतो विशिष्येश्वरप्रणिधानस्यान्तरायाभावफलकत्ववचनमनुवादकतया व्याचष्टे । एतावदिति । अनुवादस्य च फलमाधिक्येन विघ्ननिवर्त्तकत्वलाभः । 'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवती'ति श्रुत्या ब्रह्मात्मतादर्शिन इच्छाविघाते देवादीनामप्यसामर्थ्यप्रतिपादनादिति । अत एवोक्तं नारदीयादिष्वपि ।

तस्मान्मुमुक्षोः सुसुखो मार्गः श्रीविष्णुसंश्रयः ।
चित्तेन चिन्तयानेन वञ्च्यते ध्रुवमन्यथा ॥
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि

इत्यादि । स्वरूपदर्शनमिति । अस्य प्रतीचो जीवस्य यत्तात्त्विकं रूपं तस्य साक्षात्कारोपि भवतीत्यर्थः । अन्यप्रणिधानेनान्यसाक्षात्कारेऽदृष्टद्वारवत्, दृष्टद्वारमप्यस्तीति प्रतिपादयन्नेव स्वरूपदर्शनं विवृणोति । यथैवेति । बुद्धेः प्रतिसंवेदी बुद्धिवृत्तिप्रतिबिम्बोद्ग्राही तत्साक्षीति यावत्

इदं च जीवब्रह्मणोरत्यन्ताभेदनिराकरणाय वैधर्म्यमुक्तं, यथैवेश्वरः शुद्धादिगुणकस्तथायमपि यो बुद्धेः साक्षी पुरुष इत्येवमधिगच्छति अवधारयति पुरुषत्वाविशेषादित्यर्थः । पुरुषश्चेतनः शुद्धः पापपुण्यविवर्जितः प्रसन्नो निर्दुःखः केवलश्चिन्मात्रो ऽनुपसर्गो जात्यायुर्भोगरहित इति । तदेतदुक्तं नारदीये ।

मायाप्रवर्त्तके विष्णौ दृढा भक्तिः कृता नृणाम् ।
सुखेन प्रकृतेर्भिन्नं स्वं दर्शयति दीपवद् ॥

इति । यद्यपि अंशिस्वरूपावधारणेनांशस्वरूपावधारणवदंशस्वरूपावधारणेनाप्यंशिस्वरूपावधारणं भवति अंशांशिनोरेकस्वरूपत्वस्यौत्सर्गिकत्वात्, प्रत्युत ईश्वरस्यावाङ्मनसगोचरतया स्वतत्त्वसाक्षात्कारादेव तदनुसारेणेश्वरे विवेकः संभवति नान्यथा । तथा च श्रुतिरपि । 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्ये'दित्यादिः । तथापि जीवस्य पूर्णत्वनित्यत्वाद्यंश ईश्वरानुसारेणैव सुखेन ज्ञातुं शक्यत इत्याशयः । अत एव 'तत्त्वमेव त्वमेव तत्' इत्यादिश्रुतयः परस्परमेव वैधर्म्यलक्षणाभेदं प्रतिपादयन्ति । अन्योन्यदृष्टान्तेनान्योन्यधर्माणामन्योन्यस्मिन् अवधारणायान्तरायस्वरूपप्रतिपादकं सूत्रमवतारयति । अथेति । व्याध्यादेरन्तरायत्वोपपादनाय सूत्रे चित्तविक्षेपा इति वक्ष्यति, तस्य व्याख्यानार्थं भाष्ये वक्रोक्तिः । विक्षेपाः विक्षेपकाः । सामान्येन दत्तोत्तरं विशेषसंख्याभ्यां पुनः पृच्छति । के पुनरिति ।

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्ते ऽन्तरायाः ॥ ३० ॥**

चित्तविक्षेपकतयैतानि ते पूर्वसूत्रोक्ता अन्तराया इत्यर्थः । व्याचष्टे । नवेति । अन्वयव्यतिरेकाभ्यां चित्ते विक्षेपकत्वमेषां साधयति । सहैतइति । सूक्ष्मकालानाकलनेन सहेत्युक्तम् । एतेषामव्यवधानेनैव व्याध्यादिगोचरा वा तन्निवृत्त्युपायगोचरा वा चित्तस्य वृत्तयो भवन्ति योगभ्रं-

शिक्षा इत्यर्थः । व्याध्यादीन्येव क्रमेण व्याचष्टे । व्याधिरिति । शरीरधारकत्वात् धातूनां वातकफपित्तानां रसानामाहारपरिणामानां करणानां चक्षुरादिमनआदीनां च वैषम्यं विसदृशभावो व्याधिः । अकर्मण्यता योगानुष्ठानाक्षमता । आमवातादिना देहस्याकर्मण्यत्वेऽपि चित्तस्य योगाविरोधाच्चित्तस्येत्युक्तम् । संशयाकारमाह । स्यादिति । इदं गुरुशास्त्रोक्तं ज्ञानतत्साधनादि । अभावनमननुसंधानम् । कायगुरुत्वं कफादिना चित्तगुरुत्वं तमसा, ताभ्यां हेतुभ्यामप्रवृत्तिः समाधिसाधनाननुष्ठानम् । संप्रयोगात्मा सन्निकर्षजन्यो गर्धो ऽभिलाषः । विपरीतं ज्ञानं गुर्वादिप्रमितार्थविपरीतनिश्चयः । समाधिभूमेरिति । वक्ष्यमाणानां मधुमत्यादिभूमीनामेकतमस्या अपि साधनानुष्ठाने ऽप्यलाभ इत्यर्थः । अप्रतिष्ठा लाभेऽपि भ्रंशः । ननु लाभोत्तरं भ्रंशे का क्षतिरित्याशङ्कायामाह । समाधिप्रतिलम्भे हीति । प्रतिलम्भो निर्व्याप्तिर्ध्येयसाक्षात्कार इति यावत् । अयं भावः । साक्षात्कारपर्यन्तमेव चित्तस्य तत्तद्भूम्यवस्थानमपेक्षितमतो ऽकृतसाक्षात्कारस्य योगारूढस्यापि भ्रंशो ऽनवस्थितत्वमेव भवतीति । 'आरूढयोगो ऽपि निपात्यते ऽधः सङ्गेन योगी किमुताल्पसिद्धि' रित्यादिस्मृतिश्चात्र प्रमाणमिति । एतेषां तान्त्रिकान् संज्ञाभेदानाह । एतइति । न केवलमेते व्याध्यादयो योगान्तराया अपि तु दुःखादिरूपेष्वन्तरायान्तरेष्वपि हेतवो भवन्तीत्याह ॥

## दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥३१॥

दुःखादीन्यत्र क्रमेण व्याचष्टे । दुःखमिति । आत्मानं स्वसंघातमधिकृत्य वर्त्तत इत्याध्यात्मिकं, तच्च द्विविधं शारीरं मानसं च । शारीरं व्याध्यादिजनितं मानसं कामादिजम् । भूतानि प्राणिनो व्याघ्रादीन् लक्षीकृत्य जायत इत्याधिभौतिकं व्याघ्राद्युत्थम् । देवानधीकृत्य जायत इत्याधिदैविकं शीतोष्णाद्युत्थमित्यर्थः । यद्यपि सर्वमेव त्रिपतोद्भवं दुःखं मानसं तथापि प्राधान्येन मनोविकारजन्यत्वाजन्यत्वाभ्यां मानसत्वामानसत्वविभागः विषयगतदुःखेषु चित्तविक्षेपाणामहेतुत्वात् दुःखसामान्यस्य

त्रिधा विभागो न घटते घटपटादिदुःखानामसंग्रहात्, एवमन्यत्रापि । दुःखसामान्यलक्षणमाह । येनेति । क्षोभश्चाऽस्वल्यम् । यदङ्गानीति । अङ्गकम्पोऽङ्गमेजयत्वमिति । प्राणेति । पुरुषप्रयत्नं विना स्वयमेव प्राणो यद्वाह्यं वायुमतिशयेनाचामति पिबति शरीरान्तः प्रवेशयति स श्वासनामा विकार इत्यर्थः । कोष्ठ्यमुदरस्थं वायुं निःसारयति बहिः करोति । शेषं पूर्ववत् । सूत्रवाक्यार्थं व्याचष्टे । एतदिति । विक्षेपसहभुवो व्याध्यादिविक्षेपोद्भवाः । तत्र हेतुमाह । विक्षिप्तेति । विक्षेपानन्तरमेव जायन्ते विक्षेपनिवृत्तौ निवर्तन्तइत्यर्थः । नन्वेतेऽन्तरायाः सकार्याः किमीश्वरप्रणिधानमात्रनिरस्या अथ वा अन्योपायेनापि निरसितुं शक्या इत्याकाङ्क्षायामुत्तरं प्रयच्छति सूत्रान्तरावतारणाय । अथैतइति । अथ विक्षेपोऽन्त्यनन्तरमेते विक्षेपा अभ्यासवैराग्याभ्यामित्यादिसूत्रोक्ताभ्यां सामान्याभ्यामेवाभ्यासवैराग्याभ्यां निरस्या न त्वीश्वरप्रणिधानादेवेति नियम इत्यर्थः । एतत्प्रतिपादकतयोत्तरसूत्रमवतारयति । तत्रेति । तयोरभ्यासवैराग्ययोर्मध्ये ऽभ्यासविषयं जीवेश्वरादिसाधारणं पिण्डीकृत्योपसंहरन् इदं मयोक्तं वक्ष्यमाणसूत्रेणाहेत्यर्थः । यदि हीश्वरप्रणिधानमेव केवलमन्तरायाभावहेतुरिति वक्ष्यमाणसूत्रार्थः स्यात्तदा एकतत्त्वाभ्यास इति सामान्योपसंहारो न युज्येत निस्संदेहार्थमीश्वराभ्यास इत्येव वक्तुं युक्तत्वादिति भावः ॥

## तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

एकं स्थूलादि किं चित् । यत्तु एकतत्त्वशब्देनात्र परमेश्वर एवोक्त इति तन्न । बाधकं विना सामान्यशब्दस्य विशेषपरत्वानौचित्यात् । पूर्वसूत्रप्राप्तत्वेन पौनरुक्त्यापत्तेश्च । सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तमित्यागामिभाष्यानुपपत्तेश्चेति । उक्तयोर्विक्षेपैकाग्रतयोर्वक्ष्यमाणपरिकर्मणश्चोपपत्तये चित्तस्य स्थिरतां साधयिष्यन् चित्तस्य क्षणिकत्वादिकं दूषयति । यस्य त्विति । यस्य तु वैनाशिकस्य मते चित्तं प्रत्यर्थनियतमर्थादर्थान्तरं न गच्छति तथा प्रत्ययमात्रं निराधारवृत्तिमात्रं तथा क्षणिकं

च भवति तस्य मते सर्वमेव चित्तमेकाग्रमतो विक्षिप्तचित्तानुपपत्तिरि-त्यर्थः । तदनुपपत्तौ च तेषां स्वशिष्येभ्यः स्वशास्त्रेषु समाध्युपदेशो विफल एवेति भावः । एकस्य चित्तस्य क्रमेण नानार्थविषयकत्वस्वीकारे तु नायं दोष इत्याह । यदि पुनरिति । ततः किमित्यत आह । अतो नेति । यो ऽपि वैनाशिकविशेष उक्तदोषपरिहाराय मन्यते सदृशप्रत्यय-प्रवाहरूपतैव चित्तस्यैकाग्रता प्रवाहमध्ये विसदृशत्वं च विक्षेप इति तस्य मतं योपीत्यादिनानूद्य विकल्प्य दूषयति । तस्येति । मतइति शेषः । क्षणिकत्वादिति । अत आश्रयाभावेनैकाग्रतानुपपत्तिरिति शेषः । नन्वती-तानागतवर्त्तमानासु सदृशप्रत्ययव्यक्तिषु त्रित्वादिवद्व्यासज्यवृत्तिरेकाग्रता भवत्विति चेन्न । अन्योन्यासमानकालीनेषु व्यासज्यवृत्तित्वासंभवात् । क्षणिकवादिनां सामान्यधर्माभावेन सादृश्यस्य दुर्वचत्वाच्चेति । प्रवाहांश-स्य प्रत्येकव्यक्तेरित्यर्थः । दूषयति । स सर्व इति । स सर्वः प्रवाहांशः सदृशप्रत्ययप्रवाहान्तःपाती वा विसदृशप्रत्ययप्रवाहान्तःपाती वा भवतु उभयथैव एकाग्रः चित्तस्य प्रत्यर्थनियतत्वादित्यादिरर्थः । अतः स्वसिद्धा-न्तमुपसंहरति । तस्मादिति । अवस्थितं स्थिरम् । परमते दूषणान्तरमाह । यदि चेति । स्वभावभिन्नत्वेन नित्यभिन्नत्वेन त्वयाभ्युपगताः प्रत्यया यद्येकचित्तानाश्रिताः स्युरित्यर्थः । अथशब्दः प्रश्ने । अन्यप्रत्ययदृष्टस्येति। तन्मते चित्तातिरिक्तात्माभावादुक्तम् । उपचितस्य अर्जितस्य कर्माशयस्या-दृष्टस्येत्यर्थः । नन्वेकसंतानोत्पन्नत्वेनानुभवसंस्कारस्मृत्यादीनां कार्य-कारणभावाभ्युपगमेनायं दोषः परिहर्त्तव्य इत्याशङ्कायामाह । समाधी-यमानमिति । गोमयं पायसं गव्यत्वादित्यादि न्यायमतदूषणं समाधीय-मानमप्याक्षिपति तिरस्करोति । तन्न्यायापेक्षयाप्येतद्दूषणोद्धरणन्याय आभा-सीभूत इत्यर्थः । तत्र हि गव्यत्वं हेतुः प्रसिद्धो ऽस्ति, अत्र त्वेकसंतानी-यत्वरूपो हेतुरप्यप्रसिद्धः संतानस्यैकतानिर्वाहकजात्याद्यनभ्युपगमादिति भावः । दूषणान्तरमाह । किं चेति । स्वस्य बौद्धस्य य आत्मविषयका-नुभवस्तस्याप्यपलापश्चित्तस्य प्रतिक्षणमन्यत्वे सति प्रसज्यतइत्यर्थः । पृच्छति । कथमिति । उत्तरं, यदिति । अव्ययमहमो विशेषणम् । तथा

च योऽहमद्राक्षं सोऽहं स्पृशामीत्यादिप्रत्यये ऽहमिति यः प्रत्ययांशः स सर्वस्य प्रत्ययस्य दर्शनस्पर्शनादिरूपस्यान्योन्यभेदे सति तदाश्रये प्रत्ययिनि धर्म्मिणि अभेदाकारतया ऽनुभवसिद्धो ऽस्तीत्यर्थः । आत्मानुभवं व्याख्याय तदपह्नवं व्याचष्टे । एकप्रत्ययेति । अयं चैकप्रत्ययविषयः प्रत्ययव्यक्तिमात्रगोचरको भवन्मते ऽतो भेदाकारोऽहमिति प्रत्ययः कथं भवन्मते ऽत्यन्तभिन्नेषु क्षणिकचित्तेषु विषयत्वेन वर्त्तमानः सामान्यमेकं विषयीकुर्य्यादित्यर्थः । सर्वप्रत्ययानुगतधर्म्मिणः स्थिरचित्तस्यानभ्युपगमादिति भावः । ननु अभेदाकारो ऽहंप्रत्यय एवाप्रामाणिक इति, तत्राह । स्वानुभवेति । अभेदात्मा अभेदाकारः । ननु यत्सत्तत् क्षणिकमिति सत्त्वेन क्षणिकत्वानुमानादुक्तप्रत्ययो बाधनीयस्तत्राह । न च प्रत्यक्षेति । माहात्म्यं स्वार्थसाधकत्वं न तर्कादिरन्यप्रमाणान्तरेणाभिभूयते प्रतिबध्यते उपजीव्यजातीयत्वेनाबलवत्त्वादित्यर्थः । शङ्खः पीत इत्यादिप्रत्यक्षं तु तर्कयोगेन बलवतानुमानेनैव बाध्यते । एवं देहाद्यात्मताप्रत्यक्षमपि निर्णीतप्रामाण्येन शास्त्रेण संदिग्धप्रामाण्यतया दुर्बलं बाध्यतइति । ननु चित्तातिरिक्तात्मानभ्युपगमिनामयं दोषो न चास्तिकानाम् अहंप्रत्ययस्य स्थिरात्मविषयकत्वाभ्युपगमादतः स्वमते कथं चित्तस्थैर्यसिद्धिरिति चेत्, पूर्वोक्तात्स्मृतिसंस्कारयोरेकाश्रयतानियमादित्यवेहि । तदिदं चित्तस्थैर्यमुपसंहरति । तस्माद्विति । परिकर्म्मोपदेशान्यथानुपपत्त्यापि चित्तस्थैर्यमनुमीयते इत्याह । यस्येति । हेतुगर्भविशेषणेन यस्य स्थिरचित्तस्येदमागामिसूत्रवक्ष्यमाणपरिकर्मचित्तप्रसाधनं स्थितिदार्ढ्यहेतुः परिष्कारः शास्त्रेषु निर्दिश्यतइत्यर्थः । सूत्रान्तरमुत्थापयितुं पृच्छति । कथमिति । किमुपायकं किं स्वरूपं किंफलं वा परिकर्म भवतीत्यर्थः ॥

( शेषमग्रे )

काशीस्थराजकीयप्रधानपाठशालायां } सांख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री । आङ्गलभागे संस्कृताध्यापकः केशवशास्त्री च ।

## ॥ अथ चित्सुखी ॥

### ॥ तत्र द्वितीयपरिच्छेदारम्भः ॥

*(Continued from page 262. Vol. V.)*

**द्रव्यत्वजातियोगित्वमपि न द्रव्यलक्षणम् ।**
**तज्जातिव्यञ्जकाभावात् तन्मानस्यानिरूपणात् ॥ ५ ॥**

द्रव्यत्वं जातिमभ्युपगच्छता तज्जातिव्यञ्जकं किंचिदवश्यमभ्युपेयम्, न च तन्निरूपणं सुशकम्, गुणविशिष्टस्य तद्व्यञ्जकत्वे विशेषणभूतस्य गुणस्यापि तद्व्यञ्जकतया द्रव्यत्वापत्तेः, रूपादीनामपि संख्यादिगुणवतां तद्व्यञ्जकतया द्रव्यत्वप्रसङ्गाच्च, एतेन समवायिकारणस्यापि तद्व्यञ्जकता निरस्ता ।

स्वातन्त्र्येण प्रतीतियोग्यत्वं व्यञ्जकमिति चेत, किमिदं स्वातन्त्र्यम्, किमाश्रयप्रतीतिमन्तरेण प्रतीतियोग्यत्वमुतानाश्रितत्वमेव ।

नाद्यः, शब्दादेरपि तत्संभवात् ।

न द्वितीयः, अवयविनामद्रव्यत्वापत्तेः, तेषामवयवाश्रितत्वात्, तदेवं न व्यञ्जकं द्रव्यत्वजातेः,नापि प्रमाणमस्ति ।

द्रव्यं द्रव्यमित्यनुगतप्रत्ययः प्रमाणमिति चेत्, न, सुवर्णमुपलभ्य मृत्तिकामुपलभमानस्य लौकिकस्य तदेवेदं द्रव्यमिति प्रत्ययाभावात्, परीक्षकाणां चानुगतप्रत्यये[1]विप्रतिपत्तेः, रत्नतत्त्वमिवोपदेशसहकृतप्रत्यक्षेणैव द्रव्यत्वमीक्ष्यत इत्यपि स्वशिष्यधीबन्धनमेव, रत्नतत्त्वस्येव जातेः सर्वपरीक्षकासंमतत्वात्, धर्माधर्मयोरदृष्टत्वजातेरभ्युपगमप्रसङ्गाच्च, अदृष्टमदृष्टमित्युभयोरप्यनुगतप्रत्ययदृष्टेः ।

यदपि लीलावतीकारमतम्, आकाशकालदिशः सत्तेतर[2]जातिमत्यः संयोगविभागजनकत्वात्[3] कर्मवत्, न च कर्मत्वमप्रसिद्धम्, चलतीत्यनुगतप्रत्ययवेद्यत्वादिति, तदपि मन्दम्, कर्माप्रत्यक्षत्वादिना[4] चल-

१ अनुगतव्यवहारमात्रेण जातिस्वीकारे दूषणमाह धर्मेति ।
२ सत्ताजातिमत्त्वेन सिद्धसाधनता मा भूदिति सत्तेतर इत्युक्तम् ।
३ संयोगविभागजनकत्वादिति हेतुद्वयमिह विवक्षितम् ।
४ प्रभाकरेणेत्यर्थः ।

तीति प्रत्ययस्य संयोगविभागप्रवाहविषयतया कर्मविषयतानङ्गीकारात्, कर्मत्वासिद्धौ दृष्टान्तस्य साध्यविकलत्वात् ।

आत्मा[1] शावलेय[2]वृत्त्यवृत्तिशावलेयनिष्ठजाति[3]मान् संयोगित्वाच्छावलेयवत्, जलादेश्च[4] पक्षतुल्यत्वान्न तेन व्यभिचारः, तथा सत्ता दिक्काला[5]काशनिष्ठजाते[6]रन्या मेयत्वात् पटवत्, आत्मानात्म[7]वृत्तिरूपा-वृत्ति[8]जाति[9]मान् रूपान्यत्वे सति[10] सामान्यवत्त्वा[11] द्घटवदिति द्रव्यत्वजातिसिद्धिरिति चेत्, मैवम्, संयोगित्वहेतोर्विगवत्त्वोपाधिहतत्वात्, मेयत्वहेतोश्च सत्तामनङ्गीकुर्वतामाश्रयासिद्धेः, दिक्कालाकाशनिष्ठजातित्वेन तस्या[12] एव विवक्षितत्वे चाप्रसिद्धविशेषणत्वाच्च, मेयत्वगुणवत्त्वज्ञानाधारत्वोपाधिभिरेव यथायोग्यं सद्द्रव्यमात्मेति व्यवहारोपपत्तौ तत्तत्सामान्यस्वीकारवैयर्थ्येन सामान्यवत्त्वहेतोरप्यसिद्धेः ।

---

१ आत्मेति, शावलेयनिष्ठजातिमानित्युक्ते सत्ताजातिमत्त्वेन सिद्धसाधनता तद्व्यवच्छेदार्थं शावलेयवृत्त्यवृत्तीति पदम्, तथा च सत्ताव्यवच्छेदः, तस्याः शावलेयवृत्तिषु गुणकर्मसु वर्तमानत्वात् ।

२ शावलेयवृत्त्यवृत्तिजातिमानित्युक्ते चात्मत्वजातिमत्त्वेन सिद्धसाधनता, आत्मत्वस्यापि शावलेयवृत्तिष्ववर्तमानत्वात्, आत्मनि च वर्तमानत्वादत उक्तं शावलेयनिष्ठेति ।

३ तथाप्यात्मशावलेयनिष्ठद्रव्यत्वव्यञ्जकेन गुणत्वादिना तदुभयान्यान्यत्वेन च सिद्धसाधनता; तद्व्यवच्छेदार्थं जातिपदम् । तथा चात्मशावलेयवृत्तिगुणावृत्तिद्रव्यत्वमेव सिध्यति, द्रव्यत्वस्यैवंलक्षणकत्वादिति भावः ।

४ जलादिषु व्यभिचारमाशङ्क्याह जलादेश्चेति ।

५ सत्तेति, जातेरन्येत्युक्ते घटत्वादिजात्यन्यतया सिद्धसाधनम्, तन्निवृत्त्यर्थं दिक्कालाकाशनिष्ठेति पदम् ।

६ दिक्कालाकाशनिष्ठगुणान्यत्वेन सिद्धसाधनता मा भूदिति जातिरित्युक्तम् । तथा च दिक्कालाकाशनिष्ठजातेः सत्तायाः स्वतोऽन्यत्वासंभवात् प्रतियोगितया जात्यन्तरसिद्धौ द्रव्यत्वसिद्धिरिति भावः, अत्र च दिक्कालादिग्रहणं दिक्निष्ठजातेरन्येत्येवंविधप्रयोगत्रयज्ञापनार्थम् ।

७ आत्मत्वव्यावृत्त्यर्थमनात्मपदम् ।

८ आत्मेति सत्ताव्यवच्छेदार्थं रूपावृत्तिपदम् ।

९ व्यञ्जकपरिहारार्थं जातिपदम् ।

१० रूपे व्यभिचारनिवृत्त्यर्थं रूपान्यत्वे सतीति पदम् ।

११ सामान्यादित्रये व्यभिचारवारणार्थं सामान्यवत्त्वादित्युक्तम् ।

१२ द्रव्यत्वजातेरेव ।

तदेवं जातौ व्यञ्जकप्रमाणयोरसंभवेनाकाशवृत्तिसत्ताव्याप्यजातियोगि क्रियासमानाधिकरणसत्तावान्तरजातियोगि संयोगध्वंसिसत्तावान्तरजातियोगि द्रव्यमित्येवमादीनि जातिपुरस्कारप्रवृत्तानि महाविद्यालक्षणानि निरस्तानि वेदितव्यानि, तथा गुणलक्षणमपि न युक्तं लक्षयामः ।

सामान्यवानगुण इत्याद्यप्यस्य न लक्षणम् ।
अन्योन्याश्रयतापत्तेर्गुणस्याद्याप्यसिद्धितः ॥ ६ ॥

सामान्यवानगुणः संयोगविभागयोर्निरपेक्षो न कारणं गुण इति कन्दलीकारस्य गुणलक्षणं तावदयुक्तम्, सिद्धे गुणेऽगुण इति लक्षणसिद्धिः, तत्सिद्धौ च गुणसिद्धिरितीतरेतराश्रयत्वदूषणग्रस्तत्वात् ।

यत्तु लीलावतीकारेणोक्तम्, "सामान्यवानचलनात्मकः समवायिकारणताहीनो गुण इत्यपि न, रूपादीनामपि संख्यापृथक्त्वसमवायिकारणत्वस्य प्रदर्शितन्यायेन संभवात्, तद्धीनतालक्षणस्य लक्षणांशस्यासंभवित्वात् ।

सामान्यवान् स्पर्शरहितो द्रव्याश्रयः कर्मातिरिक्तो गुण इत्यपि न, गुणात् कर्मणो भेदासिद्धौ कर्मव्यावृत्तेरयुक्तत्वात्, अन्यथा रूपातिरिक्तो रसातिरिक्त इत्यपि विशेषणोपादानप्रसङ्गात्, तथा च[1]गुणपदार्थे किरणावलीकारः, "तस्माद्वरो भूषणः कर्मापि गुणस्तल्लक्षणयोगा"दिति ।

ननु गुणत्वजातियोगी गुणः, न च व्यञ्जकाभावः, सामान्यवत्त्वे सति संयोगविभागकार्यद्वयाजनकत्वस्यैव गुणत्वव्यञ्जकत्वात् ।

नापि गुणत्वजातौ प्रमाणाभावः, संयोगः संयोगत्वातिरिक्तावान्तरजातिमान् जातिमत्त्वात् कर्मवदिति तत्सिद्धिरिति चेत्, अत्र ब्रूमः ।

गुणत्वजातियोगोऽपि न भवेद्गुणलक्षणम् ।
अन्योन्याश्रयदुष्टत्वाज्जातेस्तद्व्यञ्जकस्य च ॥ ७ ॥

---

१ उक्तश्चायमर्थो गुणपदार्थपूर्वपक्षोपसंहारसमये किरणावलीकारेणेत्याह तथा चेति, यस्मान्न कर्मणो भेदकमस्ति तस्माद्भूषणो वरः श्रेष्ठः, कथं कर्मापि गुणः, तल्लक्षणयोगादिति हि तन्मतमित्यर्थः ।

सिद्धे हि सत्तासामान्ये गुणत्वसामान्ये वा तद्विशिष्टव्यञ्जकसिद्धिः, तत्सिद्धौ च सामान्यसिद्धिः, इति परस्पराश्रयत्वात्, अनिष्टवियोगेष्टसंयोगोद्देशेनानुष्ठानसमुपर्जनितधर्मे संयोगविभागहेतौ लक्षणस्यासंभवित्वात्, तथाभिचारादिजनिते दुरिते शत्रोरिष्टवियोगानिष्टसंयोगहेतौ च लक्षणस्यासंभवित्वात् ।

न च तयोर्निमित्तत्वेनैव जनकत्वं न तु समवायिकारणतयाऽसमवायिकारणतया वेति वाच्यम्, आत्मनिष्ठसंयोगविभागहेतोरदृष्टस्य कार्यैकार्थसमवायिनोऽसमवायिकारणलक्षणोपपत्तेः, समवायित्वासमवायिकारणभेदस्याद्याप्यसिद्धेश्च ।

नापि तत्र प्रमाणम्, जातिमत्त्वहेतोरसिद्धेः, कर्मत्वादेरसिद्धौ दृष्टान्तस्य साध्यविकलत्वात्, गुणत्वजातेरसिद्धौ संयोगा[1]जन्यसंयोगासमवायिकारणावृत्तिसंयोगासमानाधिकरणजातिमान् विभागाजन्यविभागासमवायिकारणावृत्तिविभागासमानाधिकरणजातिमान् गुण इत्येवमादीनि[2] पुरस्कारप्रवृत्तानि गुणलक्षणानि निरस्तानि ।

तथा कर्मलक्षणमपि दुर्लक्ष्यम्, न तावत् संयोगविभागयोरनपेक्षं कारणं कर्मेति लक्षणम्, यतः ।

यथाश्रुतेऽसंभवित्वान्निरुक्तेरप्ययुक्तितः ।
नानपेक्षतया हेतुः कर्म संयोगविभागयोः ॥ ८ ॥

नानपेक्षतया संयोगविभागहेतुत्वं कर्मणः, समवयिकारणेश्वरेच्छादेशकालादृष्टापेक्षणात् ।

अथैवं निरुच्यते पश्चाद्भावि निमित्तं नापेक्षते कर्म तेन चेश्वरेच्छासमवायिकारणादयो व्यावर्त्यन्ते तेषां पूर्वभावितया पश्चाद्भावित्वा-

१ जातिमान् गुण इत्युक्ते द्रव्येऽतिव्याप्तिः, तदर्थं संयोगासमानाधिकरणेत्युक्तम्, एवं सति कर्मण्यतिव्याप्तिः, तदर्थं संयोगासमवायिकरणावृत्तीत्युक्तम्, एवं च संयोगेऽव्याप्तिः, तस्य संयोगासमवायिकारणत्वेन तदवृत्तिजातिमत्त्वस्यासंभवात्, तत उक्तं संयोगाजन्यो यः संयोगस्तं प्रति असमवायि कारणं यत् तदवृत्तिजातिमान् इत्यर्थः ।

२ आदिग्रहणेनाक्षेपणावृत्तिसंयोगासमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमानित्यादि संगृह्यते ।

भावादिति, मैवम्, उत्तरसंयोगे कर्तव्ये पश्चाद्भाविन्याः पूर्वसंयोगनिवृत्तेरपेक्ष्यमाणत्वात्, पश्चाद्भावि भावरूपं निमित्तं नापेक्षत इति चेत्, न, पूर्वसंयोगनिवृत्तिलक्षणस्य भावस्यैव पश्चाद्भाविनोऽप्यपेक्ष्यमाणत्वात्, यदनन्तरं संयोगविभागयोरुत्पत्तिस्तत् कर्मेति च कर्मलक्षणे तत्सामग्र्यामपि तत्संभवादतिव्याप्तिः ।

न च कर्मैव सामग्री, तथा सति विभागोत्पत्तिसमसमयमेव पूर्वसंयोगनिवृत्तेः, उत्तरसंयोगस्य चोत्पत्तिप्रसङ्गात्, सत्यां सामग्र्यां कार्ये विलम्बायोगात् ।

अस्तु तर्हि संयोगविभागयोरसमवायि कारणं कर्मेति लक्षणम् ।

न च संयोगविभागयोरतिव्याप्तिः, तयोरेकैककारणत्वात्, अत्र चोभयकारणत्वस्य विवक्षितत्वादिति चेत्, मैवम्, कर्मविशेषे लक्षणस्याव्याप्तेः, तथाहि यदा पटारम्भकावयवतन्त्वादिनिष्ठेन कर्मणावयवान्तराद्विभागोद्भवस्तस्मिन् समये तदारब्धावयविनिष्ठं कर्म यदि भवति तदावयवानां विभागाद्द्रव्यस्यारम्भकसंयोगनिवृत्तिसमयेऽवयविकर्मणा तस्मिन्नेवावयविनि यतः कुतश्चिद्विभागो जायते, तत्रासमवायिकारणावयविसंयोगनिवृत्त्यनन्तरमवयविनो नाशाच्चोत्तरसंयोगोत्पत्तिः, संयोगिनोऽवयविन एवाभावात्, तत्रावयविनिष्ठस्य कर्मण उभयासमवायिकारणत्वाभावादव्याप्तिः कथं न भवेत् ।

न चावयवकर्मानन्तरमवयविनि कर्म न जायत इति वाच्यम्, हस्तचलनानन्तरं देवदत्तचलनस्य शाखाचलनानन्तरं शाखिचलनस्य दृष्टत्वात् ।

न चोत्तरसंयोगानुत्पत्तौ कर्मणोऽनुपभोग्यत्वप्रसङ्गः, विभागजननेनापि पुरुषार्थत्वोपपत्तेः, न हि यावदशेषप्रयोजनसिद्धिस्तावद्वस्तुनोऽवस्थाननियमः, बीजादेरङ्कुराद्यजननेऽपि नाशाद्युपलम्भात् ।

अस्तु वोभयकारणत्वं कर्मणः, तथाप्यसमवायिकारणता निरूपणीया, समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यं तदसमवायि कारणमिति

चेत्, केयं प्रत्यासत्तिः, कार्यैकार्थसमवायः कारणैकार्थसमवायश्चेति चेन्न, विकल्पासहत्वात् ।

तथाहि उभयविधप्रत्यासन्नता असमवायिकारणशब्देन कर्मलक्षणेऽपि विवक्षिता, उतान्यतरा ।

नाद्यः, अनङ्गीकारात्, असंभवाच्च, न ह्यन्त्यावयविनिष्ठस्य कर्मणः संयोगविभागसमवायिकारणेनान्त्यावयविना सहैकस्मिन्नर्थे समवायः संभवति, कर्मण एकद्रव्यमात्रवृत्तित्वात् ।

न द्वितीयः, कारणैकार्थसमवायस्यानङ्गीकारादेव कार्यैकार्थसमवायस्य तु लक्षणान्तरभावेऽतिव्याप्तेः, यन्निष्ठौ संयोगविभागौ तन्निष्ठतया संयोगविभागयोर्यत् कारणं तत् कर्मेति हि तथा लक्षणार्थः संपद्येत, तथा चात्ममनसोः संयोगविभागजनकादृष्टेऽतिव्याप्तिः कथं न स्यात्, कार्येण संयोगविभागाख्येन सह तज्जनकादृष्टस्यात्मन्येकस्मिन्नर्थे समवायात् ।

गुणान्यत्वे सतीति विशेषणादयमदोष इति चेन्न, तदोभयकारणताभिधानस्य वैयर्थ्यापातात्, गुणान्यत्वपदेनैव विभागजनकविभागस्य संयोगजनकसंयोगस्य च व्यवच्छेदात्, एवं विभागाजन्यविभागासमवायिकारणं कर्मेत्यपि लक्षणं निरस्तम्, असमवायिकारणताया दुर्निरूपत्वात्, विभागाजन्यत्वविशेषणं च व्यर्थम्, व्यवच्छेद्याभावात् ।

न च विभागजविभागव्यवच्छेदार्थमिति वाच्यम्, कर्मण एव तदुत्पत्तौ विभागजविभागस्यैवाप्रामाणिकत्वात् ।

ननु यत् तावदिह वंशावयवेषु प्रवर्तमानं कर्म तद्द्रव्यारम्भकसंयोगविरोधिनं विभागमुत्पादयत् तदेव नाकाशादिभिः सह विभागमुत्पादयति, यस्मादाकाशादिविभागजनकत्वं कर्मणो द्रव्यारम्भकसंयोगविरोधिविभागानारम्भकत्वेन व्याप्तमुपलभ्यते नलिनदलेषु, नहि तत्र द्रव्यविनाशः प्रत्यक्षाधिगतः, तदेवेदं नलिनमिति प्रत्यभिज्ञानात्, नाप्यनुमानतः, द्रव्यादिष्विव व्यूहान्तरस्य तदुपायकलिङ्गस्यादर्शनात्, तथा च पद्मपक्षस्य

पक्षान्तराद्विभाग उपलभ्यमानो न द्रव्यारम्भकसंयोगविरोधी किंतु स्पर्श-वद्द्रव्यसंयोगजात् कर्मण उत्पन्नो यः संयोगः सत्येव द्रव्ये द्रव्यारम्भके च संयोगे पद्मपत्रयोर्वर्त्तते तमेव निवर्तयति, यथाङ्गुल्योर्विभागः प्रयत्नोत्पादितं संयोगमेव निवर्तयति नतु द्रव्यारम्भकसंयोगम्, तस्मादङ्गुलिविभाग-वत् पद्मपत्रक्रियाजनितो विभागो न द्रव्यारम्भकसंयोगविरोधीति व्याप्ति-निश्चये प्रयोगः, विवादाध्यासिता वंशदलक्रिया नाकाशादिविभागार-म्भिका द्रव्यारम्भकसंयोगविरोधिविभागारम्भकत्वाद् यन्नैवं न तदेवं यथा पद्मपत्रक्रिया, एककर्महेतुकत्वे च विभागयोर्द्रव्यारम्भकसंयोगविरोधित्वा-विरोधित्ववैलक्षण्यमनुपपन्नं कारणवैचित्र्ये कार्यवैचित्र्यस्याकस्मिकत्व-प्रसङ्गादिति विपक्षे बाधकस्तर्कः, तदेवमवयवक्रियावयवविभागकाले पश्चाद्वा नाकाशादिविभागमारभते, तस्मादाकाशवंशावयवयोर्विभागो न क्रियाजन्यः ।

न चासमवायिकारणमन्तरेण कार्योत्पत्तिः शक्याभ्युपगन्तुम् ।

न चान्तरेण क्रियामन्यदसमवायिकारणमवयवविभागातिरेकि शक्य-मुपपादयितुम्, अवयवविभागस्त्ववशिष्यते, स च तस्य प्रत्यासन्न एकार्थ-समवायादिति सिद्धो विभागजविभागस्तद्व्यावृत्त्यर्थं विभागजन्यत्वविशेष-णमिति चेत् ।

मैवं व्याप्तेरसिद्धत्वादनध्यवसितत्वतः ।
यौगपद्यप्रतीतेश्च प्रत्यक्षत्वमुपेयुषाम् ॥ ९ ॥

न तावदाकाशादिविभागजनकस्य कर्मणो द्रव्यारम्भकसंयोगवि-रोधिविभागानुत्पादकत्वं क्वचित् प्रत्यक्षसिद्धम्, आकाशादिविभागस्याती-न्द्रियस्य क्रियान्वयव्यतिरेकयोः प्रत्यक्षतोऽधिगन्तुमशक्यत्वाद्व्याप्त्यसिद्धेः, अनध्यवसितश्चायं हेतुः, आकाशादिविभागानारम्भके रूपादौ सत्यपि सपक्षे ततो व्यावृत्तत्वात् ।

अपिच क्रमकल्पनेयमनुपपन्ना, आकाशादिविभागप्रत्यक्षवादिनां विभागद्वयस्यापि यौगपद्यप्रतीतेः ।

न च शतपत्रपत्रशतव्यक्तिभेदानुभववद्भ्रमोऽयमनुभवः, बाधकाभावात् ।

न चोपन्यस्तमनुमानं बाधकम्, तस्यानध्यवसितत्वेनापहस्तितत्वात्, विवादाध्यासितं[1] विभागजन्यगुणाधिकरणं नित्यद्रव्यत्वात् आत्मवत् अस्ति ह्यात्मनो[2] विभागविषयं प्रत्यक्षज्ञानं तत्कर्मकारकजन्यं तेन साध्यविकलो दृष्टान्त इति मानमनोहरकारोक्तमनुमानं बाधकमिति चेत्, मैवम्, वेदान्तिनं प्रति हेतोरसिद्धेः, तेनात्मव्यतिरिक्तनित्यद्रव्यानङ्गीकारात्, आत्मनो गुणानधिकरणत्वेन च दृष्टान्तस्य साध्यविकलत्वाच्च ।

किंच नित्यविशेषणं व्यर्थम्, जीवाकाशव्यतिरिक्तस्य द्रव्यजातस्य विभागजन्यगुणाधिकरणतया विप्रतिपद्यमानस्य पक्षीकृततया पक्षव्यापकद्रव्यत्वहेतुमात्रेणैव साध्यसिद्धेर्नित्यपदव्यावर्त्याभावात् ।

अस्तु तर्हि द्रव्यत्वमात्रं हेतुरिति चेत्, न, विभुत्वोपाध्युपहतत्वात् ।

न च दिक्कालेश्वरेषु पक्षैकदेशेषु साधनव्यापकता, पक्षीकृतपरमाण्वादिषु तदभावात् ।

किंच कर्मणो द्रव्यारम्भकसंयोगविरोधिविभागजनकस्य नभोभागविभागाजनकत्वे द्रव्यारम्भकसंयोगजनकस्य तद्द्जनकसंयोगजनकत्वमङ्गुल्याकाशसंयोगजनककर्मण इव न स्यात्, तथा च तन्तुद्वयसंयोगजनकात् कर्मणस्तन्त्वाकाशसंयोगो न भवेत् ।

नन्वङ्गुल्याकाशसंयोगाच्छरीराकाशसंयोगवत् तन्त्ववयवाकाशसंयोगादेव तन्त्वाकाशसंयोगोपपत्तेर्नायं दोष इति चेत्, एवं तर्हि द्व्यणुकजनकसंयोगासमवायिकारणात् परमाणुकर्मणः पर एवाकाशसंयोगो न भवेत्, न हि तत्रावयवसंयोगात् परमाण्वाकाशसंयोगो निरवयवत्वात् ।

( शेषमग्रे )

---

१ विवादाध्यासितमिति, आत्माकाशव्यतिरिक्तनित्य द्रव्याणि पक्षः ।

२ दृष्टान्ते साध्यं दर्शयति, अस्ति ह्यात्मन इति, विभागविषयं यत् प्रत्यक्षज्ञानं तद्विभागजन्यगुणः, एवमाकाशस्य शब्दो विभागजन्यगुणः ।

# ॥ माधवीयधातुवृत्तिः ॥

(*Continued from page* 252. Vol. V.)

शच व्यक्तायां वाचि ॥ शचते। शेचे। शचितेत्यादि। शची। इन-न्तात्क्तिकारादक्तिन इति ङीष् ॥ १६४ ॥

श्वच श्वचि गतौ ॥ श्वचते। शश्वचे। श्वचिता। श्वञ्चते। शश्वञ्चे। श्वञ्चितेत्यादि। शच्यादयस्तालव्यादयः ॥ १६६ ॥

कच बन्धने। कचते। चकचे। कचितेत्यादि। कचते यूनां मनांसि बध्नातीति कचः। पचाद्यच्। काचः। 'हलश्चे'ति संज्ञायां घञ् ॥ १६७ ॥

कचि काचि दीप्तिबन्धनयोः ॥ कञ्चते। चकञ्चे। कञ्चिता। काञ्चतइत्यादि। कञ्चुकः। बाहुलकादुकः प्रत्ययः। काञ्चनम्। अनुदात्ते-त्वाद्युच्। काञ्चनस्य विकारः, काञ्चनम्। प्राणिरजतादिभ्योऽञिति रजता-दित्वादञ् 'नित्यं वृद्धशरादिभ्य'इति मयटोपवादः। काञ्चिः। काञ्ची। इनन्तात्क्तिकारादक्तिन इति वा ङीष्। काञ्चिकम्। संज्ञायां कल्कने कन्। दीप्तौ चेति वक्तव्ये बन्धनग्रहणं प्रपञ्चार्थम् ॥ १६९ ॥

मच मुचि कल्कने ॥ कल्कनं दम्भः शाठ्यं चेति मैत्रेयः। दम्भः कत्थनं चेति स्वामी। मचते। मेचे। मचिता। मुञ्चते। मुमुञ्चे। मुञ्चितेत्या-दि। मुचेति चन्द्रः। तन्मते मोचतइति। मुच्लृ मोक्षणइति तुदादौ। मुच प्रमोचनइति चुरादौ ॥ १७१ ॥

मचि धारणोच्छ्रायपूजनेषु ॥ मञ्चतइत्यादि। मञ्चः। पचाद्यच्। शाकटायनस्तु मुञ्चिं हित्वा द्वावेव धातू पपाठ। मचि कल्कने। मञ्चु धारणोच्छ्रायपूजनेष्विति। तेन चानुदात्तत्स्थाने इद्विक्रियते। तस्य स्थाने वोदित्, धनपालस्तावत् शाकटायनानुसारी ॥ १७२ ॥

पचि व्यक्तीकरणे ॥ पञ्चते। पङ्कः। 'चजोः कुघिण्ण्यतो'रिति कुत्व-म्। वार्त्तिकमतेन्यङ्क्वादिर्द्रष्टव्यः। तेन हि निष्ठायामनिटः कुत्वमुच्यते। पञ्चन् बाहुलकात्कनिन् बहुवचनान्तः। तत्र 'ष्णान्ता षडिति' षड्संज्ञावि-धानात् 'षड्भ्यो लुगि'ति जश्शसोर्लुक्। पञ्चानामित्यत्र 'षट्चतुर्भ्यश्चे'त्यामो

लुटि 'नोपधायाः' । नान्तस्योपधाया नामि दीर्घ इति दीर्घे 'न लोपः प्रातिपदिकान्तस्ये'ति नलोपः, स्त्रियामपीदमेव रूपम् । 'न षट्स्वस्रादिभ्य'इति टापो ङीपश्च निषेधात् । अस्ति च टापः प्रसङ्गो नकारे लुप्ते । पञ्चानामपत्यं, पाञ्चिः । बाह्वादित्वादिञ् 'नस्तद्धिते' । नान्तस्य भस्य तद्धिते टिलोप इति टिलोपः । पङ्क्तिः । 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशत'मिति 'तदस्य परिमाणमि'ति विषये तिप्रत्ययो निपात्यते । पञ्च परिमाणमस्य वर्गस्य पञ्चत् 'पञ्चद्दशतौ वर्गे वे'ति डत्यन्तो निपातितः । वायहणा'त्संख्याया अतिशदन्तायाः कनि'ति कनि पञ्चकः । पचेति दुर्गः । तथा वर्धमानोऽपि यदाह । अनिड्ढुधौ पच्यादिसूत्रे डुपचष्पाके पच व्यक्तीकरणइति, संमतायां तु वर्धमानवदुक्त्वाऽन्यैस्त्वयमिदित् पठ्यतइत्युक्तम् । तिङो गोत्रादीनीत्यत्र पचतिगोत्रमित्युपादाय पचव्यक्तीकरणइति पठन् न्यासकारः परस्मैपदिनं च मन्यते । डुपचष्पाकइत्यये । पचि विस्तारवचनइति चुरादौ ॥ १७३ ॥

ष्टुच प्रसादे ॥ स्तोचते । 'धात्वादेः षः सः' । ष्टुत्वं निमित्ताभावाच्च भवति । सत्वात्पूर्वं तु पूर्वत्रासिद्धत्वेन न भवति । तुष्टुचे । 'शर्पूर्वाः खय'इति शेषः । स्तोचितेत्यादि । तुस्तुचिषते । तुस्तोचिषते । स्तुचित्वा । स्तोचित्वा । रलो व्युपधादिति कित्त्वविकल्पः । स्तौतिण्योरेवेति नियमात्सन्यषत्वम् । तोष्टुच्यते । तोष्टुचीति । तोष्टोक्ति । स्तोचयति । अतुष्टुचत् । स्तोकः । घञ् । उदश्वित्स्तोकम्, अल्पमुदश्विदित्यर्थः । 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः' । पोटादिभिः समानाधिकरणैः जातिवाचि सुबन्तं समस्यतइति तत्पुरुषः । अत्रैव निर्देशाद् वार्त्तिककारमते कुत्वम् । स हि 'चजोः कु घिण्ण्यतोर्निष्ठायामनिट्'इति सूत्रं न्यास्यत् । स्तोकान्मुक्तः । स्तोकेन मुक्तः । स्तोकत्वेन मुक्त इत्यर्थः । 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्ये'ति तृतीयापञ्चम्यौ । असत्त्ववचनस्येति वचनात् स्तोकेन विषेण हत इति सत्त्ववचनात्तृतीयैव । स्तोकान्मुक्त इत्यत्र स्तो-

कान्तिकेत्यादिना समासे 'पञ्चम्याः स्तोकादिभ्य' इत्यलुग्वचनात्तदेव रूपम् । संस्तोज इति वर्णविकाराभ्युपगमादिति मैत्रेयः ॥ १७४ ॥

ऋज गतिस्थानार्जनोपार्जनेषु ॥ अयं पाठो मैत्रेयस्य । ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः । अर्जते । 'उरण् रपर' इति रपरो गुणः । आनृजे । अत्र ऋजशब्दस्य द्विर्वचने हलादिशेषे 'उरद्' इति ऋवर्णान्ताभ्याससत्त्वाद् भवन्नुरण् रपर इति रपरः । पुनर्हलादिशेषे 'अत आदे'रिति दीर्घे तस्मान्नुड् द्विहल' इति नुट् । ऋकारैकदेशस्यापि रेफस्य हल्त्वाश्रयणाद् द्विहलत्वम् । तत्र हि द्विहल्ग्रहणं गौणस्येदृशस्य हलः परिग्रहार्थम् । अन्यथा तस्मान्नुडित्येव ब्रूयात् । न चाटतुरित्यादावेकहल्यतिप्रसङ्गः । 'अश्नोतेश्चे'त्यनेन द्विहलो यदि भवत्यश्नोतेरेवेति नियमात्, अस्याश्नातिमात्रनिवृत्त्यर्थत्वे नाश्न इत्येव ब्रूयात् । ऐभ्राजित्यत्र द्विहल्ग्रहणं न करिष्यतइति भाष्यम् । तत्र कैयटे । अवर्णोपधस्य यदि भवति अश्नोतेरेवेति नियमाश्रयेण द्विहल्ग्रहणं प्रत्याख्याय नुडुक्तः ॥ अर्जिता । अर्जिष्यते । आर्जतम् । आर्जत । आर्शिषि । अर्जिषीष्ट । आर्जिष्ट । आर्जिष्यत । अजादित्वादाडागमः । अर्जिजिषते । सनीटि गुणे न न्द्रा इति रेफवर्जं द्विरुच्यते । अर्जयति । आर्जिजत् । प्रार्ज्यतइत्यत्र कर्मादौ यकि । 'उपसर्गादृति धातौ' । अवर्णान्तादुपसर्गादृकारादौ धातौ परे पूर्वपरयोर्वृद्धिरेकादेश इति आर्वृद्धिः । अर्जित्वा । 'न क्त्वा सेडि'त्यकित्त्वाद्गुणः । ऋज्यम् । 'ऋदुपधाच्चाक्लृपिचृतेरि'ति भावकर्मणोः क्यप् ॥ १७५ ॥

ऋजि भृजी भर्जने ॥ द्वितीय ईदित् । भर्जनं पाकविशेषः । ऋञ्जते । प्राञ्जते । उपसर्गादृतीति वृद्धिः । ऋञ्जां चक्रे । आनृञ्जइति संमतातरङ्गिण्योः । तदसत् । नुम्विधावुपदेशिवद्वचनात् । अत एव काश्यपमैत्रेयादय आममेव सर्वेउदाजह्रुः । ऋञ्जिता । ऋञ्जिष्यते । ऋञ्जताम् । आर्ञ्जत । ऋञ्जेत । ऋञ्जिषीष्ट । आर्ञ्जिष्यत । 'आटश्चे'ति वृद्धिः । ऋञ्जिजिषते । न न्द्रा इति नवर्जं द्विरुच्यते । ऋञ्जयति । मा भवान् ऋञ्जिजत् । भर्ज्जते । बभृजे । भर्जितेत्यादि । बिभर्ज्जिषते । बरीभृज्यते । 'रीगृदुपधस्य चे'ति रीक् । बर्भृजीति । बरिभृजीति । बरीभृजीति ।

बभर्क्ति । बरिभर्क्ति । बरीभर्क्ति । 'रुग्रिकौ च लुकी'ति रुग्रिकौ, भर्जयति । अबीभृजत् । उश्चेट्टा । अन्यदा अबभर्जत् । भृक्तः । भृक्तवान् । 'श्वीदितो निष्ठायामि'ति अनिट्त्वम् । भर्गः । घञि कुत्वम् । भ्रस्ज पाकइति तुदादौ ॥ १७१

एजृ भ्रेजृ भ्राजृ दीप्तौ । एजते । प्रेजते । एङि पररूपम् ॥ एजां चक्रे । एजितेत्यादि । एजिजिषते । एजयति । मा भवानेजिजत् । ऋदित्त्वाचोपधाह्रस्वः । अन्यथा इदिधदित्यादिवद् द्विर्वचनात्पूर्वमेवोपधाह्रस्वः स्यात् । अङ्गमेजयतीत्यङ्गमेजयः ॥ 'एजेः खशि'ति ण्यन्तादस्मात्कर्मण्युपपदे खशः शित्त्वात्सार्वधातुकत्वाच्छपि गुणायादेशौ । अन्यथार्धधातुकत्वात् णयल्लोपेत्यादिना गुणं बाधित्वा णिलोपः स्यात् । खित्त्वादरुर्द्विषदजन्तस्येति पूर्वपदस्य मुम् । वृत्तौ तु एजृ कम्पनइति परस्मैपदिण्यन्तात् खशुक्तः, उदेजयतीत्युदेजयः । अनुपसर्गाल्लिम्पेत्यादिना उत्पूर्वात् ण्यन्तादस्माच्छप्रत्यये शपि गुणायौ । अनुपसर्गग्रहणमर्थादन्यविशेषणम् । अत्राप्युपसर्गान्तरनिवृत्त्यर्थं च । तेन प्रुद इत्यादौ अचि णिलोपः । भ्रेजते । भ्रेजितेत्यादि । बिभ्रेजिषते । बेभ्रेज्यते । बेभ्रेजीति । बेभ्रेक्ति । भ्रेजयति । अबिभ्रेजत् । ह्रस्व इति इकारोभ्यासस्य, पूर्ववदृदित्त्वाचोपधाह्रस्वः, भ्राजतइत्यादि भ्रेजिवत् । व्रश्चभ्रस्जेत्यादिना झलि पदान्ते च विधीयमानं षत्वमस्य नास्ति । राजिसाहचर्यात्फणादिपठितस्यैव तत्र ग्रहणादिति मैत्रेयक्षीरस्वामिसंमताकारादयः । एवं चावश्यपठितव्येन फणादिकेन भ्राजतइत्यादीनां सिद्धेरिह पाठोऽनार्ष इवेति न्यासोक्तं दुरुक्तं, यद्वा तत्रापीवशब्देन पूर्वोक्त एव पक्षः सूच्यते । भ्राजयति । अबिभ्रजत् । अबभ्राजत् । 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्यामि'ति चङ्परे णौ उपधाह्रस्वविकल्पः । एवं चास्य ऋदित्त्वमनुदात्तेत्त्वमात्रफलम् । भ्राजिष्णुः । 'भुवश्चे'ति चकारादिष्णुच् । विभ्राक् । 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विब्' इति ताच्छीलिके क्विपि 'चोः कु'रिति कुत्वम् । व्रश्चादिसूत्रे राजिसाहचर्यात् फणादिकस्यैव ग्रहणमित्युक्तत्वाच षत्वम् । यत्तु वृत्तौ क्विप्सूत्रे विभ्राडिति कृतषत्वस्यैवोदाहरणं तद्व्यनुबन्धकत्वेपीह फणादिकमपि गृह्यतइति सूचयितुं न त्वस्यापि षत्वमस्तीति । अत्र रेजिरपि

चित्पठ्यते, तदनार्षमिव। यदाह भट्टभास्करः। रेजते अग्ने पृथिवीमखेभ्य इत्यत्र राजतेश्छान्दसत्वमिति १८० ॥

ईज गतिकुत्सनयोः ॥ ईजते। ईजां चक्रे। ईजितेत्यादि। कर्म्मणि। ईज्यतइत्यादि। ईजिजिषते। ईजयति। मा भवानिजिजत्। द्विर्वचनात्पूर्वं णौ चङीति ह्रस्व इत्युक्तम्। वर्चादय उदात्ता अनुदात्तेतः ॥ १८१ ॥

शुच शोके ॥ एतदादयो व्रजन्ता उदात्ता उदात्तेतः ॥ शोचति। शुशोच। शोचिता। शुशुचिषति। शुशोचिषति। शुचित्वा। शोचित्वा। कित्त्वविकल्पः। शोशुच्यते। शोशुचीति। शोशोक्ति। शोचयति। अशूशुचत्। 'दीर्घो लघोः'। शोचनः। 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपद' इति तच्छीलादौ युच्। प्रशुचितः। प्रशोचितः। उदुपधादिति कित्त्वविकल्पः। शूद्रः। 'शुचेर्दश्चे'ति रक्प्रत्ययो दश्चेति दकारोन्तादेशः दीर्घश्च, 'शूद्रा चामहत्पूर्वा जाति'रित्यजादिपाठात् जातेरस्त्रीविषयादिति ङीषं बाधित्वा स्त्रियां टापि शूद्रा। जातिवचनात्पुंयोगे शूद्रीति ङीप् भवति। अमहत्पूर्वेत्युक्तेर्महाशूद्रशब्दाज्जातिलक्षणो ङीषेव भवति महाशूद्रीति। महाशूद्रशब्दो ह्याभीरजातिवचनः। अयमेवामहत्पूर्वस्येतिप्रतिषेधो ज्ञापकः स्त्रीप्रत्ययेषु तदन्तविधेः। शोकः। घञ्। वार्त्तिकमते तुन्दशोकयोरिति निपातनात् कुत्वमिष्टव्यम्। शुचिर् पूतीभावइति दिवादौ ॥ १८२ ॥

कुच शब्दे तारे ॥ कोचति। चुकोच। कोचितेत्यादि पूर्ववत्। कुचः। इगुपधात्कः। कुच गताविति स्वामी, अयं संपर्चनार्थे ज्वलादौ, पुनः पाठे प्रयोजनं तत्रैव वक्ष्यते। संकोचनार्थस्तुदादौ ॥ १८३ ॥

क्रुञ्च कुञ्च कौटिल्याल्पीभावयोः ॥ दन्त्योपधौ। गतिकौटिल्याल्पीभावयोः, गतौ कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी। कुञ्चति। चुकुञ्च। कुञ्चितेत्यादि। चुकुञ्चिषति चोकुच्यते। अनिदितामिति नलोपः। चोकुञ्चीति। 'न लुमताङ्गस्ये'ति निषेधात् प्रत्ययलक्षणेन नलोपो न भवति, 'चोः कु'रिति कुत्वेन चकारे निवर्त्तिते निमित्ताभावे नैमित्तिकस्याप्यभाव इति ञकारे निवृत्ते ऽनुस्वारस्य पुनः परसवर्णो ङकारः। अचोकुञ्चीत्। अचोकुन्। संयोगान्तलोपे सति पूर्वत्रनिमित्ताभावात् ञकारे ऽनुस्वारे च निवृत्ते मकारो ऽवतिष्ठते। कुञ्चयति। अचुकुञ्चत्।

चङ्परेतोऽनिदितामिति नलोपो णिलोपस्य स्थानिवत्त्वादसिद्धवदत्रेत्यसिद्धत्वाद्वा व्यवधानान्न भवति । कुचितः, कुचितवान् । अनिदितामिति नलोपः । कुञ्चित्वेत्यत्र तु 'न क्त्वा सेडि'त्यकित्त्वान्नलोपो न भवति । निकुचितमनेनेत्यादौ भावादिकर्मणोः उदुपधादिति कित्त्वविकल्पो न भवति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । तथा चास्याः परिभाषायाः प्रयोजनवार्तिकम् । उदुपधत्वमकित्त्वस्य निकुचितमिति,इदमेवास्य नोपधत्वे मानम् । अत एवोदित्पाठिनौ चन्द्रतरङ्गिणीकारौ प्रत्युक्तौ यतस्तन्मते 'उदितो वे'ति क्त्वायामिटो विकल्पनान्निष्ठायां 'यस्य विभाषे'ति प्रतिषेधात्सेटो निष्ठाया एवाभावः । इदित्पाठोप्यनेनैव प्रत्युक्तः । यत इदित्त्वान्नलोपस्य नैव प्रसङ्गः, निकुचितमित्यत्र 'तितुत्रतथसिसुसरकसेषु चे'ति तिप्रत्ययस्य विधीयमानमनिट्त्वं तितुत्रेष्वग्रहादीनामित्युक्तत्वान्न भवति । एवं क्रुञ्चतीत्यादि । क्रुङ् । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां चे'ति क्विन् । तस्य सर्वापहारी लोपः । पदत्वे चकारस्य संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः'क्विन्प्रत्ययो यस्माद्विहितस्तस्य पदस्य कवर्गादेश इति नकारस्य ङकारः । संयोगान्तलोपात्पूर्वं प्रत्ययलक्षणेनानिदितामितिलोपो न भवति । ऋत्विगित्यादिभिर्निपातनैः साहचर्यात् । अन्यस्याप्यलाक्षणिकस्य कार्यस्य ज्ञापनात् । तदुक्तं वृत्तौ । नलोपः कस्मान्न भवति । ऋत्विगित्यादिभिर्निपातनैः साहचर्यादिति । अत एव साहचर्यादुपपदाधिकारेपि केवलात् क्विन्प्रत्ययः । क्रुञ्चा । अजादिपाठाद्धलन्तादपि टाप् । क्रुञ्चैव क्रौञ्चः । 'प्रज्ञादिभ्यश्चे'ति स्वार्थेण प्रत्ययः । क्रुञ्चा अस्मिन्सन्तीति क्रुञ्चकीयो देशः । क्रुञ्चा ह्रस्वत्वं चेति नडादिपाठात् चातुरर्थिकः छप्रत्ययस्तत्सन्नियोगेन कुगागमो ह्रस्वत्वं च । 'चोः कुरि'त्यत्र यदुक्तं वामनेन । क्रुञ्चेत्यत्र सङीतिवचनाज्जकारस्य चकारे झलि परतः कुत्वं न भवति, युजिक्रुञ्चां चेति निपातनाद्वा । नकारोपधो वा धातुरपरै रेफवर्जितः कुञ्च कौटिल्याल्पीभावयोरिति पठ्यते नलोपो निकुचित इत्यत्र दृश्यते, युजिक्रुञ्चामिति तस्यैव रेफाधिको नलोपाभावश्च निपात्यतइति तत्क्रुञ्चेर्नोपधत्वेपि क्रुञ्चाशब्दे दोष इत्येवंपरं न त्वयं धातुर्नास्ति । यद्वा अकारोपधइत्येवं परम् । स्पष्टं चैवं तत्र न्यासपदमञ्जर्यो,र्न क्त्वासेडित्यत्र च द्वावपि धातू न्यासकृतोपात्तौ । तथा ऋत्विगादिसूत्रे जयादित्यश्च क्रुञ्चेर्नलोपः कस्मान्न भवति निपातनैः साहचर्यादिति ॥ १८५ ॥ (शेषमग्रे)

॥ श्रीः ॥

# कैवल्यरत्नम् ।

(*Continued from page* 301. Vol. V.)

श्रीपरमेश्वर उवाच ॥

अथातः संप्रवक्ष्यामि विग्रहं परमं मम ।
यं विदित्वा विमुच्यन्ते ब्रह्मणा दग्धकिल्बिषाः ॥
भूमिः पादौ जलं साक्षाद्गुह्यं तेयं जाठरो ऽनलः ।
वह्निः प्राणो महान्वायुरुदरं व्योमसंज्ञकम् ।
दिशः श्रोत्रं करश्चेन्द्रश्चन्द्रसूर्याग्निदेवताः ॥
नेत्राणि द्यौः शिरः साक्षान्मुखानि मम सत्तम ।
पञ्च तेषु श्रुतिः साक्षान्मुखमेकं सुशोभनम् ॥
स्मृतयश्च पुराणानि भारतप्रमुखानि च ।
वेदमूलानि चान्यानि द्वितीयं मे मुखं द्विज ॥
वेदशास्त्रविरुद्धा ये तर्कास्ते पण्डितोत्तम ।
तृतीयं मे मुखं साक्षाच्छलजात्यादयो मम ॥
मुखं चतुर्थं तन्त्राणि मुखं मे पञ्चमं बुध ।
तेषु यत्प्रथमं प्रोक्तं मुखं वेदसमाह्वयम् ॥
तत्समर्थं मुखं साक्षात्संसारस्य निवर्तने ।
निर्मला निस्पृहा विप्राः सुव्रताः सत्यवादिनः ॥
तन्मुखं परिपश्यन्ति तेषामेव परा गतिः ।
तन्मुखं ये न पश्यन्ति पापिष्ठा एव ते ऽनघ ॥
न तेषां परमा मुक्तिः सत्यमेव मयोदितम् ।

मदीयं प्रथमं मुक्त्वा मुखं साक्षात्सनातनम् ॥
मुखान्तरं ये पश्यन्ति ते न पश्यन्ति मामपि ।
इह पश्यन्ति मां सर्वे ब्राह्मणा दग्धकिल्बिषाः ॥
मदीयं मुखमास्थाय प्रत्यगात्मतयैव तु ।
प्रत्यगात्मा खलु ब्रह्मसमानः स्वहमद्वयः ॥
अब्रह्मत्वं यतो दृष्टं पराग्रूपस्य वस्तुनः ।
प्रत्यगात्मा शरीरस्य कारणस्याखिलस्य च ॥
प्राणस्य मनसः साक्षी न साक्ष्यः सर्वदा खलु ।
प्रत्यक्त्वं नाम साक्षित्वं समस्तस्याविशेषतः ॥
आत्मतानात्मवित्त्वं हि केवलं परमास्तिक ।
साक्षिणो नैव साक्ष्यत्वं साक्षित्वादेव सिध्यति ॥
साक्ष्यत्वे सति साक्षित्वं तस्य गच्छति कुड्यवत् ।
अथ भेदेन साक्ष्यत्वं साक्षिणश्च भवेद्यदि ॥
साक्ष्यांशस्तस्य नात्मा स्याद् घटवत्पण्डितोत्तम ।
अंशभेदे ऽपि सांशत्वाज्जन्मनाशौ च सिध्यतः ॥
तस्य जन्म विनाशाभ्यामनात्मत्वं घटादिवत् ।
साक्ष्यरूपत्वमेवास्यकेवलं विद्यते यदि ॥
साक्ष्यरूपत्वमेवास्य विना साक्षिणमस्ति न ।
प्रत्ययव्यतिरेकेण न साक्षी नाम कश्चन ॥
अस्ति प्रत्ययकर्मत्वंमेव साक्षित्वमात्मनि ।
इति चेत्कर्मभूतस्तु प्रत्ययस्य घटादिवत् ॥
अनात्मैव भवेदात्मा नान्यः कश्चन विद्यते ।
कर्मभूतो ऽथ वा कर्ता प्रत्ययस्य पुमान् भवेत् ॥

नैरात्म्यवादः संप्राप्तः तस्य नास्ति निवर्तकः ।
यदि प्रत्यय एवात्मा स नित्यो ऽनित्य एव वा ॥
नित्यो वेद्यो ऽथवा ऽवेद्यो वेद्यः कुड्यसमो भवेत् ।
अवेद्यः स्वप्रकाशो वास्वप्रकाशो ऽथ वा मुने ॥
अस्वप्रकाशो वेद्यो यः प्रत्ययो ऽसत्समो भवेत् ।
अवेद्यः स्वप्रकाश्चेत्स एवात्मा न चापरः ॥
नित्यो वेद्यः स्वयंज्योतिः प्रत्ययो हि परः पुमान्
अनित्यो यदि सोनित्यः प्रत्ययः परमास्तिक ॥
अवेद्यो ऽप्यथ वा वेद्यः स्वप्रकाशो न वा मुने ।
यद्यवेद्यः स्वयं नास्ति प्रत्ययः शुद्धशून्यवत् ॥
शुद्धशून्यः सदा वेद्यः खलु वन्ध्यासुतो द्विज ।
यदि वेद्यस्तदागस्त्य स्वेन वेद्यः परेण वा ॥
स्वेन चेदेकरूपश्च वेत्ता वेद्यः कथं भवेत् ।
रूपान्तरेण वेद्यश्चेद्वेतृरूपान्तरं तु तत् ॥
नित्यत्वेनैव चेद्दिष्टं स एवात्मा न चापरः ।
अनित्यत्वेन चेद्दिष्टं तस्यानित्यत्वमास्तिक ॥
स्वेन वेत्तुमशक्यं स्याद्द्विज स्वयमभावतः ।
अन्येनापि न वेद्यः स्यादन्याभावान्निरूपणे ॥
अन्यसिद्धौ तु तेनैवानित्यता ज्ञायते ऽस्य तु ।
अनित्यत्वे ऽस्य विज्ञाते सिद्धिरन्यस्य सत्तम ॥
परेण वेद्यश्चेत्तच्च पराभावान्निरूपणे ।
भिन्नयोर्भेदविज्ञानं भेदे ज्ञाते भिदा तयोः ॥
जायते स्वप्रकाशश्चेत् स्वप्रकाशस्य वस्तुनः ।
अनित्यता न सिध्येत सत्ताकालेतु सत्खलु ॥

प्रागभावादिविज्ञाने ऽनित्यता ज्ञायते ऽस्य तु ।
अनित्यत्वे तु विज्ञाते प्रागभावादिवेदनम् ॥
प्रागभावादिविज्ञानमन्येनास्य भवेद्यदि ।
अन्यभावान्न तद्युक्तं पुरोक्तेनैव वर्त्मना ॥
स्वयं प्रकाशो नित्योऽयः प्रत्ययः प्राग्र आस्तिक ।
स आत्मैव भवेत्साक्षात्प्रत्ययो न तु केवलम् ॥
अतश्च प्रत्ययादन्यस्त्ववेद्यः प्रत्ययेन च ।
परिपूर्णः स्वतश्चित्त्वाच्चैन्यासत्याश्रयस्त्वतः ॥
अपि सत्यः परानन्दः परप्रेमास्पदत्वतः ।
जन्मनाशादिसाक्षित्वाज्जन्मनाशादिवर्जितः ॥
कर्तृत्वादेश्च साक्षित्वात्कर्तृत्वादिविवर्जितः ।
सुखदुःखादिसाक्षित्वात्सुखदुःखादिवर्जितः ॥
वर्णाश्रमादिसाक्षित्वाद्वर्णादिविकलः सदा ।
जाग्रदादित्रिधामस्य साक्षित्वात्तद्विवर्जितः ॥
त्रिधामबुध्यपेतस्य तुरीयत्वस्य सत्तम ।
साक्षित्वादेव तद्धीनः केवलः परमास्तिक ॥
प्रमातृत्वस्य संवित्वात्प्रमातृत्वविवर्जितः ।
प्रमाणादेश्च साक्षित्वात्प्रमाणादिविवर्जितः ॥
बुभुत्सायाश्च साक्षित्वाद् बुभुत्सुत्वविवर्जितः ।
रागद्वेषादिसाक्षित्वाद्रागद्वेषविवर्जितः ॥
ज्ञाताज्ञातार्थसाक्षित्वाज्ज्ञाताज्ञातार्थवर्जितः ।
भावाभावादिसाक्षित्वाद् भावाभावादिवर्जितः ॥
अज्ञो ऽहमिति भातस्य मुने ऽज्ञानस्य वस्तुनः ।
अज्ञानाश्रयतत्कार्यदृश्यहंकारवस्तुनः ॥

जानामीतिप्रतीतस्य ज्ञातस्य च तथैव च ।
अविशेषेण संसारप्रवाहस्य च सत्तम ॥
साक्षित्वादेव तद्भीनः प्रत्यगात्मास्ति सर्वथा ।
एवंरूपात्परं ब्रह्म विभिन्नं प्रत्यगात्मनः ॥
वस्तुतो यदि तद्विद्वन्न ब्रह्म स्याद्घटादिवत् ।
अतः प्रत्यक् स्वयं ज्योतिःस्वरूपात्मैव केवलम् ॥
ब्रह्म वस्तु स एवाहं य एव सकलं जगत् ।
व्यावहारिकदृष्ट्यैव मुने साक्ष्यस्य वस्तुनः ॥
सद्भावस्तस्य साक्ष्यस्य साक्षिरूपेण केवलम् ।
वेदावसानविज्ञानविनाशादूर्ध्वमास्तिक ॥
मिथ्यात्वं तत्त्वदृष्ट्या तु तस्य साक्ष्यस्य वस्तुनः ।
प्रकाशाव्यभिचारेण प्रकाशैक्यं परात्मनः ॥
समा द्वितीयतां सम्यग्विदित्वाचार्यपूर्वकम् ।
विलाप्य वेदनं वापि प्रकाशाव्यभिचारतः ॥
प्रकाशस्वात्मरूपेण स्वयं तिष्ठति तत्त्ववित् ।
एवंरूपं यदि ज्ञानं वेदादेव न चान्यतः ॥
अतः सर्वं परित्यज्य वेदमेकं समाश्रयेत् ।
मदीयं प्रथमं साक्षान्मुखं वेदसमाह्वयम् ॥
प्रत्यगात्मतया सम्यक् प्रकाशयति मामिह ।
तत्त्वमस्यादिवाक्येन प्रत्यक्षं करबिल्ववत् ॥
स्वयंप्रकाशमात्मानं बोधाबोधावभासकम् ।
यद्बोधयति तद्वाक्यं तत्प्रत्यक्षं ब्रवीति हि ॥
प्रतिपन्ना स्वयं विद्वन् प्रतिपन्नः सदा खलु ।
स्वयमप्रतिपन्नश्चेत्प्रतिपत्तापि सत्तम ॥

कः प्रमित्सति तद् ब्रह्म भूयिष्ठं सुविचार्य तु ।
बुभुत्सुत्वेन हे विद्वन् बोद्धव्यस्य विभाति यः ॥
पुरस्तादेव सर्वस्य स प्रत्यक्षः स्वयं सदा ।
यः प्रत्यक्षतमः साक्षात्स्वानुभूत्यैव केवलम् ॥
तं कथं प्रत्यगात्मानं परोक्षं वदति श्रुतिः ।
अपरोक्षतमं साक्षात्परोक्षं वक्ति चेच्छ्रुतिः ॥
कथं मानं भवेद्ब्रूहि वदन्ती स्वार्थमन्यथा ।
स्वाज्ञानादन्यसंसर्गादपि स्वात्मानमन्यथा ॥
विजानन् राजपुत्रस्तु परेण प्रतिबोधितः ।
अज्ञानमन्यथाज्ञानमपि त्यक्त्वा स्वयं पुनः ।
अपरोक्षं यथा वेद स्वात्मानं क्षत्रियं तथा ॥
ब्रह्मभूतः स्वयं मोहादेहाद्यन्याभिसंगमात् ।
संसारीव स्वमात्मानं विजानन् वेदवाक्यतः ॥
प्रबोधितः स्वामात्मानं ब्रह्मरूपतयैव तत् ।
अपरोक्षं विजानाति विलाप्याज्ञानमात्मनि ॥
अतीन्द्रियोऽर्थो धर्मादिः प्रमातुः प्रत्यगात्मनः ।
स्वयं व्यवहितत्वेन परोक्षं प्रतिपद्यते ॥
अनुमानादिगम्यस्तु प्रमेयः प्रत्यगात्मनः ।
लिङ्गादिव्यवधानेन परोक्षं प्रतिभासते ॥
प्रमातुरिन्द्रियैरर्थो विभात्यव्यवधानतः ।
अन्येभ्योऽतः कुसूलादिप्रत्यक्षस्तूपचारतः ॥
अपरोक्षं तु यद्वस्तु प्रमात्रव्यवधानतः ।
तद्धि प्रत्यक्षमित्युक्तं प्रत्यक्षज्ञैर्मनीषिभिः ॥

मातुर्माता स्वरूपत्वात्सदा ऽव्यवहितः स्वयम् ।
अतः प्रत्यक्षतः प्रोक्तः प्रत्यगात्मा स्वयंप्रभः ॥
प्रमातृव्यवधानेन केवलेन मुनीश्वर ।
प्रमातृमानसंबन्धात्प्रत्यक्षं कथ्यते घटः ॥
उपमाने ऽपि हे विप्र प्रमात्रव्यवधानतः ।
अर्थः प्रत्यक्षवद्भाति तथाभावे ऽपि निर्णयः ॥
इन्द्रियं करणं प्रोक्तं प्रत्यक्षस्य मनीषिभिः ।
सदृशं करणं प्रोक्तमुपमानस्य सत्तम ॥
एवं लक्षणभेदेन भिदा मानस्य कीर्तिता ।
प्रत्यक्षे चोपमाने च प्रमातरि च सत्तम ॥
प्रमात्रव्यवधानं हि केवलं सूक्ष्मदर्शने ।
अपरोक्षावभासः स्यात्कारणं नापरं बुध ॥
धर्मादावनुमाने च तथार्थापत्तिसंज्ञिते ।
प्रमातृव्यवधानं हि पारोक्ष्यस्य तु कारणम् ॥
सामान्यग्रस्तसत्यार्थबोधकं यन्महामुने ।
परोक्षमेव तत्स्वार्थं प्रबोधयति नान्यथा ॥
अन्तरेण च सामान्यग्रस्तत्वं यत्प्रमाणकम् ।
प्रबोधयति तत्स्वार्थमपरोक्षं न चान्यथा ॥
निःसामान्यविशेषस्य ब्रह्मणः प्रतिपादकम् ।
वेदवाक्यं मुने स्वार्थमपरोक्षतयैव हि ॥
एवं के चन विद्वांसः प्रवदन्ति महामुने ।
तदापि ब्रह्मविज्ञानमपरोक्षं न संशयः ॥
अभावो वेदसिद्धान्ते न प्रमाणमिति स्थितिः ।
परपक्षानुसारेण कदा चिन्मानमुच्यते ॥

अतश्च प्रत्यगात्मानमपरोक्षतमं बुध ।
बोधयत्यपरोक्षं हि श्रुतिस्तत्त्वमसीति सा ॥
एकत्वमेव वाक्यार्थः साक्षाद्ब्रह्मात्मनो बुध ।
नेतरत्सत्यमेवोक्तं संदेहं त्यज सत्तम ॥
एकत्वं पश्यतः साक्षात्संसारः प्रविनश्यति ।
श्रुतयः स्मृतयः सर्वास्तथैव प्रवदन्ति हि ॥
अतो मदीयमास्थाय मुखं वेदसमाह्वयम् ।
इहैव परिपश्यन्ति द्विज मां प्रत्यगात्मनि ॥

॥ इतिसप्तदशोऽध्यायः ॥

( शेषमग्रे )

## सटीकसंक्षेपशारीरकम् ।

( *Continued from page* 320. VOL. V. )

मू० ॥ अस्त्यस्म्यसीति च पदं प्रचुरं क्रियाया
वेदान्तवाक्यगतमादरतः पठन्ति ॥
तन्मात्रतः सकलवेदशिरःपदानां
संघातसिद्धिरिति वेदशिरोनिषण्णाः ॥ २८३ ॥

टी० ॥ विवक्षितार्थानुगुणं क्रियापदं वेदान्ते किमस्तीत्यपेक्षायामाह । अस्त्यस्म्यसीति । अस्ति ब्रह्मेति चेद्वेदाहं ब्रह्मास्मि तत्त्वमसीत्यादौ क्रियायाः पदमस्तीत्यादितिङन्तपदमित्यर्थः । प्रचुरमनेकमिति पदविशेषणं तस्यावेदत्वशङ्कानिवृत्तये आदरत इत्युक्तम् । फलितमाह । तन्मात्रत इति । वेदशिरोनिषण्णाः समन्वयसूत्रकृद्वादरायणभगवत्पादप्रभृतयः ॥ २८३ ॥

मू० ॥ यत्तु प्रमाणमनुभूतिरिति प्रमाण-
सामान्यलक्षणमनूद्य पुनर्वदन्ति ॥

सत्ताप्रमाणघटनां प्रति योग्यतातो
नास्त्यर्थनिष्ठवचनेष्वनपेक्षतेति ॥ २८४ ॥

टी० ॥ नन्वेवं वेदान्तानामस्त्यर्थनिष्ठत्वेन सैव मानान्तरसापेक्षता स्यात् । अस्त्यर्थो हि सत्ता सा च प्रमाणविषयत्वमेव न तदतिरिक्तसत्ता जात्यादि सत्तादेरसत्त्वप्रसङ्गात् । ततश्च तदात्मकब्रह्मणो मनान्तरविषयत्वमावश्यकमिति प्रभाकराः तदनुवदति । यत्त्विति । तदुक्तविधया तन्मतमनुपपन्नमिति दूषयितुं तदुक्तं प्रकारमाह । प्रमाणमनुभूतिरिति । अनुभूतिः प्रमाणमिति प्रमाणसामान्यलक्षणमुक्त्वा पश्चात्प्रमाणविषयतां योग्यता सत्तेति यद्वदन्ति तद्दुर्घटमित्यग्रिमेण संबन्धः । तेषामेव वदतामाशयमाह । अतो नेति । अनपेक्षता न स्यादिति संबन्धः ॥ २८४ ॥

मू० ॥ तद्दुर्घटं न खलु संविदियं स्वयोग्या
न ह्यात्मनि स्थितिमुपैष्यति योग्यताऽस्याः ॥
वस्त्वन्तरोपनिहितस्वपदत्वहेतो
र्न ह्यात्मरूपदहने दहनस्य शक्तिः ॥ २८५ ॥

टी० ॥ दुर्घटत्वमेवाह । न खल्विति । किं संविद्विषयत्वं सत्त्वं उत तद्योग्यता नाद्यः तत्पूर्वमर्थस्याऽसत्त्वप्रसङ्गात् । द्वितीये च संविदि सा ऽस्ति वा न वा । आद्ये किं स्वविषयत्वस्य योग्यता किं वा संविदन्तरविषयत्वस्य द्वितीये संविदोऽस्वप्रकाशत्वापत्तिरित्यभिप्रेत्याद्याभावे हेतुमाह । न हीति । अस्याः संविदो योग्यता एतद्विकल्पितविषयत्वस्य योग्यता आत्मनि स्वस्मिन् स्थितं नोपैष्यति न युज्यत इत्यर्थः । कुतो न युज्यते तत्राह । वस्त्वन्तरेति । स्वस्मादन्यस्मिन्नेव घटादावुपनिहितमुपस्थितं यत्स्वपदत्वं स्वविषयत्वं तस्माद्धेतोरित्यर्थः । संविद्विषयत्वस्य तदन्यवृत्तित्वनियमात्तस्यां तन्न संभवतीत्यर्थः । संविदः स्वगोचरत्वाभावे दृष्टान्तमाह । न हीति । आत्मरूपदहने स्वभस्मीकरण इत्यर्थः ॥ २८५ ॥

मू० ॥ संवित्प्रमाणघटनां प्रति योग्यतां चे-
न्नेयं बिभर्ति न सती भवितुं समर्था ॥

तद्योग्यतैव यदि मातृघटादिसत्ता

तस्याप्यसत्त्वमिति शून्यमुपाजिहीथाः ॥ २८६ ॥

टी० ॥ संविदि सा योग्यता नेति द्वितीयं पक्षमनूद्य प्रतिक्षिपति ॥ संवित्प्रमाणेति । घटनां संबन्धं विषयत्वमिति यावत् । संविदि प्रमाणविषयत्वयोग्यताभावे इयं सती न स्यात् । प्रमाणविषयत्वयोग्यताया एव त्वन्मते वस्तुनः सत्तारूपत्वादित्यर्थः । अस्तु तद्वदसती सेति चेत् न तदननुभवप्रसङ्गात् किं चैवं तदधीनसत्त्वं सर्वमेवासत्स्यादित्याह । तद्योग्यतैवेति । शून्यमुपाजिहीथाः शून्यमागच्छेः त्वमपि शून्यवादी भविष्यसीत्यर्थः ॥ २८६ ॥

मू० ॥ वस्तुस्वभाव इति सत्त्वमतो गृहाण

तच्च द्विधेति वितथाऽवितथत्वभेदात् ॥

सत्त्वं द्विरूपमितरेतरसंकरेण

सच्छब्दवाच्यमिति च व्यवहारकाले ॥ २८७ ॥

टी० ॥ यतो मानयोग्यता न सत्त्वम् अत इत्युपसंहरति । वस्तुस्वभाव इति । बाधायोग्यवस्तुस्वभाव इत्यर्थः । अतः सत्त्वं वस्तुस्वभाव इति गृहाणाङ्गीकुर्विति संबन्धः । ननु किमात्मवस्तुनः स्वभावः किं वा प्रपञ्चस्योतोभयस्य वा नाद्यद्वितीयौ प्रपञ्चात्मनोस्तदभावप्रसङ्गात् तृतीये तु द्वैतापात इत्याशङ्क्याकाशादावस्तितेत्यादावुक्तमनुस्मारयन्नाह ॥ तच्च द्विधेति । गृहाणेत्यनुषङ्गः द्वैविध्यमेवाह । वितथेति । वितथमसत्यं वस्तुतः व्यवहारकाले सदवितथं परमार्थसदितिभेदादित्यर्थः । नन्वेवमस्तिशब्दस्यानेकार्थताऽऽपत्तिरित्याशङ्क्याह । इतरेतरेति । संकरेण मिश्रेण तृतीयेत्थंभावे शबलात्मना तत्सच्छब्दवाच्यमिति गृहाण अतो नोक्तदोष इत्यर्थः ॥ २८७ ॥

मू० ॥ उत्सृज्य तत्र वितथांशमथेतरस्मिन्

संवित्स्वरूपपरमार्थसति स्वरूपे ॥

बुद्धिं कुरु प्रणिदधत्प्रणयेन भूम्नि
ब्रह्माहमस्मि परमार्थसदित्यजस्रम् ॥ २८८ ॥

टी० ॥ तर्ह्यसत्यर्थ आत्मा द्विरूपः स्यादित्याशङ्क्य प्रागुक्तमेवार्थं स्मारयति । उत्सृज्येति । तत्र वाच्येतरस्मिन्स्वरूपइति संबन्धः तत्स्वरूपमाह ॥ संवित्स्वरूपेति । एतच्च परमार्थत्वे हेतुतयोक्तम् । एवंभूतस्वरूपे भूम्नि प्रणयेन श्रद्धया प्रणिदधत् चित्तं प्रत्यक्प्रवणं कुर्वन् परमार्थसद्ब्रह्माहमस्मीति बुद्धिमजस्रं कुर्विति संबन्धः । तथा च नोक्तदूषणमिति भावः ॥ २८८ ॥

मू० ॥ ब्रह्म स्वयंप्रभमतः शबलेषु तस्य
मानान्तरानधिगतेष्वपि शब्दशक्तिः ॥
रूपेषु वृद्धजनसंव्यवहारहेतोः
शक्या गृहीतुमुदितेन यथाऽनभिज्ञैः ॥ २८९ ॥

टी० ॥ यच्चोक्तं मानान्तरं यदि न चेच्छति शब्दशक्तेस्तत्र ग्रहः कथमिति प्रतिपादनीयमिति तत्राह । ब्रह्मस्वयंप्रभमिति । ततः किं तत्राह । अतः शबलेष्विति । एतच्चाहमादिशब्दवाच्यसाक्षिभास्याऽहंकारतद्वृत्तिशबलाभिप्रायं सदादिवाच्यघटादिशबलं तु चक्षुरादिग्राह्यं ब्रह्मपदवाच्यं च कार्यलिङ्गाख्यतर्केण ब्रह्मपदावयवव्युत्पत्त्या चोपस्थितमेव तदभिप्रायेणाऽपिशब्दः मानान्तरानधिगतेषु शबलेषु तस्य रूपेष्विति संबन्धः । उदितेन प्रागुक्तेन मार्गेणानभिज्ञैः अविवेकिभिः यद्यपि वाक्यतात्पर्यगम्ये ब्रह्मणि किमपि मानं न प्रवर्त्तते तथापि तस्य शबलेषु यथा प्रमाणं यथाऽनुभवं च संगतिं ग्रहीतुं शक्यतइति न तदर्थमपेक्षितप्रमाणेन वेदान्तानामनुवादता न वा संगतिग्रहविरह इति भावः ॥ २८९ ॥

मू० ॥ लोकप्रसिद्धार्थपदान्तराणां
समीपसंकीर्तनतोऽपि शक्तिः ॥
ब्रह्मादिशब्दस्य सुखावसेया
यथा हि यूपादिगिरस्तथैव ॥ २९० ॥

टी० ॥ ब्रह्मादिपदव्युत्पत्तावुपायान्तरं सदृष्टान्तमाह । लोकप्रसिद्धेति । यतो वा इमानि भूतानि जायन्तइत्यादि तद्विजिज्ञासस्व तद्ब्रह्मेति वाक्ये ब्रह्मपदव्यतिरिक्तानां यतो वेत्यादिपदानां लोकप्रसिद्धार्थानां समीपे संकीर्तनेनापि तर्कविधयोपस्थिते जगत्कारणरूपेऽद्वयेऽर्थे ब्रह्मादिशब्दस्य शक्तिः सुखावसेया भवति । यथा यूपं तक्षति यूपमष्टास्रौ करोतीत्यादिप्रसिद्धार्थतक्षणादिवाचकपदसमभिव्याहारसामर्थ्यात्तक्षणादिसंस्कारविशिष्टो यूपशब्दार्थः ॥ एवमाहवनीयमादधातीत्यादिवाक्य आधानसंस्कारवानग्निराहवनीयशब्दार्थ इति निश्चीयते तथैवेत्यर्थः ॥ २९० ॥

मू० ॥ विना ऽपि शक्तिग्रहणं पदानां
परात्मनोर्वाचकभावभाजाम् ॥
भवेत्परब्रह्मणि वेदवाक्या-
त्प्रतीतिरन्यप्रतिषेधनेन ॥ २९१ ॥

टी० ॥ इदानीं ब्रह्मादिपदानां शक्तिग्रहाभावेपि निखिलप्रपञ्चनिवारकनिषेधवाक्यसामर्थ्यान्निष्प्रपञ्चं ब्रह्म सिध्यतीति स्वासंमतमपि पक्षमाह । विनापीति । परः परमात्मा आत्मा च तयोर्वाचकभावभाजां वाचकत्वयुक्तानां पदानामिति संबन्धः ॥ अन्यस्य ब्रह्मातिरिक्तप्रपञ्चस्य नेह नानेत्यादिप्रतिषेधनेनेत्यर्थः ॥ २९१ ॥

मू० ॥ नञः प्रपञ्चप्रतिपादकस्य च
प्रतीत्य शक्तिं व्यवहारतः स्थितः ॥
पदस्य शक्नोति परं समीक्षितुं
श्रुतेः प्रपञ्चप्रतिषेधमार्गतः ॥ २९२ ॥

टी० ॥ ननु न तावद्ब्रह्मणि प्रमाणान्तरेण प्रतिषेधः संभवति शब्दस्तु शक्तिग्रहमपेक्षतइति कथं विनापि शक्तिग्रहणमित्युक्तमित्याशङ्क्य नञादिपदानां लोकप्रसिद्धार्थत्वेन विनापि ब्रह्मणि पदशक्तिग्रहं तदुपपद्यतइत्याह ॥ नञः प्रपञ्चप्रतिपादकस्येति ॥ स्थितः पुमान् नञः

पदस्य नाना किं च नेत्यादिनिषेध्यप्रपञ्चप्रतिपादकस्य च पदस्य व्यवहारतः शक्तिं प्रतीत्येति संबन्धः । स्थित इति अर्थाद्व्यवहारभूमाविति लभ्यते । परं परमात्मतत्वं श्रुतेर्वेदान्तवाक्यात्प्रपञ्चप्रतिषेधमार्गतः समीक्षितुं शक्नोतीति योजना । अत्र यदि परमात्मनि शक्तिग्रहो नापेक्षते तर्हीह एव इत्यादिपदैः परमात्मानमनूद्य तत्र कथं प्रपञ्चो निषिध्येत न हि निरधिष्ठानो निषेधः पर्यवस्यति ततो वा कथमात्मा सिध्येत् ॥ नन्वात्मा स्वप्रकाश इति चेत्तर्हि किं प्रपञ्चनिषेधेनापि तस्य निष्प्रपञ्चतासिद्धये तन्निषेध इति चेन्न । तदनूद्य निषेधाभावे कथं तस्य तदपि सिध्येत् । इहेत्यादिपदस्य तत्र संगतिग्रहे च किमपराद्धं ब्रह्मात्मादिपदैः सत्यादिपदलक्षणां विना वर्णितब्रह्मस्वरूपासिद्धेश्चेत्येतन्मतं न ग्रन्थकर्तृसंमतमिति द्रष्टव्यं ॥ २९२ ॥

मू० ॥ ब्रह्मास्मीति वचोनिविष्टपदयोर्मानं भवेदन्वयः
साक्षादद्वयवस्तु तस्य च भवेन्मेयं ततस्तद्गतेः ॥
यद्यत्र प्रमितिं करोति भवति प्रामाण्यमत्रास्य च
स्पष्टं दृष्टमिदं हि युक्तिघटितं रूपे यथा चक्षुषः ॥ २९३ ॥

टी० ॥ एवमात्मस्वभावस्यैव सत्त्वात्तस्य चोक्तविधया मानान्तरायोग्यत्वात्तच्छबले ब्रह्मादिपदसंगतिग्रहस्यापि सुकरत्वात्प्रत्यग्ब्रह्मणि वेदान्तप्रामाण्यमबाधितमिति तयोर्मानमेयभावसिद्धिरित्याह । ब्रह्मास्मीति । ब्रह्मास्मीति पदयोरन्वय इति संबन्धः मानमिति जननयोग्यः साक्षादपरोक्षं प्रत्यगभिन्नमिति यावत् । तस्य च ब्रह्मास्मीति वचनस्य चावधारणे भवेदेवेति संबन्धः मेयमिति विषयतायोग्यं उभयत्र प्रमाणादि । तत इति । तस्माद्वचस इत्यर्थः । तस्याद्वयवस्तुनः गतेः अवगतेरित्यर्थः । ततश्चायोग्यात् फलानिष्पत्तेः तदुभयं तद्योग्यमित्यर्थः । एतस्याप्रमाणे व्यभिचारमाशङ्क्य प्रमाणसामान्यलक्षणं कथयन्त्तं परिहरति । यद्यत्रेति । यत्करणं यस्मिन्नर्थे प्रमितिमबाधिताज्ञातार्थावबोधं करोति अत्रार्थे अस्य प्रामाण्यं प्रमाजननयोग्यत्वं भवत्येव इदं हि स्पष्टं दृष्टं युक्तिघटितं च

एतदेवोदाहरणविशेषे दर्शयति । रूपे यथा चक्षुष इति ॥ यदनधिगतं अबाधितं येन निश्चीयते तत्र तत्प्रमाणमिति हि प्रमाणसामान्यलक्षणं यथा तादृशरूपादौ चक्षुरादि नैवमप्रमाणमिति भावः ॥ २९३ ॥

मू० ॥ मानान्तरानधिगतं परिनिष्ठितं य-
द्वेदः समर्पयति चेतसि तत्परः सन् ॥
तत्तथ्यमेव भवतीति समाश्रयस्व
श्रेयस्करो विधिगिरोवगतो यथैव ॥ २९४ ॥

टी० ॥ प्रमाणसामान्यलक्षणं प्रकृते दर्शयन्फलमाह ॥ मानान्तरानधिगतमिति ॥ यद्ब्रह्म तदन्यद्वा वेदस्तत्तात्पर्यवान् भूत्वा मनान्तरानधिगतं परिनिष्टतमपि यच्चेतसि समर्पयति बोधयति तत्तथ्यमेवाबाध्यमेव भवतीति समाश्रयस्व यथैव विधिवाक्यादवगतो धर्म इति संबन्धः अत्रोपास्यगुणसंसर्गस्य व्यावृत्तये तत्पर इत्युक्तम् । वेदतात्पर्यगोचरविपरीतयाहिण एवामानत्वात्तदर्थोऽबाधित एवेति वेदस्तत्र प्रमाणमेवेति भावः ॥ २९४ ॥

मू० ॥ निष्पन्नमेव यदि वा पुरुषप्रयत्न-
निष्पाद्यमस्तु तदनङ्गमिह प्रमेये ॥
एवं विधिर्भवतु शब्दसमन्वयो वा
प्रामाण्यकारणमिदं न वदन्ति सन्तः ॥ २९५ ॥

टी० ॥ ननु कार्ये कार्यवाक्यवद्ब्रह्मवाक्यं तत्र कथं प्रमाणं स्यात्कार्यत्वस्य शब्दमेयत्वे तद्वचनत्वस्य शब्दप्रमाणत्वे च प्रयोजकत्वात् । न चाकार्यत्वमेव वेदार्थत्वे प्रयोजकमेवं वेदस्य प्रमाणत्वेऽपि तद्वचनत्वमेव प्रयोजकमस्तु न कार्यत्वादीति वाच्यम् । प्रयोजकगौरवापातादिति चेच्च त्वन्मतेऽपि महाजनाश्रितवेदान्तप्रामाण्यतदर्थबाधप्रसङ्गाच्चोभयमपि प्रयोजकं किं त्वदन्यदेवेत्यभिप्रेत्याह । निष्पन्नमिति । यदि यदित्यर्थः । वाशब्दश्चार्थे अस्तु स्यात् यन्निष्पन्नं स्यात् यच्च पुरुषप्रयत्ननिष्पाद्यं तदु-

भयमिह वेदप्रमेयत्वे अनङ्गम् । अप्रयोजकम् । एवं विधिर्वा भवतु शब्द समन्वयः सिद्धवाक्यं वा इदमुभयं प्रामाण्यकारणमिति सन्तो न वदन्ति । अबाधितानधिगतनिश्चायकशब्दत्वस्यैव तत्प्रयोजकत्वादिति भावः अथ वा चोदनासूत्रबलात् कार्यमेव वेदार्थः चोदनैव प्रमाणमिति सिद्धं तत्कथं सिद्धवाक्यमपि प्रमाणं तदर्थोऽपि वेदार्थ इत्याशङ्क्याह । निष्पन्नमिति । निष्पन्नत्वमित्यर्थः निपातानामनेकार्थत्वाद्यदि वेतीवार्थे यथा निष्पन्नत्वं वेदप्रमेयत्वे नाङ्गं तथा तत्पुरुषप्रयत्ननिष्पाद्यत्वमपीत्विति संबन्धः। वेत्यपि दृष्टान्तार्थे शब्दसमन्वयत्वं वेदप्रामाण्यकारणमिति यथा सन्तो न वदन्ति एवमिदं त्वदुक्तमपि न भवतु । इदंशब्दार्थमाह । विधिरिति । विधित्वमित्यर्थः । यद्वा चोदनासूत्रबलात्कार्यत्वाद्येव वेदप्रमेयत्वादौ न प्रयोजकं किं तु वक्ष्यमाणमेवाऽबाध्यत्वादि युक्तं प्रमेयम् । प्रमाणमपि तादृगर्थनिश्चायकमेव तच्च सिद्धं कार्यं वा भवतु न सिद्धत्वादिमात्रं प्रमेयत्वनिमित्तम् । न वा विधित्वादि प्रामाण्यप्रयोजकमित्याशयः । अत्रानङ्गमेवेति संबन्धः । तच्चिष्पन्नमेवेत्यनन्तरं तादृगर्थनिश्चायक इतिशेषः । तस्मादबाधिताऽनधिगतश्रोतृसमीहितमेव वेदतात्पर्यगम्यं तादृगर्थनिश्चायकत्वेनैव वेदोऽपि प्रमाणम् । अन्यथा भोजनादिकार्येण विषभक्षणादिना वा तुल्यस्य त्वदभिमतकार्यस्य तद्वाक्यतुल्यचोदनायाश्च प्रमेयत्वाद्यनिर्वाहादेव च लाघवादुक्तमेव वेदप्रमेयत्वादौ प्रयोजकं चोदनासूत्राशयस्तूपरिष्टात् द्रष्टव्य इति ॥ २९५ ॥

मू० ॥ नीलैकगोचरतया नियतं न चक्षु-
नोप्यस्य पीतविषये नियमोऽस्ति शक्तेः ॥
तद्वन्न वेदवचसामपि शक्तियोगः
कार्यादिवस्तुषु कथं च न पक्षपाती ॥ २९६ ॥

टी० ॥ यद्यपि वेदः सिद्धं कार्यं च बोधयति तथापि सिद्धत्वादि वेदबोध्यत्वे न प्रयोजकं न वा तदन्यतरबोधकत्वं वेदस्य प्रामाण्ये

प्रयोजकमिति न्यायत उक्तं दृष्टान्तेनाप्याह । नीलैकगोचरतयेति । अस्य-चक्षुषः पक्षपाती कार्यमात्रगोचरः सिद्धमात्रगोचरो वा नेति संबन्धः ॥ २९६ ॥

मू० ॥ यद्बादरायणमतं परिगृह्य पूर्वं
श्रेयस्करेऽनधिगते खलु चोदनायाः ॥
प्रामाण्यमुक्तमिदमस्य समन्वयस्य
वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति ॥ २९७ ॥

टी० ॥ उक्तमर्थं जैमिनीयन्यायबलादपि दृढयति । यद्बादरायणमिति । परिगृह्याश्रित्य पूर्वतन्त्रे अस्य समन्वयस्य प्रस्तुतवेदान्तवाक्यस्य पूर्वं बादरायणमतमाश्रित्याऽनधिगते धर्मे चोदनायाः यत्प्रामाण्यमुक्तमिदमस्य समन्वयस्य वस्तुस्वरूपकथनेऽप्यविशिष्टमस्ति खल्विति संबन्धः पूर्वतन्त्रे हि जैमिनिनाऽनुपलब्धेऽर्थे तत्प्रमाणं बादरायणस्याऽनपेक्षत्वादिति सूत्रांशेनानपेक्षत्वेनैव वेदप्रामाण्यं बादरायणसंमतमित्याश्रित्य धर्मेऽप्युपदेशस्य तथैव प्रामाण्यं व्यवस्थापितं तदिहालौकिकार्थापौरुषेयवेदान्तेष्वप्यस्तीति कथं न ते ब्रह्मणि प्रमाणम् । चोदनासूत्रं तु स्वस्य विचार्यतया प्रतिज्ञातकर्मवाक्याशयेनैवेति वेदान्तानां ब्रह्मणि प्रामाण्यं जैमिनेरपि संमतमन्यथा धर्मेऽपि तन्न निर्वहेदिति भावः ॥ २९७ ॥

मू० ॥ मानान्तरानधिगतं त्ववगम्यमानं
मेयं भवेदिति हि मेयविदो वदन्ति ॥
मानान्तरानधिगते विषयेऽवबोधं
कुर्वत्प्रमाणमिति मानविदां प्रसिद्धिः ॥ २९८ ॥

टी० ॥ तस्मात्सकलप्रमाणप्रमेयसाधारणमेव रूपं वेदतदर्थयोरप्याश्रयणीयं तच्चात्राप्यस्त्येवेत्याशयेन सर्वप्रमाणप्रमेयसाधारणरूपमुक्तं भट्टाचार्यप्रभृतीनां संमतमित्याह । मानान्तरेति ॥ २९८ ॥

# ॥ माधवीयधातुवृत्तिः ॥

(Continued from page 346. Vol. V.)

लुञ्च अपनयने ॥ लुञ्चतीत्यादि पूर्ववत् । लुचित्वा । लुञ्चित्वा । 'वञ्चिलुञ्च्यृतश्चे'ति सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः । के चिदमुमुदितं पठन्ति तदनार्षं, राजदन्तादिषु लुचितमिति पाठाद् उदित्त्वे हि क्त्वायामुदितो वेतीटो विकल्पनाद् निष्ठायां 'यस्य विभाषे'ति प्रतिषेधाल्लुचितमिति न स्यात् ॥ १८६ ॥

अञ्चु गतिपूजनयोः ॥ अञ्चति । आनञ्च । अञ्चितेत्यादि । गतौ व्यत्यञ्चतीत्यत्र न गतिहिंसेति तङ्निषेधः । पूजायां तु 'नाञ्चेः पूजायामि'ति नलोपनिषेधादञ्च्यते गुरुः, अञ्च्यादिति भवति । अञ्चित्वा । अङ्क्त्वा । 'उदितो वे'ति इड्विकल्पः । इटि 'न क्त्वा सेडि'त्यकित्त्वान्नलोपाभावः । निष्ठायां 'यस्य विभाषे'तीटः प्रतिषेधात्समक्तमिति,'अञ्चेरनपादान'इति निष्ठानत्वम् । अपादाने तूदक्तमुदकं कूपादिति । पूजायां तु क्त्वानिष्ठयोः 'उदितो वे'ति विकल्पं 'यस्य विभाषे'ति निषेधं च बाधित्वा'अञ्चेः पूजाया'मिति नित्यमिट् । अञ्चित्वा । अञ्चितोऽस्य गुरुः । 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्त्तमाने क्तः । मतिरिच्छा, बुद्धिर्ज्ञानं, पूजा सत्कारः, 'क्तस्य च वर्त्तमान'इति न लोकाव्ययेति निषेधं बाधित्वा कर्त्तरि षष्ठी । अस्याश्च 'क्तेन च पूजाया'मिति समासो निषिध्यते । पूजितो यः सुरासुरैरपीत्यत्र वर्त्तमानक्तेन तक्रकौण्डिन्यन्यायेन भूते क्तस्य बाधात् तृतीया चिन्त्या । यद्वा तेनेत्यधिकार, उपज्ञातइति भूते क्तेन निर्देशाद् अयं वर्त्तमानक्तेन न बाध्यतइति सामान्येन ज्ञापकाश्रयणेनायं प्रयोगः समर्थनीयः । तैलमुदच्यतेस्मिन्निति तैलोदङ्कश्चर्ममयस्त्रिकाष्ठिः । 'उदङ्कोमुदक'इति घञ्निपात्यते । उदके तूदकोदञ्चनम् । ल्युट् । पुंसि संज्ञायामिति घस्तु न प्रत्युदाहृतः, घघञो रूपे स्वरे वा विशेषाभावात् । घञोपि कृदुत्तरपदप्रकृतिस्वरमाद्युदात्तत्वं बाधित्वा 'थाथघञ्क्ताजबित्रकाणा'मिति उत्तरपदं घञन्तोदात्तमेव । प्रत्यञ्चतीति प्रत्यङ् । ऋत्वि-

गित्यादिना क्विनि अनिदितामित्यादिना नलोपे सौ उगिदचां सर्वनामस्थाने इति नुमि हल्ङ्यादिसंयोगान्तलोपयोः 'क्विन्प्रत्ययस्य कु'रिति कुत्वं ङकारः, प्रत्यङ्ङावित्यादि । भसंज्ञायां तु । 'अचः' । लुप्तनकारस्याञ्चतेरकारस्य लोपो भसंज्ञायामित्यल्लोपे 'चौ' । लुप्तनकारेऽञ्चतौ परे पूर्वपदस्य दीर्घ इति दीर्घे प्रतीच इत्यादि, हलादौ जश्त्वे प्रत्यग्भ्यामित्यादि । प्रत्यक्ष्वित्यत्र 'खरि चे'ति चर्त्वम् । नपुंसके तु स्वमोर्लुकि प्रत्यक् । द्विवचनबहुवचनयो'र्नपुंसकाच्चे'ति शीभावे भत्वे पूर्ववदल्लोपदीर्घयोः प्रतीची । 'जश्शसोः शि'रिति तस्य सर्वनामस्थानत्वाद् 'नपुंसकस्य झलच'इति नुमि प्रत्यञ्चि । शेषं पूर्ववत् । स्त्रियां प्रतीची । 'अञ्चतेश्चोपसंख्यान'मिति ङीपि भत्वे पूर्ववदलोपदीर्घत्वे । पूजायां तु सर्वत्र नकारस्य लोपनिषेधाच्छ्रवणम् । अत एव 'अचः' 'चावि'ति अल्लोपदीर्घत्वे न भवतः । प्रत्यङ्ङावित्यादि । पदत्वे संयोगान्तलोपे क्विन्प्रत्ययस्येति कुत्वं ङकारः, सप्तमीबहुवचने । 'ङ्णोः कुक् टुक् शरि' । ङकारणकारयोः पदान्तयोर्यथासंख्यं कुक्टुकौ शरि वेति कुकि 'चयो द्वितीयाः शरि पौष्करसादे'रिति वा खकारे प्रत्यङ्क्षु प्रत्यङ्ख्षु प्रत्यङ्क्ष्विति त्रीणि रूपाणि । नपुंसके शीभावे विशेषः । उत्पूर्वत्वे 'उद ईदि'ति उदः परस्य लुप्तनकारस्याञ्चतेरादेः भसंज्ञायामीकारे उदीच इत्यादि । अन्यत्सर्वं प्रत्यक्शब्दवत् । प्रतीच्यादिभ्यो 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्ताति'रिति दिगादिवृत्तिभ्यः सप्तम्याद्यन्तेभ्यः स्वार्थे वास्तातिः । दिशि दृष्टः शब्दो दिक्शब्दः । 'अञ्चेर्लुगि'त्यस्तातेर्लुक् । 'लुक् तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुक् । प्रत्यग्वसति । प्रत्यगागतः । प्रत्यग्रमणीयमित्यादि । प्रत्ययलक्षणेन तद्धितान्तत्वात् 'तद्धितश्चासर्वविभक्ति'रिति अव्ययत्वात्सुपो लुक् । अस्तातेरभावे प्रतीच्यामागतः, प्रतीची रमणीयेत्यादि । प्रागेव पुरुषः प्राचीनः । प्रागेव कुलं प्राचीनम् । प्राच्येव ब्राह्मणी प्राचीनेति 'विभाषाञ्चेरदिक्स्त्रियामि'त्यञ्चत्यन्तात् प्रातिपदिकात्स्वार्थे वा खः । अदिक्स्त्रियामित्युक्तत्वाद् दिग्वृत्तेरप्यस्तात्यन्ताद्व्ययादलिङ्गाद्स्त्रीवृत्तित्वात्खो भवति प्राचीनं दिगिति । यदा सप्तमीपञ्चम्यर्थे दस्मात् खस्तदापि

सप्तमीपञ्चम्योरर्थस्याभिहितत्वात् प्रातिपदिकार्थत्वात् प्रथमैव, प्राचीनं दिशि वसति, प्राचीनं दिश आगत इति। तथा च स्यानिवत्सूत्रे भाष्यं,- प्राचीनं ग्रामादाम्रा इति, प्राचि देशइत्यर्थः। खान्तोयं स्वभावाचपुंसकलिङ्गः, प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। 'द्युप्रागपागुदक्प्रतीचो यत्' इति शैषिको यत्। सम्यङ्। 'समः समि' इति अञ्चतावप्रत्ययान्तउत्तरपदे समः सम्यादेशः। तिर्यङ्। 'तिरसस्तिर्यलोपे' इति 'अचः' इति लोपाभावे तिर्यादेशे यण्, लोपे तु तिरश्च इत्यादि। सहाञ्चतीति सध्र्यङ्। 'सहस्य सध्रि' रित्यञ्चतावप्रत्ययान्तउत्तरपदे सध्र्यादेशः। विष्वगञ्चतीति विष्वद्र्यङ्। देवानञ्चतीति देवद्र्यङ्। 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यय' इति टेरद्र्यादेशोऽञ्चतावप्रत्ययान्तउत्तरपदे चकारात्सर्वनाम्नश्च। सर्वद्र्यङ् इत्यादि। अदसोऽद्र्यादेशे मतभेदः। 'अदसोसेर्दादु दो मः' इति असकारान्तस्यादसो दकारात्परस्य विधीयमानमुत्वमकाररेफयोर्द्वयोरपि, तथा दो म इति मत्वमपि द्वयोरपि दकारयोरिति अमुमुयङ् इति भवतीति केचित्। अदसो रेफादेशस्योकारस्य इकारापेक्षया यण् उत्वस्य पूर्वत्रासिद्धत्वाच भवति। शसादौ भत्वे 'अचः' इत्यल्लोपे 'चौ' इति अद्रेरिकारस्य दीर्घे पूर्ववदुकारस्य रेफादेशस्य यणभावे अमुमुईच इत्यादि। अपरे तूत्वमत्वे अन्त्यसदेशयोरेव रेफदकारयोरिति अदमुयङिति रूपं प्रतिपन्नाः। अत्रापि पूर्ववदुकारस्य यणभावः शसादावल्लोपादि च। अन्ये च असेरितिपदमसः सेः सकारस्यान्तिकोकारो यस्येति व्याचक्षाणा अद्र्यादेशे त्यदाद्यत्वाभावाचात्वमत्वे इति अदद्र्यङिति रूपमाहुः। तथा च श्लोकवार्त्तिकम्॥

'अदसोद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येके ऽसेर्हि दृश्यते'॥

इति। 'अञ्चु गतियाचनयोरित्यपि स्वरितेत्। विशेषणार्थो युजादौ॥ १८८॥

वञ्चु चञ्चु तञ्चु त्वञ्चु मुञ्चु म्लुञ्चु मुचु म्लुचु गत्यर्थाः॥

वञ्चति। ववञ्च। वञ्चितेत्यादि। आशीर्लिङि यासुटः किस्वादनुनासि-

कलोपे वच्यात् । विवञ्चिषति । वनीवच्यते । 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दा'मिति यङ्लुकोरभ्यासस्य नीगागमः । वनीवञ्चीति । वनीवङ्क्ति । यङो लुका लुप्तत्वाच्चलोपाभावः । वनीवक्त इत्यादौ तसादीनां ङित्त्वेन नलोपः । मायावकं वञ्चयते । विप्रलभत इत्यर्थः । 'गृधिवञ्च्योः प्रलम्भन' इति णान्ताभ्यामाभ्यामकर्त्रभिप्रायेपि तङ् । प्रलम्भनं मिथ्याफलाख्यानमतोन्यत्र वञ्चयति वञ्चयत इत्युभयं भवति । वञ्चित्वा । वक्त्वा । 'उदितो वे'तीड्विकल्पः । 'वञ्चिलुञ्च्यृतश्चे'ति सेटः क्त्वा वा कित्त्वविधानात्पक्षे नलोपः । वक्तः । वक्तवान् । 'यस्य विभाषे'त्यनिट्त्वं वञ्च्यं वञ्चन्ति वणिजः । गन्तव्यं गच्छन्तीत्यर्थः । 'ऋहलोर्ण्य'दिति ण्यति 'चजोः कु घिण्ण्यतो'रिति कुत्वं 'वञ्चेर्गता'विति निषिध्यते । अन्यत्र वङ्क्यं काष्ठमिति कुत्वं भवति । कुटिलमित्यर्थः । वक्रम् । स्फायितञ्चीत्यादिना रक् । वञ्चतीत्यादि, पूर्ववत् । चञ्चत् । चञ्चच्चेव कश्चिद् विशेषश्चञ्चत्कः । यश्च मण्यादिः स्वयमचञ्चन्नपि प्रभया चञ्चन्निव लक्ष्यते सोपि चञ्चत्कः । 'स्थूलादिभ्यः प्रकारवचने क'निति त्यच्च चञ्चद्बृहतोरुपसंख्यानात् कः । प्रकारश्च भेदः सादृश्यं च । अपरे चञ्चाबृहतोरुपसंख्यानमिति पठन्ति तृणमयः पुरुषश्चञ्चा, तत्प्रकारश्चञ्चकः । 'केण' इति ह्रस्वः । तञ्चति । तक्रम् । स्फायितञ्चीत्यादिना रक् । त्वञ्चति । मुञ्चति । म्रुञ्चति । म्रोचति । म्लोचति । अमुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चे'ति च्लेर्वा ङ् । मुम्रुचिषति । मुम्रोचिषति । म्रुचित्वा । म्रोचित्वा । 'रलो व्युपधाद्धलादेः' इति कित्त्वविकल्पः । भावादिकर्मणोरुदुपधाद्विति कित्त्वविकल्पनात् म्रुचितमनेन, म्रोचितमनेनेत्यादि । एवं म्लुचेरपि सर्वेषामुदित्त्वेन क्त्वायामिड्विकल्पनान्निष्ठायामनिट्त्वम् । वच प्रलम्भनइति चुरादौ । तञ्चू संकोचनइति रुधादौ ॥ १९५ ॥

ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे ॥ ग्रोचति । जुग्रोच । ग्रोचितेत्यादि । ग्लोचतीत्यादि म्लुचिवत् । जॄस्तम्भुसूत्रे ग्रुचिमपि के चित्पठन्ति । कोजति । खोजति । इमावपि म्लुचिवत्, अङभावो विशेषः । प्रणिकोजति । प्रणिखो-

जति । शेषे विभाषेति उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं तत्रैव सूत्रे कखादावषान्तउपदेशइति पर्युदासान्न भवति, शेषश्च गदादिव्यतिरिक्तो धातुः । शोकं, शोक्यं, घञण्यतोश्चजोः कु घिण्ण्यतोर्निष्ठायामनिटइति वार्त्तिकसूत्रेण कुत्वम् ॥ १९९ ॥

म्लुञ्च षस्ज गतौ ॥ म्लुञ्चति । मुम्लुञ्च । म्लुञ्चितेत्यादि । लुङि जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चेत्यादिना वा ऽङ्नलोपौ । अम्लुचत् । अम्लुञ्चीत् । अङ्विधौ ग्लुचिम्लुच्योरेकतरोपादानेनापि अग्लुचदम्लोचीदिति सिद्धौ उभयोपादानमर्थभेदादिति केचित् । अपरे तूभयोपादानसामर्थ्याद् म्लुञ्चेर्नेलोपो न भवतीति अम्लुञ्चदिति चतुर्थमपि रूपमाहुः । इदमुदाहरणमन्यतरोपादानेनापि रूपत्रयसिद्धेरन्यतरच्छब्दयमकर्तुमिति प्रतिपादितत्वात् । अनेकार्थत्वाद् धातूनामत्र विषये ऽर्थभेदो न प्रयोजक इति तत्र कैयटे । म्लुचित्वा । सज्जति । 'धात्वादेः षः सः'इति द्वितीयस्य सकारस्य जश्त्वेन शकारे तस्य 'झलां जश् झशि'ति जश्त्वेन जकारः । ससज्ज । सज्जितेत्यादि । सिसज्जिषति । स्तौतिण्योरेवेति नियमादषत्वं, 'हेतुमति चे'त्यत्र यदभिप्रायेषु सज्जतइति भाष्यप्रयोगादयमात्मनेपद्यपि, अतो ऽस्यात्मनेपदं दूषयन्तो वर्द्धमानक्षीरस्वाम्यादय एव दुष्टाः । अत्र सश्चमपि केचित्पठन्ति, तमांजिकोसश्चतेत्यादि च दृश्यते ॥ २०१ ॥

गुजि अव्यक्ते शब्दे ॥ गुञ्जति । जुगुञ्ज । गुञ्जितेत्यादि । गुञ्जा । 'गुरोश्च हल'इत्यकारः । गुञ्ज्यते । इदित्त्वान्नलोपाभावः । अत्र स्वामी अनिदिदित्येकइति स्वसूत्रे । सुधाकरस्तु अनिदित्पारायणेष्वपाठीत् । लक्ष्ये पुनरिदमविगीतमिति । शाकटायनस्तु द्वावपि पपाठ । गुञ्जशब्दइति तुदादौ ॥ २०२ ॥

अर्च पूजायाम् ॥ अर्चति । आनर्च । अर्चितेत्यादि । अयं युजादौ स्वरितेत् पठिष्यति । तत एवार्चतीति सिद्धे क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थं इह पाठः । अयमात्मनेपदीति शाकटायनः । प्रयोजनं तु तन्मते क्रियाफलस्याकर्तृगामित्वेपि तङ् । यः पूर्वादुदचति वाविरग्नीमुदचन्त्वाप इत्यादिदर्शनात् । अञ्च इत्येकइत्याभरणोक्तं युक्तम् ॥ २०३ ॥

म्लेच्छ अव्यक्ते शब्दे ॥ इहाव्यक्तशब्दोऽस्फुटशब्दोऽपशब्दश्च । उक्तं हि पस्पशायां 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द' इति, न म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवा इति कैयटे । म्लेच्छति । मिम्लेच्छ । म्लेच्छितेत्यादि । 'दीर्घात्' दीर्घाच्छकारे परतो दीर्घस्य तुगिति तुक् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति सप्तमीनिर्देशे पूर्वस्य षष्ठी प्रकल्प्यत इति दीर्घस्य तुगागमः । ननु तस्मादित्युत्तरस्येति पञ्चमीनिर्देश उत्तरस्य षष्ठी प्रकल्प्यत इत्युक्तत्वादिह चानवकाशया दीर्घादिति पञ्चम्या 'छे चे'त्यत्र सावकाशाया छ इति सप्तम्या एव षष्ठी प्रक्लृप्तिर्युक्ता, ततश्च तुकः कित्त्वेन छकारात्परत्वे चुत्वजश्त्वयोर्म्लेच्च्छतीति द्विचकारकं रूपं स्यात् । नैष दोषः । यतः विभाषा सेनासुराच्छायेतिनिर्देशाल्लिङ्गात् पञ्चम्या एव षष्ठी प्रकल्पयिष्यते । मिम्लेच्छिषति । मम्लेच्छ्यते । मम्लेच्छीति । मम्लेष्टि । मम्लेष्टः । मम्लेच्छति, इत्यादि, झलि व्रश्चादिना षत्वे ष्टुत्वम् । म्लेति । 'षढोः कः सी'ति कत्वे षत्वं, मम्लेश्मि मम्लेश्म इत्यत्र 'च्छ्वोः शूडनुनासिके च' छकारवकारयोर्यथासंख्यं शकारोठौ भवतोऽनुनासिकादौ प्रत्यये झलादौ च क्ङितीति छकारस्य शकारः । अयं च 'क्रमश्च क्त्वि' च्छ्वोरितिनिर्देशात्सतुक्कस्य । अन्त्यादेशस्तु न भवति नानर्थकेऽलोन्त्यस्य विधिरिति नञा ङित्करणाद्वा, अन्त्यादेशे विश्न इत्यत्रानिगुपधत्वादेव गुणाप्रसङ्गात् किं ङित्त्वेन । अत एव ङित्त्वाच्छ्वोरितिनिर्देशः सतुक्कस्येत्यपि ज्ञायते, ये तद्विधौ क्ङितीति नानुवर्तयन्ति तेषां झलादिमात्रे शकारे कृते तस्यैव व्रश्चादिना षत्वं द्रष्टव्यम् । अत्र मते तत्र छग्रहणं व्यर्थं स्यात्, वृत्तिप्रदीपे तु छस्य शादेश उक्तः, तुगभावस्त्वकृतव्यूहाः पाणिनीयाः, कृतमपि शास्त्रं निवर्तयन्तीति । म्लिष्टम् ॥ 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेष्वि'ति अविस्पष्टार्थे निपातितः । अपशब्दे तु म्लेच्छितमिति भवति, अस्य शपि पाठो म्लेच्छन्तीति 'शप्श्यनोर्नित्य'मिति नित्यनुमर्थः, शे हि विकल्पः स्यात्, स्वरे भेदः । शपि शपः पित्त्वाद् 'अनुदात्तौ सुप्पितौ' इति अनुदात्तः, शस्तु प्रत्ययस्वरेणाद्युदात्तः । एवमीदृशामन्येषामपि धातूनां विकरणभेदे फलत्रयम् । अपस्पुराद्यावपि ॥ २०४ ॥ ( शेषमेव )

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 312. VOL. V.)

४२९ दर्भमयीं रज्जुं ज्वलयित्वा तयान्वाहार्यपचनं पूर्ववदादधाति इदं दक्षिणाग्निपुनराधानमित्युच्यते ॥

४३० दर्भमयीं रज्जुं ज्वलयित्वा तया रज्वा उपोपयमनीमित्यादि अग्निनाग्ने ब्रह्मणेत्युक्त्वायत्वाक्रुद्ध इत्यृचा तते मन्युः परोप्रस्येत्यृचा मनोज्योतिरित्यृचा भृगूणामित्यादिपूर्वोक्तयजुषा च आहावनीयमादधाति इदमाहवनीयपुनराधानमित्युच्यते ॥

४३१ पूर्णाहुत्यन्तं समानं ततः पुनराधयेष्टिः आग्नेयः पञ्चकपालः समिधाग्निं दुवस्यतेह्युप्रशर्माणमित्याग्नेयावाज्यभागौ इमौ क्रमेण वृद्धिपदेन्दुपदघटितत्वाद् वृद्धिमदिन्दुमन्तौ इत्युच्येते ॥

४३२ समिधः समिधो ऽग्ने ऽग्नआज्यस्य व्यन्त्विति प्रथमः प्रयाजः, तनूनपादग्निमग्नआज्यस्य प्रधानयागानन्तरं स्रुवाज्याहुतिं सहरय्या निवर्तस्वेत्यृचा जुहोतिवेत्त्विति द्वितीयः, इळो अग्निनाग्नआज्यस्य व्यन्त्विति तृतीयः, बर्हिरग्निरग्नआज्यस्य वेत्त्विति चतुर्थः, इति चतुर्षु प्रयाजेषु विशेषः आज्यभागानन्तरं अध्वर्युः स्रुवेणाज्याहुतिं पुनरूर्जा निवर्तस्वेत्यृचा जुहोति अयं होमः पुनराधानहोम इत्युच्यते ॥

४३३ प्रधानमुपांशु आग्नेः अयाह्यग्ने क्रतोर्भद्रस्येत्यनुवाक्या आभिष्टे अद्य गीर्भिर्गृणन्त इति याज्या स्विष्टकृतः एभिर्नो अर्कैरिति पुरोनुवाक्या आग्ने तमद्याश्वं नस्तोमैरिति याज्या देवं

बर्हिरग्नेर्वसुवने वसुधेयस्य वेत्विति प्रथमो ऽनुयाजः, देवो नराशंसोऽग्नौवसुवने वसुधेयस्य वेत्विति द्वितीयः, बृद्धिमदिन्दुमन्ताविन्याचक्षते तथानुवृत्तिरिज्या चेत्याश्वलायनसूत्रात् अग्निं बृद्धिमन्तमावह अग्निमिन्दुमन्तमावहेत्यादिरीत्या आवाहननिगदादौ बृद्धिमदिन्दुमच्छद्बयोरनुवृत्तिर्भवति अन्वाहार्यमासाद्य रथं वासः अनड्वाहं दक्षिणां ददाति रथप्रतिग्रहे देवस्य त्वेत्यादिगृह्णामीत्यन्ते वैश्वानरः प्रत्नथा नाकमारुहदित्यृचं पठित्वा राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथं ते नामृतत्वमिति विशेषः । वासःप्रतिग्रहे सोमाय वासः अनडुत्प्रतिग्रहे रुद्राय गामिति च विशेषः । देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेत्विति प्रथमो ऽनुयाजः । देवो नराशंसो ऽग्नौ वसुवने वसुधेयस्य वेत्विति द्वितीयः । पौर्णमासतन्त्रम् । ब्राह्मणतर्पणान्ता इयं पुनराधेयेष्टिरित्युच्यते ॥

४३४ पुनराधेयेष्ट्यनन्तरमेवाऽन्यन्वाधानादि अग्नीवरुणाभ्यामेकादशकपालः । प्रधानमुपांशु । प्रधानस्य त्वं नो अग्ने वरुणस्य विद्वानिति पुरोनुवाक्या । स त्वं नो अग्ने वमो भवोतीति याज्या । अन्वाहार्यमासाद्य अनड्वाहं दक्षिणां ददाति प्रतिग्रहमन्त्रे रुद्राय गामिति विशेषः । पौर्णमासतन्त्रम् । ब्राह्मणतर्पणान्ता इयमाग्निवारुणीष्टिरिति गीयते ॥

४३५ पुनराधानानन्तरं संवत्सरात्पूर्वं अर्थनाशादिनिमित्ते पुनरपि पुराधानं करोति । तस्मिंस्तृतीयाधाने पञ्चकपालस्याग्नेयस्य स्विष्टकृदवदानानन्तरं अध्वर्युः स्रुवाहुतीर्जुहोति । तत्र तिलेकः सलेक इति यजुषा प्रथमाहुतिः । केतः सकेत इति

द्वितीया । विवस्वाअदितिरिति तृतीया । ब्राह्मणतर्पणान्तं समानं पुनराधानेन । इदं द्वितीयपुनराधानमित्युच्यते ॥

४३६ अथ सर्वाग्निनाशे समारूढारणीनाशे च विच्छिन्नसंधानार्थम-ग्नीनाधास्ये इति संकल्प्य ऋत्विग्वरणादिगोपितृयज्ञवर्जं अग्न्याधानं करोति । इदं विच्छिन्नाग्न्याधानमित्युच्यते ॥

४३७ आहिताग्निः प्रवत्स्यन् सर्वानग्नीन् प्रज्वाल्य गार्हपत्यस्य पश्चा-दुपविश्याचम्य ततोऽतिक्रम्य गंम्य पशूनित्यादिमन्त्रेणाहवनी-यमुपस्थाय नर्यं प्रजामित्यादिमन्त्रेण गार्हपत्यमुपस्थाय अथर्वपि-तुमित्यादिमन्त्रेण दक्षिणाग्निमुपतिष्ठते, ततो गार्हपत्याहवनीया-वीक्षते इमान्मे मित्रावरुणावित्यृचा ततो यथागतमागत्य प्र-दक्षिणं परितो गच्छन्नाहवनीयमुपतिष्ठते मम नाम प्रथमं जातवेद इत्यृचा, इदं प्रवासोपस्थानमुच्यते ॥

४३८ ततः अग्नीननवेक्षमाणः माप्रगामेति सूक्तं जपन् वाचंयमः प्रव्रजति दूरं गत्वा वाचं विसृजते अग्निप्रज्वलनादिरेतदन्तो विधिराहिताग्निप्रवासविधिरित्युच्यते ॥

४३९ सदा सुग इत्यृचा पन्थानमवरोहति यदानुपस्थिताग्निः प्रवास-मापद्यते तर्हि इहैव सन् तत्र सन्तं त्वेत्यृचा प्रतिदिशमग्नीनु-पतिष्ठते अपि पन्था मगन्महीत्यृचा प्रवासाद् गृहमागच्छति आ-यतनेषु अग्नीन् ज्वलतः मत्वा आहवनीयाभिमुखं गत्वा समित्त्रयमादाय वाचंयमः विश्वदानीमाभरन्त इत्यृचा अग्नीनां समीपे समिधो निदधाति । नमस्ते अस्तु मीढुष इत्यृचा आहवनीयमुपतिष्ठते मम नाम तव च जातवेद इत्यृचा च । ततः अगन्म विश्ववेदसमित्यृचा समीपे निहितां

समिधमाहवनीये ऽभ्याधाय अयमग्निर्गृहपतिरित्यृचा गार्हपत्ये ऽभ्याधाय अयमग्निः पुरीष्य इत्यृचा दक्षिणाग्नौ अभ्यादधाति । ततो गार्हपत्याहवनीयौ इमान्मे मित्रावरुणावित्यृचा ईक्षते तस्यामृचि अभिरक्षत्वित्यस्य स्थाने अभ्यरक्षीदित्यूहो विशेषः । यथागतमागत्य प्रदक्षिणं परितो गच्छन् मम नामेत्यृचाहवनीयमुपतिष्ठते दशरात्राधिकप्रवासे तु मनोज्योतिरित्यृचा चतुर्गृहीतमाज्यमाहवनीये जुहोति ततो ऽग्नीन् परिसमुह्य उदग्विहारादुपविश्य समस्तव्याहृतिभिः वाचं विसृज्य गृहा मा बिभीतेत्यादिमन्त्रेण गृहानीक्षते इदं समन्त्रकं गृहेक्षणमनाहिताग्नेरपि भवति । गृहानहं सुमनसः प्रपद्य इत्यृचा गृहं प्रविशति अग्नीननुवीक्षमाणः शिवारं शिवं शग्मं शंयोरिति पठति गृहप्रवेशानन्तरं कृतगृहप्रवेशं जना विदितामपि दुर्वार्तां न श्रावयन्ति । अहरहः प्रवासे तु गमने आगमने च अभयं वो भयं मे ऽस्तु इत्येवोपस्थानं भवति पथ्यवरोहणाद्येतदन्तो विधिः प्रवासादागमनविधिरित्युच्यते ।

४४० आमावास्यायामपराह्णे दक्षिणाग्निसंबन्ध्येकमुल्मुकं ये रूपाणि प्रतिमुञ्चमाना इत्यृचा आग्नेय्यां दिशि बहिः प्रणयति अस्मिन् कर्मणि आग्नेय्येव प्राची भवति दक्षिणाग्निं प्रणीतमग्निं च प्रज्वाल्य दर्भैः परिस्तृणाति । दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग्वा आग्नेयीसंस्थानि एकैकशः पात्राणि सादयति चरुस्थालीं शूर्पमुलूखलं मुसलं स्रुवं ध्रुवां कृष्णाजिनं सकृदाच्छिन्नेध्मं मेक्षणं कमण्डलुं च । शकटपक्षे शकटस्य दक्षिणं भागमारुह्य व्रीहिभिः पूर्णां चरुस्थालीं निमृज्य बहिः पतितान् व्रीहीन् अन्यत्र निधाय कृष्णाजिने उलूखलं निधाय स्थालीस्थान् व्रीहीन् उलूखले

श्चोप्य पत्नी अविवेचमवहन्ति ततः संपन्नान् तन्दुलान् सकृत् प्रक्षाल्य दक्षिणाग्नौ श्रपयति । अतिप्रणीताग्नेः पश्चात् अपहता असुरा इत्यादिमन्त्रेण स्फ्येन लेखां लिखति । ततस्तां लेखां जलेनाभ्युक्ष्य सकृदाच्छिन्नैर्दर्भैरवस्तीर्य स्थालीपाकमभिघार्य तेषु दर्भेषु सादयति अनुत्पूतमाज्यमुत्पूतं नवनीतं वा ध्रुवायां कृत्वा ध्रुवामपि तत्र सादयति । दर्भेषु दक्षिणतः आञ्जनाभ्यञ्जनकशिपूपबर्हणानि सादयति स्थाल्यां परिपक्व ओदनः स्थालीपाक इत्युच्यते ॥

४४१ आ ईषद् अज्यते ऽनेनेति व्युत्पत्त्या कज्जलादि आञ्जनपदवाच्यम् ।

४४२ अभितः अङ्गं सर्वमज्यते ऽनेनेति व्युत्पत्त्या अभ्यङ्गसाधनमाज्यादि अभ्यञ्जनपदेनोच्यते ॥

४४३ कार्पासपूर्णमासनं मृदुतरं कशिपुपदवाच्यम् ।

४४४ तथैव कार्पासपूर्णं शिरसो ऽधस्तात् शयनकाले ध्रियते यत्तदुपबर्हणपदवाच्यम् ॥

४४५ ततः प्राचीनावीती भूत्वा सकृदाच्छिन्नेध्मं प्रणीते ऽग्नौ अभ्याद्धाति ततश्चरुं मेक्षणेनादाय अवदानधर्मेण जुहोति सोमाय पितृमतइत्यादिमन्त्रेण । अग्नये कव्यवाहनायेत्यादिमन्त्रेण द्वितीयामाहुतिं जुहोति । विधुरश्चेद्यजमानः होममन्त्रयोः स्वधापदस्थाने स्वाहापदं भवति । मन्त्रयोर्व्यत्यासेन पूर्वोत्तरभावभावश्च भवति । पत्नीरहितो यजमानो विधुर इत्युच्यते ॥

४४६ ततो यज्ञोपवीती मेक्षणमनुप्रहरति होमसाधनत्वेन गृहीतस्य पदार्थस्य होमान्तरं कृतकार्यस्य तस्य वह्नौ प्रक्षेपणं अनुप्रहरणमित्युच्यते ॥

४४७ ततः प्राचीनावीती पूर्वं कृताया रेखाया उपरि आस्तीर्णेषु दर्भेषु प्रथम पिण्डनिपातनस्थाने शुन्धन्तां पितर इति मन्त्रेण जलं सिञ्चति, शुन्धन्तां पितामहा इति मन्त्रेण द्वितीय पिण्डस्थाने, शुन्धन्तां प्रपितामहा इति मन्त्रेण तृतीयपिण्डस्थाने । ततस्तस्यां रेखायामेतत्ते पितर्ये च त्वा मचान्विति मन्त्रेण पित्रे प्रथमपिण्डं ददाति पितृपदस्थाने पितामहेति पदमुक्त्वा प्रथमपिण्डस्याग्नेय्यां दिशि द्वितीयं, प्रपितामहपदमुक्त्वा द्वितीयस्याग्नेय्यां तृतीयम् । इदं कर्म पिण्डदानमिति पिण्डनिपरणमिति चोच्यते ॥

४४८ अथ पितरो मादयध्वमित्यादिमन्त्रेण पिण्डान् दत्तान् अनुमन्त्रयते, ततः सव्येनाङ्गेन उदङ्ङावृत्य शक्त्यनुसारेण उच्छ्वासप्रतिबन्धं कृत्वोकृत्य पिण्डाभिमुखो भूत्वा अमीमदन्त पितर इत्यादिमन्त्रेण पुनरनुमन्त्रयते । ततः पिण्डचरुशेषं तूष्णीं प्राणभक्षं भक्षयति । नासिकया अवघ्राणमात्रं प्राणभक्ष इत्युच्यते ॥

४४९ ततो यथा पिण्डदानस्थाने पूर्वं जलसेचनं कृतं तथा पिण्डोपरि पुनः क्रियते । पितः, अभ्यङ्क्ष्वेतिमन्त्रेण पितृपिण्डोपरि अभ्यञ्जनं समन्तात् प्रक्षिपति । एवमूहेन इतरयोः पिण्डयोः । ततः पितः अङ्क्ष्वेतिमन्त्रेण अञ्जनं ददाति । इतरयोः पिण्डयोः पितामहप्रपितामहेति पदयोरूहेन । एतद्वः पितरो वास इत्यादिमन्त्रेण वस्त्रं ददाति तच्च वस्त्रं दशारूपं ऊर्णारूपं वा पञ्चाशद्वर्षताया ऊर्ध्वं हृदयसंबन्धि लोम वा । नमो वः पितर इषइत्यादियजुषा मनोन्वाहुवामह इति पञ्चभिर्ऋग्भिः परेतन पितर इत्यृचा पिण्डान् प्रवाहयति ।

अग्ने तमद्याश्वं नस्तोमैरित्यृचा गार्हपत्यमेति । यदन्तरिक्षं पृथिवीमुतद्यामित्यृचा गार्हपत्यमुपतिष्ठते । वीरं मे दत्त पितर इति मन्त्रेण मध्यमं पिण्डं गृहित्वा आधत्त पितरो गर्भमित्यृचा पत्नीं प्राशयति । इतरौ पिण्डौ अप्सु प्रतिप्रणीते ऽग्नौ वा प्रक्षिपति । पैतृककर्म स्याद् एकश आसादितानि पात्राणि कर्मसमाप्तौ मङ्गलार्थं द्विवत्पात्राण्युत्सृजति । अन्यस्य पात्रस्य एकत्वे सहायत्वाय द्वितीयं तृणं गृह्यते । दक्षिणाग्न्यतिप्रणयनादिरेतदन्तो विधिः पिण्डपितृयज्ञ इत्युच्यते ॥

४५० अथाग्रयणमुच्यते ॥ तत्र व्रीहिश्यामाकयवानां नवोत्पन्नानां भक्षणं तेन तेन द्रव्येण अग्निहोत्रहोमानन्तरं समन्त्रकं भवति । अथ वा तद् व्रीह्यादि द्रव्यं अग्निहोत्रहोमपयःप्रदां गां भक्षयित्वा तद्विकृतिभूतेन पयसा अग्निहोत्रहोमं नित्यं कृत्वा समन्त्रकभक्षणं भवति । तत्र व्रीह्याग्रयणकालः शरत् । श्यामाकाग्रयणकालो वर्षाः । यवाग्रयणकालो वसन्तः । अपि वा ऽग्नौ यवैष्वियतिसूत्रेण यवाग्रयणविकल्प आश्वलायनेनोक्तः । राज्ञस्तु आग्रयणेष्टिरेव भवति । इतरेषामिष्टिविकल्पस्तेनैवोक्तः । इदं कर्म अग्रे नवान्नोत्पत्त्यनन्तरमादौ अयनमाचरणं यस्येति व्युत्पत्त्या आग्रयणमित्युच्यते ॥

४५२ वर्षर्तौ क्रियमाणश्यामाकेष्ट्यां श्यामाकमयः पयसि चरुः सोमो देवता प्रधानस्योपांशुत्वम् । सोमस्य सोमयास्ते मयो भुव इति पुरोनुवाक्या । या ते धामानि दिवि या पृथिव्यामिति याज्या । होता इळे भागं जुषस्व न इत्यादिकमवान्तरेळाया नित्यं जपमुक्त्वा तां सव्ये पाणौ निधाय दक्षिणेन पाणिना प्रजापतये त्वा ग्रहं गृह्णामीत्यादिमन्त्रेण अभिमृशति ।

भद्रान्नः श्रेयः समनैष्ट देवा इत्यृचा प्राश्नाति । तत आचम्य अमो ऽसि प्राण तदृतं ब्रवीमीत्यृचा नाभिमालभेत । अनेनैव प्रकारेण अन्ये ऽपि ऋत्विजो भक्षयन्ति । मधुश्च स्वाहा, माधवश्च स्वाहा, नभश्च स्वाहा, नभस्यश्च स्वाहा, इति चतस्र आहुतीराज्यस्थाल्याज्येन स्रुवेण प्रधान यागानन्तरं स्विष्टकृतः प्राक् हुत्वा शतायुधायेत्यादिभिः पञ्चभिः स्वाहाकारान्ताभिश्चतुर्गृहीतेन जुह्वा जुहोति एतादृशो होम उपहोम इत्युच्यते ॥

४५३ अस्यामिष्टौ पुरोडाशाभावात्कपालानि न सन्तीति पात्रासादने कपालस्थाने समेक्षणां स्थालीमासादयन्ति तन्मेक्षणं स्विष्टकृद्धोमार्थंप्रत्याक्रमणकाले गृहीतं भवति । होमानन्तरं मेक्षणमनुप्रहरति । अन्वाहार्यमासाद्य प्रथमजं वत्सं वासश्च दक्षिणां ददाति । भो ऋत्विजः अयं व ओदनः अयं वः प्रथमजो वत्सः, एतद्वो वासः अहिंसन्तो यथाभागं प्रतिगृह्णीध्वम् । ऋत्विजः प्रतिग्रहमन्त्रे ब्रह्मण ओदनं रुद्राय गां सोमाय वासस्तेऽमृतत्वमश्यामिति विशेषं कुर्वन्ति । प्रजापतेर्भागो ऽसीति मन्त्रे असीत्यादीकवचनान्तानां स्थाने स्थेत्यादिबहुवचनान्तेनोहः क्रियते । प्रथमजवत्सवासोनिष्क्रयपक्षे एतद्वः प्रथमजवत्सनिष्क्रयद्रव्यमेतद्वो वासोनिष्क्रयद्रव्यं चेति विशेषः तथा असीत्यादिपदस्थाने स्थ इत्यादीनां द्विवचनान्तानामूहः । यजमानभागप्राशने प्राकृतमन्त्रस्थाने भद्रान्नः श्रेयः समनैष्टेत्यृङ्मन्त्रः पठ्यते । पयसि श्यामाकचरोः श्रपणादत्र पयः प्रणीतापि भवति तथाचात्र प्रणीताप्रणयनकाले पयःप्रणीतापि प्रणीयते । ब्रह्मजपः पयश्च प्रणेष्यामीति प्रैषे विशेषः । अपःप्रणीतानिनयनानन्तरं पयःप्रणीतानिनयनम् । तन्मन्त्रे समुद्रं व इत्यादिबहुवचनान्तपदस्थाने त्वेत्याद्येकवचनान्तपदप्रयोगः । पौर्णमासतन्त्रं ब्राह्मणतर्पणान्तम् । इयं श्यामाकाग्रयणेष्टिरित्युच्यते ॥ (शेषमग्रे)

# THE HISTORY OF THE MS. OF NṚISINHAPRASÁDA.

I hope that every Sanskrit Scholar, especially the antiquary, will be glad to read the history of the very old MS. of Nṛisinhaprasáda purchased for the Government of India, N.-W. P. by me, and preserved in the Library, Government Sanskrit College, Benares.

It was written in the year samvat 1568—1569, for Pandit Ráma Paṇḍita Dharmádhikárí in Benares who was the father of the most distinguished Pandit Nandapaṇḍita Dharmádhikárí, the author of Dattakamímámsá; Tatwamuktávalí; Vidvanmanohará, the commentary on Parásarasmṛiti; Kesavavaijayantí commentary on Vishnusmṛiti; Pramitákshará commentary on Mitákshará; Smṛitisindhu; Harivansavilás a comprehensive work on Dharma, containing large parts called Kautukas, such as Dánakhaṇḍa or Dánakautuka, Kálanirṇayakautuka, Áhnikakautuka and the like; Śráddhakalpalatá; a commentary on Shaḍaśítí; Navarátrapradípa; Káśiprakáśa, and Mádhavánandakávya. Nanda Pandit was my ancestor in the ninth remove, and was supposed to be the author of some other works than the above of which I am not now fully aware.

The manuscript is complete, mostly correct, and contains leaves 615 of which only 16 leaves altogether are missing; and Ślokas about 42,500. As it is very rare in India and was purchased very cheap, I therefore would rather say it was presented to the Government. This comprehensive work on Dharma contains twelve large parts called Sáras as follows:—

The 1st Sanskárasára, on duties for the purification of body and mind of man, as Játakarma, Námakarma and so on.

The 2nd Áhnikasára, on daily performances due to Dvijas.

The 3rd Śráddhasára, on duties to be done after one's death.

The 4th Kálanirṇayasára, on fixing the days for holy performances, fasting, &c.

The 5th Vyavahárasára, on Law for the Courts.

The 6th Práyaśchittasára, on penances.

The 7th Karmavipákasára, on expiatory rites to be performed in cases of disease, &c. supposed to be the punishment of offences in a previous existence.

The 8th Vratasára, on voluntary or vowed observance.

The 9th Dánasára, on various kinds of gifts.

The 10th Śántisára, or removal of the evils.

The 11th Tírthasára, on the performances necessary in sacred places of pilgrimage.

The 12th Pratishṭhására, about the duties for the installation of images and causing inspiration of Godhood in them.

The ninth verse of its introduction gives an outline of the history of its author, as follows:—

श्रीमद्देवगिरौ पुरंदरपुरस्पर्धाधिबद्धादरे
रामे राजनि शामवित्किल बभौ राजा स दिल्लीश्वरः ।
दिल्लीशादुपरि क्षितौ समभवन्नेजामशाहो महान्
यद्दोर्दण्डभुजप्रतापमहिमा राज्यं वशे चाव्यत् ॥ ९ ॥

In the beginning of the fourteenth century, when Ráma (Ráma Rao Jádho) was the king of Devagiri which emulated the city called Purandarapura which is near Daulatâbâd, or city of Indra by its glory, and is commonly called Devagaḍha or Daulatábád, (see the beginning of the history of the Maráthás, by Captain Grant Duff;) the Śámavit (i. e. the Deputy Governor of Samáná Jalálud-dín Firoz Khiljí) was reigning at Dehlí. And after Dillíśa Nijáma Sáh son of Neba king (Neba is, I think, a corruption of Náyaba that is Deputy,) became an emperor of India, the glory of whose powerful arms subdued the whole kingdom. Dalapati a descendant of the solar dynasty, who was himself a king of a part of India, was prime minister of the above Nejámaśáh, and the author of the said work.

Although the passage "दला धीशेन भूभुजा" in the beginning of the second part of this work, shows that its author's name could be Bhúbhuja, and Dalapati or Daládhíśa and the like are the titles of the author, meaning the commander of an army, yet as, in the first place the author being himself a king could have titles Bhúbhuja, Mahípati, Mahíbhuja and the like; and, in the second place, as the name Dalapati occurs frequently at the end of all the parts and subordinate chapters in such passages "दलपतिराजविरचिते" and, thirdly, since Dalapati was the real king of Jabbalapore at that time, I therefore have good reason for saying that only Dalapati was his name and all the others were titles.

Daládhíśa, Daleśvara, &c. were put here and there in the verses for the sake of the metres only, being synonyms of the name Dalapati.

ḌHUNḌHIRÁJAŚÁSTRI LIBRARIAN,
*Govt. Sanskrit College, Benares.*

BENARES:
21st *March*, 1883.

॥ श्रीः ॥

# ॥ योगवार्तिकम् ॥

(*Continued from page* 332. Vol. V.)

अत्र सूत्रेणोत्तरम् ।

## मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

प्रसादनं स्थितिनिबन्धनमित्यागामितृतीयसूत्रस्थेनान्वयः । अन्यथा तत्र सूत्रे वाशब्दवैयर्थ्यात् । निबन्धनत्वं च स्थित्यभ्रंशहेतुत्वं तच्च स्थितिहेतुश्रद्धाद्यप्रतिबन्धद्वारा तत्रैव आगामिसूत्रे भाष्यव्याख्यानात् । श्रद्धावीर्यस्मृतिसमाधीनामेव स्थितिहेतूनामुक्तत्वाच्च । अत्र सुखादिशब्दस्तद्वाहुल्यलाभाय धर्मधर्म्यभेदात्सुखितावाची । भावना चोत्पादनं प्रसादनं समाधिप्रतिबन्धकरागद्वेषाधर्मादिमलापसारणं तोयादिप्रसादवदित्यर्थः । तत्र सर्वेति । मैत्रीं सौहार्दीं करुणां निरुपधिपरदुःखप्रहाणेच्छां मुदितां प्रीतिमुपेक्षामौदासीन्यं, सर्वत्र भावयेदित्यन्वयः । भावनानां चित्तप्रसादे द्वारमाह । एवमस्येति । शुक्लः पापासंभिन्नः ततो धर्मः, इतस्तमःक्षये चित्तं निर्मलं भवतीत्यर्थः । अदृष्टद्वारकत्वं चैतन्मुख्यत उक्तं रागद्वेषनिवृत्तिरूपदृष्टद्वारकत्वमपि बोध्यम् । तदुक्तं गीतायाम्॰।

रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ।

इति । ननु चित्तस्य प्रसादाख्यपरिकर्मणैव किं कार्यमित्याकाङ्क्षायामाह । प्रसन्नमिति । प्रसन्नं चित्तमेकाग्रं भूत्वा स्थिरपदमभ्रंशयोग्यतां लभतइत्यर्थः । स्थितिपदमिति पाठे स्थितिः स्थैर्यमित्यर्थः । एवं सर्वत्र । प्रसादस्य साधनान्तरमाह ॥

## प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

वाशब्दोऽप्यर्थे। आभ्यामपि चित्तस्य प्रसादनं कुर्यादित्यर्थः। नासिकापुटाभ्यामिति। एकतरपुटेनेत्यर्थः। प्रयत्नविशेषादिति। सूत्रस्वरूपेण योगशास्त्रोक्तरीत्या, वमनं रेचनमित्यर्थः। विधारणं कुम्भकं तच्चार्थात्पूरणानन्तरमिति बोध्यम्। रेचनोत्तरं पूरणं विना विधारणासंभवात्। प्राणायाम इत्युत्तराच्च। 'प्राणायामश्च विज्ञेयो रेचकपूरककुम्भका' इत्यादिस्मृतिभिस्त्रयाणामेव मिलितानां प्राणायामत्वकथनादिति। प्राणायाम इति। एतद्द्वयं पूरणगर्भं प्राणायाम इत्यर्थः। प्रच्छर्दनविधारणे व्याख्याय समग्रसूत्रार्थमाह। ताभ्यामिति। स्थितिं भावयेत्। प्रसादद्वारेति शेषः। अत्र प्राणायामो यमादिनिरपेक्ष एवोत्तमाधिकारिणो योगसाधनतयोक्तः। द्वितीयपादे च मन्दाधिकारिणो व्युत्थितचित्तस्य यमाद्यष्टाङ्गमध्ये प्राणायामो वक्तव्य इत्यपौनरुक्त्यम्। तथा च स्मृतिः। 'प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिष' मिति। प्रसादापेक्षया स्थितिनिबन्धनं परिकर्मान्तरमाह।

## विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ॥ ३५ ॥

प्रकृष्टा वृत्तिः प्रवृत्तिः साक्षात्काररूपा, विषया गन्धादयः पञ्च विषयत्वेनास्याः सन्तीति विषयवती। सा च स्वसाधनादुत्पन्ना स्वाविषयेष्वपि विवेकपर्यन्तेषु श्रद्धाद्यप्रतिबन्धहेतुतया स्थितिप्रयोजिका भवतीत्यर्थः। वाशब्दः समुच्चये आवश्यकतया भाष्ये वाच्यत्वात्। अत्र च मनस इति वचनात् मनश्चित्तयोरेकतेति बोध्यम्। विषयवतीं प्रवृत्तिं पञ्चप्रकारां दर्शयति। नासिकाग्रइति। नासिकाग्रे गन्धोपलब्धिस्थाने धारणां कुर्वतो योगिनो यो दिव्यगन्धसाक्षात्कारो ऽल्पेनैव कालेन भवति सा गन्धप्रवृत्तिरिति तान्त्रिकपरिभाषा। एवं सर्वत्र व्याख्येयम्। ताल्वादयो रूपाद्युपलब्धिस्थानमिति शास्त्रप्रामाण्यादवधारणीयम्। स्थितिनिबन्धनीति व्याचष्टे। चित्तं स्थितौ निबध्नन्तीति अर्थान्तरेष्वतिसूक्ष्मेषु दृढस्थितियोग्यं कुर्वन्ति संस्कारद्वारेत्यर्थः। अन्यच्च कुर्वन्तीत्याह। संशयमिति। शास्त्रीयेऽर्थान्तरे संशयं निराकुर्वन्तीत्यर्थः। संशयं विधमनप्रकारं च वक्ष्यति। समाधिप्रज्ञायामिति। समाधौ जायते या प्रज्ञा सत्त्व-

पुरुषान्यतासाक्षात्कारस्तत्र वक्ष्यमाणवैराग्यद्वारोपकुर्वन्ति चेत्यर्थः । एते-नेति । यतो रूपप्रवृत्तिर्विषयवती एतेन हेतुना रूपप्रधानत्वाच्चन्द्रादि-प्रवृत्तयो ऽपि स्थितिहेतुतया शास्त्रान्तरैरूच्यमाना अस्यामेव विषय-वत्यां प्रवेशनीया इत्यर्थः । अतो न न्यूनतेति भावः । संशयं विध-मन्तीति यदुक्तं तत्र शङ्कां निराकुर्वन्नेव तद्विवृणोति । यद्यपि हीति । तैस्तैः शास्त्रैः स्वानुमानैराचार्योपदेशैश्च निर्णीतमर्थतत्त्वं परमार्थभूतमेव भवती,ति निश्चयान्न तत्र संशयः संभवतीति शेषः । संशयमुपपादयति । तथापीति । यावच्छास्त्रार्थैकदेशः स्वकरणैश्चक्षुर्मनआदिभिर्न साक्षा-त्क्रियते तावत्सर्वं शास्त्रादि परोक्षमिव व्याक्षेक्तिवत् संदिग्धतात्पर्यकं भवति इत्यतो नापवर्गादिषु निश्चयं जनयतीत्यर्थः । तात्पर्यसंशया-हितो हि संशयो निर्णीते ऽप्यर्थे भवति । अत एव शास्त्रमूलके ऽनुमा-नेपि संशयो भवतीत्याशयः । संशयमुपपाद्य तद्विधमनप्रकारमाह । तस्मा-दिति । उपोद्वलनमत्र पूर्वावधृततात्पर्ये संशयापसारणं, तत्र शास्त्रेषु श्रद्धीयते इदमित्थमेवेति विश्वस्यतइत्यर्थः । एतदर्थं निश्चयाख्यश्रद्धोत्पाद-नार्थं समाधिप्रज्ञायाः श्रद्धा द्वारीभवतीति यदुक्तं तद्विवृणोति । अनिय-तास्विति । अनियतासु अव्यवस्थितासु चित्तवृत्तिषु मध्ये तत्तद्गन्धादि-प्रवृत्त्या गन्धादीनां दोषदर्शनात् तद्विषयके वशीकारसंज्ञावैराग्ये जाते सति विक्षेपह्रासात् तस्यतस्योत्तरभूमिरूपस्यार्थस्य साक्षात्काराय चित्तं समर्थं स्यादित्यर्थः । वैराग्यस्य द्वारं विक्षेपाख्यप्रतिबन्धनिवृत्तिं स्वयं विवृणोति । तथा च सतीति । वशीकारसंज्ञावैराग्ये च सतीत्यर्थः । चित्तस्थैर्यनिबन्धनं परिकर्मान्तरमाह ॥

विशोका वा ज्योतिष्मती ॥ ३६ ॥

विगतः शोको यस्या इति विशोकेति हेतुगर्भविशेषणं तथा च यतो विशोका अतो वक्ष्यमाणज्योतिष्मती श्रेष्ठा स्थितिहेतुरित्यर्थः । द्विविधां विशोकां विवृणोति । हृदयेत्यादिना एषा द्वयी विशोके-त्यन्तेन । हृदयपुण्डरीकालम्बने चित्तं धारयतो या बुद्धिसंवित्तत्साक्षा-

त्कारो भवति यच्च वक्ष्यमाणरीत्या ऽस्मितामात्रमस्मीत्येतावन्मात्राकारं चित्तं भवति एषा द्वयी विशोका ज्योतिष्मतीत्युच्यते इत्यन्वयो भविष्यति, तत्र बुद्धिसंविदि ज्योतिष्मतीसंज्ञाया अन्वर्थतामाह । बुद्धिसत्त्वं हीति । बुद्धिरूपं सत्त्वं भास्वरं स्वपरप्रकाशकं तेजोवत् आकाशवद्विभु च भवति तत्र बुद्धौ स्थितिवैशारद्याद् निर्मलैकाग्र्यात् बुद्धिप्रवृत्तिः सूर्यादिप्रभान्तसदृशाकारेण विकल्पते विशेषेणोत्पद्यतइत्यर्थः । अतो विषयस्य ज्योतिष्मत्त्वेन विषयिणी प्रवृत्तिरपि ज्योतिष्मतीति भावः । अत्र चान्तःकरणस्य विभुत्वमाचार्येण सिद्धान्तितम् । अन्तःकरणस्य चेयं योगशास्त्रोक्ता प्रक्रिया । उदरोरसोर्मध्ये यत्पद्मं तिष्ठत्यधोमुखमष्टदलं तद्रेचकप्राणायामेनोर्ध्वमुखं कृत्वा तस्मिन्नालम्बने चित्तं धारयेत् । तत्र हि चित्तं तिष्ठति । तद्यथा । पद्ममध्ये सूर्यमण्डलमकारो जागरितस्थानं तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानं तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानं तदुपरि परं ब्रह्म व्योमात्मकं नादस्तुरीयस्थानमस्ति यमर्द्धमात्रमुदाहरन्ति योगिनः । तत्कर्णिकायां विष्कण्व्यापिशाखासहस्रवत्या मनोवहनाड्या मूलं तिष्ठति तस्या अलाबुलतिकायाइव ऊर्ध्वमुखी एका शाखा सुषुम्नेति गीयते तया च शाखारूपया ब्रह्मनाड्या बाह्यान्यपि सूर्यमण्डलानि प्रोतानि सैव मनोवहा नाडी चितस्थानं भवति तस्यां चित्तं धारयतो योगिनश्चित्तसाक्षात्कारो जायते इति । तथास्मितायामिति । अस्मिता ऽत्र नाहंकारः किं त्वात्मतत्त्वं तमणुमात्रमात्मानमनुविद्येत्युत्तरवाक्यात् । अस्मितात्मताहन्तानां पर्यायत्वाच्च । भावप्रत्ययश्च निर्विशेषसामान्यमात्रताबोधनाय प्रयुक्तः । तथा चास्मितायां विविक्तचिन्मात्रे पुरुषे समापन्नं तद्रूपतापन्नमत एव निस्तरङ्गमहोदधिकल्पं पुरुषाकारत्वात् स्वयमपि तत्कल्पं तथा शान्तं शोकादिनिमित्तक्षोभरहितमनन्तं सर्वतोनावृतमस्मितामात्रमस्मीत्येतावन्मात्राकारमन्याकारताशून्यं भवतीत्यर्थः । आत्मनश्चिज्ज्योतिर्मयत्वात् तदाकारस्य ज्योतिष्मत्त्वं स्पष्टमेवेति पुनर्नोक्तम् । नन्वनेनैवात्मसाक्षात्कारेणैव कृतार्थत्वात् कथमस्य स्थितिशेषतयोपन्यास इति चेत्,न । कृतात्मसाक्षात्कारे-

णापि ज्ञाननिष्ठया परवैराग्यार्थमभ्यासापेक्षणादिति, गन्धादिप्रवृत्तिभ्यश्चायमस्मितावृत्तेर्विशेषो यद्गन्धादिप्रवृत्तयो ऽर्थान्तरेषु चित्तस्थैर्यहेतवो ऽस्मिताप्रवृत्तिस्तु स्वविषयएवेति । अपि जीवात्मसाक्षात्कारस्य परमात्मनि चित्तस्थितिहेतुत्वमस्तीति । अस्मिताशब्दार्थं पूर्वाचार्यमुखेन विवृणोति । यत्रेदमिति । अणुमात्रं सूक्ष्मतममनुविद्य श्रवणमननाभ्यामवधार्य अस्मीत्येतावन्मात्राकारेण साक्षात्करोतीत्यर्थः । एषा द्वयीति । विषयवती अस्मितामात्रा चेति द्विविधा विशोका ज्योतिष्मतीत्युच्यते शास्त्रकृद्भिः । अनया योगिनश्चित्तं स्थितियोग्यतां प्राप्नोतीत्यर्थः । ननु गन्धादिप्रवृत्तिवद्बुद्धिसंविदोपि विषयवतीत्वे पूर्वसूत्रेणैव तद्ग्रहणं युक्तमिति चेत्, न । गन्धादिपञ्चकएव विषयशब्दस्य मुख्यत्वात्तत्प्रवृत्तेरेव मुख्यविषयवत्याः पूर्वसूत्रेणोक्तत्वात् बुद्धौ च पुरुषसाक्षितया विषयशब्दो गौण एव, असङ्गस्य पुरुषस्य बुद्धिवद्बन्धाभावेन सिधात्वर्थायोगात् । अतो बुद्धिसंविदो गौणं विषयवत्व*मत्र सूत्रे प्रोक्तमिति विशोकत्वं चास्मितासंवेदः साक्षादेवास्ति 'तरति शोकमात्मवि'दिति श्रुतेः । बुद्धिसंविदस्तु विशोकत्वं संकल्पसिद्ध्या किं वा विवेकख्यातिद्वारेति बोध्यम् । चित्तस्थैर्यकारणं परिकर्मान्तरमाह ॥

वीतरागविषयं वा चित्तम् ॥ ३७ ॥

व्याचष्टे । वीतेति । वीतरागं यत्सनकादीनां चित्तं तदेवालम्बनं तेनोपरक्तं तद्धारणया तदाकारतापन्नं योगिचित्तं विरक्तं सदालम्बनान्तरेपि स्थितियोग्यतां लभतइत्यर्थः । तथैव परिकर्मान्तरमाह ॥

स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

स्वप्नज्ञानं स्वप्नरूपं ज्ञानं तदालम्बनकं चित्तं प्रपञ्चज्ञाने स्वप्नदृष्टिमच्चित्तमिति यावत् । तथा चोक्तम् ।

दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम् ।

इति । इयं च दृष्टिः कामदुघत्वादिगुणैर्वाचि धेनुदृष्टिवत् क्षणभङ्गु-

* विषयवतीत्वमिति पाठान्तरम् ।

रविषयकत्वादिगुणैर्जायत् ज्ञाने स्वप्नदृष्टिरूपेति । एतदपि वैराग्यद्वारा चित्त-स्थैर्यहेतुरित्याशयः । निद्राज्ञानालम्बने चेति । निद्रारूपं ज्ञानमेवालम्बनं यस्य तत्तथा सर्वजीवेषु विस्मृतात्मकेषु सुषुप्तद्रष्टृमच्चित्तमिति यावत् । तदुक्तम् ।

ब्रह्माद्यं स्थावरान्तं च प्रसुप्तं यस्य मायया ।
तस्य विष्णोः प्रसादेन यदि कश्चित् प्रमुच्यते ॥
चराचरं लयद्रव प्रसुप्तमिह पश्यताम् ।
किं मृषा व्यवहारेषु न विरक्तं भवेन्मनः ॥

इति । भाष्यं च सुगमम् ।

यथाभिमतध्यानाद्वा ॥ ३९ ॥

किं बहुना यदेवाभिमतं हरिहरमूर्त्यादिकं तदेवादौ ध्यायेत् तस्मादपि ध्यानात्तत्र लब्धस्थितिकस्य चित्तस्यान्यत्रापि विवेकपर्यन्त-सूक्ष्मेषु विनैव साधनान्तरं स्थितियोग्यता भवतीत्यर्थः । इत्थमेव व्याचष्टे । यदेवेति । परिकर्मनिष्पत्तेर्लक्षणमाह ॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥

अस्य परिकर्मितचेतसः । परमं महत्त्वं येषां पुरुषादीनां ते परम-महत्त्वाः । व्याचष्टे । सूक्ष्मइति । सूक्ष्मेऽल्पपरिमाणे चित्तस्य निवेशनमव-स्थानमभीप्सोरित्यर्थः । लभते योगीति शेषः । स्थूलइति । स्थूले मह-त्परिमाणे, ऽन्यत् पूर्ववत् । एवं तामिति । एतत् स्थूलसूक्ष्मरूपं कोटिद्वयं पक्षद्वयं चरतो* ऽस्य चित्तस्य यो ऽप्रतिघातः केनाप्यप्रतिबद्धता स वशी-कारश्चित्तस्य विधेयत्वं भवतीत्यर्थः । परशब्दादपरोऽपि वशीकारोऽस्ति दोषदर्शनजन्यो वशीकारसंज्ञारूप इति भावः । तदपेक्षयास्य परत्वे हेतु-माह । तद्वशीकारादिति । तस्माद्वशीकारात्परिपूर्णं समाप्तस्थैर्यसाधना-काङ्क्षं चित्तमभ्यासान्तरसाध्यं परिष्कारं नापेक्षतइत्यर्थः । वशीकारसंज्ञा-वैराग्यानन्तरमपि तु चित्तमभ्यासकृतं वशीकारमपेक्षतएवेति तदपरं निकृष्ट-

* संचरत इति पाठान्तरम् ।

मिति भावः । तदेवमभ्यासवैराग्यादिकं परिकर्मान्तं योगसाधनमभिहितं सामान्यतो योगद्वितयं च प्रोक्तमतः परं योगयोः फलं वक्तव्यं, तत्रादौ संप्रज्ञातस्य फलं ध्यानादिव्यावृत्तं प्रतिपादयन्सूत्रमवतारयति । अथेति । अथशब्दः प्रश्ने । समापत्तिः सम्यगालम्बनाकारत्वापत्तिः प्रत्यक्षवृत्तिरित्यर्थः । चित्तस्य चेयं प्रज्ञाख्यावस्था संप्रज्ञातेष्वेव भवति न तु धारणाध्यानसमाधिषु तेषु सामान्येणालम्बनाग्रहणात् साक्षात्कारस्यैव विशेषाकारत्वादिति ॥

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः ॥ ४१ ॥

क्षीणवृत्तेरपगतवृत्त्यन्तरस्य चित्तस्येत्यर्थः । अभिजातस्य निर्मलस्य मणेरिव ग्रहीत्रादिषु तत्स्थततया तदञ्जनता सम्यक् तदाकारता जायते, सा च समापत्तीति* शब्दवाच्या भवतीत्यर्थः । अत्र संप्रज्ञातफलभूतायाः प्रज्ञायाः समापत्तिरिति तान्त्रिकी परिभाषापि प्रसङ्गादुक्ता । सा चासंप्रज्ञातव्यावृत्तस्य संप्रज्ञातस्वरूपस्य परिचायकतयैव संप्रज्ञातयोग इति पश्चादुच्यते ता एव सबीजः समाधिरिति सूत्रे इति । क्षीणवृत्तेरिति हेतुगर्भविशेषणस्यायमाशयः । चित्तस्य स्वत एव सर्वार्थसाक्षात्कारसामर्थ्यमस्ति विषयान्तरव्यासङ्गदोषादेव तु तत्प्रतिबद्धमतो वृत्त्यन्तरप्रतिबन्धस्य निःशेषतो विगमे स्वत एव ध्येयवस्तुसाक्षात्कारस्तद्रूपापत्त्याख्यो भवतीति भाष्ये प्रत्यस्तमितेति । प्रत्ययस्य प्रत्ययान्तरस्येत्यर्थः, समापत्तेरपि प्रत्ययत्वात् । उत्पत्तिक्रमानुरोधेन सौत्रं पाठक्रममुल्लङ्घ्य ग्राह्यादिसमापत्तीः सदृष्टान्ता व्याख्यानायादौ स्वयं विवृणोति । यथेति । उपाश्रयभेदाज्जपाकुसुमाद्युपाधिविशेषात्तद्रूपोपरक्तस्तत्प्रतिबिम्बोद्ग्राही सन् स्फटिक उपाधितुल्याकारतयैव निर्भासते प्रतीयते तथा ग्राह्येणालम्बनेनोपरक्तं समर्पितप्रतिबिम्बं वृत्तेः प्रत्यक्षरूपतालाभाय ग्राह्यसमापन्नमिति ग्राह्यगतविशेषाकारमित्यर्थकमेवंभूतं चित्तं ग्राह्यान्यूनाकारेणैव साक्षिणि

* इतिशब्दः पुस्तकान्तरे नास्ति ।

निर्भासतदृत्यर्थः । यत्र समापत्तिरूपस्य प्रत्यक्षस्य प्रामाण्याय ग्राह्यरूपाकारेण निर्भासतदृत्यनेन तत्फलमुक्तं पौरुषेयबोधस्यैव प्रमाणफलत्वादिति । एवं सर्वत्र ग्राह्यसमापत्ताववान्तरं त्रैविध्यमाह । भूतेति । अत्र भूतसूक्ष्मशब्देन तन्मात्रादिप्रकृतिपर्यन्तं गृहीतं सूक्ष्मशब्दस्य कारणार्थतया नात्रेन्द्रियग्रहणं स्थूलशब्देन च महाभूतानि गृहीतानि विश्वभेदशब्देन च स्थावरजङ्गमादयो ऽवान्तरभेदा ग्राह्याः । अन्यत् पूर्ववत् । गृह्यते ऽनेनेति ग्रहणमिन्द्रियं तत्र समापत्तौ सूक्ष्मस्थूलविश्वभेदरूपं त्रैविध्यमतिदिशति । तथा ग्रहणेष्वपीति । इन्द्रियाणां सूक्ष्मं बुद्ध्यहंकाराविति भाष्यकारो वक्ष्यति । स्थूलं च चक्षुरादिकं विश्वभेदश्च स्थावरजङ्गमानां चक्षुरादिविशेषा इति । अवान्तरविभागमतिदिश्य ग्रहणसमापत्तिं सामान्यतो दर्शयति । ग्रहणालम्बनेति । पूर्ववद्व्याख्येयम् । ग्रहीतृसमापत्तिं पूर्ववद्व्याचष्टे । तथा ग्रहीत्रिति । ग्रहीतृत्व बुद्धेरपि व्यपदिश्यतइति तद्व्यावर्त्तनाय पुरुषपदम् । अत्र ग्रहणफलोपहितत्वं ग्रहीतृत्वं स्वरूपयोग्यतापरत्वे मुक्तपुरुषेषु पृथग्वचनानौचित्यात् ईश्वरस्य चात्रैव प्रवेशः । ग्रहणस्वरूपयोग्यमात्रेष्वपि समापत्तिं व्याचष्टे । मुक्तेति । मुक्ता आत्यन्तिकलयं गताः शुकादयः । समग्रसूत्रार्थमाह । तदेवमिति । सामान्यतः समापत्तिरुक्ता तत्र ग्रहीतृसमापत्तौ स्थूलसूक्ष्मविषयस्वरूपविशेषाभावात्सा एकविधैव । ग्राह्यग्रहणसमापत्त्योस्तु तद्विशेषसत्त्वात्तयोर्विशेषानाह त्रिभिः सूत्रैः ॥

**तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥**

तृतीयसूत्रे सूक्ष्मविषयकसमापत्तेः वक्ष्यमाणतयास्य सूत्रद्वयस्य स्थूलविषयकत्वं परिशेषाल्लभ्यते । स्थूलं कार्यं सूक्ष्मं कारणम् । तत्र स्थूलं द्विविधं, भूतानि तन्मात्राणां कार्याणि इन्द्रियाणि चाहंकारस्य कार्याणीति । तत्र च स्थूलसूक्ष्मसमापत्ती द्विविधे भवतः । तासु चतसृषु समापत्तिषु सविकल्पिकायाः स्थूलविषयकसमापत्तेर्लक्षणमिदं सूत्रं, तदेतद् व्याचक्षाण आदौ शब्दार्थज्ञानविकल्पमुदाहरति । तद्यथेत्यादिना ।

दृष्टमित्यन्तेन । इत्यविनिर्भागेन एवमभेदेन विभक्तानां वस्तुतो भिन्नानामपि ग्रहणं विकल्पाख्यं लोके दृष्टं पूर्वोक्तविकल्पलक्षणाक्रान्तत्वादित्यर्थः । ननु वस्तुशून्यत्वे सति विकल्पः स्यात् प्रतीतिबलात्त्वभेदोऽत्र वस्तुसन्नेव भवतु तत्राह । विभज्यमानाश्चेति । अन्वयव्यतिरेकाभ्यां परीक्षकैर्विभज्यमाना विविच्यमाना अन्येऽर्थज्ञानधर्माभ्यां भिन्नाः शब्दधर्मास्तारत्वमन्दत्वादयः । एवमर्थधर्माः जडत्वमूर्त्तत्वादयः शब्दज्ञानधर्माभ्यामन्ये । एवं ज्ञानधर्माः प्रकाशामूर्त्तत्वादयः शब्दार्थधर्माभ्यामन्ये । इत्ययमेतेषां शब्दार्थज्ञानानां विभक्तो ऽन्योन्यं भिन्नः पन्थाः स्वरूपभेदोऽवयनमार्ग इत्यर्थः । समापत्तिरेवं विकल्परूपेत्यतो विकल्पसंकीर्णत्त्वा नुपपत्तिरित्याशयेनान्यथा सूत्रार्थं व्याचष्टे । तत्रेति । तत्र गवादौ स्थूलभूतेन्द्रियेषु समापन्नस्य समाहितस्य योगिनः समाधिप्रज्ञायां समारूढो यो गवाद्यर्थः स यदि शब्दार्थज्ञानविकल्पेन गौरियं भासते इत्येवं शब्दार्थज्ञानानामभेदभ्रमेणानुविद्धो विषयीकृतो भवति तदा सा संकीर्णा विकल्पमिश्रिता विकल्पविषयीभवदर्थविषयिणीति यावत् । समापत्तिः सवितर्कसंज्ञा भवतीत्यर्थः । अत्र हि गौरयमित्यंशे शब्दार्थयोरभेदविकल्पः । भासतइत्यंशे चार्थज्ञानयोरभेदविकल्पः । अर्थद्वारा च शब्दज्ञानयोरप्यभेदविकल्पः । एवं नारायणो ऽयं भासतइत्यादिरूपैश्च सवितर्का समापत्तिर्भवति । अत्र शब्दादिविकल्पैर्यथासंभवमन्येपि विकल्पा उपलक्षणीयाः । इयं च समापत्तिरपरं प्रत्यक्षमविद्यालेशसंबन्धादिति । सूत्रान्तरं योजयितुं प्रथमं तावन्निर्वितर्कां स्थूलसमापत्तिं व्याचष्टे । यदा पुनरिति । अयं भावः । शब्दसंकेतस्मरणपूर्वके तावत्क्रमेणागमानुमानज्ञाने भवतः । संकेतश्चायं गौरिति शब्दार्थयोरितरेतराध्यासात्मकः । 'एतद्वैतत्परमपरं च ब्रह्म यदोंकार' इत्यादिश्रुतिषु 'अकारोकारमकारा ब्रह्मविष्णुमहेश्वराः' इत्यादिस्मृतिषु 'अमरा निर्जरा' इत्यादिकोशेषु च संकेतस्य विकल्पिताभेदरूपत्वावधारणात् । ततश्च संकेतग्रहसमानाकारेणैव शाब्दबोधस्तन्मूलकानुमानं च भवतीत्यत आगमानुमानज्ञानयोरपि श्रवणमननरूपयोर्विकल्प औत्सर्गिकः ततश्च तन्मूलिका या प्रथमं जायते समाधिप्रज्ञा सापि विकल्पव्याप्तिश्चैव भवतीति सा

सवितर्का भवति । यदा पुनरर्थमात्रादरादर्थमात्रप्रवणेन चेतसा संकेतस्मृतिस्त्यज्यते तदा समाधौ तन्मूलको विकल्पो न जायतइति निर्वितर्का भवतीति । तदिदमाह । शब्दसंकेतेति । शब्दसंकेतस्य स्मृतेः परशुद्धिरपगमस्तस्यां सत्यां तत्स्मृतिनिमित्तकेन श्रुतानुमानज्ञानकालीनविकल्पेन शून्यायां समाधिप्रज्ञायामर्थस्वरूपाकारेणैवावधार्यतइत्यादिरर्थः । आरोपगन्धस्यापि संपर्को नास्तीति प्रतिपादनाय स्वरूपमात्रेणावस्थितोऽर्थइत्युक्तम् । परमिति । आरोपसंपर्काभावादिति भावः । अगृहीतग्राहित्वं निर्वितर्कसमापत्तेः प्रामाण्यप्रयोजकं दर्शयति । तच्चेत्यादिना दर्शनमितीत्यन्तेन । श्रुतानुमानयोः श्रवणमननयोर्बीजं बीजशब्दार्थं व्याचष्टे । तत इति । प्रभवतः प्रकर्षेण भवतः गुरुणा ऽशेषविशेषसाक्षात्कारं विना असंदिग्धाविपर्यस्तवस्तुस्वरूपप्रतिपादनासंभवात् । अतः सवितर्कानधिगतोऽपि विशेषो ऽस्या विषय इत्यर्थः । नन्वेवं सर्वज्ञगुरुणा श्रुतिस्मृतिभ्यामेवाशेषविशेषप्रतिपादनं स्यादितीयं व्यर्था निर्वितर्कसमापत्तिरिति तत्राह । न चेति । सद्भूतं तत्कालीनं गुरोर्विशेषज्ञत्वेऽपि स विशेषः शब्देनाशेषो वक्तुं न शक्यते इक्षुक्षीरादिविशेषवत् । 'इदं तदिति निर्देष्टुं गुरुणापि न शक्यत'इति स्मृतेः । अतः सर्वज्ञवाक्यादपि निर्विकल्पकसमापत्तिसमानाकारं ज्ञानं न संभवतीत्यर्थः । ततः किमित्यत आह । तस्मादिति । संकीर्णं गृहीतमात्रादवगाहि । तदेवमुत्तरसूत्रस्य लक्ष्यमवधार्य सूत्रमवतारयति । निर्वितर्काया इति । स्पष्टम् ॥

## स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥४३॥

यतः स्मृतिपरिशुद्धौ सत्यां जायते तथा स्वरूपशून्येव भवति अतोऽर्थमात्रस्य निर्भासो यत्रेत्यर्थमात्रनिर्भासा अखिलविकल्पशून्या या समापत्तिः सा निर्वितर्केत्यर्थः । पदानि क्रमशो व्याचष्टे । या शब्देति । शब्दसंकेतात् श्रुतानुमानरूपज्ञाने या विकल्परूपा स्मृतिः चिन्ता सवितर्ककाले ऽप्यनुवर्त्तते तदपगमे सतीत्याद्यपदार्थः । शब्दशंकेतस्यात्र स्मृतिहेतुत्वं स्वगोचरज्ञानद्वारा बोध्यम् । संकेतश्च शब्दार्थयोः कल्पिताभेद-

मात्र इत्यतः संकेतस्मृतौ तन्मूलकज्ञाने चाभेदविकल्प औत्सर्गिक इति। शब्दविकल्पशून्यत्वे हेतुमुक्त्वा ज्ञानविकल्पशून्यत्वे हेतुमाह । स्वमिवेति । इवकारो भिन्नक्रमेण त्यक्त्वेतिपदानन्तरं योजनीयः, त्यागसादृश्यं चाव-हरणमिति । तृतीयपदस्यार्थमाह । पदार्थमात्रेति । तस्याप्यर्थमाह । ग्राह्य-स्वरूपापन्नेव भवतीति । सा निर्वितर्केति । एवं निर्भासा या समापत्तिः सा निर्वितर्केत्यर्थः । तदेवं सूत्राभ्यां प्रतिपादितौ सवितर्कनिर्वितर्कयोगौ सविकल्पनिर्विकल्पशब्दाभ्यामपि शास्त्रेषूच्यते । वितर्कविचारेत्यादिसूत्रे च यः स्थूलविषयको भोगो वितर्क इत्युक्तं स एवात्र सवितर्कनिर्वितर्क-समापत्तिरूपेण द्विधोक्तइति । नन्वस्य निर्वितर्कसाक्षात्कारस्य विषयः किमवयवाः किं वाऽवयवी, आद्ये वक्ष्यमाणनिर्विचारसमापत्त्या सहैक-विषयत्वापत्तिः । अन्त्ये ऽवयविनः कल्पितत्वेन तद्गोचरनिर्वितर्काया विकल्पशून्यत्वानुपपत्तिरित्याशङ्क्यावयविनं व्यवस्थापयन् अवयविविषय-कत्वमेवास्य वृद्धवाक्यादवधारयति । तथा चेत्यादिना लोक इत्यन्तेन । व्याख्यातं पूर्वाचार्यैरिति शेषः । तस्या निर्वितर्काया गवादिर्घटादिर्वा लोक आलम्बनमित्यन्वयः । नन्ववयविनि किं प्रमाणं तत्राह । एक-बुद्ध्युपक्रमइति । एको गौरिति बुद्धिमुपक्रमते आरभतइत्येकबुद्ध्युपक्रमः । अतो नावयवानामनेकतया अवयविव्यवहारनिर्वाहकत्वमिति भावः । नन्वे-वमप्येकप्रत्ययानुरोधादेकं विज्ञानमात्रमेवावयविव्यवहारहेतुरस्तु तत्राह । अर्थात्मेति । अर्थात्मा दृश्यस्वरूपः । विज्ञानमात्रत्वे स्वस्य स्वदृश्यत्वा-नुपपत्तिः कर्मकर्तृविरोधादिति भावः । नन्वेवमवयवेभ्यो ऽवयविनो ऽति-रेके कपालं घटो जात इत्यादिरूपोवयवावयविनोरभेदप्रत्ययो न स्यादि-त्याशङ्कामपाकरोति । अणुप्रचयविशेषात्मेति । अणूनामेव प्रचयाख्य-संयोगनिमित्तको यो विशेषः परिणामरूपस्तत्स्वरूप इत्यर्थः । तथा च सामान्यविशेषयोर्भेदाभेदाङ्गीकारात् अभेदप्रत्ययोप्युपपन्न एवेति भावः । न च भेदाभेदयोर्विरोध इति वाच्यम् । भेदस्यान्योन्याभावरूपत्वात् अभेदस्याविभागरूपत्वादिति । अयं चाविभागो न लक्षणानन्यत्वं लक्षण-भेदकालेपि अभेदप्रत्ययात् किं त्वाधाराधेयभाववत्स्वरूपसंबन्धविशेष

एव दुग्धजलयोरिवेति । एतत्सर्वं परिणामसूत्रे विशिष्य प्रतिपादयिष्यति भाष्यकारः । ननु यद्यवयवी स्वीक्रियतेस्तर्हि तस्यैकावयवनाशे नाशापत्त्याऽनुपलब्धिप्रसङ्गः । किं चावयविनो नित्यत्वे सर्वदा कार्यकारिताप्रसङ्गः, अनित्यत्वे ऽसदुत्पादतः शशशृङ्गाद्यपि कारणव्यापारादुत्पद्येतेत्याशङ्कामपाकरोति । स चेति । स च स्थूलोऽवयवी स्वकारणानां भूतसूक्ष्माणां साधारणः प्रत्येकं परिसमाप्नोति न तु द्वित्वादिवद्व्यासज्यवृत्तिः, एकावयवव्यवधानेप्यप्रत्यक्षत्वप्रसङ्गात् । अत एकावयवनाशेप्यवयवान्तरे अवयव्यवस्थानात्तदुपलब्धिः । अवयवविभागविशेष एव चावयविनाशकः । स च विशेषो जातिरूपः फलबलात् कल्प्यतइति भावः । तथा आत्मभूतः सदैव भूतसूक्ष्मेष्वनुगतः नातः शशादौ शृङ्गाद्युत्पत्तिप्रसङ्गः । तत्र प्रमाणमाह । फलेन व्यक्तेनानुमित इति । अभिव्यक्तिलक्षणकार्यानुमितः । असदभिव्यक्तौ सर्वत्र सर्वाभिव्यक्तिप्रसङ्गात् । ननु तर्हि सर्वदैवाभिव्यक्तिः कुतो न भवति तत्राह । स्वव्यञ्जकेति । स्वाभिव्यक्तिहेतुर्यत्कारणं तदेवाञ्जनमभिव्यञ्जनं कारणं यस्य तथाभूतः सन्नाविर्भवति वर्त्तमानावस्थां प्राप्नोति न सर्वदा । तथा धर्मान्तरोदयकाले च मुद्गरपातादिना तिरोभवति अतीतावस्थां प्राप्नोति । स एव अवयवानां धर्मोऽवयवीत्युच्यते इत्यर्थः । अतो नोक्तशङ्कावकाशः । कार्यनित्यत्वेप्यभिव्यक्तस्यैव कार्यस्य स्वकार्यकारित्वादिति भावः । स्यादेतत् । अभिव्यक्तिरपि नित्या अनित्या वा । आद्ये सर्वदैवाभिव्यक्तिकार्यप्रसङ्गः । अन्तेऽवयव्यादेरेवानित्यत्वमभिव्यक्तिवदस्तु व्यर्थमभिव्यक्तिकल्पनमिति । उच्यते । अतीतानागतावस्थावत्त्वस्वरूपमनित्यत्वं घटादावभिव्यक्तौ चेष्यतएव आद्यन्तयोः कार्यस्यात्यन्तासत्त्वप्रतिषेधाय ध्वंसादिप्रतियोगित्वस्यैव निषेधात् अतीतानागतावस्थयोर्ध्वंसप्रागभावस्थलाभिषेकमात्रएवास्माकं विशेषात् । अभिव्यक्तिकल्पना च न व्यर्था घटोनागतो घटोऽतीत इति व्यवहारवत् घटो वर्त्तमान इति व्यवहारस्यापि घटमात्रेणासंभवात् घटस्यावस्थात्रयसाधारण्येनातीतादिकालेपि वर्त्तमानत्वव्यवहारप्रसङ्गात् । न चैवमभिव्यक्तेरप्यवस्थात्रयकल्पना भवत्येवेति वाच्यम् । बीजाङ्कुरादिवत् प्रामाणिकत्वेनादोषत्वस्य सांख्यसूत्रेणोक्तत्वात् । किं च

सत एवाभिव्यक्तिरित्येव सत्कार्यवादिनो नियमः । अभिव्यक्तेश्चाभिव्यक्त्यन्तरास्वीकारेण तस्या असत्या एवोत्पादेपि न क्षतिः । कार्याणामनागतावस्थैवाभिव्यक्तेरप्यनागतावस्था सैव चाभिव्यक्त्युत्पत्तौ नियमिका अतः शशशृङ्गादिवैलक्षण्यम् । यथा परैरुत्पत्तेरुत्पत्तिरभावे चाभावः स्वरूपमेवेष्यते तथैवाभिव्यक्तेरभिव्यक्तिः स्वरूपमेवेत्यस्माभिरप्युपगन्तव्यम् । घटादेरतीतानागतावस्थे तदभिव्यक्तेरप्यतीतानागतावस्थे इति । अथैवमभिव्यक्तिरपि घटस्वरूपमेवास्त्विति चेन्न । अतीताद्यवस्थघटेनाभिव्यक्तिव्यवहारप्रसङ्गस्योक्तत्वादिति दिक् । यत्तु वैशेषिकाः । प्रागभावमेव कार्योत्पत्तिनियामकं कल्पयन्ति । तदसत् । अभावकल्पनापेक्षया भावकल्पने लाघवात् । भावानां दृष्टत्वात् अन्यानपेक्षत्वाच्च । अपि चाभावेषु स्वतोविशेषे भावत्वापत्तिः । प्रतियोगिरूपविशेषश्च प्रतियोग्यसत्ताकाले नास्ति अतोभावस्याविशिष्टतया सर्वत्र सर्वोत्पत्तिप्रसङ्ग एवेति । अवयवेभ्यो विज्ञानाच्चातिरिक्ततया हेतुभूतं ताभ्यां वैधर्म्यजातमवयविनि दर्शयति । योसाविति । षड्विशेषणानि यथासंभवमवयवज्ञानाभ्यां वैधर्म्याणि, वैशेषिकैस्त्र्यणुकशब्देनोच्यते यः परिणामविशेषः स एवात्राणीयानित्युक्तः कार्येषु परमसूक्ष्मत्वाभावादिति । अवयवादिविलक्षणजलाहरणादिव्यवहारकारितयाप्यतिरिक्तोवयवीति प्रतिपादयति । तेनावयविनेति । अवयवातिरिक्तो ऽवयवी नास्तीत्यवयवा एव निर्विकल्पसाक्षात्कारविषय इति वैनाशिकमतमपाकरोति । यस्य पुनरिति । यस्य मते स प्रचयनिमित्तको विशेषो ऽवयव्याख्यो ऽवस्तुकस्तुच्छः सूक्ष्मं चावयवाख्यं कारणं न प्रत्यक्षगोचरं तस्य मते ऽवयव्यभावात प्रायेण सर्वमेव मिथ्याज्ञानमित्यायातम् । यतो ऽतद्रूपप्रतिष्ठमेव मिथ्याज्ञानमिति, तदा च सर्वस्य मिथ्याज्ञानत्वे सम्यग्ज्ञानमपि किं स्यात्, न स्यादेव विषयाभावेनक्वापि ज्ञानस्य सद्विषयकत्वासिद्धेरित्यर्थः । तत्र हेतुः यद्यदिति । नन्ववयवज्ञानस्य सम्यग्ज्ञानत्वं स्यादिति चेन्न । सूक्ष्मं चेत्यादिना अवयवानामप्रत्यक्षत्वस्योक्तत्वात् । अप्रत्यक्षेष्ववयवेषु लिङ्गं चावयव्येव तस्याभावात् पूर्वावयवज्ञानं प्रमाणाभावादेवासिद्धमित्याशयः । ज्ञानज्ञानस्य सम्यग्ज्ञानत्वं कदा चित् स्यादित्याश-

यात् प्रायेणेत्युक्तम् । अवयव्यभावे संघाताश्रितत्वेन परैरभ्युपगतस्य ज्ञानस्यापि रूपादिवन्मिथ्यात्वे सर्वं ज्ञानं भ्रमो ज्ञानत्वादित्यनुमानसंभवाच्चेति । स्वसिद्धान्तमुपसंहरति । तस्मादिति । सवितर्काया: कदा चित् विकल्पनाप्युपपत्तिरित्याशयेन निर्वितर्काया इत्युक्तम् ॥

( शेषमग्रे )

काशीस्थराजकीयप्रधानपाठशालायां } सांख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री । आङ्गलभागे संस्कृताध्यापकः केशवशास्त्री च ।

## ॥ अथ चित्सुखी ॥

### ॥ तत्र द्वितीयपरिच्छेदारम्भः ॥

*(Continued from page 340. Vol. V.)*

अपि चैवं वंशदलावयवाकाशविभागादेव दलाकाशविभागोपपत्ते दलयोर्विभागस्याकाशविभागं प्रति हेतुता न स्यादिति दलयोर्विभागादाकाशविभागः स्वाभिमतो न सिध्येत्, तस्मादसमवायिकारणापेक्षिणो वंशदलाकाशविभागस्य वंशदलक्रियैवासमवायिकारणमिति न पारिशेष्याद्विभागस्य विभागजनकत्वसिद्धिः ।

न च कर्मैकहेतुकत्वे विभागयोरुक्तवैलक्षण्यानुपपत्तिः, कर्मैकहेतुकयोः संयोगविभागयोरिव वैलक्षण्योपपत्तेः, तस्माद्विभागजविभागाभावात् तद्व्यावृत्त्यर्थं विभागाजन्यत्वविशेषणं कर्मलक्षणे व्यर्थम्, व्यञ्जकप्रमाणयोर्निरस्तत्वाच्च, कर्मत्वजातेरभावे तद्योगित्वमपि लक्षणं परास्तम्, सामान्यस्य दुर्लक्ष्यत्वाच्च तद्विशिष्टानि लक्षणानि सर्वाण्यपि निरस्तानि वेदितव्यानि ।

तथाहि किमिदं सामान्यं किमनुवृत्तप्रत्ययकारणमुतानुवृत्तप्रत्ययप्रमाणकमथवानुवृत्तत्वमाहोस्विन्नित्यत्वे सत्यनुवृत्तत्वमथवा नित्यमेकमनेकसमवेतम्, तत्र,

अतिव्याप्त्या निराकुर्यादाद्यं पक्षचतुष्टयम् ।
अनेकत्वानिरुक्तेश्च पक्षमन्त्यं प्रतिक्षिपेत् ॥ १० ॥

न तावदाद्यः, सामग्र्यां तदेकदेशेषु चातिव्याप्तेः, तेषामपि तत्प्रत्ययकारणत्वात् ।

नापि द्वितीयः, अनुवृत्तप्रत्ययस्य स्वकारणानुमापकतया कारणस्यापि तत्प्रमाणकत्वादतिव्याप्तेः ।

न तृतीयः, अनुवृत्तत्वस्य संयोगादिष्वपि भावात् ।

नापि चतुर्थः, नित्येष्वनेककार्यवृत्तिषु परमाणुषु व्यभिचारात् ।

नापि पञ्चमः, विकल्पासहत्वात्. तथाहि किमनेकत्वसंख्याविशिष्टेषु समवेतत्वमनेकसमवेतत्वमुताश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वमाहोस्वित् स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वम् ।

न प्रथमः, गुणकर्मवृत्तिसामान्येष्वव्याप्तेः, अद्रव्यत्वेन गुणकर्मणोः संख्यानधिकरणत्वात् ।

नापि द्वितीयः, नित्यैर्विशेषैः परमाणुरूपैश्च व्यभिचारात्, तेषामपि यत्किंचिदाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वात् ।

न तृतीयः, स्वशब्देन जातिविवक्षायामात्माश्रयत्वप्रसङ्गात् ।

नित्यत्वं च स्वप्रच्युत्यनुपलक्षितसत्तायोगित्वं प्रध्वंसप्रतियोगित्वानधिकरणत्वं वा स्वप्रध्वंसप्रतियोगित्वानधिकरणत्वं वा ।

न प्रथमः, जातेर्जात्यनधिकरणत्वेन लक्षणस्यासंभवित्वात् ।

न द्वितीयः, विकल्पासहत्वात् ।

किं तत् प्रतियोगित्वम्, यदनधिकरणत्वं नित्यतामभिदधासि, किं तन्निरूपकत्वमुत तेन सहानवस्थितत्वम् ।

नाद्यः, जातिध्वंसोऽन्य इत्यत्र जातेरपि ध्वंसनिरूपकत्वात् ।

न द्वितीयः, सत्ताद्रव्यत्वपृथिवीत्वानां घटध्वंसेन सह पृथिव्यामनवस्थानात् ।

नापि तृतीयः, जातिप्रध्वंसस्यैवाप्रसिद्ध्या तत्प्रतियोगित्वस्याप्रसिद्धेः ।

ननु ब्रह्मणि तथापि नित्यत्वं सिद्धं तत् किं जातावपलपसि, मैवम्, ब्रह्मणो निर्धर्मकतया नित्यत्वधर्मानधिकरणत्वात्, कथं तर्हि तद्व्यपदेश इति चेत्,विनाशस्य दुर्निरूपत्वादिति ब्रूमः ।

ननु घटादेरपि विनाशो दुर्निरूपः, सत्यम्, स्वरूपेण परमार्थस्य तदनिरूपणे नित्यत्वव्यपदेशात् घटादेश्चातथात्वात्, त्वं पुनः[1] सामान्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वं नित्यत्वमित्यादिभाष्यदर्शनान्नित्यत्वसाधर्म्यमिच्छसि ।

अस्तु तर्हि मनस्त्वात्मत्वातिरिक्तनित्यमात्रसमवेतान्यत्वे सति समवेतं सत्तानाश्रयः सामान्यमिति सामान्यलक्षणं चेच, यतः, ।

जातेरव्याप्त्यसिद्धेश्च सत्तादेरप्यसिद्धितः ।
तदनाश्रयतान्यत्वलक्षणेऽन्योन्यसंश्रयः ॥ ११ ॥

जातिमात्रलक्षणसिद्धौ सत्तात्मत्वमनस्त्वसिद्धिः, तत्सिद्धौ चात्मत्वमनस्त्वातिरिक्तसत्तानाश्रय इति लक्षणविशेषणसिद्धिरिति परस्पराश्रयता ।

तथाहि घटवृत्तिवृत्तित्वे सत्यात्मवृत्तिजातिः सत्तेति परैरभ्युपेयते न धर्ममात्रं भावमात्रं वा, धर्ममात्रत्वे घटवृत्ति[2]रूपादेरात्मनश्चान्योन्याभावेऽतिव्याप्तेः, भावमात्रत्वे वा परजातिमत्त्वलक्षणे धर्मे गुणकर्मणोरात्मनि च वर्तमानेऽतिव्याप्तेस्तादवस्थ्यात् ।

अतः परिशेषादेवंविशेषिता जातिः सत्तेति वाच्यम्, तथा सति कथं नान्योन्याश्रयता, तथात्मत्वमनस्त्वलक्षणे च, तथाहि[3] घटावृत्तित्वे

---

१ त्वं पुनरिति, तथाहि सामान्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वं कार्यत्वमकारणत्वमसामान्यविशेषवत्त्वं नित्यत्वमर्थशब्दाभिधेयत्वं चेति प्रशस्तपादभाष्यम्, तत्र च स्वात्मत्वं स्वरूपसत्त्वं बुद्धिलक्षणत्वं बुद्धिभिर्ह्येतानि लक्ष्यन्ते अनुवृत्तप्रत्ययकारणं सामान्यमत्यन्तव्यावृत्तबुद्धिहेतवोऽन्त्या विशेषा इह प्रत्ययहेतुसमवायोऽकारणत्वं चानात्मगुणकार्यं प्रति ।

२ घटवृत्तीति, रूपादेरात्मनश्च यो धर्मभूतो घटान्योन्याभावः, तत्रैतल्लक्षणमस्तीत्यतिव्याप्तिरित्यर्थः ।

३ तथाहीति, सत्ताद्रव्यत्वयोरतिव्याप्तिपरिहाराय घटावृत्तीत्युक्तम्, उदकत्वगुणत्वाद्यतिव्याप्तिवारणाय आत्मनिष्ठात्यन्ताभावाप्रतियोगिनीत्युक्तम् ।

सत्यात्मनिष्ठात्यन्ताभावाप्रतियोगिनी जातिरात्मत्वम्, एवमाकाशावृत्ति[1]त्वे सति मनोनिष्ठा[2]त्यन्ताभावाप्रतियोगिनी जातिर्मनस्त्वम्,

न तु धर्ममात्रं भावमात्रं वा, तदुभय[3]निष्ठान्योन्याभावे बहुत्वसंख्यायां च व्यभिचारात्, तथा च तदतिरिक्तलक्षणे कथं न प्राचीनदोषा[4]नुषङ्गः, कथं च तत् सदित्यबाधितप्रत्यये सति सत्ताया गोत्वादावभावः ।

न चैकार्थसमवायात् सदिति प्रत्ययः, गुणकर्मणोरपि तथोपपत्तौ सत्ताभावप्रसङ्गात्, सत्तासमवाययोः सदिति व्यवहाराभावप्रसङ्गाच्च ।

विवादाध्यासितं सत्तारहितमपरजातिरहितत्वात् सत्तावदिति बाधकमिति चेत्, मैवम्, सद्गोत्वं सदश्वत्वमित्यादिप्रत्यक्षविरोधे कालात्ययापदिष्टत्वात्, अन्यथा गुणकर्मणी सत्तारहिते अद्रव्यत्वात् सत्तावदित्यपि स्यात् ।

अथ तत्रानुभवविरोधः, स न प्रकृतेऽपि दण्डवारितः, तस्मादसंभवित्वात् सत्तानाश्रय इत्यलक्षणमेतत्, विशेषलक्षणमपि दुर्निरूपम्, तथाहि नित्येष्वेव[5] द्रव्येष्वेव वर्तन्त एव ये ते विशेषा इति न लक्षणम् । यतः ।

## नित्यद्रव्यै[6]कवृत्तित्वप्रयोगपरिहारतः ।

१ सत्ताद्रव्यत्वातिव्याप्तिपरिहारायाकाशावृत्तीत्युक्तम् ।

२ घटत्वादिष्वतिव्याप्तिपरिहाराय मनोनिष्ठेत्यादि विशेषणम् ।

३ तदुभयनिष्ठावात्ममनोनिष्ठौ यावन्योन्याभावौ, आत्मनि घटाद्यन्योन्याभावो मनसि चाकाशान्योन्याभावः, तयोरतिव्याप्ती स्याताम् । अथ भावमात्रं तदा आत्मवृत्तिज्ञाने मनोनिष्ठबहुत्वसंख्यायां चातिव्याप्ती स्याताम् । बहुत्वसंख्याग्रहणं ज्ञानादेरप्युपलक्षणम्

४ प्राचीनदोषोऽन्योन्याश्रयः ।

५ कन्दलीकारोक्तं लक्षणमनुवदति नित्येष्वेवेति, द्रव्येषु ये वर्तन्ते ते विशेषा इत्युक्ते भावसमवायेष्वतिव्याप्तिस्तदर्थं द्रव्येष्वेवेत्युक्तम्, तथापि गुणकर्मणोः प्रागभावप्रध्वंसयोश्चातिव्याप्तिः, तदर्थं नित्येष्वेवेत्युक्तम्, तथाप्यात्मत्वमनस्त्वयोर्नित्यद्रव्यगतगुणविशेषेषु चातिव्याप्तिरत उक्तं वर्तन्त एवेति, अनेन कदाचिद्वृत्तिः क्वचिद्वृत्तिश्च व्यावर्त्यते तेन नित्यद्रव्ये कादाचित्कक्काचित्कज्ञानादीनामकादाचित्कानामपि क्काचित्कानां मनस्त्वादीनां व्यवच्छेदः, तेषां कालतो देशतश्चावृत्तेरपि विद्यमानत्वाद् वर्तन्त एवेत्ययमंशो न भवतीति भावः ।

६ नित्यद्रव्येति, यदिदं वर्तन्त एवेति, प्रयोगपरिहारतो नित्यद्रव्यैकवृत्तित्वं लक्षणमुक्तं तत्र लक्षणं कुतः, त्वन्मते आत्मत्वमनस्त्वयोरतिव्याप्तेः ।

न लक्षणमतिव्याप्तेस्तवात्मत्वमनस्त्वयोः ॥ १२ ॥

आत्मत्वं मनस्त्वं च नित्यद्रव्येष्वेव वर्तते एवेति तयोरतिव्याप्तिः ।

ननु कालाकाशादिषु नित्यान्तरेष्वसत्त्वाच्च तत् सर्वत्र नित्येषु वर्तते विशेषास्तु नैवं वर्तन्त एवेति नियमादिति चेच्च, प्रतिविशेषमव्याप्तेः, सर्वेषां विशेषाणां सर्वत्राभावात् ।

यज्जातीयमेवं स विशेष इति लक्षणार्थ इति चेत्, न, विशेषत्वजातेरनङ्गीकरणात् ।

उपाधेर्विवक्षितत्वाददोष इति चेच्च, तदुपाधिसिद्धौ तदुपजीविनो लक्षणस्य वैयर्थ्यापातात्, असिद्धौ च लक्षणस्य दुरवधारणत्वात् ।

एकद्रव्याः स्वभावसन्तो विशेषा इत्यपि न लक्षणम्, एकद्रव्यत्वस्य दुर्निरूपत्वात् ।

तथाहि किमिदमेकद्रव्यत्वम्, किमेकत्वसंख्याविशिष्टद्रव्यसमवेतत्वमुताद्विष्ठत्वम् ।

नाद्यः, द्रव्यनिष्ठसामान्येष्वतिव्याप्तेः, तान्यपि ह्येकत्वसंख्याविशिष्टद्रव्यसमवेतानि स्वभावसन्ति च सत्तासामान्यरहितत्वात् ।

नापि द्वितीयः, विकल्पासहत्वात् ।

तदपि किंचिद्वृत्तित्वे सत्यन्यावृत्तित्वमुताश्रयप्रतियोगिकान्योन्याभाववदवृत्तित्वम् ।

न प्रथमः, प्राचीनदोषानुषङ्गात्, सामान्यान्यपि हि किंचिन्निष्ठत्वे सति तदन्यावृत्तीनि, सर्वत्रावृत्तेः ।

अत एव न द्वितीयः, सर्वावृत्तित्वेनाश्रयप्रतियोगिकान्योन्याभाववदवृत्तित्वस्यापि सामान्येषु भावात् ।

स्वाश्रयप्रतियोगिकान्योन्याभाववद्वृत्तित्वानधिकरणत्वं विवक्षितमिति चेत्, न, स्वशब्देन विशेषविवक्षायामात्माश्रयप्रसङ्गात् ।

एतदात्म[1]वृत्तित्वे सत्येतदन्यनित्यद्रव्यावृत्तिरेतद्विशेष इति प्रति-

---

१ एतदात्मेति, एतदात्मनिष्ठसत्ताद्रव्यत्वात्मत्वव्यवच्छेदार्थमेतदतिरिक्तनित्यद्रव्यावृत्ति विशेषणम्, तावन्मात्राभिधाने च नित्यद्रव्येष्वेवातिव्याप्तिः, तेषामसाधितत्वेनात्मव्यतिरिक्तनित्यद्रव्यवृत्तित्वाभावात्, अत उक्तमेतदात्मेति, सत्तारहितत्वविशेषणं चात्रावगन्तव्यम्, अन्यथैतदात्मनिष्ठसुखादिष्वतिव्याप्तेः, वृत्तिशब्देन समवायो विवक्ष्यते तन्मात्रवृत्त्यन्योन्याभावादिपरिहाराय ।

भावरूपत्वे सतीति विशेषणादयमदोष इति चेत्, न, अजन्यसंयोगे व्यभिचारात् ।

स एव नास्तीति चेत्, मैवम्, प्रमाणसिद्धत्वात्, आकाशमात्मना संयुज्यते संयोगित्वाद् घटवत् ।

न च क्रियावत्त्वमूर्तत्वादिरुपाधिः, तद्व्यतिरेकेऽसंयोगित्वस्यैवोपाधित्वात् ।

किंचाकाशमात्मना संयुज्यत इत्यात्मसंबन्धाधार इति साध्ये क्रियावत्त्वमूर्तत्वयोरुपाधित्वमेव नास्ति, आत्मनि साध्याव्याप्तेः, तस्मादुक्तयुक्त्या न समवायस्य लक्षणसंभवः ।

प्रमाणमपि तत्र प्रत्यक्षमनुमानं वा ।

नाद्यः, तदभावात्, इह तन्तुषु पट इति प्रत्यक्षमस्तीति चेत्, न, विचारासहत्वात्, समवायो ह्याधारबुद्धिं कुर्यादाधेयबुद्धिं वोभयबुद्धिं वा सर्वथापि नोपपद्यते, तन्तुपटयो[1]रुभयोरप्याधारबुद्धेराधेयबुद्धेश्चाविशेषेण प्रसङ्गात् ।

जातिजातिमन्तौ मिथः संबद्धावित्यस्त्येवानुभवान्तरमिहेति चेत्, मैवम्, विकल्पासहत्वात् ।

तथाहि, अस्मिन्ननुभवे समवायस्त[2]दीयत्वेनान्यदीयत्वेन वा स्वरूपेण वा प्रथत इति वक्तव्यम् ।

नाद्यः, तदीयत्वस्य संबन्धान्तरायत्तत्वेनानवस्थापातात् ।

न द्वितीयः, अन्यत्रैव संबन्धबोधप्रसङ्गात् ।

न तृतीयः, क्वचिदपि संबन्धप्रत्ययानुपपत्तेः ।

असत्येव संबन्धे तदीयत्वमनुभवसिद्धमिति चेत्, न, जात्यादेरप्यसत्येव संबन्धे तदीयत्वानुभवप्रसङ्गात्, असत्ख्यातिप्रसङ्गाच्च, असत्येव

---

१ पक्षत्रयेऽपि दूषणमाह तन्तुपटयोरिति, आधारबुद्धिमात्रजनकत्वे इह तन्तुषु पट इत्युभयत्राप्याधारबुद्धिं कुर्यात्, द्वितीये तु तन्तवः पटो वर्तत इत्याधेयबुद्धिमेव कुर्यात्, तृतीये तु तन्तुष्वप्याधाराधेयबुद्धिं पटेऽप्याधाराधेयबुद्धिं कुर्यादित्यर्थः ।

२ जातिव्यक्तिसंबन्धत्वेन ।

संबन्धे संबन्धिभ्यां निरूपणात् तदीयत्वव्यवहारे जातेरपि संबन्धान्तरेण व्यक्त्यानिरूपणात् तदीयत्वव्यवहारप्रसङ्गः नानुमानमपि लिङ्गाभावात् ।

विवादाध्यासित[1] इहप्रत्ययः संबन्धपुरःसरः, अबाधितेहप्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवदित्यनुमानमस्तीति चेत्, न, विशेषणविशेष्यभावाधाराधेयभावसंबन्धादिना सिद्धसाधनत्वात्, विशेषणविशेष्यादेरेव मूलसंबन्धपुरःसरत्वं सिषाधयिषितमिति न सिद्धसाधनत्वमिति चेत्,न, इह भूतले घटाभाव इत्यस्मिन्नेव विशेषणविशेष्यभावप्रत्ययेऽनैकान्त्यात् ।

यच्च लीलावतीकारेणानुमानमुक्तम्, जात्यादि[2]गोचरो विशिष्टव्यवहारः संबन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् सघटं भूतलमिति व्यवहारवत् ।

सामानाधिकरण्य[3]ज्ञानमबाधितसंबन्धज्ञानपुरःसरमबाधितसामानाधिकरण्यज्ञानत्वाद् दण्डकुण्डले देवदत्तसंसृष्टे इति ज्ञानवदिति चेत्, तदप्ययुक्तम्, प्रागुक्तरीत्या*सिद्धसाधनत्वात्, अथ विशेषणविशेष्यभावादेः[4] संबन्धत्वमेव नास्त्यद्विष्ठत्वात्, द्विष्ठत्वे वोभयत्रापि विशेषणबुद्धेर्विशेष्यबुद्धेश्चाविशेषेण जननप्रसङ्गात् । (शेषमये)

---

१ इह तन्तुषु पट इत्यादिप्रत्ययो विवादाध्यासितपदेन गृह्यते, इह नभसि नीलिमेति भ्रान्तव्यवच्छेदार्थमबाधितेति विशेषणम्, परस्परसंबन्धरहितपदार्थद्वयविषयाबाधितप्रत्यये व्यभिचारो मा भूदिति इहप्रत्ययेति विशेषणम्, तथा चायुतसिद्धत्वेन संयोगस्य वक्तुमशक्यत्वात् समवायस्य सिद्धिरिति भावः ।

२ जात्यादीत्यादिशब्देन द्रव्यगुणकर्मविशेषविशिष्टव्यवहारो गृह्यते, नीलं नभ इत्यादिविशिष्टव्यवहारे व्यभिचारवारणार्थमबाधितेति पदम्, निर्घटं भूतलमित्यादिविशिष्टव्यवहारे व्यभिचारो मा भूदिति भावमात्रविशेषणम्, इतौ घटपटावित्यादिव्यवहारे व्यभिचारपरिहारार्थं विशिष्टपदम् ।

३ सामानाधिकरण्यज्ञानं शुक्लः पट इत्यादि सामानाधिकरण्यज्ञानमिति यावत् । भ्रान्तसंबन्धज्ञानपूर्वकत्वेन सिद्धसाधनता मा भूदिति प्रतिज्ञायामबाधितं पदम्, इदं रजतमिति भ्रान्तसामानाधिकरण्यज्ञानव्यवच्छेदार्थं हेतावबाधितपदम्, घटः पटेनासंबद्ध इति ज्ञानव्यवच्छेदार्थं सामानाधिकरण्यपदम् ।

* –नीत्या इति पा० ।

४ विशेषणविशेष्यभावाधाराधेयभावादिसंबन्धत्वेन ।

॥ श्रीः ॥

# कैवल्यरत्नम् ।

(*Continued from page* 354. VOL. V.)

परमेश्वर उवाच ॥

अथातः संप्रवक्ष्यामि तवाहं करुणाबलात् ।
आत्मतत्त्वस्थितिः सम्यक् संग्रहेण जगद्धितम् ॥
प्रकाशते स्वयं किं चित् प्रथमं तावदास्तिक ।
तदेव परमं तत्त्वं सत्यमेव मयोदितम् ॥
तदन्यत्सकलं तस्मिन्विभाति न विभाति च ।
विभातीति यथा भाति न भातीति तथैव च ॥
विभाति निपुणानां तु द्वयं भाति हि केवलम् ।
यथा भातीति भातार्थे द्विधा भेदोऽवभासते ॥
तथा न भातीत्यत्रापि द्विधा भेदोऽवभासते ।
अतो विभातमेवेदं जगत्तस्मिन्निरन्तरम् ॥
भावाभावप्रभेदश्च कालदेशादिभिर्भिदा ।
मूर्तामूर्तप्रभेदश्च भानस्यान्तर्विभासते ॥
प्रमाता च प्रमाणं च प्रमेयं च मितिस्तथा ।
व्यवहारश्च सर्वस्य विभाति खलु सत्तम ॥
यदिदं भासते तस्मिन् जगत्तत्सत्तयैव तु ।
विभासतेऽथ वा तेन स्वरूपेण न भासते ॥
स्वत एव विभातं तत्तदधिष्ठानमास्तिक ।
प्रकाशात्मतया भाति केवलं सर्वदा यथा ॥
तथास्य जगतः साक्षात्प्रकाशात्मतयैव तु ।
केवलं सर्वदा भानं प्रसन्नेनान्तरात्मना ॥

प्रकाशात्मतयैवेदं खलु सर्वं प्रकाशते ।
अतो न स्वतयेवेदं सर्वथापि विभासते ॥
ततो भानाज्जगद्भाति तेनास्य न हि संगतिः ।
संबन्धस्यापि भातत्वात्तेन भास्यत्वकल्पना ॥
प्रसज्यते ऽनवस्था च तथा सति तपोधन ।
दृश्यवर्गे हि संबन्धो दृष्टः सर्वजनैरपि ॥
दृग्दृश्यत्वं स्वयं विद्वन्नु संबन्धो भविष्यति ।
संबन्धस्तादृशः सर्वैर्वादिभिर्नोच्यते खलु ॥
लौकिकैश्च न संबन्धस्तादृगेवावगम्यते ।
अतो न भाति तेनापि जगदेतत्तपोधन ॥
स्वतश्च परतश्चापि प्रकाशो जगतो ऽस्य न ।
अतो नैव जगद्भाति वस्तुतत्त्वनिरूपणात् ॥
अतः प्रकाशितं सर्वं वस्तुतत्त्वनिरूपणे ।
स्वप्रकाशं परं तत्त्वं न तदन्यत्तु किं चन ॥
अनिरूपितवेलायामन्यदृश्यतयैव तु ।
विभाति सकलं साक्षाद्दृग्रूपस्य परात्मनः ॥
प्रकाशमानमप्येतद्दृश्यरूपतया मुने ।
वस्तुगत्या जगन्नास्ति ततस्तत्त्वं हि तत्परम् ॥
दृशो दृश्यतया भानं वस्तुगत्या न युज्यते ।
तथापि भासते सैव दृश्यरूपतयैव तु ॥
सैव दृश्यतया भाति न तदन्यत्कदा च न ।
न विद्यते खलु प्राज्ञ तदन्यत्सकलं जगत् ॥
एवं सति दृशो दृश्यवपुषा प्रतिभासने ।
कारणत्वेन मायैव स्वीकर्तव्या निरूपकैः ॥

सा सत्त्वेनाप्यसत्त्वेन सदसत्त्वेन चास्तिक ।
दृशोऽभेदेन भेदेन भेदाभेदेन च त्वया ॥
मया नारायणेनापि तथान्यैरपि चेतनैः ।
अपि वर्षशतेनापि दुर्निरूपा न संशयः ॥
वस्तुगत्या न सा माया दृशो भेदेन विद्यते ।
व्यावहारिकदृष्ट्या हि स्वीकृता केवलं तु सा ॥
परिशुद्धात्मविद्यायामृजुतायामिदं जगत् ।
सकारणमधिष्ठानं भवेत्स्रक्सर्पवद्बुध ॥
स्रक्सर्पः स्रक्परिज्ञानाद्बाध्यमानः सकारणः ।
सर्पभावनया नैव बाध्यते नान्यरूपता ॥
किं तु भ्रान्तस्य सर्पस्य स्रगज्ञानस्य चास्तिक ।
अधिष्ठानतया स्रग्वा स्थिता तद्रूपतः खलु ॥
अधिष्ठानतया विद्वन् बाध्यमानस्तु पन्नगः ।
व्यवहारदृशा ह्येव पन्नगः प्रतिभासते ॥
वस्तुगत्योरगः सोऽयं स्रगेव खलु नापरम् ।
तद्वद्दृश्यमिदं पश्य तत्त्वदृष्ट्या दृगात्मना ॥
व्यवहारदृशा भातं स्रक्सर्पमनपोह्य च ।
उच्यते दुर्निरूपत्वं यथा तस्य निरूपकैः ॥
तथैव माया तत्कार्यस्वरूपं व्यावहारिकम् ।
अनपोह्यतया तस्य दुर्निरूपत्वमुच्यते ॥
अधिष्ठानातिरेकेण वस्तुगत्या न पन्नगः ।
यथा तद्वदिदं सर्वं जगत्पन्नगनिश्चितम् ॥
अधिष्ठानातिरेकेण मुने शून्यस्तु पन्नगः ।
दुर्निरूपतया वापि तत्त्वतो न निरूप्यते ॥

तद्वद् ब्रह्मातिरेकेण जगच्छून्यं तु तत्त्वतः ।
दुर्निरूपतया चापि मुने नैव निरूप्यते ॥
भूतपूर्वानुसंधानादधिष्ठानतयैव तु ।
निरूप्यते जगद् भ्रान्त्या निरूप्यं तत्त्वतो न हि ॥
यथाजातजनस्यायं प्रपञ्चः प्रतिभासते ।
प्रपञ्चात्मतया सोऽयं तर्कतो विदुषामपि ॥
मायामात्रतया भाति व्यवहारो न वस्तुतः ।
सूक्ष्मतर्कैः प्रमाणैश्च प्रसादेनैव मेऽनघ ॥
अधिष्ठानतया भाति केवलं बोधबाधितः ।
प्रारब्धफलपर्यन्तं भाति मायास्वरूपतः ॥
मायामात्रं तथा भाति कदा चिद्भोगसिद्धये ।
निवृत्ते फलभोगे तु भाति चिद्रूपतः स्वयम् ॥
प्रारब्धकर्म केषां चिद्राज्यभोगं ददाति च ।
ददाति दुःखं केषां चिद्विदुषामास्तिकोत्तम ॥
वैराग्यमपि केषां चिच्छान्तिं दान्तिं ददाति च ।
महारागं महाक्रोधं केषां चिद्रोगमेव च ॥
सर्वशास्त्रार्थविज्ञानं केषां चिज्ज्ञाल्पवेदनम् ।
ददाति परमां मुक्तिं सामान्यां सर्वदेहिनाम् ॥
खलु विज्ञानमेवैकं मुक्तिदं सर्वदेहिनाम् ।
तथा सति मुने तेषां प्रतीतिर्नैव बाधिका ॥
निष्प्रपञ्चात्मविज्ञानस्मृतिस्तेषां द्विजोत्तम ।
सप्रपञ्चतया भाने सति चाबाधिका खलु ॥
व्यवहारदृशा भातं तमः संत्यज्य बुद्धिमान् ।
तत्त्वदृष्ट्या परं तत्त्वं सदा पश्येद्विमुक्तये ॥

श्रद्दधानस्य मर्त्यस्य कुशाग्रीयधियस्त्वया ।
वक्तव्यः शिष्यभूतस्य द्विजस्याथो महानयम् ॥
न रोचते मनुष्याणामयमर्थो महत्तरः ।
कारणं पापमेवात्र नास्ति संशयकारणम् ॥
तपोभिर्विविधैरुग्रैर्दानैश्च विविधैरपि ।
शान्तिदान्त्यादिभिर्द्धर्म्मैरयमर्थः प्रकाशते ॥
स्वात्मतत्त्वस्थितिः सम्यक् मयोक्ता करुणाबलात् ।
श्रद्दधानस्य ते ऽगस्त्य न देयं यस्य कस्य चित् ॥

॥ इतिअष्टादशोऽध्यायः ॥

श्रीपरमेश्वरउवाच ॥

अथाहं संप्रवक्ष्यामि रहस्यं परमं तव ।
यस्य विज्ञानमात्रेण स्वयं ब्रह्म भवेत्परम् ॥
स्वयमेकः सदा भातः स्वभावानन्दलक्षणः ।
पुमानस्ति निराधारः केवलो निरुपद्रवः ॥
शास्त्रदृष्ट्यात्ममायोत्थं व्योमामायागतं बुध ।
अपि भ्रान्त्या निराधारं नित्यं भाति यथा नृणाम् ॥
तथा परः पुमान् भ्रान्त्या नित्यो ऽनित्यतयापि च ।
चिद्रूपश्चेतनत्वेन सुखरूपसुखीव च ॥
अद्वयः सद्वयत्वेन देहाद्याधारवानिव ।
निराधारः स्वयं साक्षादीश्वरो ऽनीश्वरात्मना ॥
विभाति स्वात्मविज्ञानप्रदीपार्कोदयात्पुरा ।
यथा वा स्वप्नदृक् विद्वन् स्वगृहान्तस्थितः स्वयम् ॥
स्वस्मिन् स्वाज्ञानमोहेन जनिताकाशमध्यमे ।
स्वदोषनिर्मिते देशे स्वग्रामत्वेन कल्पिते ॥

स्वगृहे स्वासने स्वस्य शरीरे भासते स्वयम् ।
तथा स्वाज्ञानमायोत्थब्रह्माण्डान्तः प्रकल्पिते ॥
लोके देशे तदन्तस्थे ग्रामे तस्मिन्प्रकल्पिते ।
तदन्तः कल्पिते गेहे तदन्तस्थे च विग्रहे ॥
अहं मनुष्यः स्थूलोऽहं कृशोऽहं लङ्घयाम्यहम् ।
इति भाति विभेदेन स्वमोहेन स्वयं पुमान् ॥
लक्षयोजनविस्तीर्णे यथा चादित्यमण्डले ।
भ्रमात्प्रादेशमात्रत्वं मनुष्याणां विभासते ॥
अनन्तानन्दचैतन्यस्वरूपात्मनि मायया ।
अहंरूपेण संकोचस्तथा भाति न तत्त्वतः ॥
अहं कञ्चुकमास्थाय स्थितः साक्षाद्यदा पुमान् ।
तत्र तद्वृत्तिसंबन्धाद्भुङ्क्ते शब्दादिकं जगत् ॥
धर्माधर्मादिरूपेण गृहीतेनैव केन चित् ।
भुङ्क्ते भोक्तृतया भातं स्वभोग्यत्वेन कल्पितम् ॥
भोक्तारं भोग्यवर्गं च भोगोपकरणानि च ।
भोगं मायात्मना पश्यन् कर्मभिर्न हि लिप्यते ॥
आत्मन्यध्यस्तमज्ञानमधिष्ठाने हि वर्तते ।
तदुत्थं सकलं तस्मिज्जगन्नान्यत्र सत्तम ॥
अथ सत्यात्मनस्तस्मिन्नध्यस्ताज्ञानसंगतिः ।
सदास्ति तं न तत्कार्यप्रपञ्चेनापि संगतिः ॥
स्वात्मना नित्यसंबन्धमतः स्वाज्ञानमास्तिक ।
तदुत्थं चाखिलं भुङ्क्ते पुमान्नित्यस्वभावतः ॥
एवं स्वाभाविकं भोग्यं स्वयं भुङ्क्ते निरन्तरम् ।
योगी जानाति तत्तस्य कर्मलेपो न विद्यते ॥

स्वस्मादन्यतया ज्ञाते स्वासंबन्धतयापि च ।
विषये यस्य भोगो ऽस्ति कर्मलेपस्तु तस्य हि ॥
स्वस्मादन्यतया ज्ञाते शास्त्रोक्तेनैव वर्त्मना ।
विषये यस्य सम्बन्धस्तस्य दोषो न विद्यते ॥
स्वस्मादन्यतया ज्ञाते शास्त्रोक्तेनैव वर्त्मना ।
विषये यस्य संबन्धस्तस्य लाभश्च विद्यते ॥
दोषो लाभश्च भिन्नार्थदर्शिनस्त्वविवेकिनः ।
कुलालचक्रवन्नित्यं वर्तते हि पुनः पुनः ॥
अनादिमायया देवः स्वचिच्छक्त्या च संगतः ।
व्यवहारे महाक्रीडारसं भुङ्क्ते स्वभावतः ॥
स्वशक्तिः संगमः स्वार्थे पुमान्विप्र स्वभावतः ।
स्वयं भुङ्क्ते नतो भुङ्क्ते नाज्ञानं मुक्तिसाधनम् ॥
स्वस्य स्वभावसंसिद्धं सुखं बुद्धानुबोधकम् ।
स्वशक्तिसंगमादुत्थं पुमान् भिन्नः प्रकम्पते ॥
यद्यत्स्वभावतः स्वस्य विभाति न विभाति च ।
हितत्वेनाहितत्वेन तत्तद्भोगः परात्मनः ॥
सर्वसाक्षिस्वरूपस्य शिवस्य परमात्मनः ।
हितरूपतया भाति केवलं सकलं जगत् ॥
अहं कारावृतस्यास्य हिताहितविभागतः ।
विभाति सकलं तस्य करणं कर्म केवलम् ॥
अहं कञ्चुकिताकारं परित्यज्य विमोहजम् ।
केवलं साक्षिमात्रेण स्वात्मानं वेदमानतः ॥
तर्कतश्च सुनिश्चित्य स्थितस्य परयोगिनः ।
दृश्यरूपमिदं सर्वमायामात्रबलक्षणम् ॥

व्यावहारिकवेलायां प्रारब्धान्तसुखाय हि ।
साक्षिचैतन्यमात्रात्मनिश्चयस्खलितस्य तु ॥
अहितात्मतया भाति किं चित्पापबलेन तु ।
हितरूपतया भाति किं चित्पुण्यबलेन तु ॥
हितत्वेनाहितत्वेन प्रतीतः सकलो ऽस्य तु ।
साक्षिरूपस्य मे भोगाः स्वभावादेव केवलम् ॥
नैपुण्येन तु पापेन बन्धकत्वेन भासते ।
अहं सर्वमिति ज्ञानं भवरोगस्य भेषजम् ॥
यथाभातेन रूपेण स्वभावेनैव केवलम् ।
साक्षिणो मम यद्भाति क्रीडा सा परमात्मनः ॥
शब्दजालेन मन्त्रेण द्रव्याणामात्मकेन च ।
स्वभावेन शिवः पूज्यः सदा साक्षी सुयोगिभिः ॥
साक्षिमात्रात्मविज्ञानविहीनः स्वविलक्षणम् ।
जगत्सत्यतया पश्यन्नज्ञः श्रुत्युक्तवर्त्मना ॥
वर्णाश्रमानुगुण्येन निन्दितं परिवर्जयेत् ।
आचरेद्विहितं सर्वं जन्मबन्धप्रशान्तये ॥
आत्मज्ञानविहीनस्य श्रद्धा कर्मणि जायते ।
पूर्वपुण्यवशेनैव न पापिष्ठस्य सत्तम ॥
साक्षिमात्रतया सर्वं पश्यन्नेतं न पश्यति ।
यत्स्थिरं परनिर्वाणं स याति न हि संशयः ॥
शुद्धाद्वैतपरिज्ञानं जायते नैव कस्य चित् ।
देशिकानुग्रहेणैव प्रसादेन च जायते ॥
तस्माद्देहाद्यवच्छिन्ने चिद्रूपे जीवसंज्ञिते ।
विजायते शिवज्ञानं वेदान्तकरणेन तु ॥

यथा घटादिसंबन्धः प्रतिभासस्तु केवलम् ।
अवच्छेदोम्बरस्यैवं ब्रह्मभूतात्मवस्तुनः ॥
देहाद्युपाधिसंबन्धः प्रतिभासस्तु केवलम् ।
अवच्छेदो न संबन्धः संबन्धः खलु नात्मनः ॥
आत्मनः सर्वसंबन्धाभावमाहपरा श्रुतिः ।
तात्पर्येण सह ब्रह्मन्न संगो न हि सज्जते ॥
इत्येवमादिवाक्येन तदुक्तिः सत्यमेव हि ।
संयोगाख्यस्तु संबन्धः सत्य एकाम्बरे खलु ॥
अस्तीति सर्वथा वक्तुं शक्यते न हि सत्तम ।
सांशयोः खलु संबन्धः संयोगाख्यस्तु दृश्यते ॥
आकाशस्य निरंशत्वं सुप्रसिद्धं हि जन्तुषु ।
परमाण्वोश्च संयोगो विमतो वेदवादिनः ॥
संयोगः सांशयो दृष्टः सम्मतः परवादिनः ।
निरंशयोस्तु संयोगे नान्यदस्ति निदर्शनम् ॥
सांशस्यैव तु कार्यत्वं द्रष्टव्यं सर्वजन्तुभिः ।
तथा सत्यगुसंयोगः स्वीकर्तव्यस्त्वयापि न ॥
तदारम्भकवादस्य युक्तं वेदान्तवादिनः ।
कारणे कल्पितं कार्यं दृश्यत्वाच्छुक्तिरूप्यवत् ॥
अस्तीत्यारभ्यते वाचा विकारः केवलं न सत् ।
मृत्तिकैव सदा सत्यमित्याह हि परा श्रुतिः ॥
मायामात्रमिदं द्वैतमिति चाह तथैव च ।
तर्को वेदविरुद्धस्तु कुतर्कः परिकीर्तितः ॥
स्वत एव हि वेदस्य प्रामाण्यं सत्यमीरितम् ।
वेदस्य तर्कसंवादापेक्षया मानता न हि ॥

रूपवत्त्वादणु द्रव्यं कार्यमेव घटादिवत् ।
अतो निरंशयोः सत्यः संयोगो नैव विद्यते ॥
सांशयोर्द्रव्ययोरेव दृष्टत्वाज्जतुकाष्ठयोः ।
अतः कुम्भादिना व्योम्नः संयोगो नैव विद्यते ॥
अतः कुम्भादिसंबन्धः प्रतिभासस्तु केवलम् ।
अवच्छेद इति प्रोक्तः सुशिरस्य न चापरः ॥
तस्माद्देहाद्यवच्छिन्ने चिद्रूपे जीवसंज्ञके ।
जायमानं शिवज्ञानं जीवस्यैव विमुक्तिदम् ॥
कर्म जीवस्य कैवल्यं न प्रयच्छति केवलम् ।
कर्मसाध्यमनित्यं हि कैवल्यं नित्यमेव हि ॥
अनाद्यनन्तं कैवल्यं प्राप्यं च न भवेद्बुध ।
यदि साध्या भवेत्प्राप्तिः सा विनश्यत्यसंशयः ॥
नित्यं शुद्धं तु कैवल्यं वेदनेनापि सत्तम ।
न साध्या तत्तु विज्ञानं केवलं बाधकं खलु ॥
नित्यशुद्धं तु कैवल्यं वेदनोदयमात्रतः ।
वस्तुतस्तेन जन्तूनामात्मभूतं परामृतम् ॥
प्रतिबन्धव्युदासेन स्वयमेव प्रकाशते ।
मुक्तिहेतुपरिज्ञानं प्रत्यक्षज्ञानवद् बुध ॥
सामग्रीमात्रतो जन्यं न विधेयं कदा चन ।
विधेयरूपं विज्ञानं क्रियैव स्यान्न वेदनम् ॥
मनोब्रह्मेति विज्ञानं विधेयं तु क्रियैव हि ।
पुंसोऽप्रयतमानस्य निस्पृहस्य महामुने ॥
दुर्गन्धविषयं ज्ञानमनिष्टं जायते खलु ।
तत्र नास्ति विधिः पुंसस्तज्ज्ञानं न क्रियानघ ॥

सामग्रीमात्रतो जातं केवलं वेदनं खलु ।
शब्दलक्षणसामग्रीप्रसूतं ब्रह्मवेदनम् ॥
यतो न चोदना तत्र ततो विज्ञानमेव हि ।
ज्ञानेनैवाविधेयेन शब्दजन्येन केवलम् ॥
अज्ञानस्य निवृत्तिः स्यान्न विधेयेन सत्तम ।
अविधेयं शिवज्ञानं विधेयं कर्म्म चास्तिक ॥
न सहैवात्मनो मुक्तिं ददाति परमामिह ।
विधेयस्याविधेयस्य साधनस्य कदा चन ॥
समुच्चयः सह प्राज्ञ न सिध्यतिः फलं प्रति ।
विधेययोर्हि विप्रेन्द्र त्वया दृष्टः समुच्चयः ॥
अतः केवलविज्ञानं खलु कैवल्यसाधनम् ।
पारंपर्येण विज्ञाने पर्यवस्यति कर्म च ॥
विज्ञानेच्छा परा यस्य तेन कर्म कृतं खलु ।
प्रवृत्तिपर्यन्तेच्छा पुरस्तादेव हि क्रिया ॥
पुनः सर्वक्रियात्यागः खलु संन्याससंज्ञितः ।
सर्वसाधनयुक्तस्य ज्ञानं वेदान्तवाक्यतः ॥
विग्रहे चरमे सम्यग्जायते कर्मसाम्यतः ।
निवृत्तिधर्मपौष्कल्यं कर्मसाम्यं न चेतरत् ॥
यस्मिन् क्षणे तदुत्पन्नं तस्मिन्विद्या विजायते ।
पौष्कल्यं तारतम्येन क्रमेणैव विजायते ॥
विद्या च तारतम्येन क्रमेणैव विजायते ।
पौष्कल्ये च समे जाते शक्तिपातो भविष्यति ॥
अज्ञानसुसमे शक्तिपातस्तीव्रो भविष्यति ।
अतीव सुसमे शक्तिपातस्तीव्रतरो भवेत् ॥

पिण्डपातादिलिङ्गानि भविष्यन्ति क्रमेण हि ।
पौष्कल्ये स्वसमे ऽतीव सति विद्यातिसुस्थिता ॥
अपरोक्षतमा वाक्याज्जायते मुक्तिदायिनी ।
केषां चित्सति पौष्कल्ये शक्तिपाते ऽपि सत्तम ॥
प्रतिबन्धकबाहुल्याद्वेदनं नैव जायते ।
केषां चिद्वेदनं शुद्धं जायते करबिल्ववत् ॥
शक्तिपातं विनैवास्य प्रकल्प्य: पूर्वजन्मसु ।
मन्त्रयन्त्रं समाश्रित्य देहपातादिकं फलम् ॥
दर्शयित्वा मनुष्याणां मोहयन्तीह के चन ।
मन्त्रयन्त्रसहायस्तु शक्तिपातस्तपोधन ॥
देहपातश्च मर्त्यानां तन्त्रेषु खलु विद्यते ।
निष्कामस्यातिशुद्धस्य श्रद्धधानस्य सत्तम ॥
तन्त्रोदितसमाचार: क्रमेणैवोपकारक: ।
सोपानक्रमतस्तन्त्रं वरिष्ठं प्राप्य मानव: ॥
बहूनां जन्मनामन्ते वेदज्ञो जायते भुवि ।
वेदोदितसमाचाराज् ज्ञानं वेदान्तमानत: ॥
उक्तसाधनसंपन्नो मुमुक्षुर्गर्वेनुग्रहात् ।
मत्प्रसादाच्च लब्ध्वैवं याति निर्वाणमद्वयम् ॥
साक्षादुत्तारको वेद: सर्वेषामपि देहिनाम् ।
श्रुतिभ्रष्ट: श्रुतिप्रोक्तप्रायश्चित्ते ऽभयं गत: ॥
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ।
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ॥
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ।
भयं दुर्बलचित्तानां मरणे जायते भृशम् ॥

तेषामेव हि रक्षार्थं खल्वहं तन्त्रमुक्तवान् ।
तन्त्रमुत्तारकं साक्षादन्तरेण श्रुतिं नृणाम् ॥
इति निश्चितबुद्धेस्तु तन्त्रं मोहाय केवलम् ।
निन्दा स्मृतिपुराणेषु या तन्त्र विषया ऽनघ ॥
अपेक्ष्य तन्त्रस्वातन्त्र्यं प्रवृत्ता सा न संशयः ।
स्तुतिः स्मृतिपुराणेषु या तन्त्रविषयाऽनघ ॥
अपेक्ष्य वेदशेषत्वं प्रवृत्ता सा न संशयः ।
अपौरुषेयवेदेन साम्यं किं चिन्न विद्यते ॥
पौरुषेयस्य तन्त्रस्य सुसूक्ष्मं परिपश्यतः ।
निर्दोषेण मया प्रोक्तं तन्त्रं नैव निरर्थकम् ॥
तस्मादुक्तप्रकारेण शेषस्तन्त्रं श्रुतेः खलु ।
सर्वमुक्तं समासेन ममैव हृदयं गतः ॥
इतः परं न वक्तव्यं शेषो ऽन्यो ग्रन्थविस्तरः ।

इत्येकोनविंशो ऽध्यायः ॥

इति कैवल्यरत्ने साम्बोपपुराणसारोद्धारः समाप्तः ॥

---

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 376. VOL. V.)

४५४ व्रीह्याग्रयणे तु इन्द्राग्नी देवता तस्या द्वादशकपालः पुरोडाशो द्रव्यम् । वैश्वदेवः पयसि चरुः । द्यावापृथिवीय एककपालः पुरोडाशो भवति । धाय्यायुक्ताः सप्तदश सामिधेन्यः प्रेद्धो अग्नइति स्विष्टकृतः पुरोनुवाक्या । इमो अग्नइति याज्या । एते च याज्यानुवाक्ये विराट्छन्दस्कत्वाद् विराजो इत्युच्येते ॥

४५५ अन्यत्सर्वं श्यामाकाग्रयणेष्टिवत् । इयं व्रीह्याग्रयणेष्टिरित्युच्यते ॥

४५६ यवाग्रयणं सर्वं व्रीह्याग्रयणवद्भवति । इयं यवाग्रयणेष्टिरित्युच्यते ॥

४५७ व्रीहिश्यामाकाग्रयणे व्रीह्याग्रयणकाले एव वा तन्त्रेण कार्ये । अथ वा व्रीह्याग्रयणकाले एव श्यामाकविकारः प्रस्तरः कार्यः । तत्र तन्त्रेण प्रयोगपक्षे व्रीहिश्यामाकाग्रयणाभ्यां तन्त्रेण यक्ष्ये इति संकल्पः । व्रीहिश्यामाकाग्रयणेष्टिसंबन्धिहविः व्रीहिमयः पुरोडाशः व्रीहिमयः पयसि चरुः श्यामाकः पयसि चरुः, पञ्च प्रयाजाः अग्नीषोमावाज्यभागौ इन्द्राग्नी विश्वेदेवाः सोमो द्यावापृथिवी इति प्रधानदेवताः देवा आज्यपा इत्यादि । इध्मसंभरणमन्त्रे ततस्त्वां त्रयोविंशतिधेत्यूहः । पात्रासादने त्रयोदशकपालानि । समेक्षणे द्वे चरुस्थाल्यौ द्वे शूर्पे द्वे प्रणीते द्वे आज्यस्थाल्यौ दारुपात्र्या सहाग्रयपात्रं च । ब्रह्मन्नपः पयश्च प्रणेष्यामीति इति प्रैषः । अनयापो ऽनया पयश्च प्रणेष्यामीमि प्रणीतासादने विशेषः । वेषाय त्वेत्यत्र त्वेत्यस्य स्थाने वामिति द्विवचनान्तस्योहः । तेन च मन्त्रेण अग्निहोत्रहवणीं शूर्पद्वयं चादत्ते । पात्र्यां भेदेन व्रीहीन् श्यामाकांश्च निधाय धूरसीत्यादिमन्त्रेण अभिमर्शनं पुरोडाशीयप्रेक्षणं शकनिरसनं च तन्त्रेण करोति । प्रेक्षणमन्त्रे त्वेत्यस्यस्थाने वामिति पदं मेरित्यस्य मैष्टमिति पदं संविक्था इत्यस्यसंविक्ाथामिति पदम् । निरसनमन्त्रे उर्वित्यस्य स्थाने उरुणी इति भवति । ऐन्द्राग्नपुरोडाशार्थं व्रीहिनिर्वापः । वैश्वदेवचर्वर्थं च । ततः शूर्पान्तरे सौम्यचर्वर्थं श्यामाकनिर्वापः । पुनः प्रथमशूर्पे द्यावापृथिवीयपुरोडाशार्थं व्रीहिनिर्वापः ।

निरुप्ताभिमर्शनमन्त्रे इदमित्यस्य स्थाने इमे इत्यूहः । अति-शिष्टाभिप्राशनमन्त्रेऽपि तथैव । एकीकरणमन्त्रे त्वेत्यस्य स्थाने वामित्यूहः । शूर्पद्वयादानपूर्वकोत्थानमन्त्रे इहीत्यस्य स्थाने इतमिति पदम् । शूर्पद्वयासादनमन्त्रे त्वेत्यत्र वामिति पदम् । अत्र धान्यभेदात् शूकरहितायां स्रुचि तिरःपवित्रमप आनी-येत्यादि । तथा एकधान्यनिर्वापानन्तरं अपरधान्यनिर्वापे स्रुचः प्रोञ्छनं च । व्रीहिश्यामाकयोर्भेदेन प्रोक्षणम् । कृष्णाजिनाव-धूननादिफलीकरणान्तं व्रीहीणां कृत्वा श्यामाकानां कुर्वन्ति । तत्र न हविष्कृदाह्वानम् । नोच्चैः समाहन्तवै इति । ततः क्रमेण प्रक्षाल्य उत्करे तन्त्रेण चालनं निनयति । मनसा चरु-पुरोडाशसंबन्धि तन्दुलानां विभागः कार्यः । अभिमर्शनं तु न कार्यमिति केशवः ।

विभागः पेषणात्पूर्वः पौरोडाशचरव्ययोः ।
तत्र देवांश्चतुर्थ्यन्तानुक्त्वान्ते व इतीरये'दिति कल्पः ।
चतुर्थ्या देवतामुक्त्वाभिमृशेद्द्वयमिति गोपालः ।

द्वादशकपालान्युपधाय चरुस्थाल्यौ अधिश्रयति । तत एकं कपा-लमुपदधाति । दशमस्योभयतो द्वयमिति द्वादशकपालासादन-क्रमः । आदेवयजं वहेत्यङ्गारमानीय चरुस्थाल्यां तिरःपवित्रं प्रणीताभ्यो जलमानीय ध्रुवासीत्यादिमन्त्रेण तामधिश्रयति । निर्दग्धमित्यादिमन्त्रेण प्रदक्षिणमङ्गारैःपरिचिनोति । सौम्यच-रुस्थाल्यां तथैव प्रणीतादुग्धमानीयाधिश्रयति । वैश्वदेवस्य चरोरपि पयसि करणपक्षे उभयत्र दुग्धमेव । पुरोडाशमेक-कपालमधिश्रित्य आज्यं निरुप्य तूष्णीमपूर्वाज्यं निर्वाप-यति । स्थाल्यां तिरःपवित्रं तण्डुलानावपति घर्मोः स्थ

विश्वायुष इति मन्त्रेण । तथोत्तरस्थाल्यां श्यामाकान् । तत एककपालमधिश्रयति । दारुपात्र्यां स्योनं तइति प्रथमपुरोडाशार्थमुपस्तीर्य आशयपात्रे चोपस्तीर्य प्रथमपुरोडाशनिधानान्तं कृत्वा आप्यायतामित्यादिमन्त्रेण चरुमभिमृशति । इत उत्स्नातीत्यादिमन्त्रेण उद्वासयति । आर्द्रो भुवनस्य गोपा इति मन्त्रेण उपर्यभ्यङ्क्ते चरौ नोपाञ्जनम् । श्यामाकचरौ व्रीहिमयचरुवदभिघारणादि । द्यावापृथिवीभ्यामनुब्रूहीति संप्रेष्य जुह्वामुपस्तीर्य सर्वं पुरोडाशं स्थापयित्वा आशयात् स्रुवेण द्वितीयमवदाय अभिघार्य तूष्णीं प्रत्यभिघारयति । वषट्कृते पुरोडाशमपर्यावर्तयन्नग्नौ प्रतिष्ठितं हुत्वा संस्रावेणाभिजुहोति । अयं एककपालहोम इत्युच्यते ॥

४५८ तत आज्यस्थाल्याः स्रुवेण जुहोति । मधुश्च स्वाहेत्यादिभिरूर्जश्च स्वाहेत्यन्ताभिः इमा मासाहुतय इत्युच्यन्ते ॥

४५९ ततश्चतुर्गृहीतेन जुह्वा शतायुधायेत्यादिपञ्चभिर्ऋग्भिर्जुहोति ॥ अयमज्यानिहोमो यज्ञयोगानन्तरं कैश्चित् क्रियते एता ऋच अज्यानिसंज्ञाः ॥

४६० अथ स्विष्टकृदवदाने सर्वेषामुत्तरार्धात्सकृत्सकृदवदाय आशयाच्चावदाय द्विरभिघार्य मेक्षणाभ्यां सहात्याक्रम्य आहुतिं हुत्वा मेक्षणे प्रतिपत्ति । इडावदाने सर्वाणि हवींष्यवदाय आशयाच्च द्विरवद्यति ऐन्द्राग्नपुरोडाशस्य प्रकृतीष्टिगताग्नेयविकारत्वात् चतुर्धाकरणादि तस्यैव भवति । अन्यो विशेषः श्यामाकेष्टौ उक्तो द्रष्टव्यः । इदं तन्त्रेण व्रीहिश्यामाकाग्रयणम् ॥

४६१ चातुर्मास्यानि प्रयोक्ष्यमाणः पूर्वेद्युर्वैश्वानरपार्जन्यामित्याश्वलायनसूत्रोक्तत्वात् प्रथमप्रयोगात् पूर्वेद्युरियमिष्टिः क्रियते ।

तस्यां वैश्वानरो द्वादशकपालः पुरोडाशः । पार्जन्यश्चरुः । प्रधानमुपांशु । अन्वाहार्यमासाद्य वैश्वानराय हिरण्यं पर्जन्याय धेनुं दक्षिणां ददाति । यजमान आह । भो ऋत्विजः अयं व ओदनः इदं वो हिरण्यमियं वो धेनुरहिंसन्तो यथाभागं प्रतिगृह्णीध्वमिति । प्रतिग्रहमन्त्रे ब्रह्मणओदनं अग्नये हिरण्यं रुद्राय गामिति विशेषः । अन्यत्सर्वं पौर्णमासतन्त्रम् । ब्राह्मणतर्पणान्तेयमिष्टिर्वैश्वानरपार्जन्या इत्युच्यते ॥

४६२ परे ऽहनि चातुर्मास्यारम्भः । तत्र प्रथमं वैश्वदेवसंज्ञकं पर्व । वैश्वदेवहविर्भिर्यक्ष्ये इति संकल्पः । आग्नेयो ऽष्टाकपालः पुरोडाशः । सौम्यश्चरुः । सावित्रो द्वादशकपालः पुरोडाशः । सारस्वतश्चरुः । पौष्णश्चरुः । मारुतः सप्तकपालः पुरोडाशः । वैश्वदेव्यामिक्षा द्यावापृथिवीय एककपालः । नव प्रयाजाः । नवानुयाजाः । अग्न्यादयः सर्वा उच्चैः । सवितृद्यावापृथिव्यौ उपांशु । एककपालस्य चातुर्मास्यान्तर्गतसावित्रस्य चाश्वलायनसूत्रे उपांशुत्वविधानात् । अत्रामिक्षार्थं शाखाहरणं पूर्वेद्युरन्वाधानम् । बर्हिःसंभरणे नवप्रसूढदर्भमयं प्रस्तरं बध्नाति । त्रींस्त्रीन्मुष्टीनेकीकृत्य तूष्णीं बद्धेन मुष्टित्रयेण सह मन्त्रवता शुल्बेन संनह्यति । इध्मसंभरणे कार्ष्मर्यमयाः परिधयः । सप्तदश सामिधेन्यः । ततस्तां त्रयोविंशतिधेत्यूहः । सायं दोहे महेन्द्रपदस्थाने विश्वविशेषणकस्य देवपदस्य असमासेनोहः । प्रातर्हुते ऽग्निहोत्रे गार्हपत्यस्योत्तरतस्तृणान्यासाद्य तेषु आज्यस्थालीं स्रुवं स्रुचं समिधं प्रोक्षणीमभिद्योतनकुशांश्च सादयति । तूष्णीं पवित्रे कृत्वा तथा प्रोक्षणीः संस्कृत्य पात्राण्युत्तानानि कृत्वा प्रोक्ष्य आज्यं निरुप्य गार्हपत्यस्योत्तरतो भस्ममिश्रानङ्गारान्नि-

दृह्य तेष्वाज्यमधिश्रित्य दर्भोल्मुकेनाभिद्योत्य अङ्गुष्ठपर्वमात्रं प्रक्षालितदर्भाग्रद्वयमाज्ये प्रक्षिप्य पुनरभिद्योत्य त्रिः पर्यग्नि कृत्वा उदगुद्वास्य अङ्गारानग्नौ प्रत्यस्य पुनराहारमाज्यं त्रिरुत्पूय पवित्रे अग्नौ प्रक्षिप्य स्रुक्स्रुवौ निष्टप्य संमृज्य संमार्गदर्भानग्नौ प्रत्यस्यति । अयं स्मार्तवदाज्यसंस्कार इत्युच्यते ॥

४६३ अग्निर्होतेत्यादिवातायेर्हवनश्रुत इत्यन्तानि षड् वाक्यानि पञ्चहोतृपदवाच्यानि ॥

४६४ इदं संस्कृतमाज्यं स्रुचि चतुर्गृहीतं गृहीत्वा अनेन पञ्चहोत्रा अन्वारब्धे यजमाने आहवनीये जुहोति । ततः कूष्माण्डहोम उपस्थानवरदानान्तः सारस्वतहोमश्च । पात्रासादने अष्टाविंशतिकपालानि तैः सह समेक्षणाश्चतस्रश्चरुस्थाल्यः । उपभृता सह पृषदाज्यग्रहणीं आज्यस्थाल्या सह दधिस्थालीमपूर्वाज्यस्थालीं च दारुपात्र्या सहाशयपात्रं आमिक्षाव्युद्धरणपात्रीं च धृष्ट्या सहोपवेष मिति विशेषः । पूर्वेद्युः सायं होमानन्तरं आमिक्षादध्यर्थं सायं दोहः । अग्निहोत्रहोमशेषं पयो रक्षेत् । प्रातर्यज्ञयोगानन्तरं प्रातर्दोहः । मरुद्भ्यः सप्तकपालान्युपधाय तदुत्तरतः तूष्णीमुपवेषेणाराङ्गारान्निरुह्य स्थाल्यामुदगग्रं शाखापवित्रं निधाय प्रातर्दोहमानीय अधिश्रित्य मेक्षणेनालोड्य श्रपयेत् । तदुत्तरतो द्यावापृथिव्यर्थमेकं कपालमुपदधाति । अधिवपनसंवपनयोः पुरोडाशदेवतानामेवोहः । मारुतं पुरोडाशमधिश्रित्य प्रातर्दुग्धे तप्ते पयसि उदगग्रं शाखापवित्रं निधाय सायं दोहं दध्यानयति । तथा कृते सति तस्य द्रव्यस्य द्वौ भागौ भवतः । यो घनीभूतो भागः सा आमिक्षा इत्युच्यते ॥

४६५ यस्तु जलरूपो भागः स वाजिन इत्युच्यते ॥

४६६ आमिक्षावाजिने शीतले कृत्वा निदधाति । ततो द्यावापृथिवीयं पुरोडाशमधिश्रित्य तिरःपवित्रमाज्यस्थाल्यामाज्यं निरुप्य तूष्णीमपूर्वोज्यं निरुप्य तथैव दधिस्थाल्यां तूष्णीं तिरःपवित्रं दध्यानयति । संप्रैषे स्रुवं च स्रुचश्च संमृड्ढीत्यस्यानन्तरं तूष्णीं पृषदाज्यग्रहणीमिति विशेषः । तथा तस्मिन्नेव संप्रैषे आज्येनोदेहीत्यस्य स्थाने आज्येन दध्ना चोदेहीति विशेषः । स्रुक्संमार्जने उपभृत्संमार्जनानन्तरं उपभृत्संमार्जनमन्त्रेण पृषदाज्यग्रहण्याः संमार्जनम् । आज्यग्रहणकाले प्रकृतिवदुपभृति चतुर्गृहीतं गृहीत्वा पृषदाज्यग्रहण्यां आज्यस्थाल्याज्येन स्रुवेणोपस्तृणीते महीनां पयो ऽसीति मन्त्रेण । ततो द्वितीयं विश्वेषां देवानां तनूरिति मन्त्रेण उपस्तृणीते । ततो द्वौ दर्भौ अन्तर्धाय ऋध्यासमद्येत्यादिमन्त्रेण दध्यानयति । ततो दर्भौ दूरीकृत्य द्विरभिघारयति । विष्णोर्हृदयमसीति मन्त्रेण एकम् । एकमिषविष्णुस्त्वानुविचक्रमइति मन्त्रेण द्वितीयम् । यजमानः चरोस्त्वेत्यादिभिश्चतुर्भिर्मन्त्रैरुपभृति आज्यग्रहणान्यनुमन्त्र्य सुवीर्याय त्वेत्यादिभिश्चतुर्भिर्मन्त्रैः पृषदाज्यग्रहण्युपस्तरणाभिघारणान्यनुमन्त्रयते । वेद्यास्तरणे अध्वर्युर्मुष्टित्रयनिर्मितमेकैकं दर्भमुष्टिमेकीकृत्य प्रकृतिवद्बर्हिरुपस्तृणाति । स्रुगासादने उपभृदासादनानन्तरं उपभृन्मन्त्रेण पृषदाज्यग्रहण्यासादनम् । उद्वासने मारुतपुरोडाशोद्वासनानन्तरं चमसे तूष्णीमुपस्तीर्य आमिक्षां गार्हपत्ये ऽधिश्रित्य अभिघार्य उद्वास्य उपस्तरणयुक्ते चमसे आमिक्षां व्युद्धृत्य तदुपरि किं चिद्वाजिनमानीय अभिघार्य यस्तआत्मेत्यादृचा आज्यस्थाल्याज्येन स्रुवेण

द्वितीयाभिघारणेनालं करोति । पात्रान्तरे पूर्ववदेककपालमुद्वास्य तस्मिन् बह्वाज्यमानीय आविःपृष्ठं कृत्वा सर्वाणि हवींष्यन्तर्वेदि आसादयति । प्रकृतिवत् स्रुवाज्यं ध्रुवायामानीय तूष्णीं गार्हपत्यस्य पुरस्ताद्वाजिनमासादयति । पृषदाज्यं सदध्याज्ये इति कोशाद्दधियुक्तं पूर्वोक्तसंस्कारयुक्तमाज्यं पृषदाज्यमित्युच्यते ॥

४६७ पृषदाज्यं गृह्यते यस्यां सेति व्युत्पत्त्या अधिकरणे ल्युटा उपभृत्सदृशी स्रुक् पृषदाज्यग्रहणीत्युच्यते ॥ ( शेषमग्रे )

## ॥ माधवीयधातुवृत्तिः ॥

*(Continued from page 368. Vol. V.)*

लछ लाछि लक्षणे ॥ लच्छति । ललच्छ । लच्छितेत्यादि । 'छे च' ह्रस्वस्य छे परतस्तुगिति तुक् । अलच्छीदित्यत्रान्तरङ्गत्वात्पूर्वं तुकि अकारस्यालघुत्वाद् अतो हलादेरिति वा वृद्धिर्न भवति । तथा ललच्छेत्यादा 'वत उपधाया' इति वृद्धिरनुपधात्वान्न भवति । लाञ्छतीत्यादि पूर्ववत्, लालाञ्छ्यतइत्यादाविदित्त्वान्नलोपो न भवति । लाञ्छः 'क्विब्' इति सोपपदनिरुपपदसाधारणे क्विपि तस्य लोपे च्छ्वोः शूडित्यत्र द्विच्छकारनिर्देश एकः स तुक्को ऽपरः केवल इति न्यासपदमञ्जर्यादिषूक्तत्वात् । लान् । लांशौ । लांश इत्यादि भवति । च्छ्वोरिति निर्देशः पूर्वं वितुक्कसतुक्कयोः समाहारद्वन्द्वे पश्चाद् वकारेणेतरेतरयोगे द्विवचनयथासंख्ययोरुपपत्तिः, द्वन्द्वाच्चुदषहान्तादिति समासान्तः सौत्रत्वान्न भवति । हरदत्तस्तु सतुक्छकारवकारयोः समाहारद्वन्द्वे पश्चाद् वितुक्छेनेतरेतरयोग इति समासान्ताभावो द्विवचनोपपत्तिश्चेति । अत्र मते सतुक्कस्यापि सकारस्योट् स्यादिति तदभावे यत्नः कर्त्तव्यः, एवं च यङ्लुक्यपि शत्वे लालांष्टि लालांष्ट इत्यादि पूर्ववद्भवति । शूड्विधौ क्विङ्ग्रहणानुवृत्तिपक्षे लालांष्टीत्यादौ व्रश्चादि सूत्रे छग्रहणे षत्वम्, । तत्रापि पूर्ववत् केवलोपि छो गृह्यते ॥ २०५ ॥

वाञ्छि इच्छायाम् ॥ वाञ्छतीत्यादि लाञ्छिवत् ॥ २०६ ॥

आञ्छि आयामे ॥ आञ्छति । आञ्छ । अत्र लिट्यभ्यासह्रस्वे 'अत आदे'रित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थमिति न्यासकारहरदत्तादिभिः प्रतिपादितत्वाद् दीर्घाभावाद् नुडभावे सवर्णदीर्घः । अन्ये तु तपरकरणं मुखसुखार्थमिति आनाञ्छेत्युदाहरन्तीति मैत्रेयः । आञ्छितेत्यादि । आञ्चिञ्छिषति । न न्द्रा इति नकारवर्जं द्वितीयैकाच् द्विरुच्यते । आञ्छयति । आञ्चिच्छत् ॥ २०७ ॥

ह्रीच्छ लज्जायाम् । ह्रीच्छति । जिह्रीच्छ । ह्रीच्छितेत्यादि म्लेच्छिवत् । ह्री लज्जायामिति जुहोत्यादौ ॥ २०८ ॥

हुर्छा कौटिल्ये ॥ इह कौटिल्यमपसरणमिति मैत्रेयस्य मतम् । हूर्छति । जुहूर्छ । हूर्छितेत्यादि । 'उपधायां चे'तीको दीर्घः, जुहूर्छिषति । जोहूर्छ्यते । जोहोर्त्ति । जोहूर्त्तः । जोहूर्षति । जोहोर्षि । जोहोर्मि । जोहूर्वः । जोहूर्मः । 'राल्लोप' इति रेफात्परयोः छ्वोर्लोपः क्वौ झलादावनुनासिकादौ प्रत्यये । अत्र सतुक्कस्य छस्याभावात् केवलो गृह्यतइति वृत्त्यादौ । हूः । हुरौ । हुरः । राल्लोपः तत्र पदत्वे च र्वोरुपधाया दीर्घ इति रेफवकारान्तस्य धातोः पदस्योपधाया इको दीर्घ इति इको दीर्घः । हूर्णः । हूर्णवान् । 'आदितश्चेत्य'निट् निष्ठायाम् । राल्लोपे रदाभ्यामिति नत्वे रषाभ्यामिति णत्वम् । भवादिकर्मणोस्तु'विभाषा भावादिकर्मणो'रिति आदितो निष्ठायाः पक्षे इड्विधानात् हूर्णमनेन, हूर्छितमनेनेत्यादि द्रष्टव्यम् ॥ २०९ ॥

मूर्छा मोहसमुच्छ्राययोः ॥ मूर्छति हूर्छिवत् । विशेषस्त्वनिटो निष्ठायां 'न ध्याख्यापॄमूर्छिमदा'मिति नत्वनिषेधः । मूर्त्तः । मूर्त्तवान् । मूर्त्तमनेनेत्यादि । मूर्छास्य सञ्जाता, मूर्छितः । 'तदस्य सञ्जातं तारकादिभ्य इतच्' । तदिति प्रथमासमर्थात् सञ्जातोपाधिकादस्येत्यर्थ इतच् ॥ २१० ॥

स्फुर्छा विस्तृतौ ॥ स्फूर्छति । पुस्फूर्छेत्यादि पूर्ववत् । अभ्यासे खयः शेषः ॥ २११ ॥

युच्छ प्रमादे ॥ युच्छति । युयुच्छ । युच्छितेत्यादि म्लेच्छादिवत् । अन्तरङ्गत्वात्तुकि अलघूपधत्वाच्च गुणः । वार्णादाङ्गं बलीय इत्याङ्गस्य बली-

यस्त्वं यत्राङ्गवार्णयोर्युगपत्प्राप्तिः समानाश्रयत्वं च तत्रेति इह वैपरीत्याच भवति ॥२१२ ॥

उछि उञ्छे ॥ उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवप्रकाशः । एवं विज्ञानेश्वरोपि । 'उञ्छति' सूत्रे उञ्छति उच्चिनोतीत्यर्थ इति न्यासो बदराण्युञ्छति बादरिकः । श्यामाकानुञ्छति श्यामाकिक इत्युदाहरतो वृत्तिकारस्यापि व्यापित्वेनोच्चयनार्थ इत्यभिप्रायो लक्ष्यते। उञ्छति। उञ्छां चकार। उञ्छितेत्यादि। इदित्त्वाद् उञ्छ्यते इत्यादौ नलोपो न भवति। उञ्चिच्छिषति। न न्द्रा इति छादेर्द्विर्वचनमभ्यासस्य चर्त्वे हस्वे 'छे चे' ति तुकि हलादिशेषो न भवति अवयवभक्तत्वेनाभ्यासभक्तत्वाभावात्। न च स्वङ्गुलिर्देवदत्त इत्यादिवत् इहावयवावयवस्य समुदायावयवत्वम्। यतः छे चेत्यत्रागमिनो भावादेव पूर्वसूत्रात् ह्रस्वस्येत्यनुवृत्तिसिद्धावपि चकारेण तदनुकृष्यते पूर्वसूत्रे ह्रस्वान्तस्येति स्थितम् । इह तु तथा माभूदिति हि यत्नः । उञ्छयति । मा भवानुञ्चिच्छत् । अयं तुदादौ पठिष्यते। स पाठ उञ्छती उञ्छन्तीति शीनद्योर्नुम्विकल्पार्थो ऽवश्याभ्युपगन्तव्य इति इह पाठः किमर्थ इति चेत् स्वरार्थः। उञ्छतीत्यत्र शपि अनुदात्तौ सुप्पिताविति शप्तिपोरनुदात्तत्वेन 'धातोः' । धातोरन्त उदात्त इत्युकारस्योदात्तत्वे 'उदात्तादनुदात्तस्य स्वरित' इति शबकारस्य स्वरितत्वे 'स्वरितात् संहितायामनुदात्ताना' मिति विकारस्य प्रचयत्वे अच: क्रमेणोदात्तस्वरितप्रचया भवन्ति। शे तु "आद्युदात्तत्वे प्रत्ययादित्वेनाकारस्योदात्तत्वे 'अनुदात्तं पदमेकवर्जं' यत्र पदे उदात्तः स्वरितो वा विधीयते तत्र तं वर्जयित्वा ऽन्यदनुदात्तमिति धातोरप्यनुदात्तत्वे पूर्ववत्तिपः स्वरितत्वे ऽचोनुदात्तोदात्तस्वरिता भवन्ति। विपर्ययः कस्मान्न भवति धातोरन्तोदात्तत्वे शस्यानुदात्तत्वमिति यतोऽयं स्वरभेदो न स्यात्। नैतदस्ति। सति शिष्टस्वरो बलीयानिति यस्मिन्नसति यः शिष्यते स बलीयानित्यर्थः। नन्वन्यत्र विकारणोभ्य इत्यपि तत्र पठ्यते। नायं पर्युदासो धातुस्वरविषयः। किं तु लसार्वधातुकस्वरविषयः। लादेशस्य सार्वधातुकस्य प्रत्ययाद्युदात्तत्वं सति शिष्टोपि विकरणस्वरो न बाधतइति, अस्य च ज्ञापकं तादृशमेव ।

तथाहि । 'तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्हिङ्वो'रिति तासेः परस्य सार्वधातुकस्य सति शिष्टस्वरेणानुदात्तत्वेपि सिद्धे पुनर्विधानाज्ज्ञायतेऽन्यत्र विकरणेभ्य इति तच्च लसार्वधातुकविषयम् ॥ २१३ ॥

उछी विवासे ॥ समाप्तिर्विवास इति तरङ्गिण्यां,विपूर्वश्चायं प्रायः प्रयुज्यतइति पुरुषकारे । व्युच्छति । व्युच्छां चकार । व्युच्छितेत्यादि । आम्विधावागमनिमित्ता गुरुमत्ता गृह्यते अत एवानृच्छइति प्रतिषेधः । उचिच्छिषति । अत्र द्विवचने तुकि श्चुत्वस्य पूर्वत्रासिद्धत्वात् हलादिशेषेण तकारस्य शेषे प्राप्ते 'खर्पूर्वाः खयइति वक्तव्यं' शर्पूर्वाः खय इत्यत्र शर्ग्रहणमनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । तेन खर्पूर्वाः खयः शिष्यन्ते अन्ये निवर्त्तन्तइति तकारस्य निवृत्तौ छकारस्य 'अभ्यासे चर्चे'ति चर्त्वे रूपम् । अभ्यासचर्त्वस्य तुक्यसिद्धत्वादुकारस्य पुनस्तुङ्न भवति अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धं वक्तव्यमिति चर्त्वस्य सिद्धत्वात् । अत्र पूर्वत्रासिद्धीयमद्विर्वचनइति अनाश्रित्योक्तं खर्पूर्वाः खय इति । यदाहुर्हरदत्तादयः । यदाश्रयणे हि श्चुत्वस्य द्विर्वचने सिद्धत्वाद्धलादिशेषेण छस्य निवृत्ताविष्टसिद्धिः । व्युष्टः । व्युष्टवान् । श्वीदितो निष्ठायामितीडभावः । व्युष्टे दीयते कार्यं वा वैयुष्टम् । व्युष्टादिभ्योऽणिति तत्र च दीयते कार्यमिति विषयेऽण् प्रत्ययः । न य्वाभ्यामिति ऐच् वृद्धेरभावश्च । अयमपि तुदादौ पठिष्यते । पूर्ववदुभयत्र प्रयोजनम् ॥ २१४ ॥

ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ ॥ ध्रजति । दध्राज । ध्रजितेत्यादि । अध्रजीत् । अध्राजीत् । अतो हलादेरिति वा वृद्धिः । दिध्रजिषति । दाध्रज्यते । दाध्रजीति । दाध्रक्ति । 'चोः कुः' झलि पदान्ते च । खरि चेति चर्त्वम् । ध्राजयति । अदिध्रजत् । ध्रञ्जति । दध्रञ्ज । ध्रञ्जितेत्यादि । दिध्रञ्जिषति । दाध्रञ्ज्यते । दिध्रञ्जिषति । दाध्रज्यते । दाध्रञ्जीति । दाध्रङ्क्ति । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च अदाध्रन् । धर्जति । दधर्ज । धर्जितेत्यादि । दिधर्जिषति । दरीधृज्यते । 'रीगृदुपधस्य चे'ति रीक् । दर्धृजीति । दरिधृजीति । दरीधृजीति । दर्धर्क्ति । दरिधर्क्ति । दरीधर्क्ति । 'रुग्रिकौ च लुकी'ति रुग्रिग्रीकः ।

नाभ्यस्तस्याचीति पक्षे न गुण एवं तस्मादौ दधर्जके इत्याद्युदाहार्यम् । धर्जयति । अदधर्जत् । अदीधृजत् । उर्ज्जित्वा । धर्जित्वा । न क्त्वा सेडित्यकित्त्वाद्गुणः, धृज्यम्, 'ऋदुपधाच्चाक्लृपिचृतेरि'ति क्यप् । धर्जः । 'चजोः कुघिण्ण्यतोर्निष्ठायामनिट' इति वार्त्तिकसूत्रेण कुत्वम् । धृञ्जति । दधृञ्ज । धृञ्जितेत्यादि । दिधृञ्जिषति । दरीधृञ्ज्यते । पूर्ववद्रीक् । दाधृञ्जीति । दाधृङ्क्तीत्यादि धृजिवत् । लङि तिप्सिपोर्हल्ङ्यादिलोपसंयोगान्तलोपयोरदाधृन् । संयोगान्तलोपस्यासिद्धत्वात् अलघूपधत्वात् प्रत्ययलक्षणेन न गुणः । धृञ्जयति । अदधृञ्जत् । ध्वजति । ध्वञ्जतीत्यादि धजधृजिवत् । तरङ्गिणीकाश्यपसंमतास्तु आद्यौ व्रजव्रजी इति दन्त्योष्ठ्यादी पठेते सर्वत्र तवर्गीयादी एव । ॥ २२० ॥

कूज अव्यक्ते शब्दे ॥ कूजति । चुकूज । कूजिता । कूजिष्यति । चोकूज्यते । चोकूजीति । चोकूक्ति । कूजयति । अचूकुजत् । कूजः । कूज्यम् । क्लादेरिति निष्ठायां सेट्त्वात्कुत्वाभावः ॥ २२१ ॥

अर्ज षर्ज अर्जने ॥ अर्जति । आनर्ज । अर्जितेत्यादि । अर्जिजिषति । अर्जयति । आर्जिजत् । स्वर्गः । वार्त्तिककारमते न्यङ्क्वादित्वात् कुत्वम् । ऋजुः । अर्जिदृशीत्यादिना कुप्रत्ययः ऋजादेशश्च । अर्ज प्रयत्न इति चुरादौ । सर्जति । ससर्ज । सर्जिता । सिसर्जिषति । स्तौतिण्योरेवेति नियमान्न षत्वम् ॥ सासर्ज्यते । सासर्क्तीत्यादि । सर्जयति । अससर्जत् । सिसर्जिषति ॥ २२३ ॥

गर्ज शब्दे ॥ गर्जतीत्यादि ॥ २२४ ॥

तर्ज भर्त्सने ॥ तर्जति । ततर्जेत्यादि । अयं चुरादावपि ॥ २२५ ॥

कर्ज व्यथने ॥ खर्ज पूजने च ॥ कर्जति । चकर्ज । कर्जिता । खर्जतीत्यादि । खर्जूरः । खर्जपिञ्जादिभ्य ऊरोलचावित्यूरः ॥ २२७ ॥

अज गतिक्षेपणयोः ॥ अजति । विवाय । विव्यतुः । विव्युः । विवयिथ । विवेथ । विव्यथुः । विव्य । विवाय । विवय । विव्यिव । अजेर्व्यघञपोः ॥ घञपोरन्यस्मिन्नार्धधातुके विषयभूते वीभाव इति वीभावे द्विर्वचने 'एरनेकाचोऽसंयोगपूर्वस्य' धातोरवयवः संयोगो यस्मादिवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोऽङ्गस्याजादौ यणिति यण् । अत्र

वकारस्य हल्परत्वा'दुपधायां चे'ति दीर्घो ऽचः परस्मिन्निति यणः स्थानिवत्त्वात् असिद्धं बहिरङ्गमन्तरङ्ग इति असिद्धत्वाद्वा न भवति । वृद्धिगुणयोर्विषये परत्वात्तौ भवतः । 'णलुत्तमो वे'ति उत्तमे णित्त्वविकल्पनात्पक्षे गुणः । वलादौ क्रादिनियमादिट् वीभावो ह्यनुदात्तत्वाद् अनिट्, थलि तु "अचस्तास्वत्थल्यनिटो नित्यम्" अजन्तो यो धातुस्तासौ नित्यमनिट् तस्य तासाविव थलीड्निषेधे प्राप्ते "ऋतो भारद्वाजस्य" योयं तासौ नित्यानिटस्थलीण्निषेधः स भारद्वाजस्य मतेन ऋकारान्तस्यैवेति नियमादन्यत्रार्थाद्विकल्प इतीडागमः पाक्षिकः, अजेरुदात्तत्वस्य इडर्थत्वाद् वलादावार्द्धधातुके ऽयमादेशो विकल्पित इति पक्षे व्यादेशाऽभावात् आजिथेत्यपि भवति, तथा वमयोरपि आजिव आजिमेति । उक्तञ्च वृत्तौ । वलादावार्द्धधातुके विकल्प इष्यते इत्यत्र के चिद्वमयोर्वलादित्वस्य क्रयादिनियमेनेटः पर्यवसानान्न कदा चिदपि वलाद्यार्द्धधातुकव्यक्तिरिति न तत्रायमादेशविकल्पः, थलि तु भवत्येव यतस्तत्रेड्विकल्पित इति । ननु विव्यतुरित्यादौ द्विर्वचनात्पूर्वं परत्वादियङि 'द्विर्वचनेचीति' तस्य द्विर्वचने कर्त्तव्ये स्थानिवत्त्वादुत्तरखण्डे जग्मतुरित्यादिवत् आदेशरूपमेवावतिष्ठेतेति कुतो यणः प्रसङ्गः । उच्यते । द्विर्वचनार्थमियङि निवृत्ते पुनरयमिच्छतावश्यं प्रवर्त्तयितव्यः तत्र दशायामसिद्धवदत्रेतीयङोऽसिद्धत्वादङ्गस्यानेकाच्त्वादपवादत्वेन वा यणेव भविष्यतीति इटकिटेत्यत्रायमर्थः प्रपञ्चयिष्यते । अजिता । वेता । अजिष्यति । वेष्यति । अजतु । आजत् । आशिषि । वीयात् । वलाद्यार्द्धधातुकत्वान्नित्यं वीभावः । आजीत् । अवैषीत् । आजिष्यत् । अवेष्यत् । अजिजिषति । विवीषति । इको झलिति सनः कित्त्वान्न गुणः । आर्द्धधातुक इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तौ वीभावे हलादित्वाद्यङि वेवीयते । नात्र यङ्लुगस्ति । यतो लुका यङार्द्धधातुकस्य विषयत्वापहारान्नार्द्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः, उक्तञ्चैवं 'न लुमताङ्गस्ये'त्यत्र कैयटे न लुमता यस्मिन्निति चेत् हनिणिङादेशा न सिद्ध्यन्तीति भाष्यवार्त्तिकयोरुक्ते 'लुङि चे'त्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्तीत्याशङ्क्य लुका लुङो विषयत्वापहाराद्विषयसप्तम्याश्रयणेप्यसि-

द्धिरिति । वाययति, अवीवयत्, कर्मादौ वीयतइत्यादि, स्यादिषु स्यसिच्सीयुट्तासिषु वा चिण्वदिडिति वृद्ध्याययोः । वायिष्यते । अवायिष्यत । अवायिष्यथ । अवायिष्यताम् । वायिषीष्ट । अवायिष्टेत्यादि । चिण्वदिटोऽभावे वेष्यते, अवेष्यत, अवेष्ट । वेषीष्ट, वेतेत्यादि । अत्र पक्षे वलाद्यार्धधातुकसद्भावात्पक्षे व्यादेशाभावे अजिष्यते । आजिष्यत । आजिषाताम् । अजिषीष्ट । अजितेत्यादि, इति त्रैरूप्यम् । लिटि ध्वमि चिण्वत्पक्षे वृद्ध्यायादेशयोः 'विभाषेट' इति मूर्द्धन्यो विकल्पेन, अन्यदा त्विणः षीध्वमिति नित्यो व्यादेशाभावश्चेति चातूरूप्यम् । वायिषीध्वम् । वेषीढ्वम् । अजिषीध्वमिति । लुङि तु 'धि चे'ति सिचो लोपे चिण्वदिटि व्यादेशस्य वृद्ध्याययोर्मुर्द्धन्यस्य पूर्ववद्विकल्पः । अचिण्वत्पक्षे तु नित्यः, आदेशाभावे च सिज्लोपे इदमङ्गमिणन्तमिति नित्यो मूर्धन्यः । अवायिध्वम् । अवायिढ्वम् । अवेढ्वम् । आजिढ्वमिति चातूरूप्यम् । येषां तु दर्शनमिणः षीध्वमित्यत्रेण्ग्रहणेनेटो न ग्रहणमिति तेषां मूर्द्धन्याभावात् लिङ्वदेव रूपाणि । कर्मकर्त्तरि तशब्दे 'अचः कर्मकर्त्तरी'ति चिणो विकल्पनात्पक्षे सिचि चिण्वदिटि च अवायि । अवेष्ट । अवायिष्टेति त्रैरूप्यम् । अन्यत् सर्वं कर्मवत्, संभवति च क्षेपणार्थस्य कर्मकर्त्ता । प्रवयणम् । प्राजनम् । 'वा यावि'ति वीभावविकल्पः 'कृत्यच' इति विभाषा णत्वम् । समजः पशूनां संघ इत्यर्थे उदजः तेषामेव प्रेरणम् । 'समुदोरजः पशुष्वि'त्यप् । धात्वर्थस्यापशुविषयत्वे समाजः । उदाज इति घञेव । अघञपोरिति पर्युदासाच्च वीभावः । 'अजिव्रज्योश्चे'ति अकुत्वम् । समज्या । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति स्त्रियां भावादौ क्यप् । 'प्रतिषेधे क्यप उपसंख्यानमि'ति वीभावनिषेधः । प्रवेयम् । आर्द्धधातुकइत्यस्य विषयसप्तमीत्वात् प्रागेव वीभावे 'अचो यत्' अन्यथा णयति वृद्धौ प्रवैयमिति स्यात् । वातमृजा मृगाः । खश्प्रकरणे 'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानमि'ति खश् । अस्य शित्त्वेन सार्वधातुकत्वाच्च वीभावः । अजिरम् । अजिरशिशिरेति निपातितः । वेणुः । अजिवृरीभ्यो निदिति णुः । वेणुकीयम् । 'नडादीनां कुक् चे'ति चातुरर्थिकश्छः कुगागमश्च । आजिः 'अज्य-

तिभ्यां चे'तीणि वृद्धिः पादस्य पदाज्यातीति निर्देशाच्च वीभावः । अच् अजा ।
अजादिपाठाट्टाप् । अत एव वीभावाभावः । अजानां समूह आजिकम् ।
'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वु'ञि'ति वुञ् ॥ २२८ ॥

तेज पालने ॥ तेजति । तितेज । तेजितेत्यादि । तेजः । 'असुन् तिज'
इति नित्यासुचन्तः । क्षमार्थोऽयं । तिज निशान इति चुरादौ ॥ २२९ ॥

खज मथे ॥ खजति । चखाज । खजितेत्यादि । अखजीत् । अखा-
जीत् । अतो हलादेरिति वा वृद्धिः । खजाको मन्थः । 'खजेराक' इत्याकः ।
अत्र केचित् कज मद इत्यपि पठन्ति ॥ २३० ॥

खजि गतिवैकल्ये ॥ खञ्जति । चखञ्ज । खञ्जितेत्यादि । इदि-
त्त्वान्नलोपाभावः ॥ २३१ ॥

एजृ कम्पने ॥ एजति । एजां चकार । एजिता । एजिजिषति । एजय-
ति । मा भवानेजिजत् । ऋदित्त्वान्नोपधाह्रस्वः । एजतिर्दीप्तौ गतः ॥ २३२ ॥

टुओस्फूर्जा वज्रनिर्घोषे ॥ टुशब्दस्य 'आदिर्ञिटुडव' इतीत्त्वे लोपः ।
'ट्वितोऽथुचि'त्यथुचि स्फूर्जथुरिति । ओकार 'ओदितश्चे'ति निष्ठान-
त्वार्थः । स्फूर्णवान् । 'आदितश्चे'त्यनिट्त्वम् । ननु निष्ठानत्वार्थादोदि-
त्करणसामर्थ्यादेवानिट्त्वं सिद्धम् । एवं तर्हि 'विभाषा भावादिकर्म्मणो'-
रिति इड्विकल्पार्थमादित्त्वम् । स्फूर्णमनेन स्फूर्जितमनेनेत्यादि । स्फूर्जति ।
पुस्फूर्ज । स्फूर्ज्जिता । पुस्फूर्जिषति । पोस्फूर्ज्यते । पोस्फूर्क्ति । अपोस्फूर्क् ।
स्फूर्जयति । अपुस्फूर्जत् । अस्य दीर्घोपदेशे 'नोपधाया चे'ति दीर्घस्यानित्य-
त्वज्ञापनात् । मुर्छति हुर्छति स्फुर्छतीत्यपि भवतीति केचिदिति मैत्रे-
यप्रतिपादिते ॥ २३३ ॥

क्षि क्षये ॥ अनिट् स्वरान्त इत्ययमनिट् । इह पाठस्तु उत्तरधातुसाम्या-
दिति मैत्रेये प्रतिपादितम् । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षेथ ।
चिक्षयिथ । चिक्षियिव । क्रादिनियमादिट् थल्यचस्तास्वदिति निषेधाद्
भारद्वाजनियमाच्च विकल्पितः । अजादावचि श्नुधात्वित्यादिनेयङ् एरने-
काच इति यण् तु संयोगपूर्वत्वान्न भवति । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् ।
क्षयेत् । आशिषि क्षीयात् । अकृत्सार्वधातुकयोरिति दीर्घः । अक्षैषीत् । सिचि

वृद्धिः । कर्मादौ क्षीयतइत्यादि वीवत् । अन्तर्भावितण्यर्थोयं सकर्मकः । न क्षीयतइत्यक्षरमिति भाष्ये दर्शनात् । चिक्षीषति । 'अज्झनगमां सनी'ति झलादौ सनि दीर्घः । चेक्षीयते । चेक्षयीति । 'सार्वधातुकार्द्धधातुकयो-रि'ति गुणः । नाभ्यस्तस्येति निषेधो लघूपधगुणस्य । क्षीणः । क्षीणवान् । क्षीणमिदम् । अस्य ध्रौव्यार्थत्वात् क्तोऽधिकरणे चेत्यधिकरणे क्तः । 'अधिकरण-वाचिनश्चेति' तद्योगे कर्त्तरि षष्ठी, 'निष्ठायामण्यदर्थे'इति क्षियो दीर्घः, ण्यदर्थौ भावकर्मणी 'क्षियो दीर्घादि'ति निष्ठानत्वम् । ण्यदर्थे तु क्षित-मनेन क्षितोयमनेन क्षीणस्तपस्वी । क्षीणो जाल्मः । क्षित इति वाक्रोशा दै-न्ययोरिति क्षियो निष्ठायां वा दीर्घः । पूर्ववद्दीर्घपक्षे नत्वम् । क्षेतुं शक्यः क्षय्यः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातनादयादेशो भवति, प्रक्षीय, 'क्षिय' इति ल्यपि दीर्घः । क्षी निवासगत्योरिति तुदादौ । क्षिष् हिंसायामिति क्र्यादौ । क्षिणु हिंसायामिति तनादौ ॥ २३४ ॥ (शेषमग्रे)

## ॥ अथ चित्सुखी ॥

### ॥ तत्र द्वितीयपरिच्छेदावशेषः ॥

(*Continued from page* 402. VOL. V.)

एवमाधाराधेयभावेऽपि ततो न सिद्धसाधनतेति चेत्, मैवम्, द्विष्ठत्वेऽपि कुण्डे बदराणीति प्रतिनियताधाराधेयबुद्धिजनकसंयोगवत् तन्तुषु पट इति प्रतिनियतप्रतीतिजनकसमवायवच्च बुद्धिवैचित्र्यजननो-पपत्तेः, प्रतिवादिनाङ्गीकृतस्य वाद्यनङ्गीकारमात्रेण सिद्धसाधनतायाः परिहर्तुमशक्यत्वात् ।

किंचेदमबाधितत्वं सर्वानुमानेषु विवक्षितं किं प्रत्यक्षेणाबाधित त्वमुत युक्त्या किं वा व्यवहारे बाधराहित्यम् ।

नाद्यः, नीलं नभः प्रादेशिकः सवितेत्यादिविशिष्टव्यवहारे व्यभि-चारात् ।

नापि द्वितीयः, युक्तिबाधविरहस्यात्राप्यसिद्धेः ।

तथाहि समवायः स्वतन्त्रः परतन्त्रो वा ।

नाद्यः, समवायिभ्यामसंबन्धे पदार्थान्तरवत् तद्घटकत्वाभावप्रसङ्गात् ।

न द्वितीयः, संबन्धिभ्यां संबन्धे संबन्धान्तरसापेक्षत्वेनानवस्थाप्रसङ्गात् ।

अथ समवायः संबन्धिभ्यां संबन्धे संबन्धान्तरं नापेक्षते, तस्य संबन्धिसंबन्धेन परमार्थत्वात्, न हि तस्मिन् सति संबन्धिनावसंबद्धौ भवतः, अतो नानवस्थेति चेत्, न, संयोगस्याप्युक्तरीत्या संबन्धान्तरानपेक्षत्वप्रसङ्गात् ।

नापि तृतीयः, नीलं नभ इत्यादावपि व्यवहारे बाधाभावेन व्यभिचारस्य तादवस्थ्यात् ।

घ[1]टस्तद्वृत्त्यनित्यान्यभावसंबन्धवानयम् ।
संबन्धित्वादिति स्याच्चेन्नाभावे व्यभिचारतः ॥ १५ ॥

अयं घट एतद्घटनिष्ठानित्यत्वानधिकरणभावरूपसंबन्धवान् संबन्धित्वात् पटवदिति चेत्, मैवम्, अभावे हेतोर्व्यभिचारात्, तस्यापि विशेषणविशेष्यभावसंबन्धेन संबन्धित्वाङ्गीकारात्, अथ भावत्वादिति हेतुस्तथापि समवाये व्यभिचारात्, द्रव्यत्वादिति प्रयोगेऽपि संयोगनित्यतापादकतयार्थान्तरत्वप्रसङ्गः ।

न चानित्यस्य घटादेर्नित्यसंबन्धाधिकरणत्वानुपपत्तिः, समवायाधारवत् तदुपपत्तेः, अतो यथा समवायस्य स्वभावसामर्थ्यादेवात्मनि परत्र च संबन्धव्यवहारहेतुत्वम्, एवं गुणगुण्यादेरपि स्वभावसामर्थ्यादेव संबन्धव्यवहारहेतुत्वोपपत्तेर्न कल्पनागौरवानवस्थादुःस्थसमवायस्वीकारावकाशः, तदेवं लक्षणासंभवात् प्रमाणाभावाच्च न समवायस्य द्रव्यादिभ्यो भेदसिद्धिः, अतो न क्वापि लक्षणभेदाद्भेदसिद्धिरिति सिद्धम् ।

१ घट इति, भावपदेन विशेषणविशेष्यभावादेरभावरूपसंबन्धस्य व्यवच्छेदः, अनित्यान्यपदेन संयोगस्यानित्यत्वानधिकरणभावरूपसमवायानङ्गीकारवादिनं प्रत्यप्रसिद्धविशेषणता मा भूदिति घटवृत्तिपदम्, घटनिष्ठत्वे सत्यनित्यत्वानधिकरणभावरूपसंबन्धत्वमनित्यभावरूपसंबन्धाधारेष्वपि पटादिषु प्रसिद्धेर्नाप्रसिद्धविशेषणता ।

अन्ये मन्यन्ते मा भूल्लक्षणभेदाद्भेदः, तथापि सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाद्बीजादीनां भेदः सिध्यति,तथाहि,यदि कुशूलनिहितं बीजं तदानीमङ्कुरजनने समर्थं तर्हि तदैवाङ्कुरं जनयेत्, यद्यदा यज्जननसमर्थं तत् तदैव तत् करोति यथा सामग्री, न च कुर्वदुपलभ्यते, तस्मादसमर्थं सहकारिसमवधाने च समर्थमिति सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गः ।

न च समर्थस्यापि सहकारिसमवधानाभावादजनकत्वमिति संदिग्धव्यतिरेकता, जनकस्वभावत्वे तस्य सहकारिसमवधानाभावेऽपि स्वभावविरोधादेवाजनकत्वानुपपत्तेः ।

सहकारिसमवधाने जनकमजनकं वान्यदिति स्वभाव इति चेत्, नैवम्,एकस्यानेकस्वभावतानुपपत्तेः ।

किंच यदि सहकारिसमवधानमपि स्वभावान्तर्भूतं तदा तदपि तदैव संपद्येत, स्वभावस्यानपायात् ।

अथाजनकत्वं स्वभावः, तदा न कदाचिदप्यङ्कुरं जनयेत् ।

अथ सहकारिसमवधानानन्तरभाविनः कार्यात् समनन्तरपूर्वक्षणवर्तित्वं स्वभावः, तर्हि कुशूलनिहितावस्थायामपि बीजस्य यथावर्णितस्वभावो भवेत्,तत्स्वभावस्य तदानीमभावे स्वभावपरित्यागप्रसङ्गात् ।

अथ सहकारिसमवधानं न स्वभावः, तर्हि तत्कारणस्योपकरोति न वा, न चेत्, अनपेक्षणीयत्वम्, उपकरोति चेत् उपकारो वस्तुनो भिन्नो न वा, भिन्नत्वे प्राप्ताप्राप्तविवेकेन स एव कार्यजनक इति न स्थिरस्य कारणता, अभिन्नत्वे तु पूर्वावस्थस्य वस्तुनः सांप्रतमुपकाराभिन्नतयोत्पत्त्यसंभवाद्वस्त्वन्तरोत्पत्तेः क्षणिकस्यैव कारणताप्रसङ्गः, उपकारस्य वस्तुतावन्मात्रत्वे च सहकारिसमवधानात् पूर्वमपि तद्भावात् तदापि कार्यजननं सहकारिसमवधानवैयर्थ्यं च प्रसज्येत ।

अथोपकारो वस्तुनस्तत्त्वान्यत्वाभ्यामनिर्वचनीयः, तदा तस्यैव कारणत्वमिति वस्तुनः कारणता ।

न च वस्तुनोऽप्यन्वयव्यतिरेकित्वात् कारणता, केवलव्यतिरेकाभावात्, सत्युपकारे वस्त्वभावापराधेन कार्याभावानुपलम्भात्, तदेवं सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाज्जनकाजनकयोर्भेदसिद्धिः, प्रयोगश्च, कुशूलस्थं बीजं सहकारिमध्यमध्यासीनाद्भिन्नं विरुद्धधर्मसंसृष्टत्वाद् दहनतुहिनवत्, तथा कुशूलस्थं बीजमङ्कुरजननबीजाद्भिन्नं कार्याव्यवहितातीतक्षणातिरिक्तक्षणसंबन्धित्वाद् घटवत् ।

एतामेव व्याप्तिमुपजीव्य यत् सत् तत् क्षणिकमित्यनुमानेन क्षणिकतामाचक्षते क्षणभङ्गवादिनः ।

न च य एवाहं रूपमद्राक्षं स एवाहमिदानीं स्पर्शमनुभवामीति स एवायं घट इत्यादिप्रत्यभिज्ञाविरोधः, सामग्रीभेदात् पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञाज्ञानस्यैकत्वानुपपत्तेः, तथाहि सा मे माता स मे पितेत्यादाविन्द्रियनिरपेक्षस्य संस्कारस्य स्मरणकारणत्वादयं घट इत्यादिप्रत्यक्षज्ञानेष्विन्द्रियस्य संस्कारनिरपेक्षस्य कारणतावगमादुभयोः संभूय कारणतानुपपत्तिः, स इत्ययमिति च पारोक्ष्यापारोक्ष्यविरुद्धधर्मसंसर्गस्य स्फुटमुपलम्भाच्च ज्ञानभेदात् प्रत्यभिज्ञायाः प्रत्यक्षत्वाभावाच्च प्रकृतानुमानस्य प्रत्यक्षविरोधः, तस्माद्विरुद्धधर्मसंसर्गाद्वस्तूनां भेदसिद्धिरिति ।

अत्रोच्यते ।

सिद्धे भेदे विरोधे च धर्मयोर्धर्मिभेदधीः ।
तयोर्नाद्यापि संसिद्धिर्धर्मिभेदस्तदा कुतः ॥ १६ ॥

अशेषभेदानपाकुर्वतोऽद्वैतवादिनो यदा भेदमात्रमेव नास्ति तदा कुतो धर्मयोर्भेदः कुतस्तरां विरोधः कुतस्तमां च तदधीनो धर्मिभेदाध्यवसायः, अन्यतो वा भेदविरोधयोः सिद्धौ तत एव धर्मिभेदसिद्धिः, कृतमनुमानेनाजागलस्तनायमानेन विरुद्धधर्माध्यासेन ।

कश्चायं धर्मयोर्विरोधो येन विरुद्धधर्मसंसर्गित्वेन भेदोऽभिधीयते, किं सहानवस्थायित्वं वध्यघातकभावो वा भावाभावरूपत्वं वा तदत्यन्ताभावसमानाधिकरणत्वं वा ।

प्रथमे किमेकस्मिन् काले सहानवस्थायित्वमुतैकस्मिन्नधिकरणे ।

नाद्यः, एकस्मिन्नपि क्षणे धर्मभेदेन जनकत्वाजनकत्वयोः सहावस्थानात् ।

नेतरः, एकजनकस्याप्यन्याजनकत्वेन जनकत्वाजनकत्वयोरेकस्मिन्नधिकरणे सहभावात् ।

एककार्यप्रतियोगिजनकत्वाजनकत्वयोरेकत्र धर्मिणि सहानवस्थायित्वमिति चेत्, स्थायिवादिनं प्रत्यसिद्धेः, क्षणभङ्गवादिनोऽपि तत्कार्यजनकस्यैव क्षणान्तरे तदजनकत्वेन तयोरेकत्रैव वस्तुनि साहित्यात् ।

नापि द्वितीयः, वध्यघातकभावस्य युगपदेकधर्मिनिष्ठयोरेव धर्मयोः संभवेन भेदासाधकत्वात् ।

नापि तृतीयः, कार्यभेदं प्रति जनकत्वाजनकत्वयोर्भावाभावरूपयोरेकस्मिन्नपि भावात्, एककार्यप्रतियोगिजनकत्वाजनकत्वयोरेकस्मिन् वस्तुनि क्षणभेदेन भावाच्च ।

नापि चतुर्थः, स्थायिवादिनं प्रत्यसिद्धेः ।

किंच सहकारिसमवधाने यः कार्यमुत्पादयति स भावः सहकारिविरहकाले तत्र समर्थो न वा, समर्थश्चेत्, तदापि जनयेत्, न चेत्, तदेव वस्तु शक्तमशक्तं चेति दुर्वारो विरोधः ।

सहकारिविरहकाले सोऽसन् न त्वसमर्थ इति चेत्, सहकारिविरहकाले येयमसद्रूपता सा सहकारिसंनिधानकालेऽपि विद्यते न वा, विद्यते चेत्, स्वकाल एवासत्त्वप्रसङ्गः, न चेत्, न तर्हि सहकारिविरहकाले तदसद्रूपम्, असद्रूपाभावेऽप्यस्य भावात् ।

अथैकमेव वस्तु सहकारिभावाभावयोः सदसद्व्यवहारयोग्यम्, तथैव तर्हि स्थिरमपि शक्ताशक्तव्यवहारयोग्यमिति तुल्यम् ।

न चासामर्थ्यं विहायान्यदसत्त्वमस्ति ।

अथैकस्मिन्नेव वस्तुनि सहकारिसमवधानानन्तरं कार्यजननस्वभावता तद्विरहे चासमर्थस्वभावतेत्युभयमपि विरुद्धं तुल्यमिदमस्मन्मतेऽपि तथापि सहकारिसमवधाने यत् समर्थं रूपं तदेव चेत् प्रागप्यस्ति

पूर्वमपि कार्यप्रसवप्रसङ्ग इति चेत्, न, सहकारिविरहे यत् तव कार्येऽसमर्थं रूपं तदेव चेत् सहकारिसमवधानेऽपि, ततोऽजननप्रसङ्ग इति, तुल्यत्वात् ।

न च सहकारिणः स्वभावेऽन्तर्भावः, येन गले पादुकान्यायेन तेषामपि तदैव समुदयः स्यात् किंतु भवन्मते समर्थक्षणोत्पादकानां क्षितिपवनपाथस्तेजसामिव सहकारितैव ।

न च सहकारिकृतोपकारस्य भेदाभेदविकल्पानुपपत्तिः, वस्तुनस्त-स्वान्यत्वाभ्यामनिर्वचनीयस्य लोकसिद्धकारणताया अप्रत्याख्येयत्वात् ।

न च केवलव्यतिरेकाभावः, उपकारवस्तुनो भेदानभ्युपगमात्, उपकारकारणताया एव वस्तुकारणताभ्युपगमात्, प्रयोगस्तु धर्मयोर्विरोधनिरासेनैव निरस्तः, अनैकान्तिकश्च[1] सहकारिमध्यमध्यासीनस्य विरुद्धधर्मसंसृष्टत्वेऽपि स्वतो भेदाभावात्, कार्याव्यवहितातीतक्षणातिरिक्तक्षणसंबन्धित्वादित्यपि हेतुः स्थायिवादिनो मते तस्यैव तथाविधक्षणसंबन्धित्वात् तस्मिन्नेवानैकान्तः, तदेवं प्रसङ्गतद्विपर्ययोरपास्तत्वात् क्षणिकतानुमानं दूरोत्सारितम् ।

किंचेदं क्षणिकत्वम्, किं क्षणसंबन्धित्वं क्षणान्तरासंबन्धित्वे सति क्षणसंबन्धित्वं वा, क्षणान्तरमात्रासंबन्धित्वे सति क्षणसंबन्धित्वं वा, उत्पत्तिक्षणे सत्त्वं वा, स्वोत्पत्तिक्षणसत्त्वं वा, स्वोत्पत्तिक्षणमात्रसत्त्वं वा, एकक्षणावस्थायित्वं वा, अनेकक्षणानवस्थायित्वविशेषितं वा ।

न तावत् प्रथमः, सिद्धसाधनत्वात्, अनेकक्षणावस्थायिनोऽपि घटादेः क्षणसंबन्धित्वात् ।

न द्वितीयः, अर्थान्तरत्वात्, क्षणान्तरासंबन्धित्वेऽप्यनेकक्षणसंबन्धित्वाविरोधात्, घटादीनामनेकक्षणसंबन्धिनामपि स्वप्रध्वंसादिक्षणासंबन्धित्वस्याभ्युपगमात् ।

---

१ अनैकान्तिकश्चेति, तद्धि सहकारिमध्यमध्यासीनं कालान्तरीयमङ्कुरं न जनयति जनयति च तात्कालिकमिति विरुद्धधर्माध्यासवत्, अथच स्वयं स्वस्मान्न भिद्यत इति, तत्रानैकान्तिकत्वमित्यर्थः ।

न तृतीयः, व्याघातात्, तत्संबन्धक्षणस्यापि क्षणविशेषत्वेन क्षणान्तरत्वे सति क्षणान्तरमात्रासंबन्धाभावात् ।

न चतुर्थः, सिद्धसाधनत्वात्, अनेकक्षणसंबन्धेऽप्युत्पत्तिक्षणसंबन्धाविरोधात् ।

अत एव न पञ्चमः ।

नापि षष्ठः, स्वशब्देनाङ्कुराद्येकैकविवक्षायां तदुत्पत्तिक्षणमात्रसत्त्वस्य घटादिष्वभावेन क्षणिकत्वाभावप्रसङ्गात्, सर्वविवक्षायां तु लक्षणासंभवित्वमेव, एकैकस्य सर्वोत्पत्तिक्षणसत्त्वासंभवेन तन्मात्रसत्त्वासंभवात् ।

नापि सप्तमः, अनेकक्षणसत्त्ववादिभिरप्येकक्षणावस्थायित्वाङ्गीकारात् ।

नाप्यष्टमः, प्रध्वंसाद्यनेकक्षणानवस्थायित्वस्यैकक्षणावस्थायिनि स्थायिन्यपि संभवात् ।

उत्पत्तिक्षणानन्तरक्षणवर्तिध्वंसप्रतियोगित्वं क्षणिकत्वमित्यपि न, स्थिराणामपि यस्य कस्यचिदुत्पत्त्यनन्तरक्षणवर्तिध्वंसप्रतियोगित्वोपपत्तेः ।

एतेन स्वोत्पत्त्यनन्तरक्षणवर्तिध्वंसप्रतियोगित्वमपि निरस्तम्, स्वशब्दखण्डनस्य पूर्ववदत्रापि तुल्यत्वात् ।

अथास्य घटस्यैतद्घटोत्पत्त्यव्यवहितानन्तरक्षणवर्तिध्वंसप्रतियोगिक्षणिकत्वम्,एवं प्रतिव्यक्ति क्षणिकत्वलक्षणमूहनीयमिति चेत्, मैवम्, एवंविधक्षणिकत्वसाधने सत्त्वसाधनस्यानैकान्तिकत्वापातात्, नह्यतीतानागतानां च सतामेतदुत्पत्त्यव्यवहितानन्तरक्षणवर्तिध्वंसप्रतियोगित्वमस्ति, तत्तद्ध्वंसानामेतद्घटोत्पत्त्यनन्तरक्षणेऽनुत्पन्नत्वात् ।

एतेनोत्पत्तिक्षणध्वंसासमानकालीनत्वं क्षणिकत्वमित्यपि निरस्तम्, यत्किंचिदुत्पत्तिक्षणध्वंसासमानकालीनत्वस्य स्थायिष्वपि भावात्, स्वशब्देन विशेषणेऽपि पूर्वोक्तदोषानुषङ्गात् ।

प्रतिव्यक्ति लक्षणे च सत्त्वसाधनस्यानैकान्तिकत्वात् ।

घटत्वात् पटत्वादित्यादिप्रयोगसाधनाभ्यूहने चानागतघटपटादिष्वनैकान्तिकता तदवस्थैव ।

सर्वश्चायमुदितो हेतुकलापः पूर्वोदितप्रत्यभिज्ञाप्रत्यक्षविरोधितया कालात्ययापदिष्टः ।

यत् पुनरुक्तं सामग्रीभेदाद्विरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञाज्ञानस्यैकत्वानुपपत्तिरिति, तदयुक्तम्, संप्रयोगसंस्कारयोः संभूय सामग्रीत्वात् ।

न चान्यत्र संप्रयोगसंस्कारयोः प्रत्येकमन्योन्यनिरपेक्षयोः कारणत्वादेकज्ञानकारणतानुपपत्तिः, यस्मात्,

अन्यच्च लिङ्गेन्द्रिययोरन्योन्यनिरपेक्षयोः ।
दृष्टं संभूय कारित्वं विशिष्टानुमितिं प्रति ॥ १७ ॥

श्रूयमाणस्य स्मर्यमाणस्य वा लिङ्गस्याक्षनिरपेक्षस्यानुमानज्ञानहेतुत्वं दृष्टम्, दृष्टं चेन्द्रियस्यानपेक्षमपरोक्षज्ञानकारणत्वं तथापि संभूयोभाभ्यामयं पर्वतो वह्निमानित्येकमनुमानज्ञानं जायमानमुपलभामहे, न ह्यन्तरेणेन्द्रियसंप्रयोगमयमिति पुरोवर्त्याकारोपलम्भसंभवः ।

न च विरुद्धधर्मसंसर्गाद्भेदः, अस्मिन्नेवानुमानवेदने वह्निमानिति चायमिति च पारोक्ष्यापारोक्ष्यविरुद्धधर्मसंसर्गोपलब्धेः ।

तदेवं प्रत्यभिज्ञाज्ञानस्यैकत्वेन प्रामाण्यसंभवात् तद्विरुद्धं भेदानुमानं कालात्ययापदिष्टं न भेदप्रत्यायनायालम्, कथं च व्याप्यव्यापकभावभेदोपलम्भाधीनात्मलाभमनुमानमसिद्धे भेदे भेदं गोचरयेत्, आगमोऽप्यभिधानाभिधेयभेदावगमपुरःसरः, तस्मिन्नेवासिद्धे कथं तत्र प्रमाण्यमश्नुवीत, शब्दान्तरादिकमपि सिद्धशब्दादिभेदोपजीवनेन प्रवर्तमानं तदसिद्धौ कथं कर्मोपासनादिभेदमावेदयेत्, नहि भेदासिद्धौ यजतिजुहोत्यर्थानां भेदः सिध्यति येन धात्वर्थभेदेन सर्वत्र विज्ञेयं भावनान्तरमिति वार्तिककारोक्तो भावनाभेदः सिध्येत्, उपमानमपि मानान्तरावसितगोगवयादिवस्तुद्वयावच्छिन्नसादृश्यगोचरत्वात् तदसिद्धौ न वस्तुभेदावभासनाय प्रभवति, तिलेभ्य एव तैलं पयस एव दधीत्यर्थक्रियान्यथानुपपत्तिप्रभवार्थापत्तिर्नान्तरेण तिलादिकारणभेदावभासं सिद्धिरित्यन्योन्यसंश्रयाच्च कारणभेदावभासे प्रामाण्यं भजते, अभावोऽपि नेदमिह नेदमिति धर्मिप्रतियोगिभेदाधीनसिद्धिर्न वस्तुभेदं साधयत्यन्योन्याश्रयात् ।

अपिच ।

मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् ।
तच्चाध्यक्षादिमानेषु गीर्वाणैरपि दुर्भणम् ॥ १८ ॥

प्रत्यक्षादिप्रमाणाधीना तत्प्रमेयव्यवस्थितिः, प्रमाणानि च लक्षणाधीनाधिगमानि,लक्षणं च दुर्निरूपणम्,तथाहि तत्र[1] न तावदिन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यभिचारीत्यक्षपादोदितं प्रत्यक्षलक्षणं घटते, अव्यभिचारित्वस्य दुरधिगमत्वात् ।

तदव्यभिचारित्वं किमदुष्टसामग्रीजन्यत्वेन ज्ञायते, किंवा बाधरहितत्वेन, आहोस्वित् प्रवृत्तिसामर्थ्येन, उतान्येन केनचित् ।

न प्रथमः, अप्रत्यक्षसामग्रीनिष्ठदोषाभावस्याध्यक्षेणाध्यवसातुमशक्यत्वात्, नापि ज्ञानाख्यलिङ्गेन ज्ञानमात्रेणादुष्टसामग्रीजन्यत्वसाधने विभ्रमज्ञानेष्वनैकान्तिकत्वात्, नाप्यव्यभिचरितज्ञानेन तदवगमः, परस्पराश्रयत्वात्, अदुष्टकारणजन्यत्वेन ज्ञानस्याव्यभिचरितत्वसिद्धिरव्यभिचरितत्वज्ञानाच्चादुष्टकारणजन्यत्वसिद्धिरिति ।

नापि द्वितीयः, विकल्पासहत्वात् ।

किं सर्वपुरुषबाधरहितत्वमुत प्रतिपत्तुः ।

नाद्यः, सर्वपुरुषबाधराहितत्वस्यासर्वज्ञाविज्ञेयत्वात् ।

नापि द्वितीयः, प्रतिपत्तुर्देशान्तरगमननिधनादिना बाधानुदये तदीयमरुमरीचिकाविभ्रमाणामप्यर्थाव्यभिचारित्वप्रसङ्गात् ।

( शेषमग्रे )

---

१ तत्रेति, तेषु प्रमाणेषु मध्य इत्यर्थः, यद्यपीन्द्रियार्थसंनिकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति सूत्रं तथापीयानेवांशो लक्षणोपयोगी,अव्यपदेश्यपदस्य निर्विकल्पकप्रत्यक्षभेदसूचकत्वात्, व्यवसायात्मकस्य पदस्य रूपं रस इत्यादिशब्दजज्ञानस्य शब्दानुबोधेन शब्दत्वशङ्कानिवर्तनेन सविकल्पप्रत्यक्षप्रामाण्यसमर्थनार्थत्वादिति हृदि निधायैतावदुदाहृतम्, तत्र चाव्यभिचारीति शुक्तिरजतज्ञानादिव्यवच्छेदः, सुखव्यावृत्त्यै ज्ञानपदम्, अनुमानादिव्यावृत्त्यर्थमाद्यं विशेषणम् ।

॥ श्रीः ॥

# ॥ योगवार्त्तिकम् ॥

(*Continued from page 392. Vol. V.*)

तदेवं स्थूलविषये सूत्रद्वयेन समापत्तेर्द्विधा विभागं कृत्वा सूक्ष्मविषयेऽपि तस्या द्वैविध्यमतिदिशति ।

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

एतया सवितर्कनिर्वितर्करूपया स्थूलविषयकसमापत्त्या सूक्ष्मविषया ऽपि सविचारनिर्विचाररूपा समापत्तिद्वयी व्याख्याता अर्थोपरागानुपरागसाम्येनेत्यर्थः । वितर्कविचारेत्यादिसूत्रे सूक्ष्मविषयकाभोगो विचार इत्युक्तं स एवात्र सविचारनिर्विचाररूपेणात्रोच्यते इति स्मर्त्तव्यम् । कार्याद्युपरागानुपरागयुक्तां समापत्तिं द्विधा विभजते । तत्र भूतसूक्ष्मेष्विति । अत्र भूतशब्द इन्द्रियाणामप्युपलक्षकः सामान्यत एव सूक्ष्मविषयत्वेनास्याः समापत्तेः भाष्ये व्याख्येयत्वात् । भूतेन्द्रियाणां यत्सूक्ष्मं कारणं तन्मात्रादिप्रकृतिपर्यन्तं 'सूक्ष्मविषयत्वं चालिङ्गपर्यवसान' मित्यागामिसूत्रात् तेषु वर्त्तमानधर्मविशिष्टेषु तथा देशकालनिमित्तैर्विशिष्टतया अनुभूयमानेषु या समापत्तिः सा सविचारेत्युच्यतइत्यर्थः । अत्र देश उपर्यधःपार्श्वादिः कालो वर्त्तमानादिः निमित्तं परिणामप्रयोजकः पुरुषार्थविशेष इति पूर्ववदेवात्राप्यवयवातिरिक्तस्तन्मात्रादिरूपोऽवयवी समापत्तेर्विषय इत्याह । अत्रापीति । उदितो वर्त्तमानः, उपतिष्ठते आरूढं भवति । सविचारां व्याख्याय निर्विचारां व्याचष्टे । या पुनरिति । या तु सर्वथा सर्वैः स्वरूपैः सर्वतो देशकालाद्यनवच्छेदतः समापत्तिः शान्तादिव्यपदेश्यधर्मानवच्छिन्नेषु अतीतवर्त्तमानभविष्यद्धर्मैरनवच्छिन्नेषु अतीतवर्तमानभूतसूक्ष्मेषु जायते सा निर्विचारा अनवच्छिन्नशब्दस्यासंबद्धार्थत्वनिरासाय विशेषणद्वयं सर्वधर्मेत्यादि । सर्वधर्मानुगतेषु सर्वधर्माणामाश्रयेषु चेत्यर्थः । निर्वितर्कसाम्यमस्याः प्रतिपादयति । एवं स्वरूपं हीति । पूर्वसूत्रानुसारेणेत-

द्याख्येयम् । उक्तस्य समापत्तिचतुष्टयस्य विषयविभागमाह । तत्रेति । महत् स्थूलं केवलविकृतिरिति यावत् । तेनेन्द्रियाणां भूतपरमाणूनां च संग्रहः । भूतपरमाणूनांच सूक्ष्ममध्ये प्रवेशो वक्तुं न शक्यते, आगामिसूत्रे पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्म इत्यादिना तन्मात्रादीनामेव सूक्ष्मत्वस्य वक्ष्यमाणत्वात् । सूक्ष्मत्वं च तत्त्वान्तरकारणत्वं तच्च जलादिचतुष्टयव्यावृत्त्यर्थं बहिरिन्द्रियग्राह्यगुणराहित्येन विशेषणीयम् । वस्तुतस्तु अष्टप्रकृतिसिद्धान्ताद्भूतान्युत्तरभूतेष्वाधारकारणान्येव न तु प्रकृतयः, अतो ऽत्र तत्त्वान्तरप्रकृतित्वमेव सूक्ष्मत्वमिति । ननु शब्दार्थज्ञानविकल्पसंकीर्णत्वमेव कथमेतयैवेत्यनेन नातिदिश्यते तत्राह । एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति । एवं स्वरूपमिव विकल्पहानिरपि यथोक्तविकल्पराहित्यमपि उभयोः सविचारनिर्विचारयोरेतयैव पूर्वोक्तया निर्वितर्कया यथोक्तविकल्पशून्यया सूत्रकारेण व्याख्यातप्रायेत्यर्थः । पूर्वभूमिकायां त्यक्तविकल्पस्योत्तरभूमिकायामसंभवादिति सूक्ष्मविषयेत्युक्तं तत्र सूक्ष्मो विषयः किंपर्यन्त इत्याकाङ्क्षायामाह ।

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

सूक्ष्मश्चासौ विषयश्चेति सूक्ष्मविषयः, अलिङ्गं प्रकृतिस्तत्पर्यन्तैव सूक्ष्मविषयतेत्यर्थः । तत्र स्थूलमारभ्य प्रकृतिपर्यन्तस्य सूक्ष्मतायां क्रममाह । पार्थिवस्येति । स्थूलकाष्ठाः पञ्चविधा अणवस्तत्र पार्थिवाणवपेतया गन्धतन्मात्रं समापत्तेः सूक्ष्मो विषयः । यद्यपि पार्थिवाणुर्जलविशिष्टगन्धतन्मात्रारब्धस्तथापि गन्धतन्मात्रस्य प्राधान्यात् तदेव पार्थिवाणोः सूक्ष्ममुक्तम् । एवमाप्यादीनां त्रयाणां पूर्वपूर्वभूतविशिष्टरसादितन्मात्रकार्यत्वे ऽपि आकाशाणोश्चाहङ्कारविशिष्टशब्दतन्मात्रकार्यत्वेपि प्राधान्यादेकैकतन्मात्रमेव सूक्ष्ममित्युक्तमिति वेदितव्यम् । तेषामहङ्कार इति । तेषां पञ्चतन्मात्राणामहङ्कारः सूक्ष्मः कारणत्वात् । अत्र च तन्मात्रैरिन्द्रियाण्युपलक्षणीयानि । अस्यापीति । अहङ्कारस्यापीत्यर्थः । लिङ्गमात्रं महत्तत्त्वं तद्धि स्वकारणस्य प्रकृतेरनुमापकमात्रमङ्कुरवत् । प्रकृतिगतविशेषाणामहंकारादि-

ष्वेव प्रकटीभावात् । यथा यत्र काण्डादिभिर्बीजगतविशेषाभिव्यक्तिर्नो-ङ्कुरमात्रेणेति । अलिङ्गं प्रधानम् । अकार्यत्वेन कस्याप्यननुमापकत्वादिति । अलिङ्गपर्यवसानत्वं व्याचष्टे । न वा लिङ्गादिति । चोदयति । नन्विति । ननु पुरुषः प्रकृत्यपेक्षयापि सूक्ष्मोऽस्ति निर्धर्मकत्वादिति पूर्वपक्षं परिहरति । सत्यमिति । यथोपादानतया लिङ्गापेक्षितं सौक्ष्म्यं प्रधानस्यास्ति नैवं पुरुषस्य तस्यापरिणामित्वात् उपादानतया च सूक्ष्मत्वमत्र विवक्षितमित्याशयः । ननु यदि पुरुषः कारणं न भवति तर्हि 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म' 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी'त्यादि श्रुतिस्मृतिशतविरोध इत्याशङ्कां परिहरति । किं तु लिङ्गस्येति । हेतुस्तु भवति किन्तु लिङ्गस्यान्वयिकारणमुपादानकारणं पुरुषो न भवतीति व्युत्क्रमेणान्वयः । तत्र परमात्मनोऽधिष्ठातृत्वेन निमित्तकारणत्वं 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति गीतावचनात् ।

प्रधानपुंसोरजयोर्यतः क्षोभः प्रवर्त्तते ।
नित्ययोर्व्यापिनोश्चैव जगदादौ महात्मनोः ॥
तत्क्षोभकत्वाद् ब्रह्माण्डसृष्टौ हेतुर्निरञ्जनः ।
अहेतुरिति सर्वात्मा जायते परमेश्वरः ॥

इत्यादि सकलस्मृतिषु तथा निर्णयाच्च । यत्तु ईश्वरस्याधिष्ठानत्वरूपमुपादानत्वं यतो वा इमानि भूतानि जायन्तइत्याद्युक्तश्रुतिस्मृत्योर्गीयते । आकाशस्य वायूपादानवत्, तदप्यत्र दर्शननिमित्तकारणतामध्यएव प्रवेश्यते पुरुषाणां विकारित्वभ्रमनिरासायेति पुरुषार्थं प्रकृतेः प्रवृत्त्यभ्युपगमेन च जीवपुरुषाणामपि महदाद्यखिलसृष्टिहेतुत्वं संयोगमात्रेण नोपादानत्वेन । तथा चोक्तम् ।

बुद्ध्यादयो विशेषान्ता अव्यक्तादीश्वरेच्छया ।
पुरुषाधिष्ठितादेव जज्ञिरे मुनिपुंगवाः ॥
सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥

इत्यादिस्मृतिभिः । जीवानामधिष्ठानसंयोगमात्रम् अनुमतिस्तु पूर्वकल्पीयकामकर्मादिरूपेति दिक् । तदेवं ग्राह्यग्रहणसमापत्त्योः स्थूलसूक्ष्मविषयभेदेन विशिष्टाविशिष्टरूपतश्चतुर्विधविभाग उक्तः ग्रहीतृसमापत्तौ च यः सविकल्परूपो विशेषः स एतास्वेव चतसृष्वन्तर्भूतः चेतनोपरागेणैवाचेतनेषु योगस्य व्यवस्थापितत्वात् । अतो ग्रहीतृसमापत्तौ सविकल्पाविकल्पादिविभागो नोक्तः । वितर्केत्यादिसूत्रेण पूर्वं संप्रज्ञातस्यावान्तरविभाग एव कृत इदानीं यथोक्तसमापत्त्याख्यकार्यमुखेन सबीजपरिभाषापूर्वकं संप्रज्ञातस्य सामान्यलक्षणमनेनैव प्रसङ्गेनाह ॥

## ता एव सबीजः समाधिः ॥ ४६ ॥

ता एव ग्रहीतृग्रहणग्राह्येषु समापत्तय एव सबीजः समाधिः संप्रज्ञातयोग इत्यर्थः । समापत्तिरूपसाक्षात्कारहेतुत्वाद्योगस्य समापत्तित्वमुक्तम् । योगे स्वतोऽवान्तरविशेषाभावादिति । ननु ग्रहीतृग्रहणग्राह्यसमापत्तिभिर्वितर्कविचारास्मितानुगतास्त्रयः संप्रज्ञाता एव संगृह्यन्ते न पुनरानन्दानुगत इति कथन्ता एवेत्यवधारणमिति चेन्न । आनन्दस्य बुद्धिधर्मत्वेन ग्राह्यमध्ये प्रवेशात् । ननु दुःखबीजसंस्कारहेतुतया समापत्तय एव सबीजाः न तु वृत्तिनिरोधात्मको योग इति कथमुच्यते ता एव सबीजयोग इति तत्राह भाष्यकारः । ताश्चतस्र इति । बहिर्वस्तून्यनात्मधर्माः, संस्कारधर्मादयो दुःखबीजानि जायन्तआभ्य इति बहिर्वस्तुबीजाः, संप्रज्ञातनिष्ठाया अपि संस्कारहेतुत्वात् धर्ममेघत्वाच्च । तथा च वितर्कादिसूत्रोक्तरीत्या चतस्रः प्रकृते तु त्रिधा विभक्तास्ता ग्रहीत्रादिविषयिकाः समापत्तयो बहिर्वस्तुबीजा इत्यतस्ताभिः संबन्धात्समाधेः संप्रज्ञाताख्यो वृत्तिनिरोधोऽपि सबीज उच्यतइत्यर्थः । ननु स्थूलसूक्ष्मसमापत्तेरेव चतुर्विधत्वादानन्दास्मितासमापत्तिभ्यां सह षट् समापत्तयो भवन्ति तत्कथमुच्यते चतस्र इत्याशङ्कामपाकरोति । तत्र स्थूल इति । तत्र चतसृषु समापत्तिषु मध्ये स्थूलार्थे एक एव समाधिरवान्तरभेदेनैव सवितर्कनिर्वितर्करूपतो द्विधा । तथा सूक्ष्मेऽर्थेप्येक एव समाधि-

रवान्तरभेदेनैव सविचारनिर्विचाररूपतो द्विधा प्रोक्त इत्यतो वितर्कानुगतादिरूपैः पूर्वं स संप्रज्ञातयोगश्चतुर्धा उपसंख्यातः परिगणित इत्यर्थः । केचित्तु सूत्रस्य एवकारो भिन्नक्रमः । तथा च ताः सवितर्कनिर्वितर्कसविचारनिर्विचाररूपाश्चतस्रः समापत्तयः सबीजसमाधेरेवेति सूत्रार्थः, तेन न ग्रहीत्रादिसमापत्तेरपि सबीजत्वं भाष्ये प्रागुक्तं विरुध्यतइत्याहुः । तन्न । ग्रहीत्रादिसमापत्तेः सबीजत्वानुक्त्यात्र सूत्रकारस्य न्यूनतापत्तेः । एवकारवैयर्थ्याच्च । यथाक्रमस्यैव एवकारस्योपपत्तौ भिन्नक्रमत्वानौचित्याच्चेति । यच्चान्यत्तैरुक्तं ग्राह्यविषये स्थूलसूक्ष्मभेदेन सवितर्कादिरूपाश्चतस्रः समापत्तयः ग्रहणाख्येषु चेन्द्रियेषु सानन्दनिरानन्दरूपे द्वे समापत्ती ग्रहीतृषु च सास्मितनिरस्मितरूपे द्वे समापत्ती इत्यष्टौ समापत्तयो बोध्याः युक्तिसाम्यादिति,तदपि न । प्रमाणादर्शनात् । आनन्दानुगतास्मितानुगतयोर्निरानन्दनिरस्मितत्वरूपविशेषासंभवाच्च । आनन्दो हि ल्हादमात्रो ऽस्मिता च चैतन्यमात्रसंविदिति भाष्यकृता प्रोक्तम् । न त्विन्द्रियं ह्लादशब्देन व्याख्येयं, लक्षणाप्रसङ्गात् । नापि अहङ्कारोपरक्तचैतन्यमस्मिताशब्देन व्याख्येयं लक्षणापत्तेः । अतः कथं ल्हादवतः संप्रज्ञातस्य ल्हादशून्यत्वं कथं वा विविक्तचिन्मात्रसंविद्युक्तस्य संप्रज्ञातस्य तच्छून्यत्वमिति दिक् । तस्मादवान्तरभेदेन पञ्चैव समापत्तयः, ग्राह्यग्रहणयोः स्थूलसूक्ष्मभेदेन सवितर्काद्याश्चतस्रः पञ्चमी च ग्रहीतृष्विति संप्रज्ञातयोगस्त्वानन्दानुगतमादायावान्तरभेदेन षोढैवेति । उक्तासु समापत्तिषु निर्विचारायां विशेषं कंचिदाह ॥

## निर्विचारवैशारद्ये ऽध्यात्मप्रसादः ॥ ४७ ॥

सामान्यतो वैशारद्यमादौ व्याचष्टे। अशुद्धीति। रजस्तमोवृद्धिकारणं पापादिरशुद्धिः सैवावरणलक्षणो मलस्तस्मादपेतस्येति हेतुगर्भविशेषणम् । प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धिरूपसत्त्वस्य कारणापायादेव रजस्तमोभ्यामनभिभूतो ऽतः स्वच्छः ध्येयगताशेषविशेषप्रतिबिम्बोद्ग्राही स्थितिप्रवाह एकाग्रताधारा चित्तस्य वैशारद्यमित्यर्थः । समग्रसूत्रार्थं व्याचष्टे । यदेति ।

आत्मनि बुद्धौ वर्त्तत इत्यध्यात्मं तादृशः, प्रसादशब्दार्थं विवृणोति । भूतार्थेति । यथार्थविषयकः क्रमाननुरोधी युगपत्सर्वार्थग्राही स्फुट प्रत्यक्षः स प्रज्ञाख्य आलोक इत्यर्थः । अत्रैव परमर्षिगाथामुदाहरति । तथा चेति । तरति शोकमात्मविदिति श्रुतेरशोच्यः । अहं दुःखी पापीत्यादिरूपैः स्वस्याशोच्यः सन् सर्वानेव जनान् शोचतो दुःखितान् पश्यति । स्वयं शोच्यो हि पुरुषः स्वापेक्षया कं चित् सुखिनमिव पश्यति मौढ्यात् । अशोच्यस्तु परमार्थतो दुःखसमुद्रमग्नं सर्वं जीवजातं दुःखितमेव पश्यति अमूढत्वादित्यर्थः । लोकानन्तरमितिशब्दः पादपूरणार्थः । तथा च निर्विचारवैशारद्ये जाते स्वयमेव प्रकृतिपुरुषविवेको वा परमेश्वरतत्त्वं वा साक्षात् क्रियते न तु तत्साक्षात्काराय पुनर्योगापेक्षेति निर्विचाराया उत्कर्षः । पूर्वसूत्रोक्तसबीजसमाधौ जायमानायाः समापत्त्याख्यायाः प्रज्ञाया अन्वर्थां तान्त्रिकीं संज्ञामपि दर्शयति ।

ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

तस्मिन्निति । तत्रेत्यस्य विवरणं तस्मिन्समाहितचित्तस्येति पूर्वोक्ते सबीजयोगइत्यर्थः । न चाव्यवहितसूत्रोक्तं वैशारद्यं प्रसादो वा कथं तत्रेत्यनेन परामृश्यतइति वाच्यम् । द्वितीयसूत्रतोऽत्र समाधिप्रज्ञासामान्यपरत्वस्य लप्स्यमानत्वात् । सुगममन्यत् । ननु संज्ञाकथनमात्रेण किं प्रयोजनमित्याशङ्क्याह । अन्वर्थेति । विपर्यासरूपज्ञानं यद्यपि सवितर्कयोगजप्रज्ञायां शब्दार्थज्ञानविकल्पैरस्ति तथापि ऋतंभरजातीयत्वस्यैवात्र विवक्षितत्वात् न तस्यामव्याप्तिः, साजात्यं च समाधिजप्रज्ञात्वेन । अथ वा तत्र समाहितचित्ते जायमाना या प्रज्ञा सैव ऋतम्भरोच्यतइति सूत्रार्थः । लौकिकज्ञानेऽविद्यालेशसम्पर्काभावादिति योगकाले प्रकृष्टा प्रज्ञा भवतीत्यत्र स्मृतिं प्रमाणयति । तथा चेति । ध्यानस्य चिन्तनस्य योऽभ्यासः पौनःपुन्यं तत्र यो रस आदरस्तेन, तथा च श्रवणमनननिदिध्यासनैस्त्रिभिर्हेतुभिः सबीजयोगकाले प्रज्ञां प्रकल्पयन् प्रकर्षेण विपर्यासराहित्येनोत्पादयन् तत्प्रज्ञातः परवैराग्यद्वारा वक्ष्यमाणमुत्तमयोगं निर्बीजं लभतइति

श्लोकार्थः । ननु आगमानुमानयोरपि प्रमाणत्वात्ताभ्यामेव तदर्थतत्त्वं बुद्ध्यतां किं योगेनेत्याशङ्कानिरासायोत्तरं सूत्रं प्रवर्त्तते तद्योजयति । सा पुनरिति ॥

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥

सा तु समाधिसामान्यजा प्रज्ञा श्रुतानुमानरूपप्रज्ञाभ्यां श्रवणमननाभ्यामन्यविषया अतिरिक्तविषया विशेषार्थत्वात् विशेषोऽर्थो विषयो यस्याः सा तथा तत्त्वादित्यर्थः । समाधिप्रज्ञायाः श्रवणमननाभ्यामतिरिक्तविषयत्वं विवृणोति । श्रुतमागमेति । नहि विशेषेणेति । पदार्थतावच्छेदकरूपेणैव पदार्थः शाब्दबोधे भासते ऽन्यथातिप्रसङ्गात् । पदार्थतावच्छेदकं तु घटत्वादिसामान्यमेव न तु तत्तद्विशेषास्तेषामानन्त्येन सर्वेषामेकदाऽनुपस्थितेस्तत्तद्रूपैः शक्तिग्रहासंभवात् विशेषाणामन्योन्यं व्यभिचाराच्च सामान्यतः श्रुतेप्यर्थे विशेषसंशयदर्शनाच्चेति । इत्युक्तमिति । अनुमानमित्यस्य विशेषणम् । अत्र हि व्यापकतावच्छेदकेन गतित्वादिसामान्येनैवानुमानं भवति न तु क्रियादिगतविशेषरूपैरिति । अनुमानेन वेति सामान्योपसंहार इत्युक्त इत्यनुषङ्गः । ननु श्रुतानुमानागोचरोऽपि विशेषो लौकिकप्रत्यक्षेणैव ग्राह्योऽस्तु किं योगजप्रत्यक्षेणेति तत्राह । न चास्येति । नन्वेवं तस्य विशेषस्यापि प्रामाणिकत्वात् अभाव एवास्त्वित्याशङ्कां प्रतिषेधति । न चास्य विशेषस्येति । नहि निर्विशेषं सामान्यमस्तीतिन्यायेन सर्वत्रैव वस्तुनि विशेषसिद्धेरिति भावः । अतः परिशेषात्समाधिप्रज्ञायाह्य एव स विशेष इत्युपसंहरति । इति समाधीति । स्थूलस्य विशेषः कदाचिल्लौकिकप्रत्यक्षगोचरोऽपि स्यादिति स्थूलं परित्यज्य भूतसूक्ष्मगत इत्युक्तम् । पुरुषगतो वेति । एतेन पुरुषेष्वपि विशेषादिधर्मः स्वीकृतः धर्मनिषेधस्तु विशेषगुणद्रव्यादिपरः । अथ वा स्वस्वोपाधिप्रतिबिम्बा एवातीतानागतवर्तमाना मुक्तामुक्तसाधारणाखिलपुरुषेष्वन्योन्यं विशेष इति बोध्यम् । स्यादेतत् । व्यवहितादिषु सन्निकर्षाद्यभावात्कथं समाधिप्रत्यक्षग्राह्यत्वमपि स्यात् । अथ योगजधर्मस्यापि सन्निकर्षत्वं कल्प्यमिति चेन्न । संयोगादिभिरननुगमात् प्रत्यक्षे विषयस्य कारणत्वेनातीतादिप्रत्यक्ष

स्यैवासंभवाच्चेति । अत्रोच्यते । अस्माकमन्तःकरणस्य विभुत्वेनातीतादीनां स्वरूपतः सत्त्वेन च सदा सर्वार्थसन्निकर्षात्, योगजधर्मेण च व्यवहिता-तीतादिज्ञानप्रतिबन्धकं तम एव निरस्यत इति । तदेतत्साङ्ख्यभाष्ये 'लीन-वस्तुलब्धातिशयसंबन्धाद्वा न दोष' इति सूत्रे ऽस्माभिः प्रपञ्चितम् । उपसंहारमुखेन सूत्रवाक्यार्थमाह । तस्मादृतेति । एतेन दशमस्त्वमसी-तिवत् शब्दादेव साक्षात्कार आत्मनो भवति निर्विशेषत्वेन चात्मनो न विशेषग्रहार्थमपि योगजप्रत्यक्षापेक्षेति नवीनवेदान्तिप्रलापो ऽपसिद्धान्त एव, स्वशास्त्रानुक्तेऽर्थे समानतन्त्रसिद्धान्तस्यैव सिद्धान्तत्वादिति । यथोक्त-प्रज्ञायाः संस्कारजनकत्वमुत्तरसूत्रोपयोगितया प्रतिपादयति । समाधीति । ननु तथापि प्रज्ञोत्पत्तिपर्यन्तं योगापेक्षास्तु प्रज्ञोत्पत्त्यनन्तरं तु पुनः संप्रज्ञा-तपरंपरायाः किं फलमित्याशङ्कायामाह ।

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

प्रतिबन्धः कार्यविरोधित्वम् । इदमेव बाधशब्देन भाष्यकारो वक्ष्यति । सर्वेषां च संस्काराणां चित्तनाशादेव नाश इत्यपि भाष्ये व्यक्ती-भविष्यति । सूत्रार्थं व्याचष्टे, बाधत इत्यन्तेन । आशेते इत्याशयः संस्का-रश्चासावाशयश्चेति विग्रहात् संस्काराशयमनुद्बुद्धसंस्कारमित्यर्थः । उद्बु-द्धसंस्कारस्य च बाधो न संभवति उद्बोधप्रतिबन्धस्यैव बाधशब्दार्थत्वादिति भावः । ननु वृत्तिनिरोधसंस्कारस्य व्युत्थानसंस्काराभिभावकत्वं वक्ष्यति तत्कथं समाधिप्रज्ञासंस्कारस्यापि व्युत्थानसंस्काराभिभावकत्वमिष्यतइति चेन्न । वृत्तित्वावच्छिन्नाभावस्यैव वक्ष्यमाणयुक्त्या संस्कारजनकत्वसिद्धेर्न तु संप्रज्ञातकालीनस्य यत्किंचिद्वृत्तिनिरोधस्यापि, स्मृतिहेतुतया सिद्धात्म-ज्ञासंस्कारादेव व्युत्थानसंस्काराभिभवस्य वक्ष्यमाणप्रयोजनस्योपपत्तेः । ननु एकयैव प्रज्ञाव्यक्त्या तत्सन्तानव्यक्त्या चोत्पादितेन संस्कारेण व्युत्थान-संस्कारबाधसंभवे किमर्थं पुनःपुनः संप्रज्ञातानुष्ठानं तत्राह । व्युत्थानसंस्का-राभिभवादित्यादिततश्च संस्कारादित्यन्तेन । अभिभवात् । तत्करणात् । शेषं स्पष्टम् । अयं भावः । नैकदा संप्रज्ञातो व्युत्थानं संस्कारबाधः । श्रुतिस्मृ-

तिसिद्धस्य पुनःपुनर्व्युत्थानस्यानुपपत्तेः । उपदेशाद्यनुपपत्तेश्च । किं तु संप्रज्ञातपरंपराजन्येन दृढतरसंस्कारेणैव तद्बाधः अदृढैश्च प्राथमिकैः संप्रज्ञातसंस्कारैस्तस्य बाधार्थमनुतापरंपरैव क्रियते तथा च संस्कारदार्ढ्यार्थं प्रज्ञासंस्कारचक्रमपेक्ष्यतइति । एतेन प्रज्ञायाः साक्षादेव व्युत्थानसंस्कारबाधकत्वशङ्काप्यपास्ता । एकप्रज्ञयैव संस्कारबाधे व्युत्थानासंभवात् । प्रज्ञासंस्कारे तु दृढत्वरूपवैजात्यसंभवेन तस्यैव व्युत्थानसंस्कारबाधकतावच्छेदकत्वकल्पनया व्युत्थानाद्युपपत्तिरिति । व्युत्थानसंस्कारेषु मध्ये वा विद्यासंस्कारस्यायं विशेषः यत्सकृत्प्रज्ञया जनितेनैव संस्कारेणाविद्यासंस्कारो बाध्यते न तत्र प्रज्ञासंस्कारचक्रापेक्षेति । एतच्च 'ते प्रतिप्रसवहेयाः सूक्ष्मा' इत्यागामिसूत्रद्वये प्रकटीभविष्यति । इदमत्रावधेयम् । अस्मिन्सूत्रे शेषसूत्रे चाखिलसंस्कारदाहस्य योगफलत्ववचनात् प्रारब्धकर्मणोऽप्यतिक्रमेणाशुतरमोक्षः केवलज्ञानासाध्यो योगयोरसाधारणं फलमिति । नहि भोगसंस्कारस्य निःशेषतो दाहे प्रारब्धकर्मापि फलायालं, दृष्टकारणाभावात् । योगाग्निदग्धकर्मचयोऽचिरादित्यादिवाक्ये सङ्कोचकप्रमाणाभावाच्च । ज्ञानाग्निः सर्वकर्माणीत्यादिष्वगत्या सङ्कोचः क्रियते तस्य तावदेव चिरमित्यादिज्ञानिविषयकश्रुतेः उपदेशाद्यन्यथानुपपत्तेश्च । साङ्ख्यवेदान्तसूत्रयोश्च ज्ञानिनामेव प्रारब्धभोगावश्यकतोक्ता । नन्वदृष्टभुक्तप्रारब्धकर्मणां नाशे तत्फलस्य कालप्रतिनियमानुपपत्तिरिति चेन्न । शास्त्रोक्तनाशकनाश्यकर्मस्वेव कालप्रतिनियमात् । अन्यथा कर्मविपाकोक्तप्रायश्चित्तस्य शान्तिकर्मादेश्च भुक्तपापनाशकत्वानुपपत्तिः शास्त्रोक्तनाशकनाश्यकर्मणां तु स्वावस्थितिपर्यन्तमेव फलदातृत्वमिति दिक् । नन्वेवं प्रज्ञासंस्कारातिशयस्वीकारे ततोऽपि पुनर्जन्म भविष्यति । न चासंप्रज्ञातयोगेन तस्य नाशो भवितेति वाच्यं । असंप्रज्ञाताभावेऽपि प्रारब्धसमाप्त्यनन्तरं केवलज्ञानतो मोक्षाभ्युपगमादित्याशङ्कते । कथमसाविति । साधिकारं स्वकार्यजननक्षमम् । परिहरति । न तइति । ते प्रज्ञासंस्काराश्चित्तं स्वकार्यक्षमं न कुर्वन्ति जन्मकारणस्याविद्यादिक्लेशस्य विनाशनादित्यर्थः । कर्मनाशनादित्यपि बोध्यम् । कर्त्तव्यसमापनादपि साधिकारं न कुर्वन्तीत्याह ।

चित्तं हीति । स्वकार्यादवसादयन्ति कर्त्तव्यशून्यङ्कुर्वन्ति तत्र हेतुः ख्यातीत्यादि । हि यस्माच्चित्तस्य व्यापारो विवेकख्यातिपर्यन्तः विवेकख्यातिनिष्पत्तौ सत्यां प्रवर्त्तकपुरुषार्थासम्भवात् सा च विवेकख्यातिरूपा प्रज्ञा तत्संस्कारातिशयेनानिशमुत्पद्य परवैराग्यजननद्वारेण समाप्यतइत्यर्थः । क्षीणवृत्तेरित्यादिसूत्रैः संप्रज्ञातस्य फलादिकमुक्तमिदानीमसंप्रज्ञातस्य फलादेः सूत्रं प्रवर्त्तिष्यते। तत्सूत्रं प्रज्ञासंस्कारातिशयस्य पुनर्जन्माहेतुत्वे हेत्वन्तरपरतया ऽवतारयति। किं चास्येति । अस्य प्रज्ञासंस्कारस्यान्यच्च फलं सर्ववृत्तितत्संस्कारयोर्निरोधो भवतीति न पुनर्जन्मसंभावनेत्यर्थः ।

## तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

पूर्वपूर्वासंप्रज्ञाते तावत्प्रज्ञैव निरुध्यते प्रज्ञासंस्कारस्य तु तानमात्रं भवति । एवं क्रमेण तु तस्यापि प्रज्ञाकृतसंस्कारस्याप्यसंप्रज्ञातपरंपरया निरोधेऽत्यन्ताभिभवे जायमाने चरमासंप्रज्ञातो निर्बीजयोगस्य परा काष्ठा भवत्यपुनर्व्युत्थानेत्यर्थः । सर्वनिरोधादितिसूत्रावयवेन निर्बीजत्वे हेतुरुक्तः । यतः प्रज्ञा तत्संस्कारश्च सर्वाण्यत्यन्तं विलपितोऽतो निर्बीजः । दुःखबीजैः संस्कारादिभिः शून्य इत्यर्थः । पूर्वपूर्वासंप्रज्ञातव्यक्तिषु च क्रमेण बीजतानवाङ्कुराणां निर्बीजत्वमसंप्रज्ञातलक्षणे पूर्वं भाष्यकृतोक्तमिति स्मर्त्तव्यं तथा च चरमासंप्रज्ञाते सर्वे प्रज्ञासंस्काराः क्षीयन्तइत्यतो न ते चित्तं साधिकारं कुर्वन्तीति भावः । एतेनासंप्रज्ञातपरंपरायाः प्रज्ञासंस्कारात्यन्तलयः फलं सूत्रेणोक्तं सूत्रस्यस्यापिशब्दस्यार्थं भाष्यकारो व्याचष्टे । स न केवलमिति । स सामान्यनिर्बीजयोगः न केवलं समाधिप्रज्ञाया विरोधी भावाभावरूपेण अपि तु क्रमेण प्रज्ञाकृतसंस्काराणामपि प्रतिबन्धी अत्यन्तमभिभावक इत्यर्थः । ननु यदि प्रज्ञाकृतसंस्काराणामप्यसंप्रज्ञातो बाधकस्तर्हि सकृदसंप्रज्ञातादेव सर्वसंस्कारबाधे व्युत्थानं कदापि कस्यापि न स्यादित्याशयेनाक्षिपति । कस्मादिति । परिहरति । निरोध इति । न निरोधः साक्षादेव प्रज्ञासंस्कारान् विलापयति किं तु निरोधपरंपराजन्यो दृढतरः संस्कार एव प्रज्ञासंस्कारा-

नत्यन्तं विलापयतीत्यर्थः । दृढतरत्वं च जातिविशेष इत्युक्तम्। ननु ज्ञानस्यैव संस्कारजनकत्वं दृष्टं निरोधस्तु न ज्ञानं संस्कारशेषचित्तावस्थाविशेषमात्रत्वादतस्तस्य संस्कारजनकत्वे किं प्रमाणमित्याशङ्क्याह । निरोधस्थितीति । निरोधस्थितावसंप्रज्ञातावस्थाने यो मुहूर्त्ताहोरात्रमासादिरूपः कालक्रमः क्रमेण कालवृद्धिस्तद्दर्शनेन निरोधावस्थचित्तजन्यः संस्कारोऽनुमेयः संस्कारवृद्धिव्यतिरेकेण तन्नियामकासंभवादित्यर्थः । संप्रज्ञातस्य तु कालवृद्धिः प्रज्ञासंस्कारतारतम्येणैवोपपद्यतइत्यतो न संप्रज्ञातस्य संस्कारहेतुतेति । ननु प्रज्ञासंस्कारश्चरमासंप्रज्ञातेनात्यन्तं बाध्यतां निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते तदनुच्छेदे च साधिकारत्वमेव चित्तस्येति मोक्षानुपपत्तिः । किं च प्रलीनानामपि संस्काराणां कदाचिद्योगीश्वरसंकल्पादिना दग्धबीजस्येव पुनरुद्बोधोऽपि सम्भाव्यतेत्याशङ्कामपाकरोति । व्युत्थाननिरोधेति । असंप्रज्ञातापेक्षया समाधिप्रज्ञापि व्युत्थानम् । अतो व्युत्थानं ज्ञानसामान्यं निरोधसमाधिश्चासंप्रज्ञातस्तदुभयप्रभवैः सह सहितैः कैवल्यभागीयैः कैवल्यहेतुकर्मसंस्कारैर्विशिष्टं चित्तं स्वकीयप्रकृतौ नित्यायां स्वयमेव प्रलीयते दग्धेन्धनानलवदात्यन्तिकलयं गच्छति । परिणामस्वाभाव्यात् तत्स्वामिपुरुषस्य भोगहेतुर्विसदृशपरिणाम एव हि पुनर्न भवति तद्धेतोः पुरुषार्थस्याभावादित्यर्थः । अथ वा कैवल्यभागीयैः कैवल्यपर्यन्तस्थायिभिर्व्युत्थानसंस्कारैः सहेति चित्तविशेषणम् । अनेन सूत्रेण शङ्कानिराकरणमुपपादयति । तस्मादिति । तस्मान्निरोधसंस्कारस्यापि क्षयात्ते निरोधसंस्कारा इत्यादिरर्थः । ननु भवतु योगद्वयाच्चित्तस्यात्यन्तिकलयस्तथापि पुरुषार्थः कः सिध्यतीत्याकाङ्क्षायामाह । यस्मादित्यादि । यस्माच्चित्तं निवर्ततेऽतस्तस्मिन्निवृत्ते सति पुरुषो मुक्त इत्युच्यते तत्र हेतुगर्भविशेषणानि स्वरूपेत्यादीनि । स्वरूपमात्रप्रतिष्ठः पररूपैः प्रतिबिम्बितदुःखादिभिर्मुक्तः शुद्धस्वत्वसम्बन्धेन पुण्यपापमुक्तः । भोगसाधनत्वस्यैव स्वत्वतया कूटस्थस्यापि संसारदशायां स्वत्वाभ्युपगमात् । एतादृशमुक्तेः साध्यत्वमुपपन्नं केवल उपाधिसंयोगाख्यबन्धमुक्त इत्यर्थः । एवंरूपो मोक्ष एव योगस्य मुख्यं फलमित्याशयः । पारमार्थिको दुःखकर्मादिसंबन्धो लेपाख्यसंयोगरूप-

संबन्धो वा लोके बन्ध इत्युच्यते तन्मुक्तिश्च बुद्धेरेव न कूटस्थस्यासङ्गस्य पुरुषस्येति प्रतिपादयितुं मुक्त इत्युच्यत इत्युक्तं शास्त्रेषु मुक्त इति व्यवहारमात्रं क्रियतइति तस्यार्थः । तदुक्तं साङ्ख्यसूत्रेण 'वाङ्मात्रं न तु तत्त्वं चित्तस्थिते'रिति । पुरुषे बन्धादिकं वाङ्मात्रं चित्तएव बन्धाद्यवस्थानादित्यर्थः। पुरुषार्थत्वं च पारमार्थिकमेव दुःखं भुञ्जीयामिति प्रार्थनादिति भावः । साङ्ख्यप्रवचनइति । साङ्ख्यशास्त्रस्यैव प्रकर्षेण वचनं साङ्ख्यप्रवचनं साङ्ख्ये ह्यभ्युपगमवादेनेश्वरं प्रतिषिध्यासंप्रज्ञातयोगनैरपेक्ष्येण च जीवतस्त्वज्ञानादेव मोक्ष उक्तोऽस्मिंस्तु शास्त्रे निरुपद्रवासन्दिग्धैच्छिकमुक्तिनियमाय परमेश्वरविद्या आशुमोक्षहेतुरसंप्रज्ञातयोगश्च प्रदर्शित इति भावः ।

इति श्रीपातञ्जलभाष्यवार्त्तिके श्रीविज्ञानभिक्षुनिर्मिते प्रथमः समाधिपादः ॥

अथ द्वितीयः पादः ॥

ननु प्रथमपादेनैव योगः सोपायः सफलश्चावान्तरभेदैः सह प्रोक्तः तत्किमपरमवशिष्यते यदर्थं द्वितीयपाद आरभ्यत इत्याकाङ्क्षायामाह । उद्दिष्ट इति । समाहितचित्तस्य योगारूढचित्तस्योत्तमाधिकारिणोऽभ्यासवैराग्यमात्रसाधनेनैव क्रियायोगादिसकलाङ्गानां नैरपेक्ष्येण पूर्वपादे योगः प्रदर्शितः तेषां बहिरङ्गत्वं वक्ष्यति 'त्रयमन्तरङ्गं पूर्वेभ्य' इतिसूत्रेण तदभावेऽपि भावादिति भाष्येण च । तथा चोक्तमाश्वमेधिके ।

अपेतव्रतकर्मा तु केवलं ब्रम्हणि स्थितः ।
ब्रम्हभूतश्चरन् लोके ब्रम्हचारीति कथ्यते ॥

इति । तथा गारुडेऽपि ।

आसनस्थानविधयो न योगस्य प्रसाधकाः ।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥

इति । ते चाभ्यासवैराग्ये न सर्वेषां द्रागित्येव भवतः, अतो व्युत्थितचित्तो बहिर्मुखोऽपि योगा*रुरुक्षुः क्रमात् केनोपायेन योगयुक्तः स्यादिति

* योगमारुरुक्षुरिति तु युक्तम् । रा० शा० ॥

तमुपायं वक्तुमेतत्सूत्रजातमारभ्यतइत्यर्थः । तदेवमधिकारभेदेन साधनभेदो यारूढादिष्वप्युक्तः ।

आरुरुक्षुयतीनां च कर्मज्ञाने उदाहृते ।
आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ ॥

इति ।

त्यागो बाह्यकर्मणाम् । गीतायामपि ।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥

इति । कारणं योगस्य ॥

## तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगाः ॥ १ ॥

योगोपायत्वाद्योगः, क्रिया चासौ योगश्चेति विग्रहः तपआदीनि त्रीणि क्रियायोग इत्यर्थः । ईश्वरप्रणिधानरूपो भक्तियोगो ऽप्यत्र क्रियायोगमध्यएव प्रवेशितः । अतो 'योगास्त्रयो मया प्रोक्ता भक्तिज्ञानक्रियात्मका' इत्यादिस्मृतिषु त्रय एव योगोपायत्वाद्योगा उक्ताः तत्र ज्ञानयोगो धारणाध्यानसमाधिरूपः पूर्वपादे प्रोक्तः विस्तरस्त्वस्याग्रे भविष्यतीति । यद्यपि यमाद्योऽपि क्रियायोगास्तथापि वक्ष्यमाणयमनियमादिषु मध्ये तपआदित्रयं प्रकृष्टतयादौ पृथङ् निर्दिष्टं केवलेनैतेनापि तीव्रतरेण योगो भवतीति सूचयितुमिति बोध्यम् । ननु स्वाध्यायेश्वरप्रणिधानं च तत्त्वज्ञानेश्वरानुग्रहाभ्यां योगोपकारकं स्यात् तपस्तु देहेन्द्रियशोषणात्मकं केन द्वारेण योगस्योपकारकं भवतु प्रत्युत चित्तक्षोभकत्वेन योगविरोध्येवेत्याशङ्क्य तपसो द्वारमाह । नातपस्विन इति । असिद्धौ हेतुमाह । अनादीति । अनादिक्लेशकर्मवासनया हेतुना चित्रा नानाविधा अशुद्धिः पापाख्या प्रत्युपस्थापितविषयजालतया योगविरोधिनी तपो विना न संभेदं तनुतामापद्यतइत्यर्थः । इतीति । इत्यतः साधनमध्ये तपसो ग्रहणमित्यर्थः । योगविरोधशङ्कामपाकरोति । तच्चेति । तच्च तपश्चित्तप्रसादाविरोधि मृदुत्वानेन योगिना कर्त्तव्यमिति परमर्षिभिर्मन्यतइत्यर्थः । पवित्राणां

पापक्षयहेतूनाम् । प्रथमपादोक्तप्रणिधानादतिरिक्तमत्र प्रणिधानमाह । सर्वक्रियामिति । लौकिकवैदिकासाधारण्येन सर्वकर्मणां परमेश्वरेन्तर्यामिणि अर्पणमित्यर्थः ।तदुक्तं गीतायाम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

इति । अर्पणं च

कामतोऽकामतो वापि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥

इत्यादिस्मृतिभिर्व्याख्यातमिति । त्वत्प्रयुक्तः करोम्यहमितिचिन्तनमेव संन्यास इत्यर्थः । अत्र प्रयोक्तृत्वमन्तर्यामिविधयैव न तु श्रुतिद्वारा अशुभकर्मसु श्रुत्यभावादिति । एतदपेक्षयापि प्रकृष्टं द्विविधं कर्मार्पणान्तरं कौर्मे प्रोक्तम् ।

ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥
नाहं कर्त्ता सर्वमेतत् ब्रह्मैव कुरुते तथा ।
एतत् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

इति । तत्फलेति । एतदपि कौर्मे प्रोक्तम् ।

यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे ।
कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ॥

इति । कर्मफलानामीश्वरो भोक्तेति चिन्तनं कर्मफलसंन्यासः । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरमित्यादिवाक्यात् । तदुक्तम् । 'करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत् तदि'ति । यज्ञादीनां ही*न्द्रादिभावापन्नस्यान्तर्यामिणो भोग एव मुख्यं फलं 'येप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेपि मामेव कौन्तेय यजन्त्यविधिपूर्वकं'-

* हिशब्दः पुस्तकान्तरे नास्ति ।

मित्यादिवाक्येभ्य इति । नन्वत्र वाक्ये विष्णवाख्यदेवताविशेषस्यैवेतरदेवतायजनेन यजनं प्रोक्तं न परमात्मन इति चेन्न । परं हि ब्रह्म कथितं योगयुक्तेन तन्मयेत्यनुगीतावाक्यतः श्रीकृष्णस्य भगवद्गीतायां परमात्मोपदेशस्यैव लाभादिति । यद्यपीश्वरस्य भोगो नित्यः तथापि सिसृक्षाद्युत्पत्तिवत् तदुत्पत्तिर्गौणी । यज्ञादिसहकारेणैव फलदातृतयेश्वरप्रीतेरभिव्यक्तेः । नन्वीश्वरप्रणिधानमत्र पूर्वपादोक्तभावनारूपमेव कथं न भवति तत्राह । स हि क्रियायोग इति । स हि स एव फलसंन्यासः कर्मार्पणं च क्रियायोगो भवति कर्मशेषत्वात्तज्जपस्तदर्थभावनमिति पूर्वोक्तं च भावनारूपं प्रणिधानं ज्ञानमेव कर्मतच्छेषत्वयोरभावादित्यर्थः । उत्तरसूत्रेण सहान्वये तुहिशब्दवैयर्थ्यमिति बोध्यम् । तेषां योगद्वारमाह ॥

## समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

उभयार्थत्वे हेतुमाह । स हीति । आ सम्यक् निष्कामादिरूपेण सेव्यमानः स हि स एव कर्मयोगः । कर्मातिरिक्तविषयेभ्यो निरुद्धवृत्तिकं निष्पापं च चित्तं करोति ततः क्रमेण सत्त्वोद्रेकादेकाग्रमन्यत्रापि करोति । अविद्यादिकं च प्रकर्षेणानायासेन तनूकरोति सत्त्वशुद्ध्यादिद्वारेत्यर्थः । उत्तमाधिकारिणश्च समाधियोग्यता क्लेशतनुता च सिद्धैवेत्यतः पूर्वपादे तदुभयं योगसाधनतया नोक्तम् । ननु अविद्यादीनां क्लेशानां नाशेनैव संसारोच्छेदः प्रतनूकरणेन तु किं प्रयोजनमित्याकाङ्क्षायामाह । प्रतनूकृतानिति । प्रतनूकृतांश्च शुष्केन्धनतुल्यान् कृतान् क्लेशान् क्रियायोगः स्वयमुद्दीपितेन प्रसंख्यानाग्निना विवेकख्यातिवह्निना दग्धबीजवदप्रसवधर्मिणोऽप्रसवस्वभावान् संस्काराजनकान् करिष्यति जीवन्मुक्तिदशायामिति शेषः । प्रसंख्यानाग्निज्वालने तनूकरणस्य द्वारं वदन् पूर्वोक्तार्थमुपसंहरति । तेषामिति । अपरामृष्टा अनभिभूता, तथा चानभिभव एव तनूकरणस्य द्वारमिति । सूक्ष्मेति । सूक्ष्मविषयत्वात् सूक्ष्मा साक्षात्काररूपिणी प्रज्ञा क्रमेण समाप्तकर्त्तव्या सती चरमासंप्रज्ञाते प्रतिप्रसवाय प्रलयाय कल्पिष्यते विदेहकैवल्यदशायामिति शेषः । तदेवं क्रियायोगस्य मोक्षज्ञानादिव्यापा-

रकथनात्कर्मयोगो ज्ञानादिसाधनतया ज्ञानाद्यङ्गमेव न साक्षान्मोक्षहेतु-रिति सिद्धान्त इति । उत्तरसूत्रावताराय पृच्छति । अथेति ॥

अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥

पञ्च विपर्यया इति पूरयित्वा संक्षेपतः सूत्रार्थमाह । क्लेशा इतीति । इतिशब्दोऽविद्यादिपरामर्शी तथा चाविद्यास्मितारागद्वेषाभिनिवेशा इति पञ्चविपर्ययाः क्लेशा इत्यर्थ इति योजना । अत्र कियन्त इतिप्रश्नस्योत्तरं पञ्चेत्यनेन । के तइत्यस्य चोत्तरं विपर्यया इत्यनेनाह । पञ्च विपर्यया इति । अत्र पञ्चेत्यर्थादेव लब्धं विपर्यया इति च पूरितं विशेषलक्षणस्य च सामान्यलक्षणपूर्वकत्वौचित्यात् विपर्ययशब्दश्चात्र संसारहेतुविपर्ययार्थकः अतो न शुक्तिरजतविपर्यये क्लेशलक्षणातिव्याप्तिः रागादीनां च विपर्ययकार्यतया विपर्ययत्वं चेष्टम् । प्रकृतस्य संसारहेतुविपर्ययस्य लक्षणमदृष्टसामान्यहेतुमनोविशेषगुणत्वमिति । ननु क्लेशशब्दो दुःखवाची किमित्यविद्यादिषु परिभाषितः किमर्थं वा तेषामुच्छेदोपेक्षित इत्याकाङ्क्षायामाह । ते स्यन्दमाना इति । ते क्लेशाः स्यन्दमाना लब्धवृत्तिका दृष्टादृष्टद्वारा गुणानां सत्त्वादीनाम् अधिकारं कार्यारम्भणसामर्थ्यं द्रढयन्ति बलवत् कुर्वन्ति तथा गुणानां परिणामं वैषम्यरूपमवस्थापयन्ति निर्वर्त्तयन्ति ततश्च महदादिरूपकार्यकारणप्रवाहमुन्नमयन्ति प्रवर्त्तयन्ति । यदर्थमेतत्सर्वं कुर्वन्ति तद्दर्शयति । परस्परेति । कर्मविपाकं जात्यायुर्भोगं चाभिनिर्हरन्ति निष्पादयन्ति । किं स्वतन्त्रा एव, नेत्याह । परस्परानुग्रहतन्त्रा भूत्वेति । अविद्यातो रागो रागाच्चाविद्येत्येवमादिरूपान्योन्यानुग्रहाधीना भूत्वेत्यर्थः । अन्योन्यसाहित्येनैव हि क्लेशानां स्थैर्यं भवति येन स्थैर्येण विपाकपरंपरा निर्वहतीति भावः । तथा च क्लेशाख्यदुःखदत्वादविद्यादीनां क्लेशपरिभाषा तान्त्रिकी तथा दुःखनिदानतया ऽविद्यादयः समुच्छेतव्या इति भावः ॥ (शेषमग्रे)

काशीस्थराजकीयप्रधानपाठशालायां { साङ्ख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री । आङ्गलभागे संस्कृताध्यापकः केशवशास्त्री च ।

---

* बाध्यमिति पाठान्तरम् ।

# सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 362. Vol. V.)

मू० ॥ एवं सतीह यदि वेदशिरो न मानं
श्रेयस्करे विधिगिरोऽपि न मानता स्यात् ॥
श्रेयस्करे विधिगिरो यदि मानता स्या-
द्वस्तुस्वरूपकथनेऽपि समन्वयस्य ॥ २६६ ॥

टी० ॥ एवं प्रामाण्यप्रमेयत्वप्रयोजकरूपे सत्यपि यदि वेदान्ता ब्रह्मणि न प्रमाणं ब्रह्म च न प्रमेयं स्यात्तर्हि चोदनाधर्मयोरपि न तदुभयं स्यादिति ब्रह्मणि वेदान्तप्रामाण्यं बाधकमुखेनोपसंहरति । एवं सतीति । प्रामाण्यप्रयोजकरूपे सतीत्यर्थः । इह ब्रह्मणि न मानता स्यात्ततः प्रयोजकरूपान्तराभावादित्यर्थः । यदि मानता स्यादिति । तेनैव रूपेणेति शेषः समन्वयस्य मानता स्यादित्यनुषङ्गः ॥ २९९ ॥

मू० ॥ वस्तुस्वरूपकथने ननु नास्ति पुंसः
किं चित्फलं विधिवचःसु पुनः प्रवृत्तिः ॥
संभाव्यते फलमतः किल वस्तुनिष्ठं
वाक्यं विधिस्तुतिपरं त्विति जैमिनीयाः ॥ ३०० ॥

टी० ॥ एवं सिद्धपरत्वेऽपि वेदान्तानां न सापेक्षत्वप्रसङ्ग इत्युक्तम् । नन्वेवमपि सिद्धवस्तुज्ञानेन प्रयोजनासंभवादध्ययनविध्युपात्तवेदान्तानां कथं तत्र पर्यवसानं स्यादिति शङ्कते । वस्तुस्वरूपकथन इति । नन्विति । चोद्ये पुंसः अध्येतुः । कथं तर्हि फलपर्यवसानमित्याशङ्क्य विध्येकवाक्यत्वेन तत्सिध्यतीत्याशयेन विधीनां स्वतः फलं संभावयति । विधिवचःस्विति । प्रवृत्तिरर्थभावना फलं शब्दभावनाभाव्यं ततश्च तस्याः पुरुषार्थभाव्यनिष्ठत्वाद्विधीनां फलवत्त्वमित्यर्थः । कथं तर्हि वेदान्तानां तदेकवाक्यतासिद्धे ब्रह्मणि विध्यसंभवात्तस्य भावार्थैकगोचरत्वनियमादित्याशङ्क्य कर्म-

विधिनार्थवादानामिव कर्त्रादिस्तावकतया तदेकवाक्यतामाह । अतः किलेति । यतो वेदान्ताः स्वतोऽफलाः विधिश्च फलवानत इत्यर्थः । तुरवधारणे । परमेवेत्यर्थः । ततश्च सिद्धे ब्रह्मणि प्रमाणाभावाच्च तत्सिध्यतीति भावः ॥ ३०० ॥

मू० ॥ स्यादेतदेवमनवद्यपुमर्थसिद्धि-
वेदान्तवेद्यविषयावगतौ न चेत्स्यात् ॥
स्वाराज्यमत्र कवलीकृतभोगभूमि
संपूर्णमस्य विदुषो भवतीति दृष्टम् ॥ ३०१ ॥

टी० ॥ मैवं वेदान्तानां स्वातन्त्र्येणैव निरस्तनिखिलदुःखनिरतिशयानन्दब्रह्मावाप्तिफलसत्त्वादिति परिहरति । स्यादेतदिति । वेदान्तवेद्यविषयावगतौ सत्यामनवद्यपुमर्थसिद्धिः साक्षान्न स्याच्चेदेवं त्वदुक्तविधयैतत्कर्मशेषत्वं स्यान्न चैतदस्तीत्यर्थः । ननु सिद्धज्ञानात्प्रवृत्त्याद्यसंभवात्फलमात्रं न संभवति कुतोऽनवद्यपुमर्थलाभस्तत्राह । स्वाराज्यमिति । स्वस्वरूपसौख्यमित्यर्थः । अत्र सिद्धब्रह्मसाक्षात्कारे सति । तस्य निरतिशयत्वमाह । कवलीकृतेति । ब्रह्मादीनां या भोगभूमयो भोग इति यावत् । ताः कवलीकृताः स्वान्तर्गमिता येन स्वाराज्येन तत्तथा । अत एव संपूर्णमनवच्छिन्नं दृष्टम् । स एको ब्रह्मण आनन्द इत्यादिश्रुताविति शेषः । ब्रह्मविद्भिरिति वा । एवं च वेदान्तानां फलप्रतिलम्भार्थं न प्रवृत्त्यापेक्षेति न विध्येकवाक्यत्वं न वाऽद्वैतब्रह्मणो विमानत्वमितिभावः ॥ ३०१ ॥

मू० ॥ यस्यापि विप्रुषि कृतार्थतया निषण्णाः
शक्रादयो जलचरा इव सागरस्य ॥
प्रत्यक्त्वभावकमपास्तसमस्तदुःखं
तद्ब्रह्मणं सुखमवाप्नुवतः किमन्यत् ॥ ३०२ ॥

टी० ॥ नन्वाज्यावेक्षणादिवदात्मज्ञानमपि ज्ञानत्वात्पराङ्गं वाच्यं तत्कुतस्तावन्मात्रात्पुमर्थलाभस्तत्राह । यस्याऽपीति । यस्य ब्रह्मसुखस्य

विप्रुषि अतिक्षुद्रांऽशेऽपि शक्रादयस्त्रिलोकीश्वरप्रभृतयः कृतार्थतया निषण्णाः स्वरूपानन्दैकलेशभूतं त्रिलोकीशासनादिसंभवं सुखं प्राप्य वयं कृतार्था इति मन्यमाना नान्यदपेक्षन्त इत्यर्थः । तत्प्रत्यक्त्वभावकत्वादि-विशिष्टम् । वैष्णवं विष्णोः परमं पदं सुखमवाप्तवतः विदुषः किमन्य-त्कर्तव्यं स्यात् । आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छ-न्कस्य कामाय शरीरमनुसंज्वरेदिति श्रुतेः । आज्यावेक्षणं तु क्रतुप्रकरणे विहितमिति पराङ्गं नैवमात्मज्ञानं तत्प्रकरणे विहितमिति स्वतन्त्रमेतच्च भट्टपादानामपि संमतम् । सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारितमिति तदुक्तेरिति भावः । तेषां सुखै-कलेशप्राप्तिमात्रेण कार्तार्थ्ये दृष्टान्तमाह । जलचरा इति । सागरस्य विप्रुषि कृतार्थतया निषण्णा जलचरा इवेत्यर्थः ॥ ३०२ ॥

मू० ॥ अज्ञानमात्मविषयं भवहेतुभूतं
प्रच्छादकं च परमात्मसुखस्य तूर्णम् ॥
त्रय्यन्तवाक्यजनितात्ममतिर्विपाक-
मासाद्य हन्ति यदि तत्र किमर्थनीयम् ॥ ३०३ ॥

टी० ॥ नन्वात्मेत्थं सुखरूपश्चेत्किमित्यस्माभिस्तथा नानुभूयत इत्याशङ्क्याज्ञानेनावृतत्वात् अस्माभिर्नानुभूयते । विदुषस्तु विद्योत्पत्तिमा-त्रेणाऽज्ञाननिवृत्तेः पूर्णसुखानुभव उपपद्यत इत्याशयेनाह । अज्ञानमिति । तत्र मानमाह आत्मेति । आत्मविषयं साक्षिसिद्धं तस्यानर्थहेतुत्वमाह । भवहेतुभूतमिति । भवः संसारस्तद्धेतुमित्यर्थः । पुरुषाऽर्थप्रतिबन्धकत्वमाह । प्रच्छादकं चेति । परमात्मसुखस्य प्रच्छादकं चेति संबन्धः । त्रय्यन्तो वेदान्तः । तूर्णं झटिति हन्तीति संबन्धः । आपातज्ञानं व्यवच्छेत्तुमाह । विपाकमिति । श्रवणादिनिमित्तां स्वविषयप्रतिष्ठामित्यर्थः । तथा च ज्ञानमात्रेण कृतकृत्यतेति भावः ॥ ३०३ ॥ :: ॥

मू० ॥ करमुष्टिनिविष्टमुत्तमं
कनकं प्रस्मरणादलब्धवत् ॥
प्रतिभाति तदाप्तवाक्यतः
प्रतिपत्त्या लभते यथा जनः ॥ ३०४ ॥

टी० ॥ ननु सर्वत्र साध्यस्यैव पुरुषार्थत्वं दृष्टं न तु प्राक्सिद्धस्य ब्रह्मसुखं च नित्यसिद्धमिति कथं तस्य प्रेक्षावदभिलाषास्पदत्वमित्याशङ्क्य लोके प्राक्सिद्धस्याप्यज्ञातस्य प्रेक्षाविषयत्वं दृश्यते । ज्ञानेन तदज्ञाननिवृत्तौ चेष्टं प्राप्तमित्यनुभवोऽपि एवं प्राप्तेऽप्यज्ञाते ब्रह्मसुखे प्रेक्षावतां प्रेक्षा तन्निवृत्तौ कार्तार्थ्यं चोपपद्यत इति श्लोकद्वयेनाह । करमुष्टिनिविष्टमित्यादिना । मुष्टौ कृतमित्यर्थः । प्रस्मरणात् आप्तवाक्यतः । मुष्टिं विमुच्य पश्येत्याप्तवचनात् प्रतिपत्त्या तल्लभत इति संबन्धः ॥ ३०४ ॥

मू० ॥ परमात्मपदं पराकृत-
द्वितयं प्राप्तमपि स्वभावतः ॥
अनवाप्तवदेव लिप्सते
लभते चैवमयं प्रमाणतः ॥ ३०५ ॥

टी० ॥ परमात्मपदमित्यादि दार्ष्टान्तिकं । एवमित्यादौ योजनीयं स्वभावतः प्राप्तमपीति संबन्धः । अनवाप्तवत् अप्राप्तहिरण्यवस्त्रादिवत् । लिप्सते आप्तुमिच्छति । प्रमाणतः ब्रह्मसाक्षात्कारात् । न हि सुखस्य कृतिसाध्यत्वमपि पुरुषार्थत्वप्रयोजकं गौरवात्तस्य दुःखादिसाधारण्यत्वाच्च किं तु स्वस्य प्रकाशमानसुखत्वं तच्च नित्यसिद्धात्मसुखेऽप्यस्ति । न च ज्ञानवैयर्थ्यं तदावरणनिवृत्तये तदपेक्षणादिति भावः ॥ ३०५ ॥

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 422. VOL. V.)

४६८ अथाहवनीयसमीपे एकमधिमन्थनशकलं लौकिकं प्रागायतं निदधात्यग्नेर्जनित्रमसीति मन्त्रेण । वृषणसंज्ञकौ द्वौ शकलौ लौकिकौ अधिमन्थनस्य पार्श्वयोः प्रागायतौ हस्ताभ्यां युगपन्निदधाति वृषणौ स्थ इति मन्त्रेण । दक्षिणेनोत्तरारणिं सव्येनाधरारणिमादत्ते उर्वश्यस्यायुरसीत्यादिमन्त्रेण । घृतेनाक्ते इत्यादिमन्त्रेण अरणी अपूर्वाज्यस्थाल्यां समनक्ति । अधिमन्थनशकले अरणी निधाय गायत्रं छन्दो ऽनुप्रजायस्वेत्यादिमन्त्रं वाचयति । मन्थनं कुर्वन् होतारं प्रेष्यति अग्नये मथ्यमानायानुब्रूहीति । उत्पन्ने ऽग्नौ जातायानुब्रूहीति प्रेष्यति । जातमग्निमाहवनीये प्रहरन् प्रेष्यति । प्रह्रियमाणायानुब्रूहीति । यजमानेनान्वारब्धः भवतं न इत्यादृचा प्रहरति । अग्नावग्निश्चरति प्रविष्ट इत्यादृचा अपूर्वाज्यं स्रुवेण जुहोति । ततः सामिधेन्यः सप्तदश । अथेध्मात्समिधमाददान इत्यादि प्रकृतिवत् चतुरः प्रयाजानिष्ट्वा पञ्चमादीन्मध्ये जुहोति । अष्टमे प्रयाजे सर्वमौपभृतमाज्यं जुह्वामानयति । यजमानः पञ्चमप्रयाजानुमन्त्रणेन पञ्चमादीन् प्रयाजाननुमन्त्रयते । उदङ्ङुत्याक्रम्य सर्वाणि हवींष्यभिघारयति नोपभृदाज्यं पृषदाज्यग्रहणयैव अनुयाजानां प्रचारात् । अभिघारणस्य तदर्थत्वात् । आज्यभागानन्तरं आग्नेयपुरोडाशैकदेशं प्राकृताग्नेयवदवदाय जुहोति सौम्यचर्वा

दीनां तु अपरार्धादवदाय पूर्वार्धादवदानम् । आग्निवैककपालयोरुपस्थानाभिमर्शने न भवतः । यजमानस्य सोम्यानुमन्त्रणं सोमस्याहं देवयज्यया प्रप्रजया च पशुभिश्च जनिषीयेति । सवितुस्तु देवयज्ययेत्यस्यानन्तरं स्वस्तिमान् पशुमान् भूयासमिति । तथा सरस्वत्याः वाचमन्नाद्यं पुषेयं इति । तथा पूष्णः पुष्टिमान् । पशुमान् भूयासमिति । मरुतां तथैव प्राणैर्ऋध्यासमिति । विश्वेषां देवानां तु प्राणैः सायुज्यं गमेयमिति । तथा द्यावापृथिव्योयस्तु उभयोर्लोकयोर्ऋध्यासमिति । भूमानं प्रतिष्ठां गमेयमिति वा । प्रधानहोमानन्तरं मधुश्च स्वाहेत्यादिभिश्चतुर्भिर्मासनामभिराज्यस्थाल्याज्येन स्रुवेणैककपालस्याभितो जुहोति । स्विष्टकृदर्थे उपस्तीर्य वैश्वदेवान्तानां हविषामुत्तरार्धात्सकृत्सकृदवदाय एककपालसंबन्ध्याशयाज्यात्सकृदवदाय द्विरभिघार्य चर्वामिक्षामेक्षणान्यादाय अत्याक्रम्य हुत्वा मेक्षणान्यनुप्रहृत्य संस्रावेणाभिजुहोति । अन्वाहार्यमासाद्य प्रथमजं वत्सं दक्षिणां ददाति । प्रतिग्रहमन्त्रे ब्रह्मणओदनं रुद्राय गां ताभ्यामिति विशेषः हविरुच्छिष्टोद्वासनानन्तरं गार्हपत्यस्याग्रे वेद्यां दर्भेषु आज्येनानालिप्तं चमसं अग्निहोत्रहवणीं स्फ्यं परिभोजनीयदर्भांश्च द्वन्द्वमासाद्य मन्त्रेण पवित्रे कृत्वा यजमान वाचं यच्छेति यजमानं संप्रेष्य वेषाय त्वेति मन्त्रेणाग्निहोत्रहवणीमादायप्रत्युष्टमित्यादिमन्त्रेण गार्हपत्ये प्रतितप्य मन्त्रेण प्रोक्षणीः संस्कृत्य शुन्धध्वमित्यादिमन्त्रेण चमसादि प्रोक्ष्य पवित्रे प्रस्तरे तूष्णीं विसृज्य मन्त्रेण देवस्य त्वेत्यादिना स्फ्यमादाय वेदितृतीयदेशे स्तब्धं कृत्वा संप्रेष्यति प्रोक्षणीरासादय चमसं संमृड्ढीति । ततः मन्त्रेण स्फ्योद्वासनादि । आग्नीध्रः चमसं

परिभोजनीयदर्भाश्चादाय युगपत् गार्हपत्ये निष्टपति प्राकृतमु-
च्छिष्टपनमन्त्रेण । वाचं प्राणं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ
संमार्ज्मि इति मन्त्रेण जुह्वादिवत् । दिवः शिल्पमित्यादृचा
संमार्गदर्भान् गार्हपत्ये ऽनुप्रहरति । अध्वर्युः वाजिनं गार्ह-
पत्ये ऽधिश्रित्य अभिघार्य उदगुद्वास्य पुनरभिघार्य यस्त आ-
त्मेत्यादृचा तृतीयाभिघारणेनाक्तं कृत्वा यजमानेन सह व्या-
हृतिमन्त्रं पठन् वेद्यामासादयति । यन्मे अग्ने इत्यादृचा यज-
मानो ऽनुमन्त्रयते । अथाध्वर्युः संप्रैषमाह ब्रह्मन् प्रस्थास्याम
इत्यादि । इध्मसन्नहनप्रहरणान्तं प्रकृतिवत् । पृषदाज्यं जुह्वा-
मानीय अनुयाजार्थमत्याक्रामति । प्रथमानुयाजयाज्यापठनार्थं हो-
तारं देवान्यजेति संप्रेष्य द्वितीयतृतीययोः प्रकृतिप्राप्तं यजेति न
संप्रेष्यति । चतुर्थादिषु तु यजेति संप्रेष्यति । प्रथमं विप्रस-
मिधः पूर्वभागे हुत्वा द्वितीयादीननुमन्त्रयते । अध्वर्युः अनुवष-
ट्कृते ऽवशिष्टं वाजिनं जुहोति । यजमानः अग्नय इदं न
मम अग्नेरहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयं इत्य-
नुमन्त्रयते । अथाध्वर्युरुदङ्ङुत्याक्रम्य चमसं वाजिनशेषस-
हितं होतुर्हस्ते ददाति । यजमानो ऽध्वर्युराग्नीध्रो ब्रह्मा
च चमसमन्वारभ्य उपहवं कुर्युः । तत्र प्रथमं होता अध्वर्य-
उपह्वयस्व, ब्रह्मन्नुपह्वयस्व, अग्नीदुपह्वयस्व, यजमानोपह्वयस्व
इति उपह्वयते । यं यं संबोध्य उपह्वयते तस्य तस्य उपहूत
इति प्रतिवचनम् । ततो ऽध्वर्युः ब्रह्महोत्राग्नीध्रयजमानान्
क्रमेण होतृवदुपह्वयते, ततो ब्रह्मा अध्वर्युहोत्राग्नीध्रयजमा-
नान् । तत आग्नीध्रो ऽध्वर्युब्रह्महोतृयजमानांस्ततो यजमानो-
ऽध्वर्युब्रह्महोत्राग्नीध्रान् । ततो होत्रध्वर्युब्रह्माग्नीध्राः क्रमेण

नासिकयावघ्राय आसते न प्रत्यक्षं भक्षयन्ति । यजमानस्तु यन्मे रेत इत्यादिमन्त्रेण प्रत्यक्षं भक्षयति । पात्रं प्रक्षाल्य निदध्युः । एतत्कर्म वाजिनयाग इत्युच्यते ॥

४६६ ततो ऽध्वर्युर्होत्रे वेदं प्रदायेत्यादिप्राङेत्य ध्रुवामाप्याय्यप्रकृतिवत्प्रायश्चित्तानि हुत्वा वेद्यास्तृतबर्हिभ्यः प्रत्येकं किं चिद् गृहीत्वा ध्रुवां समज्य प्रहृत्य दक्षिणेन पदा वेदिमाक्रम्य तिष्ठन् ध्रुवाज्यात्स्रुवेण गृहीत्वा प्रथमं समिष्टयजुर्जुहोति यज्ञ यज्ञं गच्छेति मन्त्रेण । पुनरादाय द्वितीयं जुहोति एष ते यज्ञो यज्ञपतइत्यादिमन्त्रेण । स्रुवं निधाय ध्रुवामादाय सर्वं जुहोति । देवा गातुविद इत्यादिप्राकृतमन्त्रेण । यज्ञविमोकान्ते यजमान उत्करे उपवेषस्य स्थूलप्रदेशमुपगूहति यं देवामनुष्येष्विति द्वाभ्यामृगभ्याम् । पौर्णमासतन्त्रं ब्राह्मणतर्पणान्तं प्रकृतिवत् । अथाध्वर्युः प्रत्यङ्मुखः स्वायतने प्राङ्मुखस्योपविष्टस्य यजमानस्य शिरसि केशान् प्रागादि दिक्चतुष्टये मध्ये चेति त्र्येण्या शलल्या पञ्चधा विभजति ऋतमेव परमेष्ठि इत्यादिबहुभिर्वाक्यमन्त्रैः । प्रतिविभागं तेषां वाक्यानामावृत्तिः । विभागक्रमेण लोहितायसक्षुरेण तैरेव मन्त्रैर्वपनम् । प्रतिवपनं मन्त्रावृत्तिः । यजमानः स्नात्वा स्वायतने उपविशति । ततः संवत्सरीणाऽस्वस्तिमाशासे इति पठति । इदमेतावत्सर्वं कर्म वैश्वदेवपर्वेत्युच्यते ॥

४७० अथ वरुणप्रघासनामकं द्वितीयं पर्व । तत्रैते संभाराः । त्रिश्वेतशलली । लोहितक्षुरः । द्वात्रिंशत्कपालानि । आमिक्षास्थाल्यौ । तिस्रश्चरुस्थाल्यः । पञ्च मेक्षणानि । द्विशताधिकानि शमीपर्णानि । करीरसक्तवः । ऐषीकं शूर्पं कुशमयं वा ।

गार्हपत्ये ईषद्भ्रष्टानां यवानां सूक्ष्मवितुषीकृतानां तप्ताभिरद्भिर्घृतेन च संयुक्तानां यजमानस्य पुत्रपौत्रप्रत्तदुहितृभार्यासमसंख्याकानि एकातिरिक्तानि दीपकाकाराणि करम्भपात्राणि । एशृङ्गो मेषः अशृङ्गा मेषी । द्वावपि शुक्लोर्णाप्रच्छन्नौ । यवतुषं च । दार्शपौर्णमासिकी वेदिः । पाशुबन्धिकी च । द्विगुणितानि यज्ञपात्राणि । द्विगुणिते इध्माबर्हिषी । प्रस्तरं प्रसूमयं केचिदिच्छन्ति । एते वरुणप्रघाससंभारा इत्युच्यन्ते ॥

४७१ एतान् संभारान् संभृत्य यजमानोऽरण्योरग्नीन् समारोप्य उदवसाय मथित्वा विहृत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये मनस्वत्या जुहोति । वरुणप्रघासहविर्भिर्यक्ष्यइति संकल्पः । अग्नीषोमावाज्यभागौ । आग्नेयोऽष्टाकपालः पुरोडाशः । सौम्यश्चरुः । सावित्रो द्वादशकपालः पुरोडाशः । सारस्वतश्चरुः पौष्णश्चरुः । ऐन्द्राग्न एकादशकपालः पुरोडाशः । मारुत्यामिक्षा । वारुण्यामिक्षा । काय एककपालः पुरोडाशः । देवा आज्यपा इत्यादि वैश्वदेववत् । सविता क इत्युपांशु । अन्या उच्चैः । अध्वर्युः इडादेवहूरित्यादिना अग्नीन् विहृत्यान्वादधाति तथैव प्रतिप्रस्थाता चादधाति । व्रतग्रहणान्ते प्रतिप्रस्थाता शाखाहरणादि करोति । बर्हिःसंभरणे अध्वर्युः प्रथमं प्रस्तरपूर्वं पञ्चमुष्टीन् संभरति । ततः प्रतिप्रस्थाता प्रस्तरपूर्वं मुष्टिचयं अत्र वरुणप्रघासाख्ये पर्वणि वारुण्यां वेद्यां व्यापारकर्ता अध्वर्युसदृशः पंचमो ऋत्विक् प्रतिप्रस्थातेत्युच्यते ॥

४७२ संभरणक्रमेण सादयतः । परिभोजनीयान् कृत्वा इध्मसंनहनायापि द्वयोर्वैश्वदेववत् । अध्वर्युः आहवनीयस्य पुरस्तात्प-

दद्वयं संचरमवशेष्य शङ्कुं निहन्ति । तत्पुरस्ताद् द्वादशपदे द्वितीयं शङ्कुं निहन्ति । अष्टादशपदप्रमाणां रज्जुमयतः पाशां कृत्वा त्रयोदशपदे चतुर्दशपदे च न्यञ्छनं कृत्वा त्रयोदशपदप्रमाणां यथा पुरस्ताद्भवति तथा शङ्कोः पाशे। प्रतिमुच्य-त्रयोदशपदन्यञ्छनेन दक्षिणत आकृष्य पदे शङ्कुं निहन्ति। एवमुत्तरतो ऽप्याकृष्य शङ्कुं निहन्ति ते श्रोणी । रज्जुं विपर्यस्य दक्षिणतः पूर्ववदाकृष्य चतुर्दशपदे शङ्कुं निहन्ति । एवमुत्तरतो ऽप्याकृष्य शङ्कुं निहन्ति तावंसौ । द्वादशपदशङ्कोः प्रत्यक् पदार्धमवशेष्य अनुपृष्ठ्यशङ्कुं निहन्ति । ततः पश्चादनुपृष्ठ्ये षट्त्रिंशदङ्गुले शङ्कुं निहन्ति । तत्राहवनीयवच्छम्याजानुप्रदेशानामन्यतममात्रोच्छ्रायां समचतुरस्रामुत्तरवेदिं करोति । इयं पाशुबन्धिकी वेदिरित्युच्यते ॥

४७३ तस्यामध्ये चतुरङ्गुलोच्छ्रयामभितः प्रादेशमात्रीं समचतुरस्रामुत्तरनाभिं करोति । प्रादेशोच्छ्रायोत्तरवेदिपक्षे गोपदप्रमाणोत्तरनाभिः । इयमुत्तरवेदिनाभिरित्युच्यते ॥

४७४ वेद्युत्तरांसशङ्कुमारभ्य प्रत्यक् पदद्वयं मीत्वा तस्योत्तरतो ऽपि तावदेव मीत्वा तत्राभितः शम्यामात्रश्चात्वालः । अयं चात्वाल इत्युच्यते ॥

४७५ वेद्युत्तरांसशङ्कुमारभ्य प्रत्यक् पदचतुष्टयं मीत्वा उदगेकं पदं मीत्वा शङ्कुं निहन्ति स उत्करः ॥

४७६ एवं पाशुबन्धिकीं वेदिमुत्तरवेदिं च करोति । तस्या वेदेस्त्रयोदशाङ्गुलं दक्षिणतो मुक्त्वा प्रतिप्रस्थाता दार्शपौर्णमासिकीं वेदिं करोति । उभे पश्चिमपार्श्वे समे भवतः । पूर्वपार्श्वे विषमे ।

उत्तरा दीर्घा दक्षिणा ऊना । प्रतिप्रस्थातृवेदेरुत्तरश्रोएयं सवद-
ध्वर्युवेदेर्दक्षिणतस्तयोर्दशाङ्गुलमावात्यरो भवतः । उभयोर्वे-
द्योरुत्तर एवोत्करः । इयं दार्शपौर्णमासिक्या वेद्या तुल्यामा-
रुती वेदिरिति प्रतिप्रस्थातृवेदिरिति च गीयते ॥

४११ एवं वेदीं विमाय परिस्तीर्य अध्वर्युप्रतिप्रस्थातारौ शाखाहरण-
क्रमेण शाखापविवादिसायंदोहान्तं कुर्याताम् । वारुणदोहम-
ध्वर्युः । मारुतदोहं प्रतिप्रस्थाता । द्वितीयदिने अग्निहोत्रहोमा-
नन्तरमुभौ पाणिसंमर्शनादि कुरुतः । अग्निपरिस्तरणमध्वर्युरेव
करोति । उत्तरस्यां वेद्यां वैश्वदेववत्पात्राणि सादयति । प्रति-
प्रस्थाता दक्षिणस्यां वेद्यां स्फ्यमग्निहोत्रहवणीं जुह्वादिचतुष्टय-
माज्यस्थालीं वेदमामिक्षाश्रपणार्थं स्थालीं मेक्षणं आमिक्षामु-
द्धरणपात्रीं वेदपरिवासनमुपवेषं चैतानि पात्राणि शमीमयानि
प्रकृत्युक्तानि चासादयति । ब्रह्माणं तूष्णीं दक्षिणत उपवेश्य
अध्वर्युरेव प्राकृतवेद्यां पृष्ठ्यां स्तृणाति । उभौ मन्त्रेण पवित्रे
कुरुतः । अध्वर्युरेव प्रणीताप्रणयनमुत्तरवेदेरुत्तरतः करोति ।
दक्षिणेनाग्निहोत्रहवणीं सव्येन शूर्पं चादत्ते । प्रतिप्रस्थाता मन्त्रे-
ण अग्निहोत्रहवणीमेव । एवं मन्त्रेण प्रतितपनम् । अध्वर्युर्वै-
श्वदेववदाग्नेयादिपञ्चहवींषि निरुप्य ऐन्द्राग्नं निर्वपति । उभौ
प्रोक्षणीः संस्कुरुतः । अध्वर्युः करम्भपात्राणि मेषं मेषीं द्विश-
ताधिकानि शमीपर्णानि करीरसक्तून् ऐषीकं शूर्पं च हविर्भिः
सह प्रोक्षति । उभौ स्वस्वपात्राणि प्रोक्ष्य प्रोक्षणीर्निधत्तः ।
अध्वर्युः कृष्णाजिनावधूननादितन्दुलप्रक्षालननियननान्तं करो-
ति । तुषनिरसनकाले कांश्चित्तुषान् अवभृथार्थमवशेष्य इतरा-
न्निरस्यति । उभयोः प्रातर्दोहः सायंदोहवत् । अध्वर्युः कृष्णा-

जिनावधूननादि अधिवपनान्तं करोति । कपालोपधाने अग्नये अष्टौ कपालान्युपधाय सौम्यचरुस्थालीमधिश्रित्य सवित्रे द्वादश कपालान्युपधाय सारस्वतचरुस्थालीमधिश्रित्य पौष्णचरुस्थालीमधिश्रित्य इन्द्राग्निभ्यामेकादशकपालान्युपदधाति । प्रतिप्रस्थाता तदुत्तरत उपवेषेणाङ्गारान्निरुह्य मारुतस्थाल्यां तिरःपवित्रं प्रातर्दोहमानीय मेक्षणेनालोड्य श्रपयति । अध्वर्युस्तदुत्तरतो वारुणस्थालीमधिश्रित्य तदुत्तरतः काय एकं कपालमुपदधाति । संवपने अध्वर्युः इन्द्राग्निभ्यां कायेति वदति । अध्वर्युणा ऐन्द्राग्नपुरोडाशाधिश्रयणे कृते प्रतिप्रस्थाता मारुतीप्रातर्दोहे सायंदोहं दध्यानीय आमिक्षावाजिने पृथक्कृत्य शीतले देशे निदधाति । सद्यस्कालत्वपक्षे आमिक्षार्थं पयआतञ्चनं लौकिकदध्ना वा करोति । ततोऽध्वर्युर्वारुण्यामिक्षां वाजिनं च पृथक्कृत्य निदधाति । तत एककपालमधिश्रयति । आज्यदधिनी निर्वपति । अपूर्वाज्यं च । प्रतिप्रस्थाता प्रकृतिवत् । अध्वर्युः पुरोडाशानां त्वचं ग्राहयित्वा करम्भपात्राणि मेषं शताधिकानि शमीपर्णानि करीरसक्तूंश्च हविर्भिः सह पर्यग्नि करोति । ततः प्रतिप्रस्थाता मारुत्यामिक्षया सह मेषीं शताधिकानि शमीपर्णानि करीरसक्तूनैषीकं शूर्पं स्वाज्यानि च पर्यग्नि करोति । अध्वर्युः पाशुबन्धिक्यां वेद्यां प्राचीसंक्षालननिनयनान्तं करोति । उभौ वेदावादाय स्वस्ववेदिं त्रिः संमृष्टः । अध्वर्युः पाशुबन्धिक्यां वेद्यां स्तम्बयजुर्हरति । प्रतिप्रस्थाता दक्षिणस्याम् । अध्वर्युः पूर्वं मृदमादाय उत्करे न्युप्य तिष्ठति । प्रतिप्रस्थाता पाशुबन्धिक्या वेदेः पश्चान्मार्गेण मृदमाहृत्य उत्करे न्युप्य पूर्वं यथेतं प्रत्यागच्छति । ततोऽध्वर्युः प्रत्या-

गच्छति । एवं त्रियजुषा तूष्णीं चतुर्थं सह बर्हिषा । पूर्वौ परि-ग्राहौ परिगृहीत: । अध्वर्युरेव करणं जपति । तस्मिन्करण-मन्त्रे वेदिद्वित्वादिमां वेदिं वसुमतीं रुद्रवतीमादित्यवतीमि-ति पदानां स्थाने इमे वेदी वसुमत्यौ रुद्रवत्यौ आदित्यवत्यौ इत्यूह: । उभौ स्वस्ववेदिं स्फ्येनोद्धत: । अध्वर्युरेवाग्नीध्रमाह आग्नीद्विवश्चामुतश्च त्रिस्त्रिर्हरेति । अथाध्वर्यु: स्फ्यमुदपात्रं बर्हि: शम्यां चादाय एहि यजमानेति यजमानमामन्त्र्य यज-मानपत्नीभ्यां सह चत्वालदेशं गत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वा-लपूर्वदेशे उदीचीनकुम्बां शम्यां निधायान्तरत: स्फ्येनालिख-त्युदगपवर्गं विनायनीमेसीति मन्त्रेण । दक्षिणत: प्राचीनकुम्बां-शम्यां निधाय पूर्ववत् स्फ्येनालिखति प्रागपवर्गं तिक्तापनीमे-सीति मन्त्रेण । पश्चादुदीचीनकुम्बां शम्यां निधाय अन्तरत: स्फ्येनालिखत्युदगपवर्गं अवतान्मानाथितमिति मन्त्रेण । उत्त-रत: प्राचीन कुम्बां शम्यां निधाय अन्तरत: सफ्येनालिखति प्रागपवर्गमवतान्माव्यथितमिति मन्त्रेण । चात्वाले उदगग्रं बर्हिर्निधाय यजमानपत्नीभ्यामन्वारब्ध: तस्य मूले स्फ्येन प्रहरति विदेरग्निर्नभ इत्यादिमन्त्रेण । अप उपस्पृश्य । छिन्नं बर्हिर्मूलं मृदं चादत्ते आयुषा नाम्नेहीति मन्त्रेण । हृत्वोत्तर-वेद्यां निर्वपति यत्तेनाधृष्टं नामेत्यादिमन्त्रेण । स्फ्येन बर्हिर्मू-लप्रहरणादिपुनर्द्वितीयम् । तत्र मन्त्रे यो ऽस्यां पृथिव्यामित्यत्र अस्यामित्यस्य स्थाने द्वितीयस्यामिति पदस्य प्रयोग: । तत-स्तृतीयं तत्र प्रहरणमन्त्रे अस्यामित्यस्य स्थाने तृतीयस्यामि-त्यस्य प्रयोग: । तूष्णीं चतुर्थमवशिष्टं बर्हिषा सह प्रहरति । पूर्वे-षु त्रिषु पर्यायेषु केवलं मृदाहरणं वा । तत: सफ्येन चात्वाले

पुरीषमुद्धृत्याह, अग्नीदितस्तिरहरेति । आग्नीध्रश्चत्वालात्पुरीषमादाय उत्तरवेद्यां विनिवपति ॥ अयं चात्वालसंस्कार इत्युच्यते ॥

४७८ अध्वर्युरुत्तरवेद्यां न्युप्तं पुरीषं संप्रयौति सिंहीरसीत्यादि मन्त्रेण । पुरीषं प्रथयति उरुप्रथस्वेत्यादिमन्त्रेण । ध्रुवासीतिमन्त्रेण स्फ्येन संहन्ति । देवेभ्यः शुन्धस्वेति मन्त्रेण उत्तरवेदिमद्भिरवोक्षति । देवेभ्यः शुम्भस्वेति मन्त्रेण सिकताभिः समुप्रकिरति । उत्तरवेदिं शम्यया मीत्वा मध्ये प्रादेशमात्रीं चतुरस्रां चतुरङ्गुलोच्छ्रायामुत्तरनाभिं कृत्वा दर्भैः प्रच्छादयति । उत्तरवेद्यां पुरीषसंपवनादि एतदन्तं कर्म उत्तरवेदिसंस्कार इत्युच्यते ॥

४७९ उभौ प्रत्येकं प्रणयनीयमिध्ममाहवनीये आधत्तः । अध्वर्युः स्मार्तवदाज्यं संस्कृत्य पञ्च गृहीतं गृहीत्वा तूष्णीमुत्पूताः प्रोक्षणीश्च परिकर्मिहस्ते दत्वा ब्रह्मणो हस्ते दैवदारवान् परिधीन् प्रादेशमात्रांस्त्रीन् गुग्गुलुसुगन्धि तेजनं मेषशृङ्गमध्ये उत्तरप्रदेशाद् गृहीतां शुक्लामूर्णास्तुकां च दत्वा संप्रैषमाह । अग्नयेप्रणीयमानायानुब्रूह्यग्नीदेकस्य ययानुसंधे ३ इति । होत्रा अयमुष्येत्यारब्धे चात्वालमृदा पूरितां पात्रीमन्युद्धरणपाच्या अधस्तात् यजमानयजमानपत्नीभ्यामन्वारब्धः स्वमिध्ममादायोत्तरतस्तिष्ठति । प्रतिप्रस्थाता स्मार्तवदाज्यं संस्कृत्य सकृद् गृहीत्वा अध्वर्युगृहीतस्येध्मस्य शालामुखीयस्य च मध्येन गत्वा प्रदक्षिणमावृत्यप्रत्यङ्मुखः तथैव कल्पितोपयमन्यां प्रणयनपात्रे स्वमिध्ममादाय अपसलैः पर्यावृत्य तिष्ठति । वामाङ्गेन परिवर्तनमपसलैः पर्यावर्तनमित्युच्यते ॥ शेषमग्रे ॥

# सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 458. Vol. V.)

मू० ॥ न स्वाध्यायवदाप्यता न च पुनस्त्रेताग्निवज्जन्यता
न व्रीह्यादिवदस्य संस्कृतियुजा नो सोमवद्विक्रिया ॥
पाठाधानजलोक्षणाभिषवणैः कूटस्थरूपं हि त-
द्ब्रह्मापास्तविकारजन्ममरणं निःश्रेयसं साधनैः ॥ ३०६ ॥

टी० ॥ एवमबाधितानधिगतब्रह्मप्रतिपादकानामनतिशयानन्दब्रह्मप्राप्तिपर्यवसायिनां वेदान्तानां धर्म इव चोदनाया ब्रह्मणि प्रामाण्यमनपवादमित्युपपादितम् । ननु सत्यमीदृशं ब्रह्म वेदान्तेभ्योऽवगम्यते परं तु कार्यपरेभ्यस्तेभ्यो न तु केवलसिद्धपरेभ्यः लोके शब्दानां सिद्धे सङ्गतिग्रहासंभवेन वेदस्याप्यतदर्थत्वात् कार्ये च सङ्गतिग्रहस्योक्तत्वात् । आत्मेत्येवोपासीतेति ह्यात्मोपासनं विधीयते । तत्र च रात्रिसत्रन्यायेन ब्रह्म वेद ब्रह्मैव भवतीत्याद्यर्थवादावगतब्रह्मभवनकामो नियोज्यः कल्प्यते, ब्रह्मभवनकामस्य च कर्त्तव्यतयाऽवगत उपासनाविषयनियोगः स्वस्य साक्षात्कर्तव्यत्वायोगात्स्वसिद्ध्यर्थं स्वविषयोपासनस्यानुष्ठानमाक्षिपति । तच्चाज्ञातं नानुष्ठातुं शक्यमिति तज्ज्ञानाय विषयतया तन्निरूपकमद्वैतात्मानमप्युपासनानियोगोऽपेक्षते । ततः कोऽसावात्मेति तदाकाङ्क्षायां सत्यादिवाक्यमुपासनानियोगपर्यवसाय्येव मन्त्रा इव विधिपरा देवताविग्रहमात्मानं बोधयतीति तस्य कार्यपरवेदान्तात्सिद्धिरिति । मैवम् । सिद्धेपि शब्दानां संबन्धग्रहस्य वक्ष्यमाणत्वान्मोक्षकामं प्रत्युपासनाविध्यसंभवात् । तथाहि । किमुपासनं प्रधानकर्मतया विधीयते । गुणकर्मतया वा । आद्ये उपासनाजन्यापूर्वस्य क्वोपयोग इति चिन्तनीयम् । न तावद्ब्रह्मैकत्वे तस्योपयोगः । तस्य नित्यसिद्धस्य तदसाध्यत्वाच्चाप्यविद्यानिवृत्तौ तस्या अपि ज्ञानैकफलत्वात् । नाप्यात्मसाक्षात्कारे तस्य श्रवणादिविधिफलतया तदफलत्वात् । अन्वय-

व्यतिरेकाभ्यां तत्साधनत्वसिद्ध्या तत्र प्रवृत्तिसंभवाद्विधिवैयर्थ्याच्च । अव-घातादौ च नियमापूर्वमस्तीति न विधिवैयर्थ्यं प्रकृतेऽपि तथास्त्विति चेत्तर्ह्युपासनाया अपूर्वद्वारा मुक्तिफलता न स्यादिति न प्रधानकर्मता । किं तु सिद्धान्त इव निदिध्यासनस्यात्मज्ञानार्थतयात्मशेषतैव स्यात् । अत एव न गुणकर्मतयापि तद्विधिः । किं च गुणकर्मणः फलं प्राप्तिरुत्पत्तिर्वा संस्कारो विकारो वा स्यात् । न चैषामन्यतमोऽपि ब्रह्मण्युपासनया संभवतीति व्यतिरेकदृष्टान्तेन सह दर्शयति । न स्वाध्यायेत्यादिना । अस्य ब्रह्मणः साधनैर्न स्वाध्यायोऽध्येतव्य इति विहितस्वशाखाध्ययनेन स्वाध्या-यस्येवाप्यता प्राप्तिः संभवति । स्वाध्याये च सा अध्येत्रधीनोच्चारणक्षमता । नापि वसन्ते ब्राह्मणोऽग्नीनादधीतेति विहिताधानेन गार्हपत्याहवनीयदक्षि-णाग्निरूपाग्नित्रयस्येवोत्पत्तिः । नापि व्रीहीन्प्रोक्षतीत्यादिना विहितप्रोक्षणेन व्रीह्युलूखलादेरिव संस्कृतिः संस्कारः तत्कृतातीन्द्रियातिशयः तया युजा संबन्धः । नापि सोममभिषुणोतीति विहितेन कुट्टनरूपाभिषवणेन सोमस्येव विक्रियान्यथाभावः । पाठोऽध्ययनम् । उक्षणं प्रोक्षणम् । एषां चतुर्णां पाठादीनां यथाक्रमं स्वाध्यायाद्याप्यतादिभिः संबन्धः । अत्र साधनैरिति बहुत्वं पूर्व पक्षे मनोमयादिब्रह्मोपासनाद्यभिप्रायेण । कुतो ब्रह्मणि तदसंभव इत्यत आह । कूटस्थेति । हिर्हेतौ । यतो ब्रह्म कूटस्थादिरूपमत आप्यताद्यस्य नेति संबन्धः । कूटस्थपदसूचितं निर्विकारत्वमजन्यत्वं चापास्येतिदर्शि-तम् । अन्येऽपि भावविकारा निरस्ता इति सूचयितुं मरणग्रहणम् । ब्रह्म-पदेन तस्य सर्वात्मत्वं दर्शयता आप्यत्वं निरस्तम् । निःश्रेयसमिति परमप्रयो-जनरूपतयोपयुक्तोपयोक्ष्यमाणताभावात्संस्कार्यत्वं निरस्तमिति द्रष्ट-व्यम् ॥ ३०६ ॥

मू० ॥ ब्रह्मैव सन्निति वचः प्रथमश्रुतत्वा-
दप्येतिशब्दमुपसंहरणस्थमुच्चैः ॥
प्रच्यावयत्स्वविषयादुचिताद् बलीयो
ब्रह्मात्मनोरनतिरेकमसाध्यमाह ॥ ३०७ ॥

टी० ॥ ननु ब्रह्मैव सन् ब्रह्माप्येतीति तस्याप्यत्वं श्रूयते । नच ब्रह्मैव सन्निति तस्य प्रागपि सत्त्वाद्व्याप्तिक्रियासाध्यत्वमिति वाच्यम् । क्रियापदानुरोधेन ब्रह्मैवेत्यस्य भाविपरत्वकल्पनात् । नचैवमपि तस्य सर्वगतस्य घटेनाकाशस्येव न क्रिययाप्यत्वमिति वाच्यम् । अथ यदतः परो दिवो ज्योतिर्दीप्यत इति श्रुतिसिद्धाविकृतब्रह्मप्रदेशस्याप्यत्वोपपत्तेरित्याशङ्क्याह । ब्रह्मैव सन्निति । उपसंहरणस्यम् एतद्वाक्यान्ते श्रूयमाणं प्रच्यावयत् भ्रंशयत् उचितान्मुख्याद्ब्रह्मैव सन्निति सावधारणं प्रथमश्रुतत्वात्तथैव बुद्धिमुत्पादयदसंजातविरोधितया बलीयो भूत्वान्ते श्रुतमप्येतिशब्दं मुख्यार्थात् प्रच्यावयति एकस्मिन्वाक्य उपक्रमानुरोधेनोपसंहारस्य नेतव्यत्वात् यथा त्रयो वेदा अजायन्तेत्यर्थवादोपक्रमगतवेदशब्दानुरोधेनोच्चैर्ऋचा क्रियत इति चरमपठितं विध्युद्देशगतमपि मन्त्रवाचि ऋगादिपदं वेदपरतया नीतमतो ब्रह्मात्मनोरत्यन्तमभेद इति नानया श्रुत्या तदाप्यत्वसिद्धिरित्यविद्यानिवृत्त्याऽप्राप्तत्वभ्रान्तिध्वंस एव तथोपचर्यते । अविकृतं ब्रह्म च सर्वत्र सदास्त्येवासङ्गत्वेन तस्य सर्वविक्रियाशून्यत्वादत एव श्रुतिरत्र ब्रह्म समश्नुत इति । तस्योद्देशस्यत्वश्रवणं तूपासनार्थमिति ॥ ३०७ ॥

मू० ॥ आग्नेय इत्याद्यपि तद्धितान्त-
मष्टाकपालादिसमन्वितं सत् ॥
आख्यातशब्दस्य धुरं बिभर्ति
भव्यार्थसंवित्तिनिबन्धनत्वात् ॥ ३०८ ॥

टी० ॥ ननु नामपदमाख्यातान्तपदं प्रति गुणभूतं भूतार्थस्य भव्यशेषत्वेन तत्पदयोरपि तथाभावस्य वक्तव्यत्वात् । एवं गुणे त्वन्याय्यकल्पनेति ब्रह्मैव सन्निति नामपद एव लक्षणोचिता न त्वाख्यातान्तेऽप्येतिपद इत्याशङ्क्य नामपदमपि विधेयसमर्पकं क्रियापदकार्यं कुर्वन्क्रियापदमेवेति न नामत्वं गुणत्वनिमित्तम्, एवमविधेयार्थक्रियापदमप्यर्थाच्चामैवेति न प्रधानत्वनिमित्तमित्याशयेन दृष्टान्तं सार्द्धश्लोकेनाह । आग्नेय इत्यादिना । आग्नेयोऽष्टाकपालो भवति । अग्नीषोमीयमेकादशकपालमित्यादिवाक्येऽग्निर्द-

वताऽस्येत्यादिव्युत्पत्त्याऽग्न्यादिदेवतासंबन्धिद्रव्याभिधायकमाग्नेय इत्यादितद्धितान्तं पदमष्टसु कपालेषु संस्कृतः पुरोडाश इत्यादिव्युत्पत्त्याऽष्टाकपालादिसंयुक्तपुरोडाशवाचकाष्टाकपालादिपदेन हविर्विशेषबोधकेनान्वितं सदाख्यातशब्दस्य विधेयबोधकस्य धुरं कार्यं बिभर्त्ति करोति। कुतस्तत्राह । भव्यार्थस्य साध्यार्थस्य संवित्तिजनकत्वादित्यर्थः । आग्नेयादिपदं हि देवतार्थतद्धितान्तं द्रव्यदेवतासंबन्धमभिधत्ते स च संबन्धो यागनिष्पाद्य इति यागोऽपि तेन प्रतीयत इति तदेवाख्यातेन विधीयतेऽतस्तत्प्रधानमित्यर्थः ॥ ३०८ ॥

मू० ॥ आख्यातमेव सदिदं भवतीति नाम
भव्येतरार्थमपि जन्मनिबन्धनत्वात् ॥
अप्येतिशब्दमपि तद्वदिमं प्रतीमो
भव्येतरार्थगतबुद्धिनिबन्धनत्वात् ॥ ३०९ ॥

टी० ॥ एवं तस्मिन्नेव वाक्ये भवतीतीदं पदं क्रियापदमेव सदर्थतो नाम । तत्र हेतुः भव्येतरेति । भवत्यर्थस्य सत्ताया अविधेयत्वात् तन्नामसदृशमेवेति न प्रधानमिति भावः । दार्ष्टान्तिकमाह । अप्येतीति । अप्येतिशब्देऽपि न भव्यार्थः संभवति । ब्रह्मभावस्य जीवे साध्यत्वेऽनित्यत्वेनामृतत्वानुपपत्तेर्ब्रह्मातिरिक्ततद्भावस्याऽसंभवात् ब्रह्मणश्चानाद्यनन्तत्वादतो न प्रधानम् । ब्रह्म तु सकलशेषीति तत्पदमेव प्रधानम् । भूतभव्ययोऽपि प्रकृते नावतरति । उक्तन्यायेन प्रकृते भव्याऽसंभवादित्याशयः ॥ ३०९ ॥ ॥ :: ॥

मू० ॥ ब्रह्मैव सन्निति गिरं प्रति शेषितायै
नाप्येतिगीरियमलं कथितोपपत्तेः ॥
आख्यातमेव खलु नामपदस्य शेषि
नाख्यातमेतदनृतत्वनिवेदकत्वात् ॥ ३१० ॥

टी० ॥ अप्येतिशब्दस्याऽभव्यार्थत्वे सिद्धमाह । ब्रह्मैव सन्निति । शेषितायै नालमिति योजना । शेषिता प्राधान्यम् । अत्र हेतुमाह । कथि-

तोपपत्तेरिति । भव्यार्थत्वासंभवादित्युक्तोपपत्तेरित्यर्थः । परोक्तं शेषिता-प्रयोजकमनुवदन्नत्र तन्नास्तीत्याह । आख्यातमेवेति । एतदप्येतिप-दम् ॥ ३१० ॥

मू० ॥ ब्रह्मैव सन्निति ततः प्रथमश्रुतं स-
दप्येति शब्दमपसारयति स्ववाच्यात् ॥
अस्याङ्गभावविरहादमुना सहाऽतो
ब्रह्मात्मनोरनतिरेकमुशन्ति धीराः ॥ ३११ ॥

टी० ॥ प्रकृतमुपसंहरति ॥ ब्रह्मैव सन्निति । तत इति । अस्य ब्रम्हेतिशब्दस्यामुनाप्येतिशब्देन सहाऽङ्गभावस्य शेषत्वस्य विरहादित्यर्थः । फलितमाह । अतो ब्रह्मात्मनोरिति । अनतिरेकमभेदम् । उशन्ति इच्छन्ति । धीराः भेदवादिभिर्बहुधाभिभूयमाना अपि श्रुतिप्रमाण्यातिदार्ढ्याद् ब्रह्मैकनिष्ठाः ॥ ३११ ॥

मू० ॥ भव्याय भूतमिति किं च विधिप्रधाने
काण्डे नयोऽयमिह तद्विपरीतमाहुः ॥
भूताय भव्यमिति भूतपरं हि सर्वं
वेदावसानमिति सूत्रकृदाचचक्षे ॥ ३१२ ॥

टी० ॥ भव्यार्थत्वासंभवादप्येतिशब्दस्य नात्र भूतभव्यन्यायावतार इत्युक्तं किं चायं न्यायः कर्मसमभिव्याहृतभूतविषयो न तु सिद्धब्रह्म-विषयोऽपि । प्रत्युत विपरीतं विविदिषावाक्यानुसारेण सर्वापेक्षा च यज्ञा-दिश्रुतेरिति सौत्रन्यायेन च कर्मण एव ब्रह्मशेषत्वावगमादित्याशयेनाह । भव्याय भूतमिति । विधिः प्रधानं प्रतिपिपादयिषितो यस्मिन्काण्डे तस्मिन् । इह ब्रह्मकाण्डे । तद्विपरीतं भूतभव्यन्यायविपरीतम् । तद्वैपरीत्यमे-वाऽऽह । भूताय भव्यमिति । हिर्हेतौ । यतः भूतपरं सत्यसिद्धब्रह्मपरं वेदावसानं वेदान्तं सूत्रकृदाचचक्षे समन्वयसूत्रप्रमुखैः सूत्रैरुक्तवानतो भाष्यकारादय एवमाहुरित्यर्थः ॥ ३१२ ॥

मू० ॥ ब्रह्मैव सन्निति ततोऽपि बलिष्ठमेत-
दप्येति शब्दमवसानगतं व्यपेत्य ॥
तस्मादमुष्य परिपीडकमेतदेव
ब्रह्मैव सन्निति पदं गुणकल्पनायै ॥ ३१३ ॥

टी० ॥ भव्यस्य भूतशेषत्वे सिद्धमाह । ब्रह्मैव सन्निति । ततोऽपीति । ततोऽपि भूताय भव्यमित्युक्तन्यायादपि एतद्ब्रह्मैव सन्निति पदमवसानगतमप्येतिशब्दमपेत्य बलिष्ठमिति संबन्धः । ततः किं तत्राह । तस्मादिति । अमुष्याप्येतिशब्दस्य गौणत्वकल्पनायै एतद्ब्रह्मैव सन्नितिपदमेव परिपीडकं मुख्यार्थभ्रंशकरं स्यादिति शेषः ॥ ३१३ ॥

मू० ॥ निःश्रेयसं न खलु साध्यमतः क्रियाभि-
र्ज्ञानेन वा द्वयसमुच्चयवर्त्मना वा ॥
उत्पत्तिराप्तिविकृती न च संस्कृतिश्च
यस्मान्न संभवति वर्णितवर्त्मनेह ॥ ३१४ ॥

टी० ॥ तस्माद्ब्रह्मभावस्यासाध्यत्वादुपासनादिक्रियासाध्यत्वं न संभवतीति न पराभिमतसमुच्चयस्याऽपि तत्राऽवकाश इत्याह । निःश्रेयसमिति । अत उक्तयुक्तिभिः क्रियाभिः केवलोपास्त्यादिक्रियाभिः, ज्ञानसाध्यत्वमपि नित्यसिद्धत्वात्तस्य न संभवति किमु वक्तव्यं क्रियासाध्यत्वं न संभवतीत्याशयेनाह । ज्ञानेन वेति । द्वयसमुच्चयवर्त्मना ज्ञानक्रियासमुच्चयरूपोपायेन तत्र प्राक्सूचितमेव फलाऽसंभवं दर्शयति । उत्पत्तिरित्यादिना । उत्पत्तिर्न संभवतीत्यनुषङ्गः । आप्तिविकृती न संभवत इत्यर्थः । एतच्च न स्वाध्यायवदाप्यतेति श्लोके दर्शितमित्याह । वर्णितवर्त्मनेति ॥ ३१४ ॥

मू० ॥ तस्मात्प्रवृत्तिविनिवृत्तिविवर्जितत्वं
ब्रह्मात्मवस्तुविषयावगते न दोषः ॥
सर्वप्रपञ्चैकनिवर्तकमूलदाहात्
स्वाराज्यहेतुरिति भूषणमेव तन्नः ॥ ३१५ ॥

टी० ॥ एवं किं च प्रवृत्तिविनिवृत्तिविहीनवस्तुतत्त्वप्रतीतिजन-नादित्यादिना यत्सिद्धवस्तुज्ञानात्प्रवृत्त्याद्यसंभवात्तन्निष्ठवेदान्तानां न फल-पर्यवसानमित्युक्तम् । तत्र प्रवृत्त्याद्यभावेऽपि निरतिशयपुरुषार्थपर्यवसानं तेषामुपपादितम् । इदानीं प्रवृत्त्यादिराहित्यमात्रस्यादोषत्वमुपसंहरन्न केव-लं तदभावस्यादोषता अपि तु अनुष्ठानजन्यायासाभावात्स गुण एवेत्या-ह । तस्मात्प्रवृत्तीत्यादिना । सर्वे ये प्रवर्त्तका रागादयः निवर्त्तकाश्च द्वेषादयः तेषां मूलमज्ञानं तदाश्रितवासनादि च तन्निवृत्तेरित्यर्थः । तत् प्रवृत्त्यादिविवर्जितत्वम् । नोऽस्माकं कृतकृत्यानाम् ॥ ३१५ ॥

मू० ॥ अज्ञाततापि घटतेऽत्र दृशोऽनुभूते-
र्जानामि नाहमिति दृश्यपि दृश्यते हि ॥
अज्ञाततानुभवनं न च वास्तवं त-
दज्ञाततां वहति कल्पितता हि तस्याः ॥ ३१६ ॥

टी० ॥ ननु वेदान्तानामनवगतार्थबोधकत्वमेव न संभवति यद्ब-लात्सिद्धेऽपि तेषां प्रामाण्यं भवेत् । स्वप्रकाशे अज्ञाततायां एवाऽसंभवा-दित्याशङ्क्याह । अज्ञाततेति । अत्रास्मन्मते तद्विषयाज्ञाने वेदान्तवेद्यमा-त्मानं न जानामीत्यनुभवं प्रमाणमाह । अनुभूतेरिति । अज्ञाने प्रमाण-व्यापाराभावात्तदनुभवासिद्धिमाशङ्क्याह । जानामीति । दृग्रूपेप्यात्मनि नाहं जानामीत्यज्ञाततानुभवनं दृश्यते हीति संबन्धः । अस्ति खलु सर्वे-षामहमिदं जानाम्यात्मानं न जानामीति चाज्ञानापरोक्षानुभवः स च न प्रमाणजन्यः लिङ्गादेरपरोक्षज्ञानासंभवात् । चक्षुरादिश्चान्तरज्ञानायोगात् । मनसश्च प्रमातृतयाऽप्रमाणत्वान्मनोव्यापारविरहदशायामपि तदनुभ-वाच्च तत्साक्षिमात्रभास्यमित्यर्थः । साक्षिसाध्यत्वसाधनफलमाह । अथ-वेतोपि तत्साक्षिभास्यमेवेत्याह । न च वास्तवमिति । तदज्ञाततानुभवनं वास्तवं प्रमाणं न भवति अतः शुक्तिरजताद्यनुभववदज्ञानानुभवनमपि साक्षिरूपमित्यर्थः । ननु विषयबाधं विना कथमनुभवस्याप्रमाणत्वमित्या-शङ्क्याह । अज्ञाततेति । तस्या दृशः अज्ञातता स्वस्यां कल्पिततामुद्वहति प्रापयतीति संबन्धः । अज्ञानस्यापि शुक्तिरजतादिवद् दृश्यत्वात्स्वप्रकाशा-त्मनि वस्तुतोऽयोगाच्च सा कल्पिता भवतीत्यर्थः ॥ ३१६ ॥

मू० ॥ अज्ञानमित्यजडबोधतिरस्क्रियात्मा
जाड्यं च मौढ्यमिति च प्रकृतिः प्रसिद्धा ॥
सा चातिदुस्थितवपुर्दृशमद्वितीया-
मालिङ्गति स्म घृतपिण्डमिवाग्निमिद्धम् ॥ ३१७ ॥

टी० ॥ नन्वात्मानं न जानामीत्यनुभवः सिद्धान्ते अनुपपन्नः तस्य हि ज्ञानाभावो विषयः न चात्मनि स्वप्रकाशतया स्वसत्तानिश्चये ज्ञानाभावः संभवत्यात्मनो नित्यत्वात् । न च तद्गोचरवृत्त्यभावोऽस्तीति वाच्यं तथापि तज्ज्ञानाभावासंभवात् । न हि वृत्तिर्ज्ञानं न वात्मा तदधीनप्रकाशः येन तदभावादात्मनोऽस्फुरणमज्ञानं भवेत् । अन्यथा वृत्तिं विना नित्यं प्रकाशमाने साक्षिणि शुक्तिरजतादौ च न जानामीत्यनुभवप्रसङ्गः । तस्मादात्मनि सिद्धान्ते न जानामीत्यनुभवो न संभवतीति न तद्बलादज्ञानसिद्धिरिति चेत्सत्यम् । अस्ति तावदात्मन्यप्यनुभवः सर्वजनप्रसिद्धः स च त्वदुक्तविधया अभावविषयो न भवतीति स्वप्रकाशात्मावरणरूपं तद्गोचराज्ञानमनुभवबलादभ्युपगन्तव्यम् । अन्यथा सुषुप्त्यादौ आत्मनोऽस्फुरणं न स्यात् । किं च वियदादिसमानस्वभावा तत्प्रकृतिः का चिदभ्युपेया । सा च न पराभिमतप्रधानादिः । अद्वयात्मपरोपनिषद्विरोधादित्यात्मन्यध्यस्तैव वाच्या सैवात्मप्रकाशावरणं तदन्यस्मिन् तस्मिन् गौरवात् प्रमाणाभावाच्चाज्ञानमप्यावरणस्वभावमिति सैव प्रकृतिरज्ञानमित्यपि सिद्ध्यतीत्याशयेनाह । अज्ञानमित्यजडबोधेति । या अजडबोधस्य तिरस्क्रियात्मावरणस्वरूपा प्रकृतिः साऽज्ञानमिति प्रसिद्धेति संबन्धः । एवं चाऽऽत्मनि न जानामीत्यनुभवे नानुपपत्तिरिति भावः । ननु नञर्थतयाऽनुभूयमानमज्ञानं कथं भावरूपं स्यादिति चेन्न । आत्मन्युक्तविधया अभावसंभवेन ज्ञानविरोधिभावरूपमेवाज्ञानमित्यभ्युपगन्तव्यत्वात् यथा पापमधर्म इत्यभ्युपगम्यते । ननु तत्र पापशब्देन महाजनव्यवहाराद्भावत्वं तस्य निश्चितमिति चेत्तर्हि इहापि भावार्थतया सकलप्रसिद्धजाड्यमौढ्यव्यवहाराभ्यां भावत्वं निश्चीयतामित्याशयेनाह । जाड्यं चेति । प्रकाशविरोधिस्वरूपविशेष इत्यर्थः । नच ज्ञानान्यत्वं ज्ञानन्यत्वं वा जाड्यमिति न तद्भावरूपमितिवाच्यम् । अन्य-

स्वस्यानुगतस्यैकस्यासंभवेन वक्ष्यमाणजड़ानुगतबुद्धेरयोगात् । यद्यप्यज्ञानं जड़मेव तथापि जड़प्रपञ्चानुगततया जाड्यमिति तद्व्यवहार उपपद्यते मौढ्यमिति च पुरुषगतं मोहात्मकाज्ञानमेव व्यवह्रियत इति तद्भावरूपमिति भावः । नन्वजड़बोधतिरस्क्रियात्मेत्ययुक्तं न हि प्रकाशमानस्याद्वयस्य द्वितीयेनाप्रकाशमानता संभवतीति चेत्किं वस्तुभूतेन द्वितीयेन वस्तुसदप्रकाशमानत्वं न संभवतीति वदसि किं वाऽनिर्वचनीयेनानिर्वचनीयम् । आद्ये मदिष्टसिद्धिः । द्वितीये अनुभवविरोधः । अनुभवसिद्धमप्यनुपपन्नमिति चेत् । अत एवानिर्वचनीयमुपपन्नत्वे अनिर्वचनीयत्वायोगादित्याशयेनाह । सा चेति ॥ अतिदुस्थितवपुः दुर्निरूपस्वरूपाऽनिर्वचनीयेति यावत् । यतोऽद्वितीयां दृशमालिङ्गति । आश्रित्यावृणोति स्मेति तदुभयस्य दुर्घटत्वं द्योतयति । न ह्यद्वितीये द्वितीयं प्रकाशमाने अप्रकाशमानत्वं च वस्तुसद्भवतीति भावः । स्वविरोध्याश्रयणमतिदुस्थितमित्यत्र दृष्टान्तमाह । घृतपिण्डइति । इद्धं दीप्तं ज्वलन्तमितियावत् ॥ ३१७ ॥ (शेषमग्रे)

काशीस्थराजकीयप्रधानपाठालयाध्यापकेन द्विवेदहरिनाथशर्म्मणा ॥

---

॥ श्रीः ॥

## ॥ योगवार्त्तिकम् ॥

*(Continued from page 454. VOL. V.)*

क्लेशानां स्थूलसूक्ष्माणां सर्वेषामेव ज्ञाननाश्यत्वं वक्ष्यमाणमुपपादयितुम् अविद्यामूलकत्वमन्यक्लेशानामाह ॥

### अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥

निमित्तकारणस्यापि प्रसवभूमित्वं प्राधान्यमात्रेण गौणं व्याख्यास्यते । अत्रेति । अत्र एतेषु क्लेशेषु मध्ये चतुर्भेदानामस्मितादिक्लेशानामित्यादिरर्थः । प्रसुप्तादीनां सर्वेषामेवाविद्यासत्त्वे सत्त्वं तदभावे तदभाव इत्याशयः । तेषां चतुर्विधभेदं विवृणोति । तत्र का प्रसुप्तिरिति । चेतसि शक्तिमात्रेणानागतावस्थयावस्थितानामस्मितादीनां बीजभावोपगमः स्वकार्यजननसामर्थ्यं प्रसुप्तिरित्यर्थः । अस्माद्वाक्यात् कार्यस्यानागतावस्थैव कारणे कार्यशक्तिरिति लब्धं सैव च उपादानकारणतेति भावः । दग्धबी-

जभावां पञ्चमीमवस्थां व्यावर्त्तयितुं बीजभावोपगम इत्युक्तं दग्धबीजभावानां चास्मितादीनां पुनरप्रसवादविद्या न क्षेत्रमिति सा पञ्चम्यवस्था न लक्ष्येतिभावः । कदाचित्प्रबोधसत्त्वे एव सुषुप्तिः संभवतीत्यतः प्रबोधमपि दर्शयति । तस्येति । तस्य सुप्तक्लेशस्य स्वस्वविषये संमुखीभावोभिव्यक्तिः प्रबोध इत्यर्थः । पञ्चम्यवस्थायामतिव्याप्त्यभावं प्रतिपादयति । प्रसंख्यानेति । प्रसंख्यानवतो विवेकसाक्षात्कारिणो जीवन्मुक्तस्य दग्धक्लेशबीजतया संमुखीभूते सन्निकृष्टेपि विषये असौ क्लेशानां संमुखीभावः पुनर्न भवति । तत्र हेतुर्दग्धबीजस्य कुतः प्ररोहइतीति । कारणाभावादित्यर्थः । तत्र तस्य पुनः क्लेशप्ररोहे, शास्त्रप्रसिद्धं चरमदेहकत्व प्रमाणयति । अत इति । पुनः प्ररोहे सति देहान्तरोत्पत्त्या ज्ञानिदेहस्य चरमत्वानुपपत्तिरिति भावः । तथा च स्मर्यते ।

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥

इति । ज्ञानदग्धैः क्लेशरूपबीजैर्हेतुभिरात्मा देहो न पुनरुत्पद्यतइत्यर्थः । क्लेशाख्यबीजदाहादित्यर्थः । दग्धबीजभावाया अवस्थाया अपरिगणने बीजमाह । तत्रैवेति । तत्रैव चरमदेहएव दग्धबीजावस्था नान्यत्र पुनर्जन्माभावादित्यर्थः । अतो नास्ति दग्धबीजावस्थस्य प्रसवो नापि तत्प्रसवभूमिरविद्येति भावः । जीवन्मुक्तानां विषयसन्निकर्षेपि क्लेशानभिव्यक्तेः क्लेशसंस्कार एव तदा नास्ति विवेके कैवल्यइवेति भ्रमं निरस्यति । सतामिति । सूक्ष्मरूपेण सतामेव क्लेशानां तदा चरमदेहे बीजसामर्थ्यं कार्यजननसामर्थ्यं दग्धं नाशितमित्यादिरर्थः । अग्न्यादौ दाहादिशक्तेर्यावद्द्रव्यभावितादर्शनात् चित्तेन सहैव क्लेशशक्तेरशेषतो नाशसंभवात् । ततश्च ते प्रतिप्रसवहेयाः सूक्ष्मा इतिसूत्रे व्यक्तीभविष्यति । उपसंहरति । इत्युक्तं प्रसुप्तिर्दग्धबीजानामप्ररोहश्चेति । शिष्यावधानाय क्रमप्राप्तं तनुत्वस्य निर्वचनं प्रतिजानीते । तनुत्वमुच्यतइति । प्रतिपक्षेति । क्लेशप्रतिपक्षः क्रियायोगः तस्य भावनमनुष्ठानं तेनोपहताः क्लेशास्तनवो विवेकख्यातिप्रतिबन्धाक्षमा, भवन्ति, एतदेव तनुत्वमिति शेषः । के चित्तु सम्यग्दर्शनं

श्रवणादिरूपं परोक्षमविद्यायाः प्रतिपक्षः । एवं भेददर्शनमस्मितायाम-हेयानुपादेयत्वाज्ञानरूपं माध्यस्थ्यं रागद्वेषयोः उपकरणाख्यानुबन्धबुद्धि-निवृत्तिरभिनिवेशस्य, एतेषां भावनेनानुष्ठानेनोपहता इत्यर्थमाहुः । विच्छि-त्तिं व्याचष्टे । तथेति । क्लेशानामन्यतमेनाभिभवादत्यन्तविषयसे-वनाद्वा विच्छिद्यविच्छिद्य तेनतेनात्मना पूर्ववदतनुभावेनैव पुनः समु-दाचरन्ति आविर्भवन्तीत्यतो विच्छिन्नशब्दवाच्या भवन्तीत्यर्थः । अत्र वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता प्रसुप्तात् भेद उक्तः प्रसुप्तिर्हि क्लेशानां व्यञ्जकविलम्बेनैकद्वित्रिजन्मादिबहुकालं व्यापारान-भिव्यक्तिः विच्छिन्नता तु स्वल्पप्रतिबन्धतः क्लेशप्रवाहस्याल्पकालमन्तरान्त-रानभिव्यक्तिरिति भेदः, तेनतेनात्मनेत्यनेन च तन्ववस्थातो भेद उक्त इति । विच्छेदे प्रमाणं पृच्छति । कथमिति । उत्तरं, रागेति । रागकाले क्रोधस्यादर्शनात् क्रोधस्य विच्छिन्नता सिध्यतीत्यर्थः । तदा क्रोधाभावे च पुनः क्रोधोत्पत्त्यसंभवः असत्कार्यानभ्युपगमादिति भावः । एवं क्लेशान्तरे-पि द्रष्टव्यम् । रागकाले क्रोधस्य विच्छेदे च विरोधो बीजमित्याह । नहीति । कालिकविच्छेदं क्लेशानाम् उदाहृत्य दैशिकविच्छेदमप्युदाहरति । रागश्चे-ति । विषयान्तरे न नास्ति अपि तु विच्छिन्नावस्थस्तत्रापि अन्यथाऽसदु-त्पादासंभवादित्यर्थः । अतो विषयान्तरे तदा रागो विच्छिन्न इति भावः । तदेवं लोकव्यवहारेणाप्यवधारयति । नैकस्यामिति । तत्र एकस्यां स्त्रिया-मित्यर्थः । स हीति । स हि रागस्तदा अन्यत्र प्रसुप्तो वा तनुर्वा विच्छिन्नो वैकतरोऽवश्यं भवति तत्र विच्छिन्नतामादायात्रोदाहृत इत्याशयः । उदा-रतां व्याचष्टे । विषये इति । लब्धवृत्तिर्लब्धस्वाभाविकवृत्तिरित्यर्थः । तेन तनुव्यावृत्तिः । ननु प्रसुप्तविच्छिन्नयोः कथं क्लेशत्वं दुःखाजनकत्वा-दित्याशङ्क्याह । सर्व एवैतदिति । क्लेशविषयत्वं क्लेशजननयोग्यत्वं ना-तिक्रामन्ति उदाराद्यवस्थायां प्रसुप्तादिरूपस्य धर्मिणो दुःखदत्वादित्यर्थः । नन्वेवं सर्वासामेव क्लेशव्यक्तीनां कालभेदाच्चानुरूप्ये कथं प्रसुप्तादिरूपेण क्लेशानां विभाग इत्याशङ्कते । कस्तर्हीति । परिहरति । उच्यतइति । प्रसुप्तादिरूपेण चतुर्णां क्लेशानामेकत्वमिति सत्यमेतत् । तथापि अवस्था

भिर्विशिष्टानामेव क्लेशानां विच्छिन्नादित्वं विवक्षितं यथैकस्यैव पुरुषस्य बालकतरुणवृद्धादिरूपो विभाग इत्यर्थः । उक्ताया उदारावस्थायाः कारणं प्रदर्शयति हानाय । यथैवेति । स्वव्यञ्जकेन विषयध्यानेनाञ्जनेनाभिव्यक्त उदारो भवति क्लेश, अतो मुमुक्षुणा प्रतिपक्षभावनावद्विषयसङ्गत्यागोऽपि कार्य इत्याशयः । निमित्तकारणेऽपि क्षेत्रशब्दो येन गुणेनात्र गौणस्तमाह । सर्व एवेति । ननु रागादीनां ज्ञानत्वाभावात् कथमविद्याविशेषत्वमित्याशयेन पृच्छति । कस्मादिति । उत्तरं, सर्वेष्विति । सर्वेष्वेव स्वेतरक्लेशेष्वविद्यैव व्यापिका भवति तत्र हेतुर्यदिति विषयीक्रियते । अनुशेरते अनुगता भवन्ति, शेषं सुगमं, तथा च वैशेष्यात्तद्वाद इति न्यायेनाविद्याप्राचुर्यात् अविद्यामिश्रितेषु सर्वक्लेशेष्वविद्याभेदवत्त्वमुपपन्नं यथा सुवर्णादिषु पार्थिवांशमिश्रितेषु तेजोवैशेष्यात्तेजोभेदत्वमिति भावः । अविद्यैव मूलं दुःखबीजम् इत्युक्तमिदानीं पञ्च क्लेशान् पञ्चभिः सूत्रैः क्रमेण लक्षयति ।

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥

अनित्यादिचतुष्टये क्रमेण नित्यादिबुद्धिरविद्येत्यर्थः । अविद्याचतुष्टयं क्रमेण व्याचष्टे उदाहरणानि च दर्शयति । अनित्यइति । अनित्यत्वमसत्त्वं कालनिष्ठाभावप्रतियोगित्वमिति यावत् । तस्यैव स्वरूपाख्यानं कार्यइति । नित्यत्वं च सत्त्वम् । तदुक्तं गारुडे ।

अनात्मन्यात्मविज्ञानमसतः सत्स्वरूपता ।
सुखाभावे तथा सौख्यं माया विद्याविनाशिनी ॥

इति । भगवद्गीतायां च ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥

इति । असतः प्रागभावप्रतियोगिनोऽभावो विनाशित्वं नास्ति सतश्चानादिभावस्य अभावो विनाशो नास्तीत्यर्थः। अविनाशि तु तद्विद्धीत्याद्युत्तरवाक्यात्,अत्राभावप्रतियोगित्वरूपानित्यत्वमेवासत्त्वमुक्तमिति। इमामे-

वासति सद्बुद्धिरूपामविद्यामादाय प्रपञ्च आविद्यक इति श्रुतिस्मृतिडिण्डिमः । तथा प्रपञ्चज्ञानस्यासति सदाकारकत्वात् भ्रमत्वमपि शुक्तिरजतादिज्ञानवद्गीयते इति । उक्ताविद्यायाःप्रपञ्चमेवोदाहरणमाचार्याण्याह । ध्रुवेति । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुत्यापि प्रपञ्चस्येदृशमेवासत्यत्वमुक्तम् । परमबीभत्सइति । कुत्सितेऽपवित्रइति यावत् । कायस्याशुचित्वे श्रुतिं प्रमाणयति । उक्तं चेति । स्थानं मूत्राद्युपहतं मातुरुदरं बीजशुक्रशोणिते उपष्टम्भो मातृभुक्ताचादिरसः । निस्यन्दो नवद्वारैरोमकूपादिभिश्च क्षरणं, निधनं मरणम् । एवमन्येऽशुद्धिहेतवः स्पष्टाः । तथा स्नानादिभिः शौचाधानादपि सदा स्वतोऽशुचित्वमनुमीयतइत्याह । आधेयशौचत्वादिति । ननु भवतु शरीरमशुचि तथापि तत्र शुचिख्यातौ किं प्रमाणमित्याकाङ्क्षायामाह । अशुचौ शुचिख्यातिर्दृश्यतेइति । नवीनशशाङ्कवदियं कन्या कमनीया मधुनोऽमृतस्य वावयवैरंशैर्निर्मितेव दृश्यते । हावः शृङ्गारजा लीला कस्य स्त्रीकायस्य निकृष्टस्य केन चन्द्रकलादिनातिनिर्मलेनाभिसंबन्धः साधर्म्यम् । नास्त्येव विवक्षितसाधर्म्यमित्यर्थः । उपसंहरति । भवतीति । एतेनेति । एतेनाशुचौ शुचिख्यातिर्व्याख्यानेनऽपुण्ये तप्तशिलारोहणादौ हिंसादौ वा पुण्यप्रत्ययस्तथानर्थे अर्जनरक्षणादिना दुःखबहुलतया अपुरुषार्थे धनादावर्थप्रत्ययोप्यविद्यात्वेन व्याख्यातः । शुच्यशुचिशब्दयोर्योगोत्कृष्टसाधनासाधनमात्रोपलक्षकत्वादित्यर्थः । भाष्योक्तमप्यविद्याद्वयमन्यासामपि संसारहेतूनामविद्यानामुपलक्षकमतो न न्यूनता । तत्रेत्युत्तरग्रन्थेन तृतीयामविद्यां व्याख्यातुमादौ वक्ष्यमाणसूत्रमुखेन तस्योदाहरणं प्रदर्शयति । तथा दुःखइति । तथेत्यस्य तत्र सुखख्यातिरविद्येत्यनेनान्वयः । वक्ष्यतीति । अर्थादिति शेषः । तत्रेति । जगद्रूपदुःखइत्यर्थः । अत्र च दुःखमेव सर्वं विवेकिन इत्यागामिसूत्रे दुःखसाधनतया दुःखबहुलतया च दुःखत्ववचनात् दुःखसाधने दुःखनिवृत्त्याख्यतात्त्विकसुखसाधनत्वबुद्धिः तथा दुःखप्रचुरे सुखप्रचुरत्वबुद्धिश्च तृतीया अविद्येति बोध्यम् । अन्यथा केवलदुःखे दुःखभ्रमस्यासिद्धिरिति,चतुर्थीमविद्यां व्याचष्टे । तथानात्मनीति । उदाहरणं बाह्येति । बाह्यस्य देहस्य उपकरणेषु पुत्रादिषु अहंबुद्धितया

विषयभोगावच्छेदकतया अन्तःकरणस्योपकरणे शरीरेऽहंबुद्धिस्तथा भोग्यतया साक्षात्पुरुषस्योपकरणेन्तःकरणे ऽहंबुद्धिरित्यर्थः । इमामेव चतुर्थीमविद्यामादाय प्रपञ्चोविद्याकार्यइत्युच्यते । अहं कर्त्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वाराऽखिलजगद्धेतुत्वात् इति । अत्र पञ्चशिखाचार्यसंवादमाह । तथेति । यथा मयोक्तं तथा । अत्र चतुर्थे अविद्याविषये पञ्चशिखेनाप्येतदुक्तमित्यर्थः । व्यक्ताव्यक्तं व्याकृताव्याकृतं स्थूलसूक्ष्मरूपं बुद्धिसत्त्वमात्मतया गृहीत्वा तस्य सत्त्वस्य संपत्तिं सत्यसंकल्पादिकं शुभवासनादृष्टादिकं चानुनन्दत्यात्मसंपदं मन्वानस्तथा तस्य विपत्तिम् इच्छाविघातादिरूपादिकं चानुशोचत्यात्मविपत्तिं मन्वान एवंविधो यःस सर्वोऽविद्वानित्येतदुक्तमित्यन्वयः । ननु शुक्तिरजतादिभ्रमरूपाणामविद्यानां कथमत्र गणना न कृतेत्याशङ्क्याह । एषेति । पशोरिव चत्वारि पदानि पादा अंशा अस्या इति चतुष्पदा एवंभूतैवैषा संसारस्य मूलं भवन्तीत्यर्थः । तथा च संसाराहेतुतया नान्यासामत्र गणनमिति भावः । ननु विग्रहतोऽविद्याशब्दस्य विद्याभिन्नत्वं विद्याशून्यत्वमत्युत्तमविद्यात्वं वा अर्थः स्यात् न तु विपरीतख्यातिरित्याशङ्क्याह । तस्याश्चेति । तस्याश्चाविद्यायाः सतत्त्वं तत्त्वं वस्त्वेव विज्ञेयं न तु अभावोऽमित्रागोस्पदादिशब्दवदित्यर्थः । दृष्टान्तं विभजते । यथा नामित्रइति । न मित्राभाव इति । अत्राभावशब्देन संसर्गान्योन्याभावौ ग्राह्यौ न मित्रमात्रमिति । नास्ति मित्रं यस्मादिति व्युत्पत्त्या केवलमित्रमित्यर्थः । किं तु तद्विरुद्धो मित्रविरुद्ध इत्यर्थः । तथा च निरूढलक्षणेति भावः । किं तु देश एवेति । विपुलो देशविशेषो ऽगोष्पद इति परिभाषितः । प्रमाणं विद्या । ज्ञानान्तरमिति । एतेनाविद्याशब्दस्य ज्ञानविशेषे रूढत्वावधारणादाधुनिकवेदान्तिनामन्यार्थत्वोपवर्णनं स्वातन्त्र्यमात्रमवधेयम् । क्वाचित्कस्तु त्रिगुणात्मकप्रकृतावविद्याशब्दो गौणः । अविद्याधर्मकत्वात् अविद्ययात्मन्यारोपितत्वात् जडत्वाच्च । विद्याविद्याशब्दयोर्ज्ञानाज्ञानवाचित्वेनात्मानात्मवाचित्वादिति । अस्मिंश्च दर्शने सांख्यानामिवाविवेको नाविद्याशब्दार्थः किं

तु वैशेषिकादिवत् विशिष्टज्ञानमेवेति सूत्रभाष्याभ्यामवगन्तव्यम् । अविद्यानन्तरं तत्कार्यमस्मितां लक्षयति ।

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥

दृग् द्रष्टा दृश्यतेऽनेनेति दर्शनं करणं बुद्धिः प्रलयादौ फलोपधानं नास्तीति शक्तिग्रहणं तयोरेकात्मतेव स्वरूपतो धर्मतश्चात्यन्तमेकाकारो विपर्ययोऽस्मिताऽहंकार इत्यर्थः । एतदेव शब्दान्तरेणाह । पुरुष इत्यादिना । एकस्वरूपापत्तिरिव एकाकारो यः क्लेशः सोऽस्मितोच्यत इत्यन्वयः । अविद्यातश्चास्मिताया अयं भेदो यद्बुद्ध्यादावादौ या सामान्यतोऽहं[1]बुद्धिरथ च भेदाभेदेनाप्युपपद्यते अत्यन्ताभेदाग्रहणात् सैवाविद्या न तु तदुत्तरकालीनः पुरुषे बुद्ध्यादिगुणदोषारोप ईश्वरोऽहमहं भोगीत्यादिरूपः न वा दूरस्थवनस्पत्योरिव तयोरत्यन्तमेकताभ्रमः । अस्मिता तु एतदुभयरूपिणीति, भ्रमत्वाविशेषेपि कार्यकारणरूपावान्तरविशेषादविद्याऽस्मितयोर्भेदेनोपन्यास इति । अन्ययोश्च कार्यकारणभावो लोकानुसारेणावधार्यते, लोके ह्यादौ कलत्रपुत्रभृत्यादिषु आत्मभावो जायते पश्चादेव तु तेषां सुखदुःखादिकमात्मन्यभिमन्यते तथादौ जलादिषु उपाधिषु प्रतिबिम्बादिरूपेण चन्द्राद्यारोपो भवति पश्चादेव तु चन्द्रादिषु तद्द्वारा कम्पमालिन्याद्यारोपो भवतीति । अयं च कार्यकारणभावः पूर्वसूत्रभाष्यस्थेन पञ्चशिखवाक्येनाप्युक्तः । तथा सांख्यकारिकायामपि पाठक्रमेणोक्तः ।

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः ॥

इति । ननु बुद्धिपुरुषयोरन्योन्यारोपेणैवाहं दुःखीत्यादिव्यवहारोपपत्तावेकात्मतारोपे किं प्रमाणं, परस्परारोपश्च व्यक्त्योरभेदग्रहं विनापि रक्तस्फटिकयोरिव संभवत्येव अग्निलोहयोर्दूरस्थवनस्पत्योश्च पुनः स्फुटैक्यप्रत्ययदर्शनादभेदारोपः सिध्यति । आत्मबुद्ध्योस्तु परमसूक्ष्मतया नास्ति स्फुटमे-

१ अहंबुद्धिरथ च भेदेनाप्युपपद्यत इति पाठान्तरं पुस्तकान्तरे ।

क्यप्रत्यक्षमिति तत्राह । भोक्तृभोग्यशक्त्योरिति । अत्यन्तविविक्तयोरित्यत्र हेतुरत्यन्तासंकीर्णयोरत्यन्तविप्रकृष्टधर्मकयोरिति भोग्यभोक्तृत्वे एव स्फुटे वैधर्म्ये अन्यथा कर्मकर्तृविरोधादिति भावः । एवंभूतयोर्भोक्तृभोग्ययोः पुरुषबुद्ध्योरविभागप्राप्ताविव सत्यामेकत्वप्रत्यये सत्येव भोगः संभवति भेदग्रहे तु तयोः कैवल्यमन्योन्यवियोग एव भवति परवैराग्यादित्यतः कथं भोगः स्यादित्यर्थः । तथा च भोगान्यथानुपपत्तिरेकात्मतारोपे प्रमाणमित्याशयः । अत एव सत्त्वपुरुषयोः प्रत्ययाविशेषो भोग इति सूत्रकृद्वदिष्यति । यो ऽहं सुखी सो ऽहं तदनुभवितेत्येकाकारतैव च बुद्ध्यात्मप्रत्यययोरविशेषाद्यस्मिन्सत्येव च लोके भोगव्यवहार इति । जीवन्मुक्तस्य च गौण एव भोगः सुखादिसाक्षात्कारमात्ररूप इति वक्ष्यामः । इदं चोपलक्षणं सुखदुःखज्ञानाद्याश्रयोहम् एक एवेति प्रत्ययोप्येकात्मतारोपे प्रमाणं बोध्यम् । अस्मितायाः स्वरूपे अविद्याजन्यत्वे च पञ्चशिखाचार्यवाक्यं प्रमाणयति । तथा चोक्तमिति । परमार्थतो बुद्धितः परं पृथक्कृतं पुरुषं बुद्धेराकारशीलविद्यादिभिर्विविक्तमसंस्पृष्टमपश्यचविवेकी जनस्तत्र बुद्ध्याकारादिषु आत्मबुद्धिमस्मितां कुर्यात् । शान्ताद्याकारोस्मि जाग्रदादिशीलोस्मि विद्यादिमानस्मि इत्येवंरूपां मोहेन पूर्वसूत्रोक्ताविद्ययेत्यर्थः । अस्मितां लक्षयित्वा तत्कार्यं रागं लक्षयति ।

### सुखानुशयी रागः ॥ ७ ॥

सुखानुशयी सुखतत्साधनमात्रविषयको यः क्लेशः स राग इत्यर्थः । मात्रपदाद्विद्यादिव्यावृत्तिर्जीवन्मुक्तेच्छाव्यक्ते राग एव न भवति संसाराहेतुत्वादिति न तस्यामतिव्याप्तिः । रागस्य कारणं वदन्निममेवार्थं भाष्यकारोप्याह । सुखाभिज्ञस्येति । सुखाभिज्ञस्य वा सुखानुस्मृतिपूर्वको वेत्यर्थः । तेन सुखसाक्षात्कारतः सुखस्मृतितश्च रागो भवतीति रागस्य कारणमुक्तम् । पर्याये रागशब्दार्थमवधारयति । गर्ध इत्यादिना । रागप्रतिघातोत्थतया रागस्य पश्चाद्द्वेषं लक्षयति ।

### दुःखानुशयी द्वेषः ॥ ८ ॥

सर्वं पूर्ववत् । प्रतिहन्त्युद्वेजयतीति प्रतिघः । अत्र जिघांसेति वचनाद्द्वेषोपीच्छाविशेष एवेत्याशयः । द्वेषमूलकतया द्वेषस्य पश्चादभिनिवेशं लक्षयति ।

## स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ ९ ॥

स्वरसेन संस्कारमात्रेण वहतीति स्वरसवाही । अपिशब्दसमुच्चितमविद्वांसं तथेति तच्छब्दः परामृशति । रूढः प्रसिद्धः, तथा च यथा अविद्वज्जनस्य तथा विदुषोऽपि स्वरसवाहित्वहेतुना यः क्लेशोऽस्ति प्रसिद्धः सोऽभिनिवेश इत्यर्थः । अविद्यादयस्तु विदुषि न सन्तीति न तेष्वतिव्याप्तिः । नन्वेवं कथं पूर्वोक्तमविद्याव्याप्तत्वमभिनिवेशस्य घटताम् । अविद्यानाशेऽप्यभिनिवेशसत्त्वादिति चेन्न । संस्कारहेतुतावच्छेदकरूपेणैव विपर्ययव्याप्तत्वस्य विवक्षितत्वात् संस्कारहेतुत्वं मरणत्रासातिरिक्तभयत्वेनैव फलबलादिति । अयं च क्लेशो भयाख्य इति वक्ष्यति भाष्यकारः । अभिनिवेशस्यात्यन्तदुरन्तत्वप्रतिपादनाय विद्वदपरिहार्यत्वमुखेन लक्षणं कृतं भवसामान्यमेव तु अभिनिवेशो रागादिवदिह विवक्षित इति । तत्रादौ भाष्यकारोऽभिनिवेशस्य स्वरूपमाह । सर्वस्येति । सर्वस्य विदुषोऽविदुषश्चेयमात्मन्याशीः प्रार्थना इच्छाविशेषः सदैव भवति । तामेवाह । मान भूवम् इति । माहमभावी भूवं भूयास जीव्यासमित्येवंरूपेत्यर्थः । इयमाशीरेव त्रासो भयमित्युच्यतइति भावः । विदुषोऽप्यपरिहार्यत्वमुपपादयितुं यथोक्तमभिनिवेशस्य कारणमवधारयति । न चेति । अननुभूतो मरणस्य धर्मो दुःखातिशयो येन तस्येयमाशीर्न संभवति धनादिनाशजन्यदुःखज्ञस्यैव धनादिषु तादृशाशीर्दर्शनात् । धनं मे मा नश्यतु सदैव भूयादिति । अत एव तयाशिषा पूर्वजन्मनि मरणदुःखानुभवस्तत्कारणतया प्रतीयते अनुमीयत इत्यर्थः । एतेन जीवस्यानादित्वमपि प्रसङ्गात्साधितं, जन्म तु कूटस्थचिन्मात्रस्य तैस्तैर्देहेन्द्रियबुद्धिवेदनादिभिराद्यः संबन्ध इति । यत्तु न जायते न म्रियतइत्यादिवाक्यं तदात्मन उत्पत्तिविनाशावेतद्देहादेरिव प्रतिषेधतीति बोध्यम् । ननु इह जन्मन्येवानुमानादिना मरणदुःखानुभवेनाभि-

निवेशाख्यं भयं भवतु किमर्थं पूर्वजन्मानुभवः कल्प्यतइत्याशङ्कामपाकरोति । स चार्यमिति । स चायमुक्ताशीरूपोभिनिवेशः स्वरसवाही स्वाभाविकोत्यन्तमूढस्य कृमेरपि मरणदुःखप्रत्ययादिभिरसंभाव्यो मरणत्रास उच्छेदद्रष्टात्मक उच्छेददृष्टिकार्यः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति । पूर्वजन्मनि मरणदुःखानुभवमनुमापयति । यदनुभवोत्थेन मरणत्रासेन जनितया वासनयेह जन्ममरणत्रासो भवतीति शेषः । मरणभयस्य द्वेषरूपस्यापि संस्कारजनकत्वं निरोधस्यैवागत्या कल्प्यतइति । अभिनिवेशं तत्कारणं च व्याख्याय सूत्रवाक्यार्थं व्याचष्टे । यथा चेत्यादिना रूढइत्यन्तेन । विज्ञातेति । विज्ञातः संप्रज्ञातयोगेन साक्षात्कृतः प्रपञ्चस्य पूर्वान्तोपरान्तश्चाद्यन्तौ येन स तथा तस्य तत्त्वज्ञस्येत्यर्थः । कुशलाकुशलयोरिति वक्ष्यमाणत्वात् इति । एतेनाद्यन्तयोरवशिष्यमाणमेव वस्तु प्रपञ्चस्य तत्त्वं तच्च परं ब्रह्म विकारस्तु मध्ये वाचारम्भणमात्रमित्यस्माकमपि सिद्धान्त इति सिद्धम् । तथा चोक्तं मोक्षधर्मेपि ।

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखामाहुर्दुःखमन्तरमेतयोः ॥

इति । सुखामाहुरित्यार्षम् । सुखायाहुरिति पाठस्तु साधुः । ननु तत्त्वज्ञस्याविद्यास्मिताद्यभावात्कथं यथोक्ताशीरित्याशयेनाशङ्कते । कस्मादिति । संस्कारमात्रजन्यत्वेन परिहरति । समाना हीति । इयं वासना एतदाशीर्हेतुवासनेत्यर्थः । इयं च बलवत्तरा वासना चित्तेन सह नश्यतएव ज्ञानेन न दह्यतइत्येतत् अविद्यादिसंस्कारेभ्यो विशेषः । ननु कुशलस्यात्मनित्यत्वनिश्चयात्कथं मानभूवं भूयासमितीच्छा स्यात् सिद्धत्वज्ञानस्य प्रतिबन्धकत्वादिति चेन्न । विशेषदर्शने सत्यपीदृगिच्छादृष्ट्या फलबलेन तादृशसंस्कारस्य उत्तेजकत्वात् । एतेन यदाधुनिकवेदान्तिब्रुवा आहुरात्मा सुखस्वरूपः निरुपधियथोक्तेच्छाविषयत्वात् बाह्यसुखवदित्यनुमानेनात्मनः सुखरूपता सिध्यतीति, तदप्यपास्तम् । पूर्वपूर्वजन्मसु यस्त्रासो जातस्तेन तदा जातायास्तद्वासनातोनिरुपधीच्छासंभवात् । अन्यथाप्यात्मत्वेनैव प्रि-

यत्नकल्पनौचित्याच्चेति । क्रियायोगः क्लेशतनूकरणार्थ इत्युक्तं तत्र क्लेश तनूकरणस्य फलं वक्तुमाह ।

## ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

प्रसवाद्विरुद्धः प्रतिप्रसवः प्रलयः । तथा च प्रतिप्रसवेन चित्तस्य प्रलयेन सूक्ष्मा दग्धबीजभावाः क्लेशा हेया इत्यर्थः । तदेव भाष्यकार आह । ते पञ्चेति । पञ्चमध्ये अभिनिवेशो मरणातिरिक्त एव योगिनो दग्धबीजकल्पो भवतीत्युक्तमेव । ननु तनूकरणं दग्धबीजभावः प्रलयश्चेत्येव क्रमः । अतो दग्धबीजभावप्रतिपादकमुत्तरसूत्रमेवादावुचितमिति चेन्न । मुख्यफलतया प्रलयस्यात्रादौ निर्वचनात् तत्र द्वाराकाङ्क्षया च दग्धबीजभावस्य पश्चाद्वक्ष्यमाणत्वादिति । ननु क्लेशतद्वासनयोर्वक्ष्यमाणप्रसंख्यानेनैव नाशोऽस्तु किमर्थं तत्र चित्तनाशोऽपेक्ष्यतइति चेन्न । ज्ञानदग्धैस्तथा क्लेशैरित्यादिशास्त्रप्रामाण्येन ज्ञानाग्निदाहस्यैव सिद्धेर्न तु तन्नाशस्य । युक्तिश्चात्र प्रागेवोक्ता कारणेषु कार्यशक्तेर्यावद्द्रव्यभावित्वदर्शनमिति । तथा च योगाग्निना व्युत्थानसंस्कारदाहवञ्ज्ञानाग्निनापि क्लेशसंस्कारयोर्दाह एव भवति न तु तन्नाशः । नन्वेवमपि क्लेशसंस्कारदाहेनैव संसारात्यन्तोच्छेदसंभवे संस्कारसहितचित्तनाशः किमिति मोक्षायापेक्ष्यतइति चेन्नैवम् । योगिसंकल्पेन दृष्टबीजादिवत् दग्धबीजशक्तिकादपि कदाचित्पुनरङ्कुरोत्पत्त्यापत्तेरिति । तनूकरणस्य द्वारं दग्धबीजभावं प्रतिपादयन् सूत्रं पूरयित्वा पठति । स्थितानामिति । तद्वृत्तय इति । समासान्तर्गततच्छब्दस्यार्थैः क्लेशैः सहान्वयः । स्थितानामित्यस्य विवरणं बीजभावोपगतानामिति । एतच्च सूत्रेण सह व्याख्यास्यामः ।

## ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

क्लेशानामिति । स्थितानां बीजभावोपगतानां क्लेशानां या वृत्तयः स्थूला अभिव्यक्तावस्थाः ताः प्रथमं क्रियायोगेनाल्पीकृताः सत्यः प्रसंख्यानेन समाधिजप्रज्ञारूपेण ध्यानेन ध्यानकार्येण हातव्याः प्रतिबद्धोत्पत्तिकाः कर्त्तव्याः यावत्सूक्ष्मीकृताः, अस्यैव विवरणं दावदग्धबीजकल्पा भवन्ती

त्यर्थः । ततश्च प्रतिप्रसवहेया इति पूर्वसूत्रेणैवोक्तमिति । तनूकरणादिषु त्रिषु सुकरत्वदुष्करत्वरूपं विशेषं दृष्टान्तेनाह । यथा वस्त्राणामिति । निर्धूयते वाताहत्या निराक्रियते । यत्नेन पाषाणप्रहारादिना, उपायेन क्षारसंयोगादिना । अत्रेदं दृष्टान्ते साधनत्रयं दार्ष्टान्तिकेपि साधनत्रित्वाभिप्रायेणोक्तम् । स्वल्पेति । स्वल्प क्रियायोगः प्रतिपक्षस्तनुता हेतुर्यासां स्थूलानामतनूकृतानां तास्तथा महानतिदुष्करः प्रसंख्यानाग्निरसंप्रज्ञातयोगसाध्यचित्तनाशश्च प्रतिपक्षौ दाहकनाशकौ यासामिति महाप्रतिपक्षा इत्यर्थः । अनेन सूत्रेण जीवन्मुक्तानां वृत्तिरूपोऽप्यविद्यालेशस्तिष्ठति इत्यभ्युपगम आधुनिकानां वेदान्तिब्रुवाणामपि सिद्धान्त इति निर्णयम् । तथा सति स्थूलानामपि प्रतिप्रसवहेयत्वापत्तेरिति । इदानीं क्लेशाः किमर्थं हेया इत्याकाङ्क्षायां क्लेशानां परंपरया दुःखनिदानत्वं सूत्रत्रयेण वक्तव्यं तत्रादौ क्लेशानां दुःखोत्पादने साक्षाद्द्वारमाह ।

## क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥

दृष्टादृष्टजन्मनी वर्त्तमानभविष्यती वेदनं भोगः कर्माशयो धर्माधर्मौ तौ च दृष्टजन्मभोग्यौ वा अदृष्टजन्मभोग्यौ वा उभयथैव क्लेशमूलकौ । क्लेशे सत्येव भवत इत्यर्थः । 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमान् लोकान्न हन्ति न निबध्यते' इत्यादिवाक्यशतेभ्य इति भावः । यथा वाधिकारिविशेषतया क्लेशानां धर्मादिजनकत्वं शौचादिवत् एवं तज्जनककर्मादिषु रागादिरूपैः प्रवर्त्तनादपीत्यपि बोध्यम् । क्लेशमूलकत्वं विवृणोति । तत्रेति । तत्र चित्ते लोभादिरूपदोषत्रयसत्त्वे एव पुण्यपापरूपौ कर्माशयौ भवत इत्यर्थः । रागद्वेषमोहाख्यानां च दोषाणामदृष्टनियामकत्वं कौर्मे दर्शितम् । 'रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः । कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः । तद्वशादेव सर्वेषां सर्वदेहसमुद्भव' इति । दृष्टजन्मवेदनीयमुदाहरति । तत्र तीव्रेति । सद्य इति । इह जन्मनीत्यर्थः । परिपच्यते कालेन परमेश्वरेण वा फलोपहितीक्रियते । अदृष्टजन्मवेदनीयं पुण्यमुदाहृत्य दृष्टजन्मवेदनीयं पापमुदाहरति । तथेति ।

य इत्यनुषज्यते। यथाक्रममुक्तयोः पुण्यपापयोर्दृष्टान्तावाह । यथा नन्दीश्वर इति। अदृष्टजन्मवेदनीयं च कर्म प्रसिद्धत्वान्नोदाहृतम् । प्रसङ्गतो व्यतिरेकावप्युदाहरति । तत्र नारकाणामिति । नारकिपुरुषाणां धर्माद्यनुत्पत्तेः । ननु स्वर्गिणामपि कर्म नोत्पद्यतइति कथं नारकिवचनमात्रमिति चेत् न । स्वर्गिणां भारतवर्षमागत्य लीलामानुषविग्रहेण प्रयागादौ कर्मानुष्ठानस्य तत्फलस्य च श्रवणादिति। शेषं सुगमम्। न केवलं कर्माशयेष्वेव क्लेशः कारणमपि तु तत्फलेष्वपि अतस्तान्यपि दुःखोत्पादने क्लेशानां साक्षात्परंपरया द्वाराणीत्याह ।

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

क्लेशरूपे कर्माशयस्य मूले सत्येव कर्माशयस्य विपाकः फलं भवति क्लेशाश्च वासनारूपा एव जन्मादिविपाककारणम् । विपाकस्य स्वरूपमाह। जात्यायुर्भोगा इति । जातिर्जन्म आयुर्जीवनकालः भोगः सुखदुःखात्मकशब्दादिवृत्तिरित्यर्थः। न तु सुखादिसाक्षात्कार एवात्र भोगः, ते ह्लादपरितापफला इत्युत्तरसूत्रे तस्य विपाकजन्यतावचनात् इति । स्यादेतत् । क्लेशानां कर्मसहकारित्वे प्रमाणं नास्ति । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेत्यादिवाक्येभ्यो हि ज्ञानस्य क्लेशक्षयहेतुत्ववत् कर्मक्षयहेतुत्वमपि सिद्धम्। अतः क्लेशाभावकाले कर्माभावस्यावश्यकत्वात्तत एव विपाकाभावः स्यादिति । अत्रोच्यते । विविधयोनिहेतुशुभाशुभकर्मसु सत्सु यत्र रागादिरन्तकाले उद्बुद्धस्तिष्ठति मरणोत्तरं तामेव योनिं जीवः प्राप्नोति नेतरामित्यन्वयव्यतिरेकाभ्यां कर्मवद्रागादिदोषोपि विपाकहेतुः। तथा च श्रुतिः "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्ये"ति। "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे"ति च। तथा गीतापि। 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वि'ति । न्यायसूत्रं च । 'वीतरागजन्मादर्शनात्' । नरकादिष्वपि रागाद्यनुसारेणैव विपाको भवति । निषिद्धस्त्र्यादिसक्तानामेव तप्तलोहमयनारीसमालिङ्गनादिफलश्रवणात्, अतः क्लेशोपि स्वातन्त्र्येण विपाकारम्भे हेतुः, ज्ञानोत्तरं

आरब्धविपाकः समाप्यत एव न त्वारभ्यत इति न तत्र क्लेशापेक्षेति । अपि चात्रैव सूत्रे भाष्यकृता कर्माशयस्यापि प्रसंख्यानदग्धबीजभावस्य वक्तव्यतया कर्माशयस्य दाह एव ज्ञानेन क्रियते न तु नाश इत्यवधार्यते । स च क्लेशाख्यसहकार्युच्छेद एव । ज्ञानस्य हि व्यापारद्वयं क्लेशाख्यहेतूच्छेदेन कर्मानुत्पादः प्राचीनकर्मणां दाहश्च न तु कर्मनाशः प्रारब्धकर्मणोपि नाशप्रसङ्गात् । न च प्रारब्धातिरिक्तकर्मत्वेन ज्ञाननाश्यता कल्प्येति वाच्यम् । लाघवेन क्लेशस्यैव विपाकारम्भहेतुत्वकल्पनौचित्यात् । प्रारब्धफलकस्य कर्मणो बीजशक्तिनाशेपि फलं समाप्यत एव बीजदाहेप्युत्पन्नाङ्कुरवदिति । अत एव ज्ञानाग्निदग्धकर्माणां तमाहुः पण्डितं बुधाः । योगाग्निदग्धकर्मचयोचिरादिति गीताविष्णुपुराणयोर्ज्ञानयोगाभ्यां कर्मणो दाह एव श्रूयते न तु नाश इति । तदेकवाक्यतया च क्षीयन्ते चास्य कर्माणीत्यादिवाक्यान्यपि दाहपराण्येव । तथा तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति ब्रह्मसूत्रेपि विनाशशब्दो निष्फलतार्थक एव मन्तव्यः । कर्माशयनाशस्तु ज्ञानवासनानाशवत् चित्तनाशादेव भवति धर्मिनाशस्य धर्मनाशहेतुतायाः सामान्यत एव क्लृप्तत्वादिति । तस्माज्ज्ञानेन क्लेशाख्यहेतुदाहात् कर्मानुत्पादवत् प्राचीनकर्मविपाकानारम्भोपि भवति क्लेशाख्यदृष्टसहकार्यभावात् । अतो ज्ञानात् क्लेशाख्यसहकार्युच्छेद एव कर्मदाह इति सर्वं सुस्थम् । तदेतत्सर्वमभिप्रेत्य भाष्यकारः सूत्रमिदं व्याचष्टे । सत्सु क्लेशेष्विति । विपाकारम्भीति । आरम्भशब्दाज्जीवन्मुक्तस्यारब्धविपाकेषु न क्लेशाः कारणमित्युक्तं तस्य ह्यारब्ध एव विपाकः कर्मणा समाप्यत इति । एतेन जीवन्मुक्तस्य भोगार्थमविद्यालेशकल्पनमज्ञानामुपेक्षणीयम् । आरब्धविपाकक्लेशानामहेतुत्वादिति । क्लेशानां कर्माशयसहकारित्वं ज्ञानादग्धकर्माशयस्यैव विपाकारम्भहेतुत्वं च दृष्टान्तेन प्रतिपादयति । यथा तुषेति । क्लेशावनद्ध इति । ज्ञानादग्धबीजभाव इत्यपि बोध्यम् । दृष्टान्तानुसारात् नप्रसंख्यानदग्धबीजभावो वेत्युत्तरवाक्याच्च । नापनीतक्लेश इति । सविपाकगोचरक्लेशशून्य इत्यर्थः । अतो न प्रसंख्यानदग्धबीजभावो वेत्यस्य क्लेशसामान्याभावका-

लीनः कर्माशयो ऽसंकीर्णोदाहरणमिति । जात्यायुर्भोगा इति व्याचष्टे । स च विपाक इति । कर्मणो जन्मकारणत्वे कं चन विशेषमवधारयितुमाह । तत्रेदं विचार्यतइति । तत्र जन्मलक्षणविपाके, अस्य च विचारस्य प्रयोजनं स्वयमेव वक्ष्यति । तत्र चत्वारो विकल्पाः कर्मैकत्वपक्षं ध्रुवं कृत्वा जन्मैकत्वानेकत्वरूपं प्रथमं विकल्पद्वयं कर्मानेकत्वं च ध्रुवं कृत्वा जन्मानेकत्वैकत्वरूपमपरं विकल्पद्वयमिति । आक्षिपतीति । फलदानार्थमुत्पादयतीत्यर्थः । किमनेकमिति । अनेकं कर्म मिलित्वा अनेकं जन्म करोतीत्यर्थः । आद्यविकल्पे तु न मिलनमुक्तमिति ततो विशेषः । तत्राद्यं विकल्पमपाकरोति । न तावदेकमिति । पृच्छति । कस्मादिति । उत्तरम् । अनादीति । प्रचितस्य संचितस्य अवशिष्टस्य अभुक्तस्य । अविशिष्टस्येतिपाठे अन्योन्यमभुक्तत्वेनाविशिष्टस्येत्यर्थः । सांप्रतिकस्यैहिकस्य, फलक्रमानियमादनाश्वास इति यथोक्तानामनन्तकर्मणां मध्ये किं कर्म प्रथमं फलं दास्यति किं वा पश्चादितिफलक्रमे नियमो नास्ति अतो लोकानां पुण्यानुष्ठाने फलानाश्वासः स्यात् । भाव्यनन्तकालमध्ये भाविपापादिनानुष्ठीयमानकर्मणो विनाशसंभवात् झटिति भोगकामनयैव कर्मानुष्ठानाच्चेत्यर्थः । द्वितीयं विकल्पं निराकरोति । न चैकमिति । अनेकजन्मसु किंचित्कृत्वा फलदानायानेकजन्मनः कारणमेकैकं कर्मेत्यपि न भवतीत्यर्थः । अत्र हेतुं पृच्छति । कस्मादिति । उत्तरम्, अनेकेष्विति । अनेकेषु जन्मसु क्रियमाणं कर्मैकैकं प्रत्येकमेवानेकस्यासंख्यजन्मनः कारणम् अतोवशिष्टस्य तदितरस्य तद्विरुद्धफलस्य कर्मण इति यावदिति । तृतीयं विकल्पं निराकरोति । न चानेकं कर्मेति । पृच्छति । कस्मादिति । उत्तरम्, तदनेकमिति । तथा चेति । प्रथमपक्षोक्तदोषस्यानाश्वासस्य प्रसङ्ग इत्यर्थः । तदेवं पक्षत्रये दूषिते चतुर्थपक्षं सिद्धान्तयति । तस्मादिति । तस्माज्जन्मारभ्यामरणपर्यन्तकाले विहितनिषिद्धैर्यो धर्माधर्मसमूहो गुणप्रधानभावापन्न उत्पादितः स मरणकालआरब्धकर्मभोगसमाप्त्या लब्धावसरः सचेकप्रयत्नेन मिलित्वा स्वफलदानार्थं मरणं प्रसाध्य संमूर्च्छितः प्रवृद्धवेग एकमेव जन्म गुणप्रधान-

भावापन्नः स्वफलयोग्यं करोति नानेकमित्यर्थः । मरणं च लिङ्गदेहस्य स्थूलदेहादुत्क्रमणं न तु नाशो गमनश्रुतेः, नाशस्य भोगाहेतुतया कर्माजन्यत्वस्वाभाविकत्वयोर्भाष्ये वक्ष्यमाणत्वाच्च । ननु केवलजन्मना किं प्रयोजनं तत्राह । तच्च जन्मेति । आयुषोऽपि न स्वतः पुरुषार्थत्वमत आह । तस्मिन्नायुषीति । असाविति । जन्महेतुरित्यर्थः । अन्यो हि द्व्येकमात्रविपाको भवतीति वक्ष्यति । औत्सर्गिकमुपसंहरति । अत इति । एको भवोऽस्मिन्कार्यतयास्तीति एकभविकः कर्माशयसमूहः । पूर्वाचार्यैरुक्त इत्यर्थः । ऐकभविक इति पाठे त्वेकभविकं कर्म तज्जन्यादृष्टं चैकभविकमित्यर्थः । नन्वेवं स्वर्गिनारकिणां कथं पुनर्जन्मादि स्यात् स्वर्गादिशरीरे धर्माद्यनुत्पत्तेः प्राचीनसर्वकर्मणां च तत्रैव समापनादिति । चेत्, न । स्वर्गादिजनककर्मणामेव ब्राह्मणस्थावरादियोनिलाभपर्यन्तफलश्रवणात् शास्त्रानुक्तकालविशेषस्यैव फलस्यैकभविकत्वनियमादिति । त्रिविपाकं कर्मोक्त्वा एकद्विविपाके कर्मणी प्राह । दृष्टजन्मेति । नन्दीश्वरवन्नहुषवच्चेति दृष्टान्तद्वयं पूर्वापन्यासक्रमेणोक्तम् अत्र तु व्युत्क्रमेण योजनीयं प्रतिज्ञाक्रमेणोदाहरणौचित्यात् । नन्दीश्वरस्य ह्यष्टवर्षायुर्मनुष्यजन्मनः पुण्यविशेषेणायुर्भोगरूपं विपाकद्वयं देवसंबन्ध्युत्पन्नं नहुषस्य चेन्द्रत्वसंपादककर्मणैव दीर्घायुष्ट्वस्य लाभात् पापविशेषेण केवलं सर्पभोगरूप एक एव विपाक उत्पन्न इति । तत्र च नन्दीश्वरनहुषयोर्मनुष्यशरीरस्यैव वार्द्धकादिवद्देवसर्परूपपरिणामान्तरात् न जन्मान्तरमपूर्वदेहानुत्पादादिति । नन्वेवं कर्माशयवज्ज्ञानवासनाप्येकभविक्येव स्यात् तथा च तासामनादित्वं चाशिषो नित्यत्वादित्यागामिसूत्रे वासनानामनादित्ववचनं नोपपद्यतेत्याशङ्कां परिहरति । क्लेशकर्मेति । क्लेशकर्मणोर्विपाकस्य योनुभवश्चित्तवृत्तिनिवहो ज्ञानरूपस्तैर्निर्व्यादितामिर्ज्ञानरूपवासनाभिरनादिकालेषु संमूर्छितमुपचितं पुष्टमिति यावत् । अत एव विविधरूपाभिस्ताभिः पटवत् सर्वतश्चित्रितमिव चित्तं ग्रन्थिभिरायतं मत्स्यजालमिव वर्त्तते इत्यत एता वासना अनेकभवपूर्विकाः स्वीक्रियन्ते अन्यथा मनुष्ययोन्यनन्तरं देवतिर्यग्योनिभोगानुपपत्तेः मनुष्यजन्मनि तद्वास-

नानुपपत्तेः । एवं भववासनानां च मनुष्यजन्मनैव क्षयादित्यर्थः । अत्र वासनानां जीवमत्स्यबन्धकचित्तजालग्रथितत्वेन रूपणात् । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया इत्यादिश्रुतावपि हृदयग्रन्थिर्वासनैव न त्वाधुनिककल्पिताहंकारादिरिति सिद्धम् । कर्माशयाख्याद्धर्मोधर्मरूपात्संस्काराद्वासनानां वैलक्षण्यमाह । ये संस्कारा इति । ताश्चानादिकालीना इत्युपसंहारः । औत्सर्गिकमेकभविकत्वं क्वचिदपवदितुं भूमिकां रचयति । यस्त्वसाविति । नियतः स्वाभाविको विघ्नशून्यः तादृशो विपाको यस्य स तथा । स चावन्ध्यानन्यशेषः कर्मान्तरानभिभूतश्च कर्माशयस्तद्विपरीतश्चानियतविपाक इत्यर्थः । अयं चार्थो ऽनियतविपाकत्रैविध्यभाष्ये व्यक्तीभविष्यति । तत्रादृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियम इति । एकभविकत्वनियम इत्यर्थः । न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य चेति, सुगमम् । दृष्टजन्मवेदनीयस्य भवाहेतुत्वेनैकभविकत्वाभावः स्पष्ट एवेत्यतो ऽनियतविपाकस्यैवैकभविकत्वनियमाभावे हेतुं पृच्छति । कस्मादिति । उत्तरं, यो ह्यदृष्टेति । दृष्टजन्मवेदनीयस्यैकभविकत्वशङ्का नास्तीत्याशयेनैवाह । दृष्टजन्मवेदनीयस्येति । स्वरूपाख्यानमात्रं न तु दृष्टजन्मवेदनीयस्यानियतविपाकत्वं नास्तीत्यादिः कश्चिदाशयः संभवति प्रयोजनाभावात् । यो हि अदृष्टजन्मवेदनयोग्यो नियतविपाकभिन्नः स त्रिविध इत्यर्थः । यथाश्रुते वक्ष्यमाणस्याविपक्वनष्टस्य संग्रहानुपपत्तेः । तिसृष्वेकां गतिमाह । कृतस्येति । अपरिपक्वस्यादत्तफलकस्य विनाश इत्यर्थः । तथा च तस्य नास्त्येकभविकत्वमित्याशयः । द्वितीयामाह । प्रधानेति । प्रधानकर्मणा यागादिना सहैव तदङ्गानां पशुहिंसादीनां स्वफलदानाय च फलप्राप्तिः प्रधानकर्मण्युपगमनं, यथा धान्यबीजैः सहोत्पन्नानां तृणबीजानां तैः सहैव कुसूलमध्यस्थापितानां धान्यबीजेन सहैव वपनप्राप्तिः न स्वातन्त्र्येण तद्वत् परोपसर्जनतयानुष्ठितत्वात् न स्वातन्त्र्येण फलदानमिति । तथा च प्रधानकर्मातिशयस्य यदा बलवत्तरकर्मान्तरेणाभिभवस्तदा तदुपसर्जनस्यापि नैकभविकत्वमित्याशयः । तृतीयां गतिमाह । नियतविपाकेति । तत्र प्रधानं नाङ्ग

किंतु बलवत्तरम् । नियतविपाकेन प्रधानकर्मणा स्वाविरुद्धफलदेनाभिभूतस्य प्रतिबद्धस्य चिरमवस्थानं द्वित्रिचतुरादिजन्मसु प्रसुप्ततयावस्थानमित्यर्थः । तथा च तस्य नैकभविकत्वमित्याशयः । एतास्वाद्यामुदाहरति । तत्र कृतस्येति । शुक्लः कर्माशयः धर्मः कृष्णश्चाधर्मः तयोराद्येनोत्तरस्य नाशे श्रुतिमुदाहरति । यत्रेदमिति । पुण्यपापरूपे द्वे कर्मणी पुरुषैर्वेदितव्ये अवधारयितव्ये । द्वेद्वेइति वीप्सा पुरुषभेदात् कर्मभेदमभिप्रेत्योक्ता । यतः पुण्यकृतः पुण्यनिर्मित एको मुख्यो राशिः समूहस्य समूहिकार्यत्वात् पापकस्य पापराशेरपहन्ति चोरस्य निहन्तीतिवत् कर्मणि षष्ठी तस्मात्सुकृतानि कर्माणि कर्त्तुमिच्छस्व तच्च कर्म इह लोकएव ते तुभ्यं कवयो वेदयन्ते प्रतिपादयन्ते न तु लोकान्तरइति श्रुत्यर्थः । इच्छस्वेति छान्दसत्वादात्मनेपदम् । द्वितीयां गतिमुदाहरति । प्रधानेति । यत्र यस्मिन्विषये पञ्चशिखाचार्येणेदं वक्ष्यमाणमुक्तं तदेव प्रधानकर्मण्याधाय गमनमित्यन्वयः । स्यात्स्वल्पइत्यादिवाक्यस्यायमर्थः । हिंसादिजन्यपापेन यागाद्यपूर्वस्य स्वल्प एव संकरः स्यात्सोपि सपरिहारः स्वल्पेनैव प्रायश्चित्तेन परिहर्त्तुं शक्यते यदि च प्रमादतः प्रायश्चित्तं न क्रियते सप्रत्यवमर्षः । बहुसुखमध्ये अन्यद्दुःखं मर्षणयोग्यं भोजननान्तरीयकदुःखवत् । अतः कुशलस्य कर्मणोपकर्षाय हेयत्वाय नालं न पर्याप्तम् । संकर इति । शेषं करिष्यतीत्यन्तं पञ्चशिखवाक्यं सुगमम् । तृतीयां गतिमुदाहरति । नियतेति । उत्कटत्वरूपं बलवत्त्वमेव प्रधानत्वम् । नन्वेवं कर्मविशेषस्य चिरमवस्थाने सति पूर्वोक्तसर्वकर्मणामेकदैव प्रापणादभिव्यक्तिः कथमुपपद्यतइत्याशयेन शङ्कते । कथमिति । सिद्धान्तमाह । अदृष्टेति । कर्मणः कर्मसामान्यस्य समानमेकम् । न त्वदृष्टेति । अदृष्टजन्मवेदनीयस्येति प्रसङ्गादुक्तम् । अत्रानियतविपाकस्यवेति वाशब्दः क्वचित्तिष्ठति स वाशब्दोप्यर्थः । गतित्रयमुपसंहरति । यत्त्विति । उपासीत प्रतीक्षेत विपाकं विपाकारम्भकं स्वाविरुद्धकर्मान्तरमिति शेषः । उपासनस्यावधिमाह । यावदिति । अस्य समानमविरुद्धं कर्माभिव्यक्तौ निमित्तं यावन्नैतत्फलोन्मुखीकरोतीत्यर्थः । 'यदन्यजन्मकृतं पापं मया सप्तसु जन्मसु ।

तन्मे रोगं च शोकं च माकरोहंतिसप्तमी'त्यादिवाक्यानि। तथा कर्मगतदु-र्विज्ञानत्ववचनामि चैतादृशकर्मविषयाण्येवेत्याह। तद्विपाकस्येति। अभि-भूतकर्मविपाकस्यैव कुत्र कदा केन निमित्तविशेषेण भविष्यतीत्यवधारयि-तुमशक्यत्वादियमभिभूतकर्मगतिश्चित्रा अद्भुतरूपा दुर्विज्ञाना वेत्यर्थः। नन्वेवमेकभविकत्वं हतमित्याशङ्क्याह। न चोत्सर्गस्येति। निवृत्तिः हति-रित्यर्थः। क्व चिदपवादेप्येकभविकत्वमौत्सर्गिकमेवानुमन्यतेऽस्माभिरि-त्यर्थः। न चैवमप्यपवादाशङ्कयाऽनाश्वासतादवस्थ्यम्। अपवादस्य स्वानु-ष्ठानमान्द्यनिमित्तकतया तद्वित्त्वैव शक्यपरिहारत्वादिति। यच्चाधुनि-कवेदादिभिरेकभविकमतं व्यभिचारेण दूषितं तदज्ञानादेव औत्सर्गिता-मात्रस्य भाष्यकृतोक्तत्वादिति सर्वं सुस्थम्।

( शेषमग्रे )

काशीस्थराजकीयप्रधानपाठशालायां { सांख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री। ज्योतिषशास्त्राध्यापकः केशवशास्त्री च।

## ॥ अथ चित्सुखी ॥

### ॥ तत्र द्वितीयपरिच्छेदावशेषः ॥

*(Continued from page 438. Vol. V.)*

नापि तृतीयः तस्याप्यनिरुक्तेः।

तथाहि प्रवृत्तिर्नाम पुंसः समीहा चेष्टा[1], तस्याः फलेनोदका-दिनाभिसंबन्धः प्रवृत्तिसामर्थ्यम्[2], तेनोदकादिविज्ञानस्यार्थाव्यभिचारित्वम-वगम्यत इति स्थितिः, तच्चेदं प्रवृत्तिसामर्थ्यं लिङ्गत्वादवगतं सदव्यभि-चारित्वं बोधयतीति वाच्यम्, तथा सति किं ज्ञानमात्रावगतं सत् तद-व्यभिचारितां विज्ञानस्यावगमयेदुताव्यभिचारिज्ञानावगतम्।

नाद्यः, भ्रान्तिस्वप्नादिज्ञानेनानैकान्त्यात्।

१ समीहेत्यस्यैव विवरणं चेष्टेति।

२ अत्र प्रवृत्तिसामर्थ्यं समर्थप्रवृत्तिजनकत्वमभिमतम्, इतरथा व्यधिकरणं स्यात्।

नापि द्वितीयः, परस्पराश्रयत्वात् ।

किंचायमन्वयव्यतिरेकी हेतुः केवलव्यतिरेकी वा ।

नाद्यः, सर्वज्ञानानामव्यभिचारित्वे विप्रतिपन्नं प्रति सपक्षासंभवात् ।

अस्तु तर्हि द्वितीयः, तथा चाचार्यवाचस्पतेस्तात्पर्यटीकायां प्रयोगः, "विवादाध्यासितं ज्ञानमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वात्, यदि पुनरेवं नाभविष्यन्न समर्थां प्रवृत्तिमकरिष्यद्यथा प्रमाणाभास" इति, मैवम्, हेतोर्विरुद्धत्वात्, दृश्यते हि मणिप्रभायां मणिबुद्ध्या प्रवर्तमानस्य मणिप्राप्तेः प्रवृत्तिसामर्थ्यम्, न चाव्यभिचारित्वम्, उक्तं हि "मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः । मिथ्याज्ञानाविशेषेऽपि विशेषार्थक्रियां प्रति" ॥ इति ।

कश्चायं फलाभिसंबन्धः, ज्ञानप्रतिभासितार्थस्य प्राप्तिरुत तज्जातीयस्य ।

वृषभमहिषपरिवर्तमानादिना क्रियाविभागन्यायेन विज्ञानावभासितसलिलावयविनो विनाशेन ज्ञानस्य फलाभिसंबन्धाभावप्रसङ्गात् ।

न द्वितीयः, ग्रहताराादिविज्ञाने तस्य तज्जातीयस्य वा प्राप्त्यभावात् ।

नापि चतुर्थः ।

अन्यदप्यनुमानान्तरमुत प्रत्यक्षम् ।

नाद्यः, लिङ्गस्याव्यभिचरितत्वलक्षणसाध्येन व्याप्तिग्रहणादशायामेवाव्यभिचारस्य गृहीतत्वे पुनरनुमानानुपयोगात्, अगृहीतत्वे वानुमानस्याप्रवृत्तेः ।

न द्वितीयः, ज्ञानग्राहकेणैव मानसप्रत्यक्षेण तस्यार्थाव्यभिचारित्वग्रहणेऽभ्यासदशायामिवानभ्यासदशायामपि संशयानुदयप्रसङ्गात् ।

किंचेदमव्यभिचारित्वं नाम विज्ञानस्य किं प्रमाणत्वापरपर्याया जातिरुतोपाधिः ।

न तावज्जातिः, जातिसंकरप्रसङ्गात्, तथाहि सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति वदद्भिरिदं रजतमिति विभ्रमज्ञान-

मिदमंशे प्रमाणमप्रमाणं च रजतांशेऽभ्युपगम्यते परीक्षकैस्तथान्योन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः सामान्ययोः समावेशो जातिसंकर उच्यते इत्युक्तन्यायेन स्मृतौ प्रमात्वपरिहारेणैवाप्रमात्वस्य वृत्तेरप्रमात्वपरिहारेण च प्रत्यक्षादौ प्रमात्ववृत्तेरेकस्यां विभ्रमव्यक्तावुभयसमावेशे कथं न जातिसंकरः स्यात्, उपाधिश्चाबाधितत्वाविसंवादादिः प्रागुक्तप्रकारेणै[1]वापाकरणीयः ।

अस्तु वा यथाकथंचिदविचारितरमणीयमव्यभिचारित्वम्, तथापीश्वरज्ञानेऽव्याप्तिः, तस्य नित्यत्वादेवेन्द्रियसंनिकर्षाजन्यत्वात् ।

जन्यप्रत्यक्षलक्षणमिति चेत्, तथाप्यनुमितावतिव्याप्तिः, मनोलक्षणेन्द्रियस्यात्मलक्षणेनार्थेन संनिकर्षादनुमितेर्जायमानत्वात् ।

संप्रयुक्तेऽर्थे इति विशेषणान्नातिव्याप्तिरिति चेत्, न, युक्तावस्थायामुपजायमानपरमाणुविषययोगिप्रत्यक्षेऽव्याप्तेः ।

अयोगिप्रत्यक्षलक्षणमिति चेत्, न, प्रत्यभिज्ञाने तत्तांशेऽव्याप्तेः ।

तत्रापि संयुक्तविशेषणतालक्षणः संनिकर्षोऽस्तीति चेत् मैवम्, अयमग्निमान् पर्वत इत्यनुमानेऽतिव्याप्तेः, तत्रापि संयुक्तविशेषणतालक्षणसंनिकर्षस्य तत्तांश इव सद्भावात् ।

लिङ्गाद्यजन्यत्वे सतीति विशेषणाददोष इति चेत्, न, इन्द्रियार्थे[2]संनिकर्षपदवैयर्थ्यप्रसङ्गात् ।

तेना[3]प्यतद्व्यावृत्तिमुखेन लिङ्गाद्यजन्यत्वमेवोच्यत इति चेत्, न, यत्किंचिदपेक्षया सर्वस्यापि लिङ्गत्वसंभवेन लक्षणस्यासंभवित्वप्रसङ्गात् ।

"पारोक्ष्यानधिकरणप्रमा प्रत्यक्षफलं तत्करणं च प्रत्यक्षप्रमाण"मिति सूत्रेण सूत्रितं लक्षणमिति चेत्, न, प्रमात्वपरोक्षत्वयोर्दुर्निरूपत्वेन तदधीननिरूपणस्यापि लक्षणस्य दुर्निरूपत्वात् ।

१ अबाधितत्वं किं सर्वस्य किंवा प्रतिपत्तुः, एवमसंवादित्वमपि किं सर्वेषामुत प्रतिपत्तुरिति कल्पोक्तदूषणेनेत्यर्थः ।

२ लिङ्गाद्यजन्यत्वे सति प्रमितित्वं प्रत्यक्षमित्येतावदेवास्तु लक्षणं व्यभिचाराभावात्, वृथेतरदिति परिहरति, इन्द्रियार्थेति ।

३ नन्विन्द्रियार्थसंनिकर्षोत्पन्नमित्यत्राप्यनिन्द्रियलिङ्गाद्यजन्यत्वं विवक्षितम्, अतो न वैयर्थ्यम्, यदि हि लिङ्गाद्यजन्यत्वमिन्द्रियार्थसंनिकर्षजन्यत्वं चोभयं विवक्ष्येत, स्यात् तदा वैयर्थ्यम्, नत्वेवमिति शङ्कते तेनापीति ।

न च प्रमात्वस्य जातित्वेन निरुक्तिः, भ्रमज्ञाने जातिसंकरस्योक्तत्वात् ।

न तत्रेदमंशादिप्रत्यये प्रमात्वजातिः किंतूपाधिनिबन्धनः प्रमाव्यवहार इति चेत्, न, सर्वप्रमाव्यवहारस्यापि तथात्वोपपत्तौ जातेरपलापापत्तेः ।

न चैवं गोत्वापलापप्रसङ्गः, जातिमन्तरेणोपाधिमात्रनिबन्धनतया गोव्यवहारस्य क्वचिदप्यनङ्गीकारात्, मृद्गवादौ गोव्यवहारो न जातिनिबन्धनो नाप्युपाधिनिबन्धनः किंत्वौपचारिक इति न किंचिद् दुष्यति ।

न च[1] प्रमात्वजातिर्व्यञ्जकमस्ति, तथाहि तत् किमबाधितानुभूतित्वं किं वा यथार्थानुभूतित्वमाहोस्विदव्यभिचार्यनुभूतित्वमविसंवाद्यनुभूतित्वं वा संशयविपर्ययव्यतिरिक्तस्मृतित्वानधिकरणज्ञानत्वं वा· एतद्घटज्ञान[2]वृत्तित्वे सत्येतद्धूमजन्यवह्निज्ञानवृत्तिसंशयावृत्तिजातिमत्त्वं वा ।

न प्रथमः, इदानीं बाधविरहस्यातिप्रसञ्जकत्वात्, कालान्तरे बाधविरहस्य दुरवधारणत्वात्, सर्वपुरुषबाधस्य पुरस्तादेव निरस्तत्वात् ।

न द्वितीयः, यथार्थत्वानिरुक्तेः ।

तत् किमर्थसत्तामात्रविषयत्वमुत यावत्प्रतीयमानार्थसत्त्वमाहोस्विदबाधितार्थवत्त्वम् ।

न तावदर्थसत्तामात्रविषयत्वम्, भ्रमस्यापि प्रमात्वप्रसङ्गात् । नापि

---

१ न चेति, पक्षचतुष्टयेऽनुभूतिग्रहणं स्मृतिव्यावृत्त्यर्थम्, विपर्ययादिव्यावृत्त्यर्थं च विशेषणान्तरम् । संशयाद्विपर्ययाच्च व्यतिरिक्तत्वे सति स्मृतित्वस्याप्यनधिकरणं यज्ज्ञानं तत्त्वमिति पञ्चमः पक्षः ।

२ एतद्घटज्ञानेति, एतच्च घटज्ञानं चेति प्रत्यक्षज्ञानविशेषो विवक्षितः । एतच्च धूमजन्यवह्निज्ञानं चेत्यत्राप्यनुमानज्ञानविशेषः, तयोर्वर्तमानत्वे सति संशयावृत्तिर्या जातिः प्रमात्वं तदधिकरणत्वं प्रमात्वव्यञ्जकमित्यर्थः, अत्र च घटज्ञानवृत्तिजातिमत्त्वमित्युक्ते अनुमेयघटज्ञानवृत्त्यनुमितित्वजातिमत्त्वमनुमितित्वव्यञ्जकमादायार्थान्तरता, तदर्थमेतद्घटज्ञानवृत्तीत्युक्तम्, तथापि प्रत्यक्षत्वजातिमत्त्वं प्रत्यक्षत्वव्यञ्जकमादायार्थान्तरता, तदर्थं धूमजन्यज्ञानवृत्तीत्युक्तम्. तथापि प्रत्यक्षधूमज्ञाने पूर्वोक्तार्थान्तरता, तदर्थं धूमजन्यवह्निज्ञानेत्युक्तम्, तथापि तथाविधस्मृतौ प्रसक्तिः, तदर्थमेतदित्युक्तम्, तथापि प्रत्यक्षधूमज्ञाने पूर्वोक्तार्थान्तरता, तदर्थं संशयावृत्तीत्युक्तम्, संशयावृत्तित्वे सति परोक्षापरोक्षानुभववृत्तिजातिमत्त्वमिति लक्षणार्थः ।

यावत्प्रतीयमानार्थसत्त्वम्, प्रत्यभिज्ञायामतीतानागतानुमानेषु वैधज्ञाने च तदभावेन तेषामप्रमात्वापातात् । अबाधितार्थवत्त्वं तु पुरस्तादेवापहस्तितम् ।

नापि तृतीयः, ज्ञानार्थयोर्विभिन्नदेशकालयोर्धूमाग्न्योरिवाविनाभावाभावात् ।

चतुर्थेऽपि पक्षे ज्ञानान्तरेण तथैवोल्लिख्यमानत्वं विपरीततया वानुल्लिख्यमानत्वमविसंवादित्वम् ।

नाद्यः, रजतं रजतमिति धारावाहिकविभ्रमेष्वपि भावात् ।

न द्वितीयः, असंजातबाधस्यापि भ्रमस्य प्रमात्वापातात् ।

नापि पञ्चमः, संशयविपर्ययव्यतिरिक्तस्मृतित्वानधिकरणज्ञानत्वस्य विभ्रमेऽपि धर्म्यंशे भावात्, अन्यथा सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इत्यभ्युपगतपरित्यागप्रसङ्गात्, संशयविपर्ययस्मृतीनामनिरुक्तेश्च तदतिरिक्तत्वमपि दुर्भणम् ।

तत्र किमनवधारणज्ञानं[1] संशयो विरुद्धोभय[2]कोटिसंस्पर्शिज्ञानं वा-अनिर्धारिततत्त्वविशेषितं[3] वा जिज्ञासाजनकं मिथ्याज्ञानं[4] वा विपर्ययेतरमिथ्याज्ञानं वा संशयत्वजातियोगि वा सर्वथापि न निरूपणपथमवतरति ।

अनिरुक्ते[5]रवधृतेरतिव्याप्तेर्द्वयोरपि ।
अव्याप्तेर्विभ्रमाभेदाज्जातिसांकर्यसक्तितः ॥ १९ ॥

नाद्यः,अवधारणानिरुक्तावनवधारणत्वस्याप्यनिरूपणात्, तथाहि, किं ज्ञानमात्रमवधारणमुतैकाकारप्रतिनियतमाहोस्वित् संशयविरोधिज्ञानं वा, अथवा संशयविरोधिप्रमाणज्ञानं वा ।

---

१ निश्चयव्यावृत्त्यर्थमाद्यं पदम् । अवधारणाभावव्यावृत्त्यै ज्ञानपदम् ।

२ घटपटौ स्थाणुरेवेत्यादिव्यावृत्त्यै विरुद्धोभयग्रहणम् ।

३ अनिर्धारितोभयकोटिसंस्पर्शि ज्ञानमित्यर्थः ।

४ मिथ्याज्ञानमित्युक्ते विपर्ययेऽपि प्रसङ्गः, तदर्थं जिज्ञासाजनकेत्युक्तम्, तावदुक्तौ तर्केऽपि प्रसक्तिः; तदर्थं मिथ्याज्ञानेति ।

५ प्रथमे पक्षेऽवधृतेरनिरुक्त्यानवधृतेरप्यनिरुक्तेरसिद्धिः, तथा द्वितीयतृतीययोरपि पक्षयोरतिव्याप्तिः, चतुर्थे चाव्याप्तिः, पञ्चमे विभ्रमाभेदात्, षष्ठेऽपि जातिसंकरप्रसक्तिरिति योजना ।

आद्ये व्याघातः, ज्ञानं भवति न भवति चेत्युक्तत्वात् ।

द्वितीये चित्रः पटश्चैत्रो मैत्रश्चेत्यादिप्रमाणज्ञानानामपि संशयत्वापातः, एकाकारप्रतिनियमाभावात् ।

नापि तृतीयचतुर्थौ, संशयानिरुक्तौ तद्विरोधस्यानिरुक्तेः, किंचैवं सति संशयविरोधिज्ञानादन्यज्ज्ञानं संशय इत्यापतेत्, तथा चानुत्पन्नसंशयस्य संशयाविरोधितया जायमानं प्रमाणज्ञानमपि संशयः स्यात् ।

नापि द्वितीयः, भेदाभेदशीतोष्णादिविषयप्रमाणज्ञानानां विरुद्धोभयकोटिसंस्पर्शिनां संशयत्वप्रसङ्गात् ।

नापि तृतीयः, निर्धारणानिरुक्तावनिर्धारितत्वस्यैवानिरुक्तेः ।

अनिर्धारितत्वशब्देन कोटिद्वयस्याव्यवस्थितत्वं विवक्षितमिति चेत्, तदेव विविच्यतां किमव्यवस्थितत्व कोटिद्वयस्य स्वरूपमुत धर्मः ।

न प्रथमः, कोटिद्वय[1]स्वरूपनिश्चयस्यापि संशयत्वापत्तेः ।

नापि द्वितीयः, तादृग्धर्म[2]विशिष्टकोटिद्वयग्राहिज्ञानविषयप्रमाया अपि संशयत्वापातात् ।

नापि चतुर्थः, अजिज्ञासोरपि स्थाण्वादौ संशयदर्शनेन लक्षणस्याव्यापित्वात् ।

नापि पञ्चमः, विकल्पासहत्वात्, तथाहि संशयस्य विपर्यासाद्विषयविशेषेण कारणविशेषेण वा जातिविशेषेण वा भेदः स्यात् ।

नाद्यः, विषयविशेषानिरुक्तेः, तथाहि न तावदुभयविधिर्विषयः एतौ स्थाणुपुरुषाविति समुच्चयनिश्चयस्यापि संशयत्वापातात् ।

नाप्युभयनिषेधः, न स्थाणुर्न पुरुष इति प्रत्ययप्रसक्तेः ।

नाप्यन्यतरनिषेधः, तदितरावधारणापत्तेः ।

नाप्युभयविधिनिषेधौ, स्थाणुर्भवति न भवति पुरुषो भवति न भव-

---

१ यदि हि कोटिद्वयस्वरूपमव्यवस्थितं तदा स्थाणुरेवायं पुरुष एवायमिति कोटिद्वयनिश्चयस्यापि संशयत्वापत्तेरतिव्याप्तिरित्याह कोटिद्वयेति ।

२ तादृग्धर्मेति, अव्यवस्थितत्वविशिष्टकोटिद्वयग्राहियज्ज्ञानं तद्विषयप्रमाणमपि परंपरयाव्यवस्थितकोटिविषयज्ञानमित्यतिव्याप्तिरित्यर्थः ।

तीत्युभयविधिनिषेधावधारणप्रसङ्गात्, नित्योऽनित्यो वेत्यत्रैकतरनिषेधस्यान्यतरविधिरूपतयोभयविधिनिषेधयोरसंभवाच्च ।

न द्वितीयः, कारणविशेषानिरुक्तेः ।

स हि सामग्री वा तदेकदेशो वा ।

नाद्यः, अतीन्द्रियत्वेन तस्याः प्रत्यक्षत्वायोगात्, लिङ्गाभावेनानुमानतोऽप्यसिद्धेः ।

न च[1] संशयज्ञानं लिङ्गं तस्येदानीमेव निरूप्यमाणत्वात् ।

नापि द्वितीयः, प्रत्यक्षस्य[2] तदेकदेशस्य साधारणधर्मदर्शनादेश्च स्वविषयतयानुव्यवसायप्रत्यक्षजनकत्वेनातिव्यापकत्वात्, अप्रत्यक्षस्य च तदेकदेशस्य सामग्रीनिरासेन निरस्तत्वात् ।

नापि तृतीयः, जातिसंकरापत्तेः, अयं स्थाणुः पुरुषो वेत्यत्र धर्म्यंशे तस्यैव ज्ञानस्य निश्चितत्वं विशेषांशे विकल्पांशे च संशयत्वमित्येकस्यैव ज्ञानस्य विरुद्धजातिद्वयालिङ्गिनः प्रसङ्गात्, एतेन षष्ठोऽपि पक्षो निरस्तः

तस्मान्न संशयलक्षणनिरुक्तिः ।

नापि विपर्ययस्य[3], तथाहि मिथ्याध्यवसायो विपर्यय इति भूषणकारभाषितं लक्षणं तावदयुक्तं मिथ्यात्वानिर्वचनात्, तत् किमप्रमात्वमुतार्थव्यभिचारित्वमथोपदर्शिता[4]र्थाप्रापकत्वमर्थक्रियान्यूनार्थत्वं वा ।

आद्य[5]कल्पेष्वतिव्याप्तेरव्याप्तेश्चान्त्ययोर्द्वयोः ।
न मिथ्याध्यवसायत्वं विपर्यासस्य लक्षणम् ॥ २० ॥

१ ननु किमिति लिङ्गाभावः, यावता कार्यात् संशयज्ञानात् सामग्र्यं शक्यानुमानमिति तत्राह न चेति ।

२ प्रत्यक्षस्येति, तदा हि तादृशकारणजनितं ज्ञानं संशय इति पर्यवस्येत्, तथा चातिव्याप्तिः, तस्य साधारणधर्मदर्शनादेः स्वविषयानुव्यवसायं प्रत्यपि जनकत्वात्, तस्य च प्रत्यक्षप्रमितित्वेन संशयत्वाभावादित्यर्थः ।

३ नापि विपर्ययस्येति, प्रमाणज्ञानसंशययोर्मिथ्याध्यवसायपदाभ्यां निरासः ।

४ उपदर्शितेति यद्विज्ञानं स्वेन प्रकाशितमर्थं न प्रापयितुं शक्नोति स विपर्यय इति किं विवक्षितमित्यर्थः ।

५ अर्थक्रियेत्यत्रोत्तरार्थशब्दो विषयपरः समासश्च बहुव्रीहिः, सर्वपक्षेषु दूषणानि श्लोकेन संगृह्णाति. आद्येति ।

नाद्यः, अप्रमात्वे सत्यध्यवसायरूपायां स्मृतावतिव्याप्तेः ।

न द्वितीयः, देशतः[1] कालतोऽर्थव्यभिचारिषु प्रमाणज्ञानेष्वपि विपर्ययत्वप्रसङ्गात् ।

न तृतीयः, चन्द्रतारकादिप्रमाणज्ञानेष्वपि प्रसक्तेः, इदं रजतमित्यादिज्ञानेषु चोपदर्शितेदमंशप्रापकत्वादव्याप्तेः ।

नापि चतुर्थः, मिथ्याऽहिदंशप्रतिसूर्यकाद्यनेकार्थानां निधनप्रकाशनाद्यर्थक्रियादर्शनात् ।

न च ज्ञानमेवार्थक्रियाकारि नार्थ इति वाच्यम्, ज्ञानमात्रस्यातद्धेतुत्वेऽतिप्रसङ्गात्, अर्थविशेषितस्य तद्धेतुत्वे चार्थस्यापि तद्धेतुत्वापातात् ।

तदेवं तृतीयचतुर्थयोरव्याप्तिः ।

अतस्मिंस्तदिति प्रत्ययो विपर्यय इत्युद्द्योतकारीयमपि लक्षणमयुक्तम्, अतिव्याप्तेः, भवति हि वल्मीकादौ स्थाणुर्वा पुरुषो वेति संशयः, न स्थाणुर्न पुरुष इत्युभयबाधदर्शनादतस्मिंस्तदिति प्रत्ययः ।

न चासौ विपर्ययः, अतस्मिन्निति च स्वात्यन्ताभावाधिकरणे तदिति प्रत्ययविवक्षायां संयोगविभागशब्दात्मविशेषगुणेषु प्रदेशवृत्तिषु स्वात्यन्ताभावसमानाधिकरणेषु प्रमारूपोऽपि प्रत्ययो विपर्ययः स्यात् ।

एतेन बाध्यं ज्ञानं दुष्टकरणजन्यं वा ज्ञानं विपर्यय इति लक्षणं निरस्तम्, संशयेऽतिव्याप्तेर्दर्शितत्वात्, बाधा[2]निरुक्तेश्च ।

किं विरोधिप्रमाणज्ञानं बाधः किं वा विपर्ययविरोधिप्रमाणज्ञानं विषयापहारो वा ।

आद्ये पूर्वोत्तर[3]प्रमाणज्ञानानां वध्यघातकलक्षणेऽतिव्याप्तिः, द्वितीये परस्पराश्रयता ।

---

१ अतीतादिज्ञानानामर्थव्यभिचारिणामध्यवसायरूपाणां विपर्ययत्वापत्त्यातिव्याप्तेर्द्वितीयपक्षोऽप्यनुपपन्न इत्याह देशत इति ।

२ बाधेति, पूर्वमेव बाध्यत्वं विकल्प्य दूषितं तथाप्यत्र भङ्ग्यन्तरेण दूषणं क्रियत इति ।

३ पूर्वोत्तरेति, यदि हि विरोधिज्ञानमात्रं बाधः, तदा पूर्वज्ञानानामुत्तरज्ञानविनाश्यतया बाध्यत्वात् सर्वज्ञानेषु लक्षणमतिपतेदित्यर्थः ।

न तृतीयः, तथाहि विषयापहारो नाम पूर्वज्ञानोपदर्शितार्थासत्त्वबोधनमात्रमुतासत्त्वप्रमितिरुत यद्देशकालविशिष्टतया यत् प्रतीतं तस्य तत्रैवासत्त्वबोधनम् ।

नाद्यः, नायं देवदत्तो न जीवतीति विभ्रमप्रत्ययेन देवदत्तादिप्रत्ययानां बाधितत्वेनाप्रमात्वप्रसङ्गात् ।

न द्वितीयः, देशान्तरकालान्तरयोस्तदसत्त्वप्रमित्या घटादिज्ञानानामप्रमात्वप्रसङ्गात् ।

नापि तृतीयः,[१] देशकालविषयबाधेष्वव्याप्तेः, देशकालयोर्देशकालान्तराभावात्, यत्तदादि[२]शब्दानां च सर्वविषयत्वे कतिपयविषयत्वे वाव्याप्तिरेव, एतेन[३]फलापहारोऽपि व्याख्यातः, अनुत्पन्नफलस्य बाध्यत्वाङ्गीकाराच्च ।

विपर्ययत्वजातियोगी विपर्यय इत्यपि न लक्षणम्, नेदं रजतमित्यादौ धर्म्यंशे प्रत्यये जातिसंकरप्रसङ्गात्, तस्मान्न विपर्ययस्य लक्षणं पश्यामः । तथा स्मृतेरपि, तथाहि किं प्रमाकरणाजन्यत्वे सति संस्कारजन्यं ज्ञानं स्मृतिरुत दोषाजन्यत्वविशेषितमथवा स्वसमानविषयसंस्कारजन्यं ज्ञानं किं वा प्रमित्यवृत्तिपदजन्यज्ञानवृत्तिजातिमदाहोस्वित् स्मृतित्वजातियोगि ।

आद्ये कल्पेऽधिकव्याप्तेर्द्वयोश्चासंभवित्वतः ।
तुर्येऽतिव्याप्तितश्चान्त्येऽभावाद्युञ्जक्रमानयोः ॥ २१ ॥

नाद्यः, भ्रमस्यापि स्मृतित्वप्रसङ्गात्, तस्यापि प्रमाणाजन्यत्वे सति संस्कारजन्यत्वात् ।

---

१ यदा हि देशकालविषयो भ्रमो जायते न तत्र तद्बाधस्योक्तरूपत्वमित्यव्याप्त्या तृतीयपक्षं दूषयति नापि तृतीय इति ।

२ किंच यद्देशकालेत्यत्र यत्प्रतीतमित्यत्र च तस्य तद्देशकालेत्यत्र यत्तच्छब्दानां सर्वदेशकालसर्ववस्तुपरत्वे सर्वबाधाव्याप्तिः, एकैकेन सर्वाबाधात्, निकृष्टविशेषविवक्षायां च तदितरबाधाव्याप्तिरित्याह यत्तदादीति ।

३ लक्षणान्तरेऽप्युक्तदूषणमतिदिशति,एतेनेति, तत्राप्यभिवदनं प्रवृत्तिरूपार्थानमर्थक्रियेति चतुर्विधफलानामेकैकापहारे सर्वापहारे वाव्याप्तिरित्यर्थः ।

नापि द्वितीयः, असंभवित्वापातात्, संस्कारस्यापि स्वसामग्र्यनुमापकतया प्रमाकरणत्वात् ।

नापि तृतीयः, असंभवित्वादेव, सा मे माता स मे पितेत्यादिस्मृतीनां पूर्वानुभवसंस्काराधिकविषयत्वात्, नहि पूर्वानुभवे स इत्याकारः, अयमिति वर्तमानतयैवानुभवात् ।

न च स इत्याकारः कारणान्तरोपनीतः पदात् पदार्थस्मृतौ हरिहरादिस्मृतौ चाभावादिति वाच्यम्, तत्कारणानिरूपणात्, सोऽयं देवदत्त इति प्रत्यभिज्ञाप्रत्यये तदित्यंशस्य संस्कारानुपनीतत्वे सत्ययमित्याकारस्य च संयोगमात्राधीनतया विशिष्टप्रत्यभिज्ञास्वरूपासिद्धिप्रसङ्गात् ।

अनुमिततत्तायां स इत्यभिलाप इति चेत्, न, संस्कारस्य प्रत्यभिज्ञां प्रत्यकारणत्वप्रसङ्गात्, स इत्यंशेऽनुमानस्यैव सहकारित्वात्, तं घटं स्मरामीत्यनुव्यवसायानुपपत्तेश्च, नहि तत्रानुमानव्यवधानमस्ति, तथा सति स्मरणस्यातीतत्वेनानुव्यवसायविषयत्वानुपपत्तेः, संस्कारस्यासंविद्रूपत्वान्निर्विषयत्वाच्च समानविषयत्वासिद्धिः, न ह्यसंविद्रूपस्य सविषयत्वम्, इच्छादिषु तज्जनकज्ञानविषयेण सविषयत्वोपचारात् ।

तर्हि संस्कारजनकानुभवसमानविषयत्वे सति संस्कारजन्यत्वं लक्षणार्थ इति चेत्, न, तत्तांशे समानविषयतायाः खण्डितत्वात्, गरुडादिसाक्षात्कारे चातिव्याप्तेः, तस्य दीर्घकालनैरन्तर्योपचितसंस्कारविषयत्वात् ।

नापि चतुर्थः, अनाप्तवाक्योत्थविभ्रमप्रत्ययेऽनेकार्थज्ञानादिजन्यसंशये चातिव्याप्तेः ।

नापि पञ्चमः, तज्जातौ व्यञ्जकप्रमाणानिरूपणात्, तदेवं संशयविपर्ययस्मृतीनामनिरुक्तौ तदतिरिक्तत्वविशेषणं दुर्निरूपम् ।

नापि षष्ठः, तथाहि, एतद्घटज्ञानवृत्तित्वे सत्येतद्धूमजन्यवह्निज्ञानवृत्तिसंशयावृत्तिजातिमत्त्वं प्रमात्वमित्यपि न, विकल्पासहत्वात्, तथाहि, किं घटज्ञानवह्निज्ञानशब्दाभ्यां ज्ञानमात्रं विवक्ष्यते किं वा प्रमात्वेन व्यवह्रियमाणमाहोस्विदबाधितप्रमाव्यवहारास्पदम् ।

नाद्यः, विभ्रमज्ञानानामप्येवंभावात् ।

नापि द्वितीयः, उक्तदोषानुषङ्गात्, विभ्रमज्ञानेष्वपि तात्कालिकप्रमात्वव्यवहारदर्शनात् ।

नापि तृतीयः, अबाधितस्य दुर्निरूपतायाः प्रागेवाभिहितत्वात् ।

तदेवं न प्रमात्वस्य निरुक्तिः ।

नापि परोक्षतायाः, तस्या जातित्वे जातिसंकरप्रसङ्गात् ।

तथाहि किं प्रमात्वं परं पारोक्ष्यमपरं विरीतं वा ।

नाद्यः, पारोक्ष्यप्रमाभावप्रसङ्गात्, यत्र यत्र परोक्षत्वजातिर्व्याप्या तत्र तत्र व्यापकं प्रमात्वमस्त्येवेति नियमात् ।

नापि द्वितीयः, तथा सति प्रमात्वं परोक्षतां न व्यभिचरेदिति प्रत्यक्षप्रमाभावप्रसङ्गात् ।

न च विभ्रमेषूपाधिनिबन्धन एव परोक्षत्वव्यवहारः, तथा सति सर्वत्र तन्निबन्धनतयैव तद्व्यवहारोपपत्तौ जातिकल्पनावैयर्थ्यप्रसङ्गात् ।

तदेवमन्योन्यपरिहारेण वर्तमानयोर्मनोगगनवर्तिनोर्मूर्तत्वभूतत्वयोः पृथिव्यादाविवैकत्र समावेशे जातिसंकरः स्यात् ।

न च परोक्षतया जातित्वे व्यञ्जकमस्ति ।

तत् किमिन्द्रियार्थसंनिकर्षाजन्यत्वे सति प्रमात्वमुत लिङ्गादिप्रमाकरणजन्यत्वम् ।

नाद्यः, ईश्वरज्ञानस्यापि परोक्षत्वप्रसङ्गात् ।

नापि द्वितीयः, स्मृतेः परोक्षत्वाभावप्रसङ्गात्, एतेन परोक्षत्वस्योपाधित्वमपि निरस्तम्, व्यञ्जकनिरासेन तयोरुपाधित्वस्यापि निरस्तत्वात् ।

ईश्वर[1]ज्ञानवृत्तित्वे सत्ययोग्यनुव्यवसायातिरिक्तपरमाणुप्रमित्यवृत्तिर्जातिः साक्षात्त्वं तदधिकरणं प्रत्यक्षमित्यपि न । यतः,

---

१ ईश्वरेत्यादि. जातिः साक्षात्कारत्वमित्युक्ते सत्तादावतिव्याप्तिः, तदर्थं प्रमित्यवृत्तीत्युक्तम्, तथा च व्याघातः प्रत्यक्षप्रमितिवृत्तित्वात्, तदर्थं परमाणुप्रमित्यवृत्तीत्युक्तम्, तथाप्यसिद्धिः, परमाणुमहं जानामीत्यनुव्यवसायप्रत्यक्षस्य परमाणुविशेषतया साक्षात्कारित्वस्य परमाणुप्रमितिवृत्तित्वात्; तदर्थमुक्तमनुव्यवसायातिरिक्तेति, तथाप्यनुव्यवसायातिरिक्तयोगिप्रत्यक्षमादायासिद्धिरत उक्तमयोगीति, तथापि घटत्वादावतिव्याप्तिस्तदर्थं ज्ञानवृत्तीत्युक्तम्, तथापि विपर्ययत्वस्मृतित्वादिष्वतिव्याप्तिस्तदर्थमी-

प्रमितेर्दुर्निरूपत्वाद्व्यञ्जकस्यानिरूपणात् ।
साक्षात्त्वं जातिसांकर्यान्न प्रत्यक्षस्य लक्षणम् ॥ २२ ॥

प्रमितेरेवानिरूपणे परमाणुप्रमित्यवृत्तिविशेषणस्य दुर्ज्ञानत्वादिन्द्रियार्थसंनिकर्षजन्यत्वादेश्चाभिव्यञ्जकस्यापास्तत्वात् साक्षात्त्वस्य च प्रमात्वेन परापरभावाभावाज्जातिसंकरप्रसङ्गाच्च नेदमपि प्रत्यक्षलक्षणम् ।

"सत्संप्रयोगे[1] पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्ष"मित्यपि न प्रत्यक्षलक्षणम्, प्रत्यक्षाभासेऽपि सत्त्वात् ।

वृत्तिकारमते तत्सतोर्व्यत्ययेऽपि लक्षणस्याव्याप्तिरतिव्याप्तिर्वा, तथाहि यदाभासविज्ञानं तद्यदि तत्संप्रयोगादेव भवति तत् समीचीनं प्रत्यक्षमिति तदा सूत्रार्थः, तत् किं प्रतिभासमानेनाकारेण कृत्स्नेन संप्रयोगाज्जायमानत्वं विवक्षितमुतैकदेशेनापि ।

नाद्यः, सोऽयं देवदत्त इति प्रत्यभिज्ञायां तत्तांशे संप्रयोगाभावादव्याप्तेः ।

न च तत्रापि तत्तांशे संयुक्तविशेषणतालक्षणः संप्रयोगोऽस्तीति वाच्यम्, षष्ठप्रमाणवादिना तस्य प्रत्यक्षतानङ्गीकारात्, अङ्गीकारे वा निर्घटं भूतलमित्यत्र तथाभूतसंनिकर्षभावादभावस्य प्रत्यक्षतोपपत्तौ षष्ठप्रमाणाभ्युपगमवैयर्थ्यापातात् ।

न द्वितीयः, विभ्रमेष्वपि भावादतिव्याप्तेः, तत्राप्यधिष्ठानसंप्रयोगस्य भावात् ।

अथोच्येत संप्रयोग इत्यत्र समिति विशेषणेन दुष्टेन्द्रियसंप्रयोगजन्यत्वस्य व्यावर्तितत्वाद् दुष्टेन्द्रियसंप्रयोगजन्येषु विभ्रमेषु नातिव्याप्तिः, यथाहुर्भट्टपादाः,

श्वरज्ञानवृत्तीत्युक्तम्, नहि तेषामपरोक्षेश्वरज्ञानवृत्तित्वमित्यर्थः, ईश्वरज्ञानवृत्तित्वे सत्युक्तविधपरमाणुस्मरणरूपज्ञानावृत्तिनि प्रमात्वे प्रसङ्गनिरासाय परमाणुप्रमितीत्युक्तम्, पारोक्ष्यानधिकरणत्वादिरूपोपाधिनिरासाय जातिपदम्, परोक्षज्ञानवृत्तित्वानधिकरणत्वे सतीश्वरज्ञानवृत्तिजातिरिति फलितार्थः ।

१ सता वर्तमानेनार्थेनेन्द्रियाणां संप्रयोगे सति पुरुषस्य यद्बुद्धेर्जन्म तत् प्रत्यक्षमिति लोकसिद्धप्रत्यक्षलक्षणानुवादपरजैमिनीयसूत्रस्यार्थः ।

"सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारोऽर्थेषु कथ्यते ॥
दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात्" ।

इति ।

तदपि न, उक्तोत्तरत्वात्, प्रत्यभिज्ञायां तत्तांशेन तथाभूतसंप्रयोगाभावादव्याप्तेः, इन्द्रियेषु दोषाभावस्य प्रागुक्तन्यायेन[1] दुरवधारणत्वात्, तदेवं प्रत्यक्षलक्षणं प्रत्युक्तम् ।

नाप्यनुमानस्य लक्षणं निरूपयितुं शक्यम्, तथाहि करणपक्षे तृतीयलिङ्गपरामर्शः परामृश्यमानं वा लिङ्गमित्यनुमानमिति नैयायिकाः ।

न तावत् तृतीयलिङ्गपरामर्शोऽनुमितेः करणमव्यापारत्वात्, व्यापारवत एव हि सर्वत्र करणत्वम्, तदिह महानसादौ धूमधूमध्वजयोः प्रथमसंबन्धं गृहीतवतः शिखरिशिखरपरिवर्तितया पुनस्तमेव धूममवलोकयतस्तदनु चानुसंहितव्याप्तेर्योऽयं लिङ्गविषयः परामर्शस्तथा चायं धूमवानिति न तस्य व्यापारान्तरमुपलभामहे येन तस्यानुमितिकरणता स्यात् ।

न च व्याप्तस्य पक्षधर्मतावगमेऽप्यनुमानानुदयस्त्वयाभ्युपगम्यते येन व्यापारान्तरं तत्र कल्प्येत ।

अथानुसंहितव्याप्तिकस्य लिङ्गविषयो निर्विकल्पकप्रत्ययः करणम्, तस्य तथा चायं धूमवानिति सविकल्पकप्रत्ययो व्यापारः, मैवम्, शब्दानुमानाभ्यामवगतलिङ्गेष्वव्याप्तेः, आदावेव सविकल्पकेन तेषां विषयीकरणाच्छब्दानुमानयोर्निर्विकल्पकप्रत्ययाजनकत्वात् ।

अथोच्येत तस्मादयमग्निमानिति निगमनेन तस्मादित्युपनयार्थस्य लिङ्गाधिकरणत्वस्य परामर्शादुपनयार्थस्य पूर्वभाविनस्तृतीयलिङ्गपरामर्शस्य तज्जनकतया तद्व्यापारोपपत्तिरिति, तदपि न, आप्तवाक्यादस्ति धूम इत्यधिगतवतोऽपि विनैव तस्मादिति परामर्शमात्रादस्ति धूमध्वज इति प्रतीतेरुदयात् ।

[1] प्रागुक्तन्यायो दुष्टसामग्रीजन्यत्वावधारणनिरसनन्यायः ।

न चैषा प्रतीतिः प्रत्यक्षा, अनैन्द्रियकत्वात् ।

नापि शाब्दी, आप्तवाक्यस्य धूमसद्भावमात्रपर्यवसितत्वात् ।

नापि स्मृतिः, तत्रापि सद्भावस्य पूर्वमननुभूतत्वात्, अतः परिशेषादनुमितिरेवेत्यास्थेयम्, तत् कथं तत्र व्यापारसंभवः, लिङ्गपरामर्शस्य करणत्वेन प्रमाणेषु ज्ञाताज्ञातकरणविभागश्च न स्यात्, नयनादीनामेव हि करणत्वमज्ञाततया ज्ञाततया तु लिङ्गशब्दादीनामिति विभागः, स चायं विभागः परामर्शस्य करणतायां न सिध्येत् ।

न च परामर्शोऽपि ज्ञाततया करणम्, ज्ञानस्य निलीनस्यैव नयनादिवत् स्वरूपफलजनकताङ्गीकारात्, अन्यथानवस्थाप्रसङ्गात् ।

अथापरामृश्यमानं लिङ्गमनुमितेः करणम्, तदपि न, तत्रासीद्धूम इत्याप्तादुपश्रुत्य वह्निरपि तत्रासीदित्यनुमितावविद्यमानस्य कारणत्वानुपपत्तौ तत्परामर्शस्यैव कारणतायास्तस्यावश्याश्रयणीयत्वात्, एकप्रयोजकतानुरोधेन धूमादेर्वर्तमानदशायामपि तत्परामर्शस्यैव कारणतायाः स्वीकरणीयत्वात् ।

किंच, इदं लिङ्गं यस्य परामर्शः परामृश्यमानं वा लिङ्गं तदनुमितिकरणं व्याप्तिपक्षधर्मतावल्लिङ्गमिति चेत्, केयं व्याप्तिः, किमविनाभावः किं वा स्वाभाविकः संबन्धो निरुपाधिकः संबन्धो वा ।

नाद्यः, विकल्पासहत्वात्, तथाहि,

किं व्यक्त्योरथवा जात्योस्तद्वतो[1]र्वा विशेषयोः ।
व्याप्तिरत्वयेष्यते किं वा साध्यसाधनवत्त्वयोः[2] ॥ २३ ॥
सा न व्यक्त्योस्तदानन्त्यान्न जात्योस्तदसंभवात् ।
न तद्वतोरुक्तदोषान्न चतुर्थोऽनिरूपणात् ॥ २४ ॥

किं धूमधूमकेतनस्वलक्षणयोर्व्याप्तिरुत धूमत्ववह्नित्वजात्योरथ तज्जातीययोराहोस्विद्धूमत्ववह्निमत्त्वयोः ।

१ तद्वतोरिति, जातिविशिष्टव्यक्त्योरित्यर्थः ।

२ साध्यसाधनवत्त्वयोरिति, धूमवत्त्ववह्निमत्त्वयोरित्यर्थः ।

नाद्यः, व्यक्तीनामनन्तत्वात् तत्र संबन्धग्रहणासंभवात्, नह्यसर्वज्ञेन सर्वा व्यक्तयो विशेषतो ज्ञायन्ते ।

अथ व्याप्तिग्रहणसमये सामान्यलक्षणया प्रत्यासत्त्या तास्ता व्यक्तयस्तत्तदिन्द्रियैरवभासन्ते, अन्यथा सर्वोपसंहारवती व्याप्तिरेव नावगतेत्यानुमानिकोपादानादिव्यवहारविरहविरोधप्रसङ्गात्, नहि परिदृश्यमानकदलीफलादेः प्रत्यक्षेण दृष्टमिष्टसाधनत्वं येनैतदुपाददीत, किंनामानुमेयम् ।

न च प्रतिबन्धसिद्धिमन्तरेणानुमानप्रवृत्तिः, न चान्तरेण विशेषप्रतिभासं तन्नियमावगमः, तत् सिद्धं व्याप्तिग्रहणसमय एव सकलविशेषाः प्रतिभासन्ते, तदयुक्तम्, प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सर्वज्ञत्वप्रसङ्गात् ।

ननु प्रमेयतया सर्वं ज्ञायते न तु रूपान्तरेणेति चेत्, मैवम्, रूपान्तरस्यापि प्रमेयत्वाधारतया ग्रहणप्रसङ्गात्, अप्रमेयत्वे च सप्तमरसादिवत् तदसिद्धेः, तेन येन येन रूपेण यद्यदस्ति, तेन तेनाकारेण तत् तत् प्रमेयमिति स्यादेव सर्वज्ञता ।

किंच व्याप्तिसंदर्शनसमय एवाशेषग्रहणे पर्वतनितम्बगोचरोऽपि कृशानुर्गृहीत एवेति पुनर्धूमदर्शने तस्य स्मृतिगोचरतैव स्यान्न त्वनुमेयता ।

नापि द्वितीयः, यद्धूमत्वं यत्र वा धूमत्वं तद्वह्नित्वं तत्र वा वह्नित्वमिति नियमासंभवात्, तयोर्भिन्नत्वाद्भिन्नाधिकरणत्वाच्च ।

नापि तृतीयः, व्यक्तीनामिव तद्गतामप्यनन्तत्वात् संबन्धग्रहणानुपपत्तेः ।

अस्तु तर्हि चतुर्थः, नहि तत्र संबन्धग्रहणानुपपत्तिः, धूमवह्निमत्त्वलक्षणयोरुपाध्योः कतिपयव्यक्तिग्रहणेऽपि गोत्वादिजातीनामिव ग्रहणोपपत्तेरिति चेत्, मैवम्, संभवेऽपि तत्संवेदनस्य तत्समय एव पर्वतनितम्बसंबन्धिनोऽपि वह्निमत्त्वस्य गृहीतत्वात् पुनरनुमानाप्रवृत्तेः, वह्निमत्त्वमात्रमेव धूमवत्त्वव्यापकतया गृहीतं न तु पर्वतगतवह्निमत्त्वमिति चेत्, तत्

वात् साध्यव्यापक उपाधिरिति निर्धारयितुमशक्यं व्यापकत्वमिह साध्य-शब्देन विवक्षितमिति चेत्, न, व्याप्त्यनवगमे व्यापकत्वानिरुक्तेः ।

एतेन साध्यवच्छिष्ठात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वं साधनवच्छिष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वमित्याधुनिकानां वक्रनयोऽपि निराकृतः, साध्यसाधनयोरनिरुक्तेरेव ।

तद्रूपेण संभावितत्वमुभयत्रापि विवक्षितमिति चेत्, मैवम्, तद्रूपस्यानिरुक्तौ तद्रूपेण संभावितत्वस्यापि दुर्भणत्वात् ।

भवतु नाम या काचन व्याप्तिः, तस्या व्याप्तेरनुमितेश्च व्याप्तिरेष्टव्येत्यात्माश्रयः, सत्यामेव व्याप्तावनुमितिभावादसत्यामभावात् ।

किंच तद्व्याप्तिग्राहकप्रमाणम् ।

न प्रत्यक्षमशक्यत्वान्नानुमाप्यनवस्थितेः ।
नागमस्तमृते भावान्नोपमा तत्प्रमेयतः ॥ २५ ॥
नार्थापत्तिरनन्यत्वादनुमाफललोपनात् ।
नाभावो दुर्निरूपत्वान्न तर्कस्तर्कबाधनात् ॥ २६ ॥

न तावत् प्रत्यक्षं व्याप्तिग्राहकं, सर्वव्याप्तिनिष्ठस्यान्वयस्य व्यतिरेकस्य वा सर्वव्यक्तीनामग्रहे ग्रहीतुमशक्यत्वात्, तद्ग्रहे वानुमानस्य वैयर्थ्यात् ।

नाप्यनुमानम्, अनवस्थानात्, अन्तरेण व्याप्तिग्रहमनुमानानुदये तत्तद्व्याप्तिग्राहकानुमानान्तरपरंपराया दुर्वारत्वात् ।

नाप्यागमः, वेदाप्तवचनाकर्णनविधुराणामपि व्याप्तिदृष्टिदृष्टेः ।

नाप्युपमानम्, तस्य सादृश्यमात्रविषयतया व्याप्तिज्ञप्त्यावजागरूकत्वात् ।

नाप्यर्थापत्तिः,तस्या अनुमानानतिरेकात्, अतिरेकेऽपि तयैवानुमानावसेयार्थाधिगतेरनुमानस्यानुदयप्रसङ्गात्, तथाहि व्यापकव्यतिरेकेण व्याप्यस्यानुपपत्तिरिहार्थापत्तिरभिमता, तथा च तयैवानुपपत्त्या लिङ्गिनोऽधिगतौ कृतमनुमानेन ।

नाप्यभावः, एवं हि स प्रमाणयितव्यः, यदि वह्निर्धर्मिव्यतिरेकेण धूमः स्यात् तदा तथोपलम्भस्तदभावाच्चायं तद्व्यतिरेकेणेति, तच्च न ।

तथाहि किं सर्वेषां व्यभिचारानुपलम्भः किं वा स्वस्य[1]वानुपलम्भ उत[2] योग्यानुपलम्भः ।

नाद्यः, सर्वानुपलम्भस्य निश्चेतुमशक्यतया संशयानिवृत्तेः ।

न द्वितीयः, व्यभिचारात्,[3] नहि[4] नगरगतेन स्वेनानुपलब्धमित्येतावतारण्यकोपलब्धगवयादेरपलापसंभवः ।

नापि[5] तृतीयः, सार्वत्रिकयोग्यानुपलब्धेरसंभवात्, उक्तं च[6] लीलावतीकारेण,

"सर्वादृष्टेश्च संदेहात् स्वादृष्टेर्व्यभिचारतः ।
योग्यादृष्टेरसत्त्वाच्च प्रतिबन्धो न सिध्यति" ॥

इति ।

नापि विपक्षबाधकतर्कात्, तर्कस्य व्याप्तिमूलत्वेनानवस्थानात्, अतन्मूलत्वे च मूलशैथिल्येन तर्काभासत्वात् ।

अथ मतं यदि धूमोऽग्निं व्यभिचरेदकारणः स नित्यः स्याच्च स्यादेव वा न तु कदाचित् स्यात् ।

न च[7]विनापि कारणं कार्यं शङ्कितुं शक्यम्,व्याघातात्, तदेव[8] हि कार्यं यत् कारणाधीनस्वात्मलाभम्,अतः कार्यं च कारणरहितं चेति व्याघातः, तदेव चा[9]शङ्कितव्यं यस्मिन्नाशङ्क्यमाने क्रियाव्याघातादयोऽपि नाव-

१ प्रतिपत्तुरित्यर्थः ।

२ स्वानुपलम्भपक्षेऽप्यनुपलम्भमात्रादुत योग्यानुपलम्भादित्याह-उतेति ।

३ व्यभिचारादिति, स्वानुपलम्भमात्रस्यार्थाभावेन नियमाभावादित्यर्थः ।

४ व्यभिचारमेवाह नहीति ।

५ योग्यानुपलब्धिपक्षं दूषयति नापीति ।

६ उक्तं चेति,उपाधिविधूननेन प्रतिबन्धसिद्धिमीश्वरानुमाने समर्थयता कार्यमात्रस्य कारणमात्रेणापि संबन्ध उपाधिविधूननेनेत्युक्त्वा विपक्षबाधात् तत्राव्याप्तिसिद्धिमाशङ्क्य व्याप्त्यसिद्धावुक्तायां सहेतुकत्वकादाचित्कत्वयोर्व्यभिचारानुपलम्भाद्व्याप्तिसिद्धिमाशङ्कितां परिहरतेति शेषः ।

७ नन्वकारणकस्यापि सदातनत्वेन व्यभिचारशङ्कायां किमुत्तरमिति तत्राह न च विनेति ।

८ व्याहतिमेव दर्शयति तदेव हीति ।

९ व्याघातादपि यो न बिभेति तं प्रत्याह तदेव चेति, यदि हि कारणं विना कार्योत्पादस्तदा परप्रत्ययोत्पादनार्थवचनादिसामग्र्युपयोगव्याहतिः सोऽयमित्यत्र क्रियाव्याहतिः, आदिशब्दान्मूकोऽहमिति वचनव्याहतिः स्वभावव्याहतिश्च संगृह्येते ।

तरन्तीति, मैवम्, अस्यापि तर्कस्य व्याप्तिमूलत्वेन तदसिद्धावसिद्धेः, तथाहि यत् कार्यं तत् कारणपूर्वकमिति व्याप्तौ सिद्धायां यदकारणं तन्नित्यं स्यादिति प्रसङ्गप्रसरात् सैवात्रापि न सिद्धा, सर्वकार्यकारणव्यक्तिग्रहणस्याशक्यत्वात्, कतिपय[1]व्यक्तिग्रहणे चादृष्टवज्रस्य[2] पार्थिवत्वलोहलेख्यत्वयोरिव व्याप्तेरनिश्चयात् ।

नन्वेवंभूतोऽपि व्यभिचारो यत्र न दृश्यते, कतिपयव्यक्तिषु सहभावः प्रदृश्यते, न चोपाधिर्निरूप्यते तत्र व्याप्तिर्निश्चीयते, तत्रैवं[3] सत्यन्यत्र व्याप्तिग्रहणमन्यत्र चानुमितिरिति ।

एवं च पण्डकमुद्वाह्य मुग्धायाः पुत्रप्रार्थनमिति वाचस्पतेरुपालम्भोऽप्यनवकाशः, व्याप्तेः सर्वत्रैकत्वात्, तस्याश्च कतिपयव्यक्तिषु गृहीतत्वात्, गृहीतव्याप्तिकलिङ्गसामर्थ्यादेव संदिग्धसाध्यधर्मिणि व्यापकस्यापि प्रतीतिः सिद्धेति चेत्, मैवम्, व्यभिचारादर्शनस्योपाध्यनिरूपणस्य दुर्निरूपत्वात्, सर्वादृष्टेश्च संदेहादिति न्यायस्योभयत्रापि तुल्यत्वात्, उपाधेश्च व्याप्तिनिरूपणमन्तरेण दुर्निरूपत्वस्य दर्शितत्वात् ।

किंच विनापि धूमध्वजं धूमोऽन्यस्मादपि हेतोर्भविष्यतीति शङ्कायाः कः प्रतीकारः ।

अथ मन्यसे विभिन्नसामग्रीजन्यत्वे धूमस्यैकजातीयताप्रतीतिर्न स्यादिति, मैवम्, इन्द्रियत्वगादिजन्यविज्ञानस्येव तृणारणिमणिप्रभवस्याशुशुक्षणेरिव चैकजातीयतोपपत्तेः, तस्मान्न व्याप्तिलक्षणं नापि तद्ग्राहकं प्रमाणमस्तीति सिद्धम् । (शेषमग्रे)

---

१ कतिपयेति, तथाहि विमतं लोहलेख्यं पार्थिवत्वादित्यत्र स्तम्भादिकतिपयव्यक्तौ व्यभिचारादर्शनेऽपि न व्याप्तिनिश्चयः, प्रशिथिलावयवारब्धत्वोपाधिहतत्वात् ।

२ ननु तत्र वज्रमणौ व्यभिचारदर्शनादेव व्याप्तिनिश्चयः, न पुनः सर्वव्यक्त्यपरिज्ञानात्, न चेह तथा व्यभिचारदर्शनमिति तत्राहादृष्टवज्रस्येति, येन हि हीरमणिर्न दृष्टस्तेन यो व्याप्त्यनध्यवसायः स सर्वव्यक्त्यदर्शननिमित्तोऽध्यवसायो न भ्रान्तिमात्रत्वादित्यर्थः ।

३ तत्रैवं सतीति, पण्डकः पण्डः, तत्र यथा वृत्तः पण्डकः पुत्रासमर्थः, समर्थश्च न वृत्तस्तद्वदित्येतावत्ययं दृष्टान्तः ।

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 468. Vol. V.)

४८० मृदादिनिर्मिता पक्वा अग्न्युद्धरणपात्र्या अधस्ताद् ध्रियमाणा उप समीपे यम्यते ध्रियते इति कर्मल्युटा उपयमनीत्युच्यते ॥

४८१ शालामुखीयसकाशादुत्तरवेद्यां प्रणयनार्थं अग्निः उद्ध्रियते यस्यामित्यधिकरणे ल्युटा पात्रीशब्देन समासे अग्न्युद्धरणपात्री-त्युच्यते ॥

४८२ अध्वर्युप्रमुखाः पाशुबन्धिकीं वेदिमनतिक्रामन्त उत्तरेण शनैर्गच्छेयुः । आग्नीध्रः सव्येन लिखितया लेखया होतुः पदं प्रच्छादयन्नेति । सर्वे गत्वोत्तरवेदेः पश्चात्पदमात्रे तिष्ठेयुः । प्रतिप्रस्थाता अध्वर्युगमनकाले पाशुबन्धिक्या वेदेः पश्चान्मार्गेण दक्षिणतो गत्वा द्वयोर्वेद्योर्मध्येन प्रागत्वा प्रदक्षिणमावृत्य प्रत्यङ्मुखस्तिष्ठति । अध्वर्युरन्यहस्ते ऽग्निं दत्वा परिकर्मिहस्तादिन्द्रघोषवतीः प्रोक्षणीर्गृहीत्वा उत्तरवेदिं प्रथमं पुरस्तादारभ्य मध्ये समापयन् इन्द्रघोषस्त्वेत्यादिमन्त्रेण प्रोक्षति । एवं दक्षिणत आरभ्य मनोजवास्त्वेत्यादिमन्त्रेण । पश्चादारभ्य प्रचेतास्त्वेत्यादिमन्त्रेण । उत्तरत आरभ्य विश्वकर्मा त्वेत्यादिमन्त्रेण । अथ वा मध्यादारभ्य प्रागादिदिक्षु समापयन् प्रोक्षति । प्रोक्षणीशेषमुत्तरवेद्या दक्षिणांसस्य दक्षिणतो निनयति । अथ वा पाशुबन्धिक्या वेदेर्दक्षिणांसस्य दक्षिणतः । एतदुत्तरवेदिप्रोक्षणमित्युच्यते ॥

४८३ परिकर्मिहस्तात्पञ्चगृहीतमाज्यमादाय हिरण्यं स्रुङ्मुखे लम्बयित्वा उत्तरवेदिमक्षया व्याघारयति प्रथमं दक्षिणांसादारभ्य मध्ये समापयन् सिंहीरसीत्यादिस्वाहाकारान्तेन मन्त्रेण । सिंहीरसि सुप्रजावनिः स्वाहेति मन्त्रेण उत्तर श्रोणीमारभ्य मध्ये समापयन् व्याघारयति । सिंहीरसि रायस्पोषवनिः स्वाहेति मन्त्रेण दक्षिणश्रोणीमारभ्य मध्ये समापयन् । तथैवोत्तरांसमारभ्य सिंहीरस्यादित्यवनिः स्वाहेति मन्त्रेण । सिंहीरस्यावह देवान् देवयते यजमानाय स्वाहेति मन्त्रेण मध्ये व्याघारयति । सर्वत्र उत्तरवेद्या इदं न ममेति यजमानस्य त्यागः । भूतेभ्यस्त्वेति मन्त्रेण स्रुचमुद्गृह्णाति । एतदुत्तरवेदिव्याघारणमित्युच्यते ॥

४८४ ब्रह्मणो हस्तात्त्रैवदारवान् परिधीन् गृहीत्वा उत्तरनाभिं परिदधाति विश्वायुरसीत्यादिमन्त्रेण मध्यमम् । ध्रुवक्षिदसीत्यादिमन्त्रेण दक्षिणम् । अच्युतक्षिदसीत्यादिमन्त्रेण उत्तरम् । इदमुत्तरवेदिपरिधानमित्युच्यते ॥

४८५ अग्नेर्भस्मासीत्यादिमन्त्रेण गुग्गुलुसुगन्धि तेजनं शुक्लामूर्णास्तुकां चोत्तरनाभ्यां निवपति । निहितानां संभाराणामापारशेषेणाघारणं कृत्वा प्रदक्षिणमावृत्य अग्निं गृहीत्वा उत्तरवेदेः पुरस्तात् प्रत्यङ्मुखः संभारेषु प्रज्वलितमिध्मं यत्र प्रतितिष्ठत्यृचा प्रतिष्ठापयति । अस्मिन् काले प्रतिप्रस्थाता दक्षिणवेदेः पूर्वार्धे शालामुखीयादाहृतमग्निं तूष्णीं प्रतिष्ठापयति । अध्वर्युः प्रणयनीयमिध्मं विस्रस्य परिसमुह्य पर्युक्ष्य परिस्तीर्यज्वलयति । एवं प्रतिप्रस्थाता । आहवनीये प्रणयनीयेध्माधानप्रभृति एतदन्तं कर्म अग्निप्रणयनमित्युच्यते ॥

४८६ अध्वर्युराहवनीये कां चित्समिधमाधाय यजमानान्वारब्धः स्मार्तवत्संस्कृताज्येन अग्निर्यज्ञं नयतु प्रजानन्नित्यादिभिस्तृभि ऋग्भिः स्वाहाकारान्ताभिः स्रुवेण तिस्र आहुतीर्जुहोति । यथा-लिङ्गं यजमानस्य त्यागः । यजमानस्तेनैवाज्येन अग्निरन्नादो ऽन्नपतिरित्यादिभिस्त्रिभिर्यजुर्मन्त्रैः स्वाहान्तैस्तथैव जुहोति । अग्नये ऽन्नादायेदं० वायवे प्राणदइदं आदित्याय भूरिदइदं० इति क्रमेण यजमानस्य त्यागाः । एवं प्रतिप्रस्थाता समिध-माधाय सकृद् गृहीतेनाज्येन तूष्णीमेकामाहुतिमभिजुहोति । अयं प्रणीताग्न्यभिहोम इत्युच्यते ॥

४८७ एतस्मिन् काले ब्रह्मा दक्षिणस्या वेदेर्दक्षिणतो मन्त्रेणोपविश-ति । तस्य पश्चाद्यजमानः । ततो ऽध्वर्युरेव संप्रैषमाह ब्र-ह्मन्नुत्तरौ परिग्राहौ परिग्रहीष्याव इति । उभौ ऋतमसी-त्यादि यजन्तेइत्यन्तं कृत्वा स्फ्यौ तिर्यञ्चौ स्तब्ध्वा तिष्ठतः । ततो ऽध्वर्युरेव संप्रैषमाह प्रोक्षणीरासादयतमिध्माबर्हिषी उप-सादयतꣳस्रुवौ च स्रुचश्च संमृष्ट पत्नीं सन्नह्याज्याभ्यां दध्ना चो-देतमिति । आग्नीध्रः प्रोक्षणीः प्रतिप्रस्थातुर्दक्षिणेन हृत्वा उ-त्तरस्यां वेद्यां स्फ्यस्य वर्त्मनि सादयति । तथा प्रतिप्रस्थाता स्वप्रोक्षणीः सादयति । उभौ स्फ्योपरि किं चित् प्रोक्षणीजलं निनीय यो मा हृदेत्यादि स्फ्यप्रक्षालनान्तं कुरुतः । प्रतिप्र-स्थातुरुत्तरवेदिमग्रेण पाशुबन्धिकीं वेदिमपरेण वा । आग्नीध्रो वैश्वदेववदाज्यदध्नोरासादनं करोति । गमनमार्गः संचर इत्युच्यते ॥

४८८ प्रतिप्रस्थाता दक्षिणवेदिपार्श्वाणि संमृज्य पत्न्यवेक्षणादिभेदेन कृ-त्वा स्ववेद्यामाज्यमासादयति । यजमानो दक्षिणस्यावेदेर्द-

क्षिणतः स्वायतनउपविश्य दक्षिणं प्रतिप्रस्थातुराज्यमवेक्ष्य पाशुबन्धिक्या वेदेर्दक्षिणत उपविश्य उत्तरमध्वर्योराज्यमवेक्षते । अथ वा वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षते । अध्वर्युर्वैश्वदेववदाज्यानि गृह्णाति । प्रतिप्रस्थाता दक्षिणस्यां वेद्यां प्रकृतिवदध्वर्योर्ग्रहणकाले आज्यानि गृह्णाति । अध्वर्योः पृषदाज्यग्रहण्युपस्तरणाभिघारणकाले चतुरुपभृति गृह्णाति । यजमानः उभयं सहानुमन्त्रयते । अनुमन्त्रणमन्त्रेषु त्वा इत्यस्य स्थाने वामित्यस्योहः । हविर्देवानामित्यस्य स्थाने हविषी देवानामिति । अध्वर्योः आपोदेवीरित्यादिपरिधिपरिधानान्तं वैश्वदेववत् । प्रतिप्रस्थातुः प्रकृतिवत् । उभौ प्रस्तरपाणी प्राञ्चावभिसृप्य कार्ष्मर्यमयान् परिधीन् परिधत्तः । यजमानस्य एतदनुमन्त्रणमन्त्रेषु असीत्यस्य स्थाने स्थ इति पदम् प्रथमध्रुवपदस्य ध्रुवाविति । तथा उग्रइत्यस्य उग्राविति । अभिभूरित्यस्य अभिभुवाविति । त्वेत्यस्य वामिति । जातवेदा इत्यस्य जातवेदसाविति । ते इत्यस्य वामिति । अध्वर्युप्रतिप्रस्थात्रोर्विशोयन्त्रेस्थ इत्यादिहविरुद्वासनपर्यन्तं समानम् । हविरुद्वासने उभावाज्यस्थाल्यादीन्यादाय गार्हपत्यस्य पश्चात्प्राङ्मुखावुपविशतः । दक्षिणतः प्रतिप्रस्थाता उत्तरतोऽध्वर्युः । अध्वर्युराग्नेयप्रभृतीनि ऐन्द्राग्नान्तानि हवींषि उद्वासयति । प्रतिप्रस्थाता व्युद्धरणपाच्यां तूष्णीमुपस्तीर्य मारुतीं गार्हपत्ये पुनरधिश्रित्य अभिघार्य उद्वास्य आमिक्षाशेषं स्थाल्यां परिशेषयन् व्युद्धरणपाच्यां प्रतिक्षिप्य तदुपरि मेषीमवधाय तस्या मुखे शमीपर्णानि करीरसक्तून् अतिशिष्टामिक्षास्तोकं चावधाय तदुपरि वाजिनशेषमानीय अभिघार्य यस्तआत्मेत्यादिमन्त्रेणालं

करोति । अध्वर्युरपि मारुतीवद्वारुणीमुद्वासयति । तस्यां मेषमषद्धातीति विशेषः । वारुण्याः शामकाषमवभृथार्थे स्थापयति । आग्नेयादीन्यैन्द्राग्नान्तानि हवींष्यन्तर्वेद्यासादयति । प्रतिप्रस्थाता मारुतीं मेषीमादाय दक्षिणवेद्यामासादयति । अध्वर्युर्वारुणीमेककपालं च स्ववेद्यामासादयति । व्याहृतिमन्त्रः प्रत्यासादनमावर्त्तते । उभौ स्रुचौ ध्रुवयोरवद्यतः । अध्वर्युः प्रतिप्रस्थाता च शालामुखीयस्य पुरस्ताद्वाजिनं तूष्णीमासादयतः । यजमानो दक्षिणस्यां वेद्यामासन्नाभिमन्त्रणं कृत्वा उत्तरस्यामासन्नाभिमन्त्रणं करोति । अध्वर्युरेव वैश्वदेववदग्निमन्थनं करोति । अध्वर्युप्रतिप्रस्थातारौ स्वस्वेध्मात्समिधमादत्तः । अध्वर्युरेव अग्नये समिध्यमानायानुब्रूहि इति संप्रेष्यति । उभौ प्रणवे प्रणवे स्वस्वाग्नौ समिधमाधत्तः । यजमानः अग्निभ्यामिदं० । उच्छुष्माग्नी यजमानायस्तं निशुष्मावभिदासते । अग्नीदेवेद्धौमन्विद्धौमन्द्रजिह्वौ इत्यनुमन्त्रयते । उभयोरपि स्रौवाघारान्तं समानम् । यजमानः मनसी स्थः प्राजापत्ये मनसा भूतेनाविशतमिति स्रौवाघारमनुमन्त्रयते । अध्वर्युराह अग्नीदग्नीश्स्त्रिस्त्रिः संमृड्ढि इति । अग्नीध्रः उत्तरवेदिगतमाहवनीयं संमार्ष्टि । प्रतिप्रस्थाता स्वाग्निपरिधीन् संमृज्य स्वाग्निसंमार्जनमकृत्वा पत्नीं पृच्छति । पत्नि कस्ते जार इति । पत्नीजारं दर्शयति । जाराभावे पाप्मा मे जार इति वदति । प्रतिप्रस्थाता आह तं वरुणो गृह्णातु । अथैषीके शूर्पे करम्भपात्राणि समोप्य पत्न्यै प्रयच्छति । पत्नी शिरसीण्डुं निधाय तस्योपरि शूर्पं निदधाति । प्रतिप्रस्थाता पत्नीं दक्षिणया द्वारोपनिष्क्रम्य दक्षिणेनान्वाहार्यपचनं दक्षिणेन द्वे वेदी परीत्य प्राचीमुदानयन्वाचयति प्रघा-

स्यान् इत्वामहइति गायत्रीमृचम् अध्वर्युरुत्तरमागत्यागत्य दक्षिणस्यावेदेः पुरस्तात्प्रत्यङ्मुखस्तिष्ठति । तस्य दक्षिणतो यजमानस्तस्य दक्षिणतः पत्नी । यजमानः पत्नीहस्तात्करम्भपात्रसहितं शूर्पं गृहीत्वा शिरसि किंचिन्निधाय तस्योपरि शूर्पं निधाय अप्रणवां मोषूण इन्द्रपृत्सु देवेत्यृचं पुरोनुवाक्यां वदति । पत्न्या सह यजमानो यद्ग्रामे यदरण्ये इत्यृचा स्वाहाकारान्तया याज्यया जुहोति । वरुणायेदं न ममेति त्यागो यजमानस्य । शूर्पमप्स्वनुप्रहरति । अथ वा अद्भिरभ्युक्ष्य तेन लौकिकानि कार्याणि कुर्यात् । अध्वर्युः यजमानपत्नीप्रतिप्रस्थातॄन् पृथग्गच्छतोऽनुमन्त्रयते अक्रन् कर्म कर्मकृत इत्यृचा । ततः प्रतिप्रस्थाता दक्षिणमग्निं संमार्ष्टि अग्ने वाजजिदित्यादिमन्त्रेण । आग्नीध्रो वा । उभयोरपि अध्वर्युप्रतिप्रस्थात्रोः भुवनमसीत्यादिज्योतिरङ्क्ष्वामित्यन्तं समानम् । यजमानः जोहवाघारयोः दक्षिणहस्तेन प्रतिप्रस्थातारं दर्भेणाध्वर्युं चान्वारभते । जोहवाघारावनुमन्त्रयते इन्द्रायेदं वाचो स्थ ऐन्द्र्यो सपत्नक्षयण्यो वाचा मेन्द्रियेणाविशतम् । स्फ्यद्वयं गृहीत्वा अध्वर्युरेव प्रवरं प्रवृणीते । घृतवतीशब्दश्रवणानन्तरमध्वर्युप्रतिप्रस्थातारौ स्वस्वस्रुचावादाय अत्याक्रम्य तिष्ठतः । अध्वर्युराश्रावयति आग्नीध्रः प्रत्याश्रावयति । अध्वर्युः प्रेष्यति समिधो यजेति । वषट्कृते उभौ सह स्वाग्नौ जुहुतः । उभयोरपि चतुर्थाष्टमयोः समानयनम् । उपभृदाज्यस्य जुह्वां ग्रहणं समानयनमित्युच्यते ॥

४८६ अध्वर्युरष्टमे सर्वं समानयते । प्रतिप्रस्थाता उपभृति अनुयाजार्थमाज्यं परिशेषयति । याजमानं वैश्वदेववत् । अध्वर्युः

प्रयाजशेषेण ध्रुवामभिघार्य आग्नेयादिषड्ढवींष्यभिघारयति । ततः प्रतिप्रस्थाता ध्रुवामभिघार्य मारुतीमभिघार्योपभृतमभिघारयति । ततोऽध्वर्युर्वारुणीमेककपालं पृषदाज्यं चाभिघारयति । उभावाज्यभागान्तं प्रचरतः । ततः प्रतिप्रस्थातोपरमति । अध्वर्युराग्नेयादिषड्ढविर्भिर्यजति । तत उपरमति । प्रतिप्रस्थाता आमिक्षायाः प्रथमावदानेन सह शमीपर्णकरीरसक्तुमिश्रास्तोकानामर्धमवद्यति । द्वितीयावदानेन सह शमीपर्णाद्यर्धं मेषीं चावद्यति । प्राणैर्व्यासमिति यजमानानुमन्त्रणम् । ततः प्रतिप्रस्थातोपरमति । अयं मारुतीप्रचारो मारुतीयाग इति चोच्यते ॥

४६० अध्वर्युः प्रतिप्रस्थातृवद्वारुणीमवद्यति । मेषीस्थाने मेष इति विशेषः । धर्मभाग्भूयासमिति यजमानस्यानुमन्त्रणम् । अयं वारुणीप्रचारो वारुणीयाग इति चोच्यते ॥

४६१ अध्वर्युर्द्यावापृथिव्यवत्कायेन प्रचरति प्रकारविशेषविशिष्टोऽयमेककपालयाग इत्युच्यते ॥

४६२ शविष्ठो भूयासमिति यजमानस्यानुमन्त्रणम् । अध्वर्युः नभश्च स्वाहेत्यादिभिर्मन्त्रैश्चतसृभिः स्रुवाहुतिभिरेककपालमभिजुहोति । यजमानस्य यथालिङ्गं त्यागः । स्विष्टकृदवदानेऽध्वर्युरैन्द्राग्नान्तानामुत्तरार्धादवदाय विरमति । प्रतिप्रस्थाता मरुत्या आवदाय विरमति । अध्वर्युर्वारुण्या एककपालस्याश्रयाज्याच्चावदाय द्विरभिघारयति । उभौ स्वस्वमेत्तणान्यादाय अत्याक्रम्य स्विष्टकृद्धोमान्तरं स्वस्वाग्नौ अनुप्रहरतः । प्रतिप्रस्थाता औपभृतमाज्यं जुह्वामानीय यथायतनं स्रुचौ सादयति । अध्वर्युस्तु पृषदाज्यग्रहणीसत्वात् आज्यमनानीयैव सादयति ।

अध्वर्युरेव प्राशित्रमवद्यति । इडापात्र्यामैन्द्राग्नान्तान्यवदाय इडापात्रं प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता मारुत्या इडामवदाय इडापात्रमध्वर्यवे प्रयच्छति । अध्वर्युं वारुण्या अवदाय आशयाज्यादवदाय अभिघार्य इडापात्रं होत्रे प्रयच्छति । प्रतिप्रस्थातुरिडान्वारम्भो भक्षणं च । अन्वाहार्यमासाद्य द्वादशगाः द्वादश वासांसि वा दक्षिणां ददाति । अध्वर्युप्रतिप्रस्थात्राग्नीध्रां प्रतिग्रह मन्त्रे यथाद्रव्यं रुद्राय गां सोमाय वास इत्यूहः । वैश्वदेववद्वाजिनयोरासादनम् । तत्र हविष्करणान्तमुभयोः । यजमान वाचं यच्छेत्यध्वर्योरेव । वेषाय त्वेत्यादि उभौ कुरुतः । अध्वर्युरेव संप्रैषमाह प्रोक्षणीरासादयतं चमसौ संमृष्ट्ं मिति । अग्नीत्प्रतिप्रस्थातारौ प्रोक्षण्यासादनं कुरुतः । अध्वर्युप्रतिप्रस्थातारौ स्फ्योद्दसनादि कुरुतः । अग्नीत्प्रतिप्रस्थातारौ स्वस्ववेद्यामासादनान्तं कुरुतः । यजमानः दक्षिणस्यामन्नाभिमन्त्रणं कृत्वोत्तरस्य करोति । अध्वर्युरेव ब्रह्मन् प्रस्थास्याम इति ब्रवीति । अध्वर्युप्रतिप्रस्थातारौ परिशेषितां स्वस्वसमिधमाहवनीये आधत्तः । अग्नीत्प्रतिप्रस्थातारौ परिधिसंमार्गादि इध्मसन्नहनप्रहरणान्तं कुरुतः । इदानीमध्वर्युः पृषदाज्यं जुह्वां समानयति । उभौ स्वस्वस्रुचावादाय अत्याक्रम्य नवानुयाजान् यजतः । अध्वर्युरेव प्रथमे ऽनुयाजे देवान्यजेति प्रेष्यति । द्वितीयतृतीयौ असंप्रेष्य चतुर्थादिषु यजेति प्रेष्यति । स्रुग्व्यूहने यजमानसाहित्यविधानात् प्रतिप्रस्थाता दक्षिणवेद्यां प्रथमं स्रुचौ व्यूहति । ततो ऽध्वर्युः । उभौ स्वप्रस्तरसमञ्जनंकुरुतः । अध्वर्युरेवाश्राव्य इषिता दैव्या होतार इति प्रैषमाह । उज्जिति वाचने ऐन्द्राग्नान्तानामध्वर्युर्वाचयति । मरुतां प्रतिप्रस्थाता । तदनन्तरमध्व-

र्युरेव । उभौ सह प्रस्तरं प्रहरतः । यजमानस्यानुमन्त्रणमन्त्रे त्वेत्यस्य स्थाने वामित्यस्योहः । अध्वर्युणा अग्नीदित्युक्ते आग्नीध्रः संवदेथामित्याह । अध्वर्युणा अगच्छावाग्नीदित्युक्ते आग्नीध्रः अगच्छतमित्याह । अध्वर्युणा इमे ब्रूहीत्युक्ते आग्नीध्रः अनुप्रहरतमित्याह । उभौ स्वस्वतृणे प्रहरतः । अध्वर्युरेव शंयुवाकप्रैषमाह । आहवनीयोपस्थानादिसंस्रावहोमान्तमुभौ कुरुतः । यजमानस्य परिधिविमोकानुमन्त्रणमन्त्रे ते इत्यस्य स्थाने वामित्यूहः तथा धत्तात् ब्रूतादित्यनयोर्धत्तं ब्रूतमिति क्रमेणोहः । अध्वर्योः स्रुग्विमोको वैश्वदेववत् । प्रतिप्रस्थातुः प्रकृतिवत् । अथ संमृष्टौ चमसौ स्वंस्ववेद्यां निधाय पूर्ववद्वाजिनमानयतः । वाजिभ्योऽनुब्रूहीतिप्रैषादिवाजिनोयजेत्यन्तमध्वर्योरेव । प्रतिप्रस्थातुस्तु तूष्णीं चमसं गृहीत्वा अत्याक्रमणमात्रम् । वषट्कृते उभौ जुहुतः । अनुवषट्कारे संस्रावहोमानन्तरं प्रतिप्रस्थाता अध्वर्युणा सह प्रत्याक्रम्य वाजिनशेषं अध्वर्योर्वाजिनपात्रे निनयति । उपहवप्रकरणे प्रतिप्रस्थाता वाजिने तृतीय इत्याश्वलायनसूत्रात् उपहवे प्रतिप्रस्थाता तृतीयः । भक्षणे तु चतुर्थः । मन्त्रस्तु अध्वर्योर्यः स एव । पत्नीसंयाजा अध्वर्योरेव । अध्वर्युप्रतिप्रस्थातारौ यजमानाय वेदं दत्वा वाचयतः । तत्रेत्थमूहः । वेदौ स्थो वित्ती स्थो विदेयकर्मणी स्थः करणे स्थः क्रियासᳪसनी स्थः सनितारौ स्थः सनेयं घृतवन्तं कुलायिनᳪ सयस्पोषᳪ सहस्रिणं वेदौ दत्तां वाजिनमिति । ध्रुवाप्यायनादि प्रायश्चित्तहोमान्तमुभौ पृथक् कुरुतः । यजमानध्रुवाप्यायनानुमन्त्रणमन्त्रे ध्रुवेत्येकवचनस्य स्थाने ध्रुवे इति द्विवचनान्तस्योहः । वैश्वदेववत् वीहि समिष्टय-

जूंषि जुहोत्यध्वर्युः । प्रतिप्रस्थाता प्राकृतमेकम् अक्षोपस्थानप्रणीतानिनयनविष्णुक्रमान्तमुत्तरवेद्यां भवति । नेदानीं व्रतविसर्गः । यजमानः उत्करे उपवेषो निगूहति यो देवा मनुष्येषूपवेषास्तावधारयन् । ये अस्मदपेतसस्तानस्मभ्यमिहाकुरुतमित्यूहेन । ततो वरुणप्रघासाङ्गभूतो ऽवभृथः । अध्वर्युः दर्भमुष्टिं वेदं च कृत्वा पाणी संमृज्य अग्नीन् परिस्तीर्य स्फ्यमग्निहोत्रहवणीं जुहूं स्रुवमाज्यस्थालीं वेदं योक्त्रं वेदपरिवासनं व्युद्धरणार्थस्थालीं च शालामुखीयस्य पुरस्तादुत्तरतो वा सादयित्वा उत्तरवेदिसमीपे ब्रह्माणं तूष्णीमुपवेश्य पृथ्व्यां स्तीर्त्वा पवित्रे कृत्वा यजमान वाचं यच्छेत्युक्त्वा वेषाय त्वेति मन्त्रेणाग्निहोत्रहवणीमादाय निष्टप्य प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य आज्यं निरुप्य अधिश्रित्य वारुणीनिष्कासेन सह पर्यग्नि कृत्वा स्फ्यमादाय वेद्यां स्तब्ध्वा संप्रैषमाह । प्रोक्षणीरासादय स्रुवं च स्रुचं च संमृड्ढि पत्नीं सन्नह्याज्येनोदे३हि इति । स्फ्यमुद्‌स्य प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो ऽग्नेर्वातेजिष्ठेन तेजसा निष्टपामीति मन्त्रेण निष्टप्य संमृज्य अग्रेणोत्करं सादयित्वा पत्नीं सन्नह्य गार्हपत्यमाज्यं चावेक्षयित्वा आज्यं गार्हपत्ये ऽधिश्रित्यादाय गत्वोत्तरवेद्यामधिश्रित्य यजमानमीक्षयित्वा स्फ्यमवेक्ष्योत्पूय विष्णवसि वैष्णवं धामासि प्राजापत्यमित्यभिमन्त्र्य निष्कासं गार्हपत्ये ऽधिश्रित्य व्युद्धरणपात्र्यामुपस्तीर्य वारुणीनिष्कासं तस्मिन्नुद्धृत्य अभिघार्यालंकृत्य वेद्यामासाद्य यजमानेनाभिमन्त्रणे कृते स्रुवमाज्यस्थालीं वेदं जुहूं बर्हिः प्रतिवसनीये वाससी स्फ्यं समिधं वारुणीनिष्कासं तुषांश्चादायाग्नीध्रेण चात्वालोत्करावुदङ् निष्क्रामत्युरुं हि राजा वरुण-

श्वकारेत्यृचा । यथापस्तत्र गत्वापो दृष्ट्वा शतं ते राजन् भिषज इत्यृचं यजमानं वाचयति । सर्वे अपां समीपमभितिष्ठन्ति अभिष्ठितो वरुणस्य पाश इति मन्त्रेण । यां दिशमवभृथार्थे व्रजन्ति सा दिगेव प्राची । अग्नेरनीकमप आविवेशेत्यादिमन्त्रेण अप्सु बर्हिः प्रास्यति । प्रति ते जिव्हेतिमन्त्रेण बर्हिष उपरि स्रुवाहुतिं जुहोति । अग्नय इदमिति यजमानस्य त्यागः । अध्वर्युः आग्नीध्रं प्रेष्यति अग्नीदपस्त्रिः संमृड्ढि इति । आग्नीध्रः ररिभोजनीयदर्भान् स्फ्येनोपसंगृह्याप: संमार्ष्टि । आपो वाजजितो वाजं व आपः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमाज्म्र्यपो अन्नाद्य अन्नाद्येति मन्त्रेण । अध्वर्युः वेदमुपभृत्स्थाने धृत्वा प्राकृतमन्त्रेण जुव्हां चतुर्गृहीतं गृहीत्वा तेन प्रकृतिवत् त्रीन् प्रयाजान् यजति । उपभृदाज्यग्रहणनियुक्तप्राकृतमन्त्रेण जुव्हां चतुर्गृहीतेन पञ्चमं प्रयाजम् । न बर्हिष्मन्तौ प्रयाजानुयाजावित्याश्वलायनसूत्रात् । चतुर्थप्रयाजप्रथमानुयाजौ न भवतः । प्रयाजशेषेणाज्यस्थालीमभिघार्य निष्कासमभिघार्याज्यस्थालीं पुनरभिघारयति । प्राकृतेन ध्रुवावाज्यग्रहणमन्त्रेण जुव्हां चतुर्गृहीतेन प्रथमाज्यभागं । पुनस्तथैव गृहीतेन द्वितीयमाज्यभागम् । प्रयाजाज्यभागसंबन्ध्याज्यग्रहणे यजमानस्यानुमन्त्रणं प्रकृतिवत् । अर्चिस्त्वेत्यादिना जुव्हामुपस्तीर्य निष्कासा देवावद्यन्नाह वरुणायानुब्रूहीति । तूष्णीं द्विरवदाय अर्चिस्त्वेत्यादिना ऽभिघार्य आश्राव्य आग्नीध्रेण प्रत्याश्राविते आह वरुणं यजेति । वषट्कृते अप्सु जुहोति । यजमानः वरुणायेदं० । अनुमन्त्रणे धर्मभागिति विशेषः । अध्वर्युः पुनरर्चिस्त्वेत्यादिनोपस्तीर्य

सर्वमेव निष्कासं गृहीत्वा स्रुचि स्थापयन्नाह अग्नीवरुणाभ्या९ स्विष्टकृद्भ्यामनुब्रूहीति । अर्चिरस्त्वेत्यादिनाभिघार्याश्राव्य आग्नीध्रेण प्रत्याश्राविते आह अग्नीवरुणौ स्विष्टकृतौ यजेति । यजमानः अग्नीवरुणाभ्यामिदं० । अग्नीवरुणयोः स्विष्टकृतोरहं देवयज्यया युष्मान् यज्ञेन प्रतिष्ठां गमेयं इत्यनुमन्त्रयते । अध्वर्युः परिधिस्थानमुद्दिश्य मन्त्राभ्यां अन्तःपरिधि बहिः परिधि च संक्षालननिनयने करोति । अथ संप्रैषमाह अग्नीदपः सकृत्संमृड्ढि इति । आग्नीध्रः सफ्यरहितैर्दर्भैरपः संमार्ष्टि आपो वाजजितो वाजं व आपः सस्रुषीर्वाजं वा जिग्युषीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो अन्नादा अन्नाद्याय इति मन्त्रेण । अध्वर्युः ज्योतिस्त्वेत्यादिना जुह्वां चतुर्गृहीत्वा प्राकृतौ द्वितीयतृतीयानुयाजौ यजति । देवौ यज यजेतिप्रैषो याज्यायाः । अप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरिति मन्त्रेण । स्रुचमद्भिः पूरयति सं त्वा विशं त्वोषधीरुताप इति मन्त्रेण । यज्ञस्य त्वा यज्ञपतइत्यादिमन्त्रेण अप्स्वेवापो जुहोति । यजमानः यज्ञपतयइदं० । अध्वर्युर्निष्कासस्थालीमप्सु निक्षिपति । सुमित्रा न आप ओषधयः सन्त्विति मन्त्रेण यजमानोऽञ्जलिनापो गृह्णाति दुर्मित्रास्तस्मै सन्त्वित्यादिमन्त्रेण नैर्ऋत्यां दिशि निक्षिपति । अध्वर्युस्तूष्णीमप्सु तुषान् विकिरति । यजमानो बुद्बुदान् तुषनिक्षेपोत्पन्नान् स्पृशति । अध्वर्युः वरुणप्रघासानुष्ठानकाले निबद्धं पत्नीयोक्त्रं बोधायनोक्तमन्त्रेण विमुञ्चति । पत्नीयजमानावनूपमज्जन्तावन्योन्यस्य पृष्ठे धावतः । स्नात्वा प्रतिवसनीये वाससी परिधाय यजमानः पत्नी च प्रतिप्रस्थातारमाहतुः प्रतिप्रस्थातरन्नानयेति । प्रतिप्रस्थाता

तयोर्हस्तौ गृहीत्वा निसृभिरुद्वतीभिर्ऋग्भिः यजमानं पत्नीं चोदानयति । उद्वयं तमसस्परीति उदुत्यं जातवेदसमिति चित्रं देवानामुदगादनीकमिति च तिस्र ऋच उत्पदघटित्वादुद्वत्य इत्युच्यन्ते ॥ [ शेषमग्रे ]

# सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 477. VOL. V.)

मू० ॥ चिद्वस्तुनश्चिति भवेत्तिमिरं तमिस्रं

तामिस्रमन्धतमसं जडिमा तमिस्रा ॥

माया जगत्प्रकृतिरच्युतशक्तिरान्ध्यं

निद्रा सुषुप्तिरनृतं प्रलयो गुणैक्यम् ॥ ३१८ ॥

टी० ॥ ननु यद्यज्ञानस्यात्माऽऽश्रयस्तदा तद्विषयोऽन्यो वाच्य इत्यात्मावरणं तच्च स्यात् । घटादिज्ञानादावाश्रयविषययोर्भेददर्शनादज्ञानेऽपि तस्य वक्तव्यत्वात् । अन्यथाऽऽत्मा तदाश्रयो न स्यादित्याशङ्क्य तमस्त्वाद्वाह्यतमोवत्तदेकाश्रयविषयम्, तमस्त्वं च तस्य श्रुतिपुराणादौ तमः शब्दतत्पर्यायैर्व्यवहारात्सिद्ध्यतीत्याशयेनाह । चिद्वस्तुन इति । चिद्रूपं यद्वस्तु परमार्थसत्तस्य या स्वरूपभूता चित् तस्यां तिमिरं भवेदिति योजना। चितीति। विषयसप्तमी चिद्विषयमित्यर्थः । लौकिकात्मज्ञानादावाश्रयविषयाभेदेन सविषयत्वस्य व्यभिचारादज्ञानमेकाश्रयविषयं भवेदिति भावः । ननु मायात्माश्रयात्मविषया च श्रुत्यादौ प्रसिद्धा सा किमेतस्मादज्ञानादन्या नेत्याह । मायेति । एवं प्रकृतिर्विष्णुशक्तिरिति च श्रुतमज्ञानमेवेत्याह । जगत्प्रकृतिरच्युतशक्तिरिति । आन्ध्यमिति । प्रकाशतिरोधायकत्वादज्ञानमुच्यते । निद्रेति । विविधप्रपञ्चहेत्वज्ञानं प्रकर्षेण लीयन्ते सर्वाणि कार्याण्यस्मिन्निति प्रलयः सत्त्वरजस्तमसां गुणानां समुदायरूपं गुणैक्यं च तदेवेत्यर्थः ॥ ३१८ ॥

मू० ॥ आश्रयत्वविषयत्वभागिनी
निर्विभागचितिरेव केवला ॥
पूर्वसिद्धतमसो हि पश्चिमो
नाश्रयो भवति नापि गोचरः ॥ ३१९ ॥

टी० ॥ नन्वहमज्ञ इति जीवाश्रयं तदनुभूयते एवं विषयोपि ब्रह्म न जानामीत्यनुभवात्तस्य ब्रह्मैव तत्कथं चिद्वस्तुनश्चितिर्भवेदित्युक्तं तत्राह । आश्रयत्वविषयत्वेति । अज्ञानस्येति शेषः अज्ञानस्याश्रयत्वं विषयत्वं च भजत इत्याश्रयत्वविषयत्वभागिनी । केवला अद्वितीयैव अत एव निर्विभागा जीवेश्वरविभागरहिता । न चैवं प्रदर्शितानुभवविरोधस्तस्यान्यथासिद्धत्वादन्यथान्योन्याश्रयः स्यादित्याशयेनाह । पूर्वसिद्धेति । स्वसत्ताप्रयोजकाज्ञानस्येत्यर्थः । हिर्हेतौ । यतो जीवेश्वरविभागसत्त्वप्रयोजकमज्ञानं ततः पश्चिमस्तत्प्रयोज्यो ब्रह्मविभक्तो जीवस्तद्विभक्तं ब्रह्म च यथाक्रमं नाश्रयो भवति नापि गोचरः । यद्यपि जीवेश्वरविभागादिरनादिस्तथापि स न वास्तवः मायिकस्तु सोऽद्वयब्रह्मानवभासदशायामेव भवतीति तदज्ञानाधीनसत्ताक एव । अज्ञानं तु स्वसत्तायां विभागादिसत्त्वं नापेक्षत इति न तत्प्रयोज्यम् । एवं चानादिभूतोऽपि जीवब्रह्मविभागोऽज्ञानविकार एव । एतदभिप्रेत्य पूर्वसिद्धेत्याद्युक्तम् । ततश्चात्मन्यज्ञानसत्त्वासिद्धौ जीवेश्वरविभागसत्त्वम्, अज्ञानस्य विभक्तजीवचैतन्याश्रयत्वे तदधीनं सत्त्वमित्यन्योन्याश्रयः । अहमज्ञ इत्यादिप्रतीतिस्त्वज्ञानाश्रयपूर्णचैतन्यस्यैवाहंकाराद्युपहिततया तत्रापि तत्संभवादुपपद्यते । अत एवैतदनुभवादहंकाराश्रयं ब्रह्मविषयं तदिति प्रत्युक्तम् । अज्ञानस्य केवलजडशक्तित्वानुपपत्तेश्च । एवं विषयोऽपि पूर्णं ब्रह्मैवेति वक्ष्यत इति चिद्वस्तुनश्चितीत्युपपन्नमितिभावः ॥ ३१९ ॥

मू० ॥ नाभावतास्य घटते वरणात्मकत्वात्
नाभावमावरणमाहुरभावशौण्डाः ॥
अज्ञानमावरणमाह च वासुदेव-
स्तद्भावरूपमिति तेन वयं प्रतीमः ॥ ३२० ॥

टी० ॥ एवं स्वतःस्फुरणरूपात्मनि ज्ञानाभावासंभवात्तदावरण-स्वभावमज्ञानं सच्च संभवतीत्युक्तम् । इदानीं लोकेऽप्यज्ञानमनुभूयमानं सच्च संभवति । यद्यपि वृत्त्यधीनप्रकाशस्य घटादेर्वृत्त्यभावेनास्फुरणं संभवति । तथापि तस्यानावरणत्वादावरणविषयस्य न जानामीत्यनुभवस्य स विषयो न भवितुमर्हतीत्याशयेनाह। नाभावतेति । अस्याज्ञानस्य। तत्र हेतुर्वरणा-त्मकत्वादिति । आवरणस्वभावत्वादित्यर्थः । नन्वभावस्याप्यावरणत्वं किं न स्यात्तत्राह । नाभावमिति । अभावशौण्डाः अभावपदार्थनिरूपणे समर्था वैशेषिकादयः, तेऽपि ह्यभावं नावरणमाहुः । आवरणत्वस्य भाव-धर्मत्वनियमात् ज्ञानाभावस्तु विशेषतो नावरणम् । यत आवरणस्य ज्ञाना-भावो न प्रयोजकः । अतस्तत्प्रयोजकमन्यदेवावरणं वक्तव्यमित्यर्थः । ननु माभूदज्ञानमावरणमिति चेच । तन्न जानामीत्यनुभवविरोधात् । किं चाज्ञानेनावृतं ज्ञानमित्यादिभगवद्वचनमपि तदा विरुद्ध्येतेत्याह । अज्ञा-नमावरणमिति । ततश्चावरणत्वात् प्रसिद्धमेघाद्यावरणवदज्ञानं भावरू-पमिति निगमयति । तद्भावरूपमिति ॥ ३२० ॥

मू० ॥ एकः शत्रुर्न द्वितीयोऽस्ति शत्रु-
रज्ञानतुल्यः पुरुषस्य राजन् ॥
येनावृतः कुरुते संप्रमत्तो
घोराणि कर्माणि सुदारुणानि ॥ ३२१ ॥

टी० ॥ भगवद्व्यासवचनेनापि तस्यावरकत्वमाह । एकः शत्रुरिति । येनाज्ञानेनावृत इत्येतत्पदमत्रोपजीव्यम् । घोराण्यतिगर्हितानि पापादीनि सुदारुणानि दीनदरिद्रस्वापहरणादीनि ॥ ३२१ ॥

मू० ॥ जाड्यं जगत्यनुगतं खलु भावरूपं
मौढ्यं च पुंगतमिति प्रतिभाति तादृक् ॥
जाड्यं च मौढ्यमिति चानुभवप्रसिद्ध-
मज्ञानमाहुरपवर्गपिधानदक्षम् ॥ ३२२ ॥

टी० एवमजड़बोधतिरस्क्रियात्मत्वं नाभावस्य संभवतीति भावरूपाज्ञानस्यैव तदित्युपपादितम्, इदानीं जाड्यं च मौढ्यमिति चेत्युक्तं जाड्यमौढ्यात्मकत्वमपि तस्योपपादयति । जाड्यं जगतीति । यद्घटपटादिजड़प्रपञ्चे इदं जड़मिदं जड़मित्यनुगतव्यवहारास्पदं जाड्यं तद्भावरूपं चेतनान्यत्वादेर्भावाभावनिखिलजड़ानुगतस्यैकस्यासंभवात् । एवं मौढ्यमपि जीवनिकायानुगतं भावरूपम् । ततः किमित्यत आह । जाड्यं चेति । कारणतया जगत्यनुगताज्ञानव्यतिरिक्तानुगतजाड्यकल्पने जीवत्वाद्युपाधितया निखिलजीवसंबन्ध्यज्ञानान्यमौढ्यकल्पने च प्रमाणाभावादनुभवसिद्धमज्ञानमेव तदुभयमिति तदात्मकमज्ञानं भावरूपमित्यर्थः ॥ ३२२ ॥

मू० ॥ साभासमेतदुपजीव्य चिदद्वितीया
संसारकारणमिति प्रवदन्ति धीराः ॥
साभासमेतदिति संसृतिकारणत्वे
द्वारं परं भवति कारणतादृशस्तु ॥ ३२३ ॥

टी० ॥ इदानीं प्रकृतिरिति प्रागुक्तमज्ञानस्य जगत्प्रकृतित्वमुपपादयितुं प्रक्रमते । तत्रेयं शङ्का । ननु सूत्रकारेण प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रेण ब्रह्मैव जगत्प्रकृतिर्वेदान्तार्थ इति निरूपितं तत्कथमज्ञानं प्रकृतिरिति तत्राह । साभासमिति । चैतन्यच्छायायुक्तमित्यर्थः । एतदज्ञानमुपजीव्य घटकतयाश्रित्य संसारस्य वियदादिप्रपञ्चस्य कारणम् । धीराः कूटस्थब्रह्मनिष्ठाः । ब्रह्म हि स्वस्य निष्प्रपञ्चतारूपां शुद्धिमपरित्यजदेव संसारकारणमिति वक्तव्यं कूटस्थमचलं ध्रुवं निष्कलं निष्क्रियमित्यादि श्रवणात् । तादृशं कारण*प्रपञ्चविभ्रमाधिष्ठानतयैव निर्वहति । सर्पाधिष्ठानरज्ज्वादेस्तदानीमपि स्वस्वरूपस्थितिदर्शनात् । विभ्रमाधिष्ठानत्वं च विवर्त्तमानाज्ञानमनुपजीव्य न सिद्ध्यति स्वस्यैव तथापरिणामे पूर्वरूपनाशप्रसङ्ग इति ब्रह्मकारणतासिद्ध्यर्थमज्ञानमपि जगत्प्रकृतिरिति स्वीकर्त्तव्यमिति भावः । नन्वज्ञानं चेज्जगत्प्रकृतिस्तर्हि तदेव जगदुपादा-

* तादृशः कारणत्वं । पा० २ ॥

नमस्तु ब्रह्मकारणताश्रुतिस्तु तस्य निमित्ततयाप्युपपद्यत इत्याशङ्क्य किं स्वतन्त्रमज्ञानं प्रपञ्चनिदानं स्यात्किं वात्मन्यध्यस्तम् । नाद्यः जडस्य स्वातन्त्र्यायोगात् । तत्तत्कार्ययोः सत्तास्फूर्त्त्यभावप्रसङ्गाच्चेत्यभिप्रेत्य द्वितीये आह । साभासमेतदिति । आ समन्ताद्भासत इत्याभासं स्वप्रकाशमनवच्छिन्नं ब्रह्म तत्सहितं तत्तादात्म्यापन्नं साभासमज्ञानमित्यर्थः । अध्यस्तस्य हि अधिष्ठानमेव स्वरूपमिति ततो निष्कृष्टं कारणं न भवितुमर्हति किं तु दृशः संसृतिकारणत्वे विवर्त्ताधिष्ठानत्वे परं केवलं द्वारमुक्तविधया घटकं भवति श्रुतिमत्कारणता तु दृश एवेति भावः ॥ ३२३ ॥

मू० ॥ यावद्दृशोन्यदिह संसृतिकारणं त-

द्वेदान्तवादिसमये न मतं जडत्वात् ॥

यद्यज्जडं भवति संसृतिकारणं त-

न्नेति स्फुटं वदति सूत्रकृदत्र यस्मात् ॥ ३२४ ॥

टी० ॥ ननु सांख्यादिभिः साधर्म्यादिना जडमेव जगत्कारणमनुमानादङ्गीकृतं तद्वत्त्वयाप्यङ्गीकर्त्तुमुचितमित्याशङ्क्य तदैक्षत बहुस्यां प्रजायेयेतीक्षितुरेवोपादानत्वविषयश्रुतिमाश्रित्य बादरायणेन सांख्यवैशेषिकादिपक्षस्य निरस्तत्वान्नैवमित्याह । यावद्दृशोऽन्यदिति । इह जगति दृशोऽन्यत् यावत्तद्वेदान्तवादिसमये संसृतिकारणं मतमिष्टं न । कुतः जडत्वाद्रज्जुसर्पवत् । न चाप्रयोजकं श्रुतिन्यायवित्सूत्रकारेणोक्तत्वादित्याशयेनोक्तश्रुतेरनुग्राहकन्यायमूलं व्याप्तिमाह । यद्यज्जडमिति । स्फुटं वदतीति । ईक्षतेर्नाशब्दमित्यादिसूत्रैरिति शेषः । अत्र वेदान्तशास्त्रे । अत्र जगति यद्यज्जडमिति वा संबन्धः ॥ ३२४ ॥

मू० ॥ अजडकारणभावनिबन्धनं

सकलमेव जडं न तु कारणम् ॥

इति हि वेदशिरस्सु विचक्षणाः

कपिलपक्षनिराकरणे जगुः ॥ ३२५ ॥

टी० ॥ किं च रचनानुपपत्तेश्च नानुमानमित्यादिना सूत्रकारेण प्राधान्येन जडकारणत्वनिराकरणादपि चेतनं ब्रह्मैवोपादानमुपेयमित्याह । अजडकारणेति । अजडकारणस्य भावः सत्ता तया निबद्धात उत्पाद्यत इति । अजडकारणभावनिबन्धनमित्यर्थः । यद्वा अजडस्य चिदात्मनः कारणभावे कारणत्वव्यवहारयोग्यत्वे निबन्धनं द्वारं सकलमेव जडमविद्यादि न तु तत्कारणं स्वयमिति शेषः । कपिलादिपक्षनिराकरण उद्दिश्य इत्यर्थः ॥ ३२५ ॥

मू० ॥ शबलमात्मपदेन निगद्यते
सकलमात्मजमित्यपि च श्रुतिः ॥
शबलमात्मपदं जगतस्ततः
प्रकृतिरित्यपरे तु जना जगुः ॥ ३२६ ॥

टी० ॥ एवं शुद्धमद्वयं ब्रह्मैवाविद्यातद्विवर्त्ताधिष्ठानतया श्रुतिसंमतं जगन्निदानमविद्या तु तद्घटकतयैव जगत्प्रकृतिरिति वेदान्ततत्त्वज्ञानां मतमुक्त्वा मतान्तरमनुवदति । शबलमात्मपदेनेति । आत्मन आकाशः संभूत इत्यादिवाक्ये आत्मादिपदेनाविद्याशबलं वस्तु निगद्यते अभिधीयते । ततः किं तत्राह । सकलमात्मजमिति । वियदादिसमस्तमात्मजमात्मनः संभूतमित्यपि च श्रुतिर्दर्शयतीति शेषः । ततोऽपि किं तत्राह । शबलमात्मपदमिति । शबलाऽऽत्मस्वरूपमित्यर्थः । यतः श्रुतिः सकलमात्मपदनिगद्याच्छबलात्संभूतमिति दर्शयति । ततः शबलमात्मपदं प्रकृतिरिति संबन्धः ॥ ३२६ ॥

मू० ॥ सुकृतदुष्कृतकर्मणि कर्तृतां
मतिगतात्मचिति प्रतिबिम्बकम् ॥
व्रजति तद्वदः परमात्मनो
जगति याति तमःप्रतिबिम्बकम् ॥ ३२७ ॥

टी० ॥ एवं शबलस्य जगत्प्रकृतित्वमुक्त्वा तन्मत एव तत्कर्तुस्ततो विशेषं सदृष्टान्तमाह । सुकृतदुष्कृतेति । पुण्ये विहिते कर्मणि दुष्कृते

प्रतिबिम्बे चेत्यर्थः। मतिरन्तःकरणं तत्र यदात्मचैतन्यप्रतिबिम्बकं जीवभावमापन्नमित्यर्थः। कर्तृतां व्रजति यद्वत्तद्वदिति संबन्धः। अदः तद्याति कर्तृतामित्यनुषङ्गः। तमः अज्ञानम्, तत्र प्रतिबिम्बकं यथा पुण्यपापयोर्जीवभावमापन्नमन्तःकरणे प्रतिबिम्बचैतन्यमेव कर्तृ, कर्ता शास्त्रार्थवत्त्वादित्यादिन्यायात्। न तच्छबलमिति तन्मतम्, तद्वज्जगतोऽपि तमःप्रतिबिम्बकं चैतन्यमेवेश्वराभिधानं कर्तृ भवति न तमोविशिष्टमित्यर्थः॥ ३२७॥

मू० ॥ सुकृतदुष्कृतयोः शबला यथा
भवति कारणमात्मचितिस्तथा॥
गगनवायुपुरःसरकारणं
परमचेतनता शबला कृतिः॥ ३२८॥

टी० ॥ उक्तदृष्टान्तेनैव शबलोपादानत्वमपि द्रढयति। सुकृतदुष्कृतयोरिति। शबला अन्तःकरणशबलात्मचितिरिति संबन्धः। कारणं भवतीत्यनुषङ्गः। परमचेतनता परमात्मचैतन्यम्॥ ३२८॥

मू० ॥ शबलताकवलीकृततावशा-
त्परमचेतनतैव निगद्यते॥
शबलमात्मपदेन न कथ्यते
शबलमात्मनिवृत्तिनिबन्धनम्॥ ३२९॥

टी० ॥ यद्यपि सृष्ट्यादिवाक्यगतात्मादिपदैरौचित्येन शबलमेवाभिधीयते तथापि लक्षणया शुद्धं परमेव तद्वाच्यमिति न ततः शबलस्य कारणता सिद्ध्यतीति समाधत्ते। शबलताकवलीकृततेति। शबलतया शबलस्वरूपेण कवलीकृतता अवच्छिन्नता या तद्वशाच्छबलसंबन्धवशादिति यावत्। परमचेतनता सर्वोपाधिविवर्जितं चैतन्यं तदेव तत्र जिज्ञास्यत्वान्निगद्यते, लक्षणया ज्ञाप्यते। आत्मपदेन न शबलं कथ्यते तात्पर्येणेति शेषः। शबलस्य वस्तुतोऽनात्मत्वादित्यर्थः। तर्हि शबलाभिधानस्य किं प्रयोजनमित्याशङ्क्य लक्षणासिद्धिरेवेत्याह। शबलमात्मनीति आत्मादिपदस्येति शेषः॥ ३२९॥

मू० ॥ शबलतापरिधानसमन्वया-
त्परमचेतनतात्मगिरः पदम् ॥
भवति तेन जनस्य तु विभ्रमः
शबलमात्मगिरः पदमित्ययम् ॥ ३३० ॥

टी० ॥ यत एतस्मिन्वाक्ये आत्मादिपदैः आत्मलक्षणार्थं शबलमुपस्थाप्यते ततः शबलमेव तदर्थ इति तेषां भ्रमो न तु वस्तुतस्त्वमित्युक्तानुवादपूर्वकमाह । शबलतापरिधानेति । एतदुक्तं भवति । सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्ये ह्यानन्त्यं ब्रह्मणः प्रतिज्ञातम्, यो वेद निहितं गुहायामित्युत्तरवाक्ये गुहाप्रवेशेन तस्य प्रत्यग्भावं दर्शयन्त्या श्रुत्यानन्त्योपपादनायात्मनो नानात्वं निरस्तं ततस्तस्य विजातीयगगनादेर्भेदापनिनीषया सृष्टिरुपन्यस्यते तदा खलु कार्यकारणानन्यत्वन्यायेन कार्यस्य वस्तुतः कारणमात्रत्वं सिद्ध्यतीत्युपपन्न तदानन्त्यमेवं च यतः आकाशादि संभूतं तत्तस्मादेतस्मादात्मन इति प्रत्यगभिन्नानन्दमिति दर्शयन्ती श्रुतिरद्वैतमात्मानमेवाभिप्रैतीति न ततः शबलकारणता सिद्ध्यतीति ॥ ३३० ॥

मू० ॥ बहु निगद्य किमत्र वदाम्यहं
शृणुत संग्रहमद्वयशासने ॥
सकलवाङ्मनसातिगता चितिः
सकलवाङ्मनसव्यवहारभाक् ॥ ३३१ ॥

टी० ॥ नन्वेवं सति प्रत्यक्षादिदृष्टं मृत्सुवर्णादेर्घटकुण्डलादिकारणत्वमपि त्वत्पक्षे न स्यादिति चेत्सत्यं सर्वत्रापि मृदाद्यधिष्ठानं सर्वकार्यानुगतं सत्तत्त्वं मृदादिशबलद्वारा घटादिकारणं न तु केवलमृदादिस्तस्याधिष्ठानात्मतया ततः पृथग्भूय कारणत्वायोगादित्याशयेनाह । बहु निगद्येति । अत्रास्मिन्नर्थे बहुभाषणेन किं प्रयोजनम् अद्वयशास्त्रे अहं सिद्धान्तसंग्रहं वदामि तं शृणुतेति संबन्धः । तत्संग्रहमेव निर्गुणसगुणभेदेनाह । सकलेति स्पष्टम् ॥ ३३१ ॥ (शेषमग्रे)

## ॥ अथ चित्सुखी ॥

### ॥ तत्र द्वितीयपरिच्छेदावशेषः ॥

(*Continued from page* 514. Vol. V.)

पक्षधर्मत्वमपि दुर्निरूपम्, तथाहि कोऽयं पक्षो यद्धर्मता पक्षधर्मता, संदिग्धसाध्यधर्मा धर्मीति चेत्, किं वादिप्रतिवादिनोः संदेहः किं वा मध्यस्थानाम्।

नाद्यः, निश्चितौ हि वादं कुरुत इति स्वीकारात्।

नापि द्वितीयः, तेषामपि दर्शनद्वयतत्त्ववेदिनां संदेहानुपपत्तेः।

किंत्वान्तरेणापि संशयं धूमदर्शनमात्रादग्निमनुमिमानस्य संदेहविशेषितधर्मिणि हेतोरवृत्तेः पक्षधर्मत्वाभावादनुमानानुदयप्रसङ्गः, एतेन ज्ञापनीयधर्मविशिष्टो धर्मी पक्ष इति प्रत्युक्तम्, स्वार्थानुमाने प्रज्ञापनाभावात्।

प्रमित्सितधर्मविशिष्टः पक्ष इत्यपि न, अप्रमित्सितेऽप्यनिष्टविषयानुमानोदयदर्शनात्।

साध्यधर्मविशिष्टः पक्ष इत्यपि न, साध्यपदेन संदिग्धत्वप्रतिज्ञापनीयत्वप्रमित्सितत्वाद्यन्यतमविवक्षायामुक्तदोषानुषङ्गात्।

अप्रमितत्वं साध्यमिति चेत्, न, प्रमाणसंप्लववादिनो नैयायिकस्य प्रमितेऽप्यनुमानप्रवृत्तेः, अनुमितेऽप्यनुमानप्रवृत्तेश्च।

न च तत्रापि तत्तत्कालविशिष्टतयानधिगतिः, कालानुमाने तदभावात्।

अस्तु वा यः कश्चित् पक्षस्तथापि तद्धर्मता दुरधिगमा, तथाहि पक्षाश्रितत्वं पक्षधर्मत्वं चेत्, तथा सति प्रमेयत्वहेतौ तन्न स्यात्, प्रमेयत्वस्य प्रमाविषयत्वलक्षणस्य ज्ञानज्ञेयानतिरिक्तत्वाभ्युगमेन तदाश्रितत्वायोगात्।

प्रमान्योन्याभाववत्त्वं प्रमेयत्वं ततस्तस्य ज्ञानज्ञेयाश्रितत्वमुपपन्नमिति चेत्, न, अन्योन्या[1]भावस्यैकत्वे तस्य तद्वृत्तौ प्रमेयत्वहेतुना कस्यचित् प्रत्यक्षत्वानुमानं न स्यात्, तस्यै[2]वान्योन्याभाववत्त्वात् ।

अनेकत्वे चान्योन्याभावानां सर्वान्योन्याभाववत्त्वं प्रमेयत्वशब्दप्रवृत्तिनिमित्तमुतान्यतमत्वम् ।

नाद्यः, सर्वग्रहणासंभवात् ।

न द्वितीयः, अन्यतमशब्देन निर्धारितैकविशेषोक्तौ तदितर[3]प्रमेयशब्दप्रवृत्त्ययोगात्, एकं निमित्तमन्तरेण बहुष्वेकशब्दप्रवृत्तौ गोत्वादेरपलापप्रसङ्गात् ।

व्याप्तिबलेन[4] प्रवृत्ताया व्यापकसामान्यविषयायाः प्रतीतेर्विशेषपर्यवसानाय व्याप्यस्य सामर्थ्यं पक्षधर्मतेति चेत्, मैवम्, विकल्पासहत्वात्, किं प्रथमं सामान्यमात्रालम्बना प्रतीतिर्या सा सामर्थ्यात् पश्चाद्विशेषमवगाहत इति ब्रूषे किं वा विशेषविषयप्रतीतिरनन्तरं जायत इति ।

नाद्यः, प्रतीतेर्विरम्य[5] व्यापारापत्तेः ।

न द्वितीयः, प्रमाणान्तरप्रसङ्गात्[6] ।

---

१ प्रमान्योन्याभावः किमेकोऽनेको वेति विकल्प्याद्यं दूषयति नान्योन्येति, विवादाध्यासितं सर्वं कस्यचित् प्रत्यक्षं प्रमेयत्वात् करतलामलकवदिति योगिसाधकमानेऽन्योन्याभावस्यापि सर्वान्तःपातितया पक्षत्वात्, प्रमान्योन्याभाववत्त्वलक्षणस्य प्रमेयत्वहेतोरन्योन्याभाववृत्तित्वाभावेन भागासिद्धताप्रसङ्गात्, योगिसाधकानुमानं न प्रवर्ततेत्यर्थः ।

२ धर्मिण एवान्योन्याभावरूपतयान्योन्याभाववत्त्वाभावादिति हेतुमाह तस्येति ।

३ तदितरान्योन्याभाववतोः स्वस्वप्रतियोगिनोः प्रमेयशब्दार्थत्वं न स्यादित्याह तदिति ।

४ व्याप्तिबलेनेति, द्विविधं हि हेतोः सामर्थ्यमेकं व्याप्तिबलेन बोधकत्वं यथा हि यद्धूमवत् तदग्निमदिति सामान्येनाग्निमत्त्वप्रतीतिजनकत्वं तत् कस्य हेतोर्विशेषाणां व्यभिचारित्वेनानन्त्येन च व्याप्तेरशक्यग्रहत्वात्, अपरं तु तामेव प्रतीतिं पर्वताग्निमत्त्वं लक्षणविशेषे पर्यवसाययितुमनुगुणम्, निर्विशेषं सामान्यं नेति न्यायात्, तच्चेह पक्षधर्मत्वं विवक्षितमित्यर्थः ।

५ शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्, जातस्य पुनर्जन्माभावात् ।

६ व्यापकसामान्यप्रतीत्यनुपपत्तेः प्रतीतव्यापकसामान्यानुपपत्तेर्वा विशेषप्रतीतावर्थापत्तिरेव विशेषप्रतीतिः स्यात् ।

किंच[1] पक्षधर्मता चेद्विशेषप्रत्यायिका केवलव्यतिरेकी तर्हि निरवकाशः स्यात्, शब्दः क्वचिदाश्रितो गुणत्वादित्यादिसामान्यतोदृष्टानुमानेषु हेतोः पक्षधर्मताबलादेवाष्टद्रव्यातिरिक्तद्रव्याश्रितस्यापि सिद्धेः, बाधकान्तराधीनमेव तदितराष्टद्रव्याश्रितत्वनिरसनमित्युभयवादिसंप्रतिपन्नतया तदितराश्रितत्वनिरासेऽपि केवलव्यतिरेकिणो निरवकाशत्वात् ।

तदेवं न व्याप्तिर्नापि पक्षधर्मता शक्यनिरूपणेति व्याप्तिपक्षधर्मतावल्लिङ्गं तत्परामर्शोऽनुमानमिति लक्षणं न सिध्यतीति सिद्धम् ।

शाब्द[2]व्युत्पत्तिशून्यस्य स्मृतिकरणिका प्रमितिस्तत्करणमनुमानमित्यपि न लक्षणम्, व्युत्पन्नस्यानुमितौ तत्करणे चाव्याप्तेः ।

तादृशप्रमिति[3]र्व्याप्तिप्रमात्वावान्तरजात्यधिकरणज्ञानमनुमितिस्तत्करणमनुमानमिति चेत्, न, प्रमात्वजातेः पुरस्तादेव निरस्तत्वात् । एतेन,

अनुमेये[4] न संबद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥ २७ ॥

अनुमानं त्रिरूपाल्लिङ्गतोऽर्थदृग्ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरे बुद्धिरित्येवमादीनि वैभाषिकजैमिनीयलक्षणान्यपि प्रत्युक्तानि, पक्षधर्मत्वसपक्षसत्त्वव्याप्यव्यापकसंबन्धानां पुरैव निरस्तत्वात् ।

तदेवं नानुमानलक्षणमपि निर्वक्तुं शक्यमिति सिद्धम् ।

---

१ किंचेति, यत्र हि सामान्यतोदृष्टेन सामान्यतः साध्यसिद्धौ केवलव्यतिरेकिणा विशेषसमर्पणं यथा तावच्छब्दः क्वचिदाश्रितो गुणत्वादिति किंचिदाश्रितत्वे सिद्धे केवलव्यतिरेकिणाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं साध्यते तत्र स्यात्, सामान्यतोदृष्टहेतोः पक्षधर्मताबलादेव विशेषस्यापि सिद्धेरित्यर्थः ।

२ प्रत्यक्षव्यवच्छेदाय स्मृतिकरणिकेत्युक्तम्, शाब्दप्रमितेरपि पदार्थस्मृतिकरणत्वमस्तीति तद्व्यवच्छेदाय शाब्दव्युत्पत्तिशून्यस्येत्युक्तम् ।

३ प्रत्यक्षभ्रमसंशयव्यवच्छेदाय प्रमात्वावान्तरजातिग्रहणम्, प्रत्यक्षागमादिव्यवच्छेदाय तादृशप्रमितीत्युक्तम् ।

४ अनुमेये न संबद्धमिति, पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरिति त्रीणि रूपाणि वैशेषिकलक्षणे क्रमेण निर्दिष्टानि, त्रिरूपात् पक्षधर्मत्वादिरूपत्रयविशिष्टात्, ज्ञातसंबन्धस्येति, संबन्धज्ञानवतः पुरुषस्य लिङ्गाख्यैकदेशे दर्शनादेकदेशान्तरे लिङ्गिन्यसंनिकृष्टे प्रतिपत्तुरनधिगतेऽबाधिते च या बुद्धिस्तदनुमानमिति जैमिनीयलक्षणार्थः ।

एतेन परार्थानुमानमपि प्रत्युक्तम्, स्वार्थानुमानमुपजीव्य तत्प्रवृत्तेः, तथाहि प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवात्मकं तत्, तत्र तावत् पक्षवचनं प्रतिज्ञा, इत्यलक्षणम् ।

पूर्वोदितेन न्यायेन पक्षस्यैवानिरूपणे ।
कथं तद्वचनं वाच्यं प्रतिज्ञेति विपश्चिता ॥ २८ ॥

किं पक्ष[1]प्रतिपादकं वचनमात्रं प्रतिज्ञा प्रतिपिपादयिषया वा तद्वचनमुत हेत्वाकाङ्क्षाजनकं किं वा साध्यधर्मविशिष्टधर्मिप्रतिपादकं तदेव हेत्वाकाङ्क्षाजनकत्वविशिष्टं वा निगमनान्यत्वविशिष्टं वा ।

नाद्यः, अयं पक्ष इत्यादेरपि वचनस्य प्रतिज्ञात्वप्रसङ्गात्, पक्षलक्षणवचनस्या[2]पि तत्त्वप्रसक्तेश्च ।

अत एव न द्वितीयः, प्रतिपादनेच्छया पक्षवचनत्वस्य तत्रा[3]पि भावात् ।

न तृतीयः, कस्मादयं पक्ष इत्यादेरपि तत्त्वप्रसङ्गात् ।

नापि चतुर्थः, निगमनस्यापि तद्भावप्रसङ्गात् ।

नापि पञ्चमः, कस्मादयं साध्यधर्मवानिति वचनस्यापि तथात्वापातात् ।

अप्रश्नरूपं तथाभूतं वचनं विवक्षितमिति चेत्, न, आक्षेपवचनस्यापि प्रश्नं मन्वानं[4] प्रति तद्रूपत्वात्, लक्षणवचनेऽपि व्यभिचाराच्च ।

---

१ किं पक्षेति, साध्यधर्मिणि कुम्भोऽयमित्यादिवाक्येषु च व्यभिचारनिवारणार्थं पक्षवचनमिति पदद्वयम्, द्वितीयतृतीयलक्षणयोः प्रतिपिपादयिषया हेत्वाकाङ्क्षाजनकमिति च विशेषणद्वयं निगमनव्यवच्छेदार्थम् ।

२ पक्षलक्षणवचनस्य साध्यधर्मविशिष्टो धर्मी पक्ष इत्यादेरिति यावत् ।

३ तत्रेति, अयं पक्ष इति वाक्ये पक्षलक्षणवाक्ये चेति ।

४ नन्वाक्षेपवचनस्य परमार्थतः साध्यधर्मवैशिष्ट्यनिषेधपरत्वात् कथं तत्रातिव्याप्तिरित्याशङ्क्याह प्रश्नं मन्वानं प्रतीति, आक्षेपवचनस्य परमार्थतः साध्यधर्मवैशिष्ट्यनिषेधपरत्वेऽपि प्रश्नोऽयमिति भ्रान्तं प्रति साध्यधर्मवैशिष्ट्यप्रतिपादनपरत्वाद् भवत्येवातिव्याप्तिः, न चाभ्रान्तं प्रतीति विशेषणादवोषः, भ्रान्तं प्रतिवादिनं प्रति प्रयुज्यमानप्रतिज्ञावाक्येष्वव्याप्तिरिति भावः ।

नापि षष्ठः, परस्पराश्रयप्रसङ्गात् ।

उपनयानन्तरं प्रतिज्ञावचनं निगमनं सहेतुकं प्रतिज्ञावचनमिति वा लक्षणम्, तथा च प्रतिज्ञासिद्धौ निगमनसिद्धिस्तत्सिद्धौ च तदन्यत्वविशेषितप्रतिज्ञासिद्धिरिति कथं न परस्पराश्रयः, तस्माच्च प्रतिज्ञालक्षणानिरुक्तिः ।

नापि हेतोः, तथाहि, किं लिङ्गवचनं हेतुरुत तृतीयापञ्चम्योरन्यतरविभक्त्यन्तं साधनत्वख्यापकं लिङ्गवचनं वा ।

नाद्यः, अस्ति लिङ्गमयं धूम इत्यादेरपि वचनस्य हेतुत्वप्रसङ्गात् ।

नापि द्वितीयः, अन्यतरशब्देनैकस्य द्वयोर्वाभिधाने तल्लक्षणस्याव्याप्तेः ।

न तृतीयः, साधनशब्देन हेतुविवक्षायामात्माश्रयात्, तृतीयापञ्चम्यन्तताभिधाने पूर्वोक्तदोषापत्तेः, लिङ्गविवक्षायां त्वेतल्लिङ्गमस्ति वास्य लिङ्गत्वमित्यादेरपि वचनस्य तथात्वापातात् ।

नाप्युदाहरणलक्षणम्, दृष्टान्तानिरुक्तौ तद्वचनमुदाहरणमिति वक्तुमयुक्तत्वात्, तथाहि, किं लौकिकपरीक्षकाणां यत्र बुद्धिसाम्यं स दृष्टान्तः किं वा निश्चितसाध्यसाधनवान् ।

नाद्यः, स्वर्गापूर्वदेवतादीनां लौकिकासंमतानामपि दृष्टान्तत्वात् ।

नापि द्वितीयः, निश्चितसाध्यसाधनाभाववतो वैधर्म्यदृष्टान्तत्वाभावप्रसङ्गात् ।

साध्यसाधनशब्दाभ्यां तदभावयोरपि संग्रहाददोष इति चेत्, न निश्चितत्वानिरुक्तेः, तथाहि, किं वादिनोर्निश्चय उत वादिप्रतिवादिनोः किं वा सर्वेषाम् ।

नाद्यः, साध्यधर्मिणोऽपि* दृष्टान्तत्वप्रसङ्गात्, वादिनस्तत्र निश्चयसद्भावात् ।

न द्वितीयः, विकल्पासहत्वात्, किं निश्चयमात्रं किं वानुमितिकालविशेषितो निश्चयः ।

* साध्यधर्मेऽपि इति पा० ।

आद्ये[1] कालान्तरे निश्चयस्यापि कालान्तरेऽन्यथाभूतस्य दृष्टान्तत्वप्रसङ्गात् ।

द्वितीये तु कालस्य निश्चितसाध्यसाधनवतोऽपि दृष्टान्तत्वाभावप्रसङ्गात्, काले कालविशेषितनिश्चयस्याभावात् ।

नापि तृतीयः, सर्वनिर्णयस्यासर्वज्ञेन निश्चेतुमशक्यत्वात् ।

यो यदा निश्चितसाध्यसाधनवान् स तदा दृष्टान्त इत्ययुक्तम्, यदा सदेति कालाभिधाने काले तदभावात्, यत्तच्छब्देन[2] चानुगतरूपस्य तद्वतो वाभिधाने तयोरेव प्रत्येकमदृष्टान्तत्वापातात् ।

एवं दृष्टान्तानिरुक्तौ तत्प्रतिपादकं वचनमुदाहरणमित्ययुक्तम् ।

नाप्यु[3]पनयलक्षणम्, तथाहि, किं दृष्टान्तानन्तरं हेतुवचनमुपनयः किं वा दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनं व्याप्तस्य पक्षधर्मताप्रतिपादकं वा ।

नाद्यः, दृष्टान्तवचनानन्तरं धूमवत्त्वादित्यस्यापि वचनस्योपनयत्वप्रसङ्गात् ।

नापि द्वितीयः[4], दृष्टान्तवैधर्म्येण न तथा चायमधूमवानित्यादिवचनस्यानुपनयत्वप्रसङ्गात्, उपमानशब्देन[5] च साधर्म्यवैधर्म्ययोरुभयोर्विवक्षितत्वेऽन्यतरवचनस्यानुपनयत्वप्रसङ्गः, दृष्टान्ताविनाभावलक्षणयोः पुरस्ताचिरस्तत्वाच्च ।

---

१ पूर्वमग्निमत्तया निश्चितप्रदेशस्योत्तरकालमग्निरहितस्यापि वह्निमत्त्वे दृष्टान्तप्रसङ्ग इति प्रथमं दूषयति, आद्य इति ।

२ यो यदेत्यादिलक्षणे यदा तदेत्यंशं दूषयित्वा यः स इति लक्षणं दूषयति यत्तदिति, यत्तच्छब्दाभ्यामनुगतं रूपमभिधीयते किं वा तद्रूपवत्, आद्ये रूपवतो द्वितीये रूपस्यादृष्टान्तत्वप्रसङ्ग इत्यर्थः ।

३ चतुर्थमवयवं खण्डयति नापीति, दृष्टान्तोपमानेनेति, तथा चायमिति महानसाद्युपमानेनेत्यर्थः ।

४ नापि द्वितीय इति, द्विविधो ह्युपनयः, साधर्म्यवैधर्म्यभेदात्, तथा चायं धूमवानिति साधर्म्योपनयः, न तथायमधूमवानिति वैधर्म्योपनयः, तत्र वैधर्म्योपनये दृष्टान्तोपमानं नास्तीत्यव्याप्तिरित्यर्थः ।

५ अथोपमानवैधर्म्यमपि विवक्षितम्, तदैवैकाव्याप्तिरित्याहोपमानशब्देनेति ।

नापि तृतीयः, व्याप्तो धूमः पक्षेऽस्तीति वचनस्यापि तथात्वप्रसङ्गात्, व्याप्तिपक्षधर्मतयोश्च पुरैव निरासात् ।

नापि निगमनलक्षणम्, तत् किमुपनयानन्तरं प्रतिज्ञावचनमुत सहेतुकं प्रतिज्ञावचनम् ।

नाद्यः, उपनयानन्तरमग्निमान् पर्वत इत्येतावद्वचनस्यापि निगमनत्वप्रसङ्गात् ।

नापि द्वितीयः, व्युत्क्रमोदितस्यापि तथात्वापातात्, प्रतिज्ञाहेत्वोश्च पुरैव निरासात् ।

किंच ।

अनुमानाङ्गयोः सिद्धेर्व्याप्तिपक्षगतत्वयोः ।
उदाहृतेरुपनयात् पञ्चावयवता वृथा ॥ २९ ॥

पञ्चावयवं वाक्यमपि न प्रयोजनवदवश्यमिति पश्यामः, साधनानुपयुक्तवचनस्याधिकनिग्रहत्वात्, तथाहि वादिप्रतिवादिनोः पक्षप्रतिपक्षसमयबन्ध[1]स्वीकारसमनन्तरं प्रतिवादिनः किमत्र प्रमाणमिति प्रमाण एव जिज्ञासा, यावदङ्गविशिष्टं च प्रमाणं तावदेव वक्तव्यम्, अङ्गं च द्वयमेव, व्याप्तिः पक्षधर्मता चेति, तच्चोभयमुदाहरणोपनयाभ्यामेवाभिहितमिति किमपरमवशिष्यते यदर्थमुपाददीत ।

ननु पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्च रूपाणि हेतोरवश्यं वक्तव्यानि, अन्यथासिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमानामनिरासे हेतोरसाधकत्वप्रसङ्गात्, तत्र यद्यपि व्याप्तिपक्षधर्मताप्रदर्शनेन रूपत्रयोपपादनादसिद्धविरुद्धानैकान्तिकानि परिहृतानि तथापि बाधितविषयत्वसत्प्रतिपक्षत्वयोरविशिष्टयोरनिरासे कालात्ययापदिष्टप्रकरणसमयोर्हेत्वाभासयोः परिहाराय निगमनमपेक्षणीयमेव, स च तस्मादयमग्निमानेव न पुनस्तस्मादन्यस्माद्वानग्निमानपीति निगमनेनावद्योत्यत इति चेत्, मैवम्, पूर्वमेव हि

[1] समयबन्धो नाम अपशब्दो वर्जनीयः, एतावन्ति च निग्रहस्थानान्युद्भावनीयानीत्यादिरूपः ।

सिद्धत्वादसंभवित्वात्, तथाहि साधनसद्भावे साध्यसद्भावनियमलक्षणा-न्वयव्याप्तेः साध्याभावे साधनाभावलक्षणव्यतिरेकव्याप्तेश्चोदाहरणेनैव प्रदर्शितत्वेन कालात्ययापदिष्टस्यानैकान्तेऽन्तर्भूतस्य अत एव परिहारः, बाधिते पक्षे वर्तमानो हेतुर्हि कालात्ययापदिष्टः, बाधश्च पक्षनिष्ठसाध्या-भावनिश्चय एवेति निश्चितसाध्याभाववद्वृत्तिः कथमनैकान्तिको न स्यात् ।

ननु साध्याभावनिश्चयो बाधः, स च पृथग्दूषणम्, अनैकान्त्यात्, निश्चिते साध्याभावे तद्वृति वर्तमानोऽनैकान्तिकः, ततश्च पुरःस्फूर्तिक-बाधेनैवोपहतो हेतुः कथमनैकान्तिकेन पुनरुपहन्येत, न हि मृतो मार्यत इति चेत्, हन्तैवं बाधवदेव विपक्षग्राहकप्रमाणमपि पृथग्दूषणं स्यात्, प्रमिते विपक्षे तदुपजीविनस्तद्वृत्तेरनैकान्तिकत्वाङ्गीकारात्, व्याप्तिपक्षधर्मता-पहारेणैव च सर्वस्य दूषणजातस्य दूषणता, अन्यथा सिद्धसाधनताया अपि पृथग्दूषणत्वप्रसङ्गात्, सा हि सिद्धस्य साध्यत्वाभावेन पक्षत्वप्रच्युत्या दूष-णमुपेयते, तथा बाधोऽपीति, अबाधितविषयत्वस्य दुर्निरूपत्वाच्च, पक्षे विषयापहारलक्षणबाधस्य प्रमितौ तदभावस्य वक्तुमशक्यत्वात्, अप्रमि-तौ चाप्रमितप्रतियोगितया तदभावस्यासिद्धेः, तदुक्तमभियुक्तैः,

"बाधश्च पक्षे विषयापहारो यद्यस्तिना बाधितताऽत्र सिद्धा ।
नो चेदसिद्धप्रतियोगिकत्वादेतस्य सिद्धिर्न कथंचन स्यात्" ॥

इति ।

सत्प्रतिपक्षप्रकरणसमावप्यसंभविनावेव, निरुपाधेस्त्वनुमानद्वयस्यै-कत्रासंभवित्वात्,संभवे वा वस्तुनो द्वैरूप्यापत्तेः, प्रकरणसमेऽपि वस्तुनो द्वैरूप्यापत्तिरेव, पक्षविपक्षयोर्व्याप्तिग्राहकप्रमाणसद्भावात्, अन्यतरग्राहक-प्रमाणाभावे च तत एव व्याप्तिभङ्गात् ।

किंच[१] नित्यः शब्दोऽनित्यः शब्दो वा पक्षसपक्षयोरन्यतरत्वात् सपक्षवदित्येवंरूपोऽसाविष्यते, तत्र चार्थभेदाच्च पक्षप्रतिपक्षयोरेकरूपो हेतुः, नित्यत्वप्रतिज्ञायां नित्यत्वस्यानित्यत्वप्रतिज्ञायामनित्यत्वस्य सप-क्षशब्देनाभिधानात्, शब्दसाम्यमात्रेण च हेतोरेकरूपत्वे गोशब्दवाच्य-

१ साध्यतदभावयोस्त्रिरूप एको हेतुः प्रकरणसम इष्यते, प्रस्तुतोदाहरणे चार्थभेदेन हेतोरेकत्वमेव न संभवतीत्याह किंचेति ।

त्वाद्गवयादीनामपि विषाणित्वानुमा प्रसज्येत, तदेवं व्याप्तिपक्षधर्मताभ्यामेव सकलहेत्वाभासनिरासे नावयवान्तरकृत्यमस्तीति पश्यामः, तेन पञ्चावयवं वाक्यं परार्थानुमानमिति प्रत्युक्तम् ।

उपमानलक्षणमपि दुर्घटम्, तथाहि नगरानुभूतचरगोपिण्डस्य वनमुपेयुषः साक्षाद्गवयमीक्षमाणस्यानेन सदृशी मदीया गौरिति प्रत्यक्षदृष्टगवयसादृश्यविशिष्टासंनिकृष्टगोपिण्डग्रहणमुपमानमिति मीमांसकाः, न चेदं स्मरणम्, पुरा गोपिण्डमात्रानुभवेऽपि प्रतियोगिगवयाद्यनवगतत्वेन तत्सादृश्यविशिष्टतयाननुभवात् ।

नाप्यनुमानम्, तद्व्याप्तलिङ्गाभावात् ।

नापि शाब्दम्, अन्तरेणापि शब्दव्यवहारमुपपत्तेः, मैवम्,

भूयोऽवयवसामान्यं सादृश्यं यच्च गोगतम् ।
विज्ञातमविकल्पेन प्रत्यभिज्ञायते यतः ॥ ३० ॥

न तावत् तौतातिकमते[1] सादृश्यमस्ति पदार्थान्तरं किंतु भूयोऽवयवसामान्ययोग एव, तदुक्तम्,

"सादृश्यस्य[2] च वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामन्ययोगे जात्यन्तरस्य तत्" ॥

इति ।

तच्च बुद्ध्यनारूढेऽपि प्रतियोगिनि गोत्वर्वान्निर्विकल्पकेनाकलितं पुनर्गवयस्य प्रतियोगिनो दर्शने परामृश्यते सविकल्पकेन, तत् किमपरमवशिष्यते यत्रोपमानमिष्येत ।

ननु निर्विकल्पकेनापि न सादृश्यमनुभूतम्, सविकल्पकवत् तस्यापि तदाकलने प्रतियोगिसापेक्षत्वादिति चेत्, न, हस्त्वितस्त्यादिवत्

१ कौमारिलमते ।

२ सौगतेन सादृश्यस्य वस्तुत्वे प्रतिक्षिप्ते तत्प्रतिमाधनार्थमाह वार्तिककारः सादृश्यस्य चेति.जात्यन्तरस्य गवयापेक्षया धर्म्यन्तरस्य गोपिण्डादेर्भूयोऽवयवसामान्ययोगोऽनेकसाधारणधर्मयोगः सादृश्यमिति यावत्, अन्यथा निरवयवेषु गुणादिष्ववयवसामान्ययोगाभावात् सादृश्यव्यवहारो न स्यादिति द्रष्टव्यम् ।

कर्कखुरादिसामान्यस्य स्वरूपावधारणे प्रतियोगिनिरपेक्षत्वात्, अन्यथा भेद-स्यापि निर्विकल्पकेनाकलनाभिनिवेशो भवतां प्रलीयेत ।

ये तु प्रतिजानते सादृश्यं नाम पदार्थान्तरं तद्धि न द्रव्यं गुणवृत्तित्वात्, अत एव न गुणोऽपि नापि कर्म नापि सामान्यादित्रयं तत्रापि वृत्तेः, नापि शक्तिः, शक्तेरप्रत्यक्षत्वात्, प्रत्यक्षत्वाच्च सादृश्यस्य, नापि संख्या, संख्यावृत्तित्वात्, इदमेकत्वमेकत्वान्तरसदृशमिदं च द्वित्वं द्वित्वान्तरसदृशमिति तत्रापि व्यवहारात्, तच्च सविकल्पकैकवेद्यम्, इदमनेन सदृशमिति प्रतियोगिघटितस्यैव व्यवहारनियमदर्शनादिति, मैवम्, विकल्पासहत्वात्, तत् किं स्पर्शवद्गुत न ।

आद्ये द्रव्यत्वं द्वितीये एकवृत्तित्वे गुणकर्मविशेषाणामन्यतमत्वम्, अनेकवृत्तित्वे तु सामान्यसमवाययोरन्यतरत्वापत्तिः, एतेन पदार्थान्तरत्वं संख्याया अपि प्रत्याख्येयम् ।

यत् पुनः षट्पदार्थान्तर्भावे सामान्यादिवृत्तित्वं न स्यादिति, तत्र ब्रूमः, किमिदं प्रसङ्गमात्रमुत विपर्ययपर्यवसायितया प्रमाणमेव ।

नाद्यः, तर्कमात्रस्यासाधकत्वात् ।

न द्वितीयः, सामान्यमेव सादृश्यमिति वादिनं प्रति सामान्यवृत्तित्वस्यासिद्धेः ।

ननु गवयत्वमिव गोत्वमित्यनुभवादेव सादृश्यस्य सामान्यवृत्तिता सिद्धेति चेत्, तत् किमनुभवादेव सिद्धिरुताबाधितात् ।

नाद्यः, गगननीलिमादेरपि सिद्धिप्रसङ्गात् ।

न द्वितीयः, प्रतिवादिनं प्रत्यबाधासिद्धेः ।

किंच यत्र सौवर्णकर्णाभरणाया सौवर्णकर्णाभरणा सदृशीत्युपमीयते, तत्र द्रव्यं सादृश्यम्, न च तद्गुणवृत्ति, तथा रसः पनसशर्करयोः सादृश्यम्, तस्य च द्रव्यवृत्तित्वेन गुणवृत्तित्वात्, इत्यसिद्धो हेतुः, यत्र च हंसगमनेन[1] हंसगमनमुपमीयते, तत्र कर्मैव सादृश्यमिति, तत्रापि हेतोरसिद्धिः ।

---

१ हंसस्य गमनमिव गमनमस्येति हंसगमनः पुरुषस्तेन ।

किंच दृश्ये प्रतियोगिनि धर्मिस्वरूपग्रहणमेवाभावव्यवहारनिदानमिच्छन् किं नेच्छस्यधिगतगवयस्य गोस्वरूपावधारणमेव सादृश्यव्यवहारकारणमिति ।

भवतु वा यत् किंचित् सादृश्यं तथापि गोपिण्डस्य तद्विशिष्टताप्रतीतिरनुमानमेव किं न स्यात् ।

सा गौर्गवयसदृशी गोत्वाद् गवयेन सहोपलभ्यमानगवान्तरवदिति प्रयोगोपपत्तेः ।

गवयोपलम्भसहकालमप्रमीयमाणगवान्तरस्य गवयसदृशी गौरित्यवगतिरूपमिति चेत्, मैवम्, अर्थापत्तेरेव तत्रापि प्रामाण्योपपत्तेः, गवयनिष्ठगोसादृश्यस्य परिदृश्यमानस्य गोगतगवयसादृश्यव्यतिरेकेणानुपपत्तेः ।

न च गवयनिष्ठं गोसादृश्यमप्रत्यक्षमप्रत्यक्षत्वात् प्रतियोगिनो गोरिति वाच्यम्, स्मर्यमाणेऽपि प्रतियोगिनि धर्मिग्रहणादेव सादृश्यस्य भेदवत् प्रत्यक्षत्वोपपत्तेः, सादृश्यज्ञानकरणमुपमानमित्यभ्युपगच्छता[1] च सादृश्यप्रतीतेरवश्याभ्युपेयत्वात्, तथा चार्थापत्त्यैव तत्प्रतीत्युपपत्तेः कृतमुपमानेन, अन्यथा वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वप्रसङ्गः, तथाहि यत्र परोक्षादपरोक्षे भवति वैधर्म्यावगतिस्तस्मादयमन्यथेति भवति, तस्मादन्यथा स इत्यपि मतिः, सापि प्रमाणान्तरं स्यात्, सार्थापत्तिरिति चेत्, प्रकृतेऽपि समानम्, यथोदितमुदयनेन[2] ।

"साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतेन किम्" ॥

इति ।

तदास्तां मीमांसकाभिमतोपमानापाकरणप्रपञ्चः ।

नैयायिकोदीरितमुपमानमपि दुर्निरूपम्,

---

१ गवयनिष्ठगोसादृश्यज्ञानकरणकं गवि गवयसादृश्यज्ञानमुपमानमिति स्वीकुर्वता ।

२ उदयनेन कुसुमाञ्जलावुक्तं चैतदित्याह तदुक्तमिति, अत्र साधर्म्यवैधर्म्यशब्दाभ्यां तज्ज्ञापकप्रमाणे विवक्ष्येते ।

अनवगतसंगतिसंज्ञासमभिव्याहृतवाक्यार्थप्रमितिरुपमितिस्तत्करणमुपमानमिति ते वर्णयन्ति, तथाहि नागरिकस्य यादृशी गौस्तादृशो गवय इति श्रुतातिदेशवचसः कानने वस्तुतो गोसदृशं गवयमालोकयतो नूनमयमसौ गवयपदाभिधेयो यः पुराप्तेन गोसदृशो गवय इत्युपदिष्ट इति प्रमितिरुपजायते, न चेयमागमजा, अपरिदृष्टगवयस्यापि प्रसङ्गात् ।

भवत्येवाप्तवचनात् सामान्यतस्तन्निश्चय इति चेत्, मैवम्, सामान्यतः प्रतीतावपि व्यक्तिविशेषस्य तत्पदाभिधेयत्वाप्रतीतेः, अन्यथा यो यो धूमवानसावसावग्निमानित्याप्तवचनाधिगताविनाभावस्य पर्वतेऽपि वह्निप्रतीतिरागमजैव स्यात् ।

अस्तु तर्हि प्रत्यक्षेणैव गवयशब्दवाच्यत्वाधिगतिरिति चेत्, मैवम्, अश्रुतातिदेशवाक्यास्यापि प्रसङ्गात् ।

उपदेशसंस्कारसध्रीचीनं प्रत्यक्षमेव रत्नतत्त्वस्येव तदवगतिहेतुरिति, चेत्, न, वाच्यत्वस्य प्रत्यक्षानवग्राह्यत्वात्, नहि प्रत्यक्षेऽपि घटे घटशब्दवाच्यता प्रत्यक्षा, येन प्रकृतेऽपि तथा स्यात् ।

नाप्यनुमानत[1]स्तदधिगतिः, गोसादृश्यस्य गव्यपि संभवेन विपक्षवृत्तित्वात् ।

नार्थापत्तिः, अनुमानानतिरेकादिति चेत्, मैवम्, अनुमानतस्तथात्वाप्रतीत्युपपत्तेः, तथाहि,

वाचको गवयस्यायं तत्र वृत्त्यन्तरेऽसति[2] ।
वृद्धैः प्रयुज्यमानत्वाद्गोत्वे गौरिति गौरिव ॥ ३१ ॥

१ अयमभिसंधिः, न तावन्माणवक समिधमाहरेति वाक्यश्रवणसमनन्तरमेव मध्यमवृद्धमाणवकसमिदाहरणप्रवृत्तिवदेतच्छ्रवणसमनन्तरमस्ति काचित् प्रवृत्तिर्येन मार्गेण गवादिशब्दानामिवानुमानादस्यापि गवये संगतिर्गृह्यते, तत् कस्य हेतोः, अप्रवर्तकत्वात्, तदिहैतदवशिष्यते, विमतः पुरोवर्तिपिण्डो गवयशब्दस्य वाच्यो गोसदृशत्वाद्य यदेवं न तदेवं यथा करभादीति व्यतिरेक्यनुमानादधिगतिरिति, तच्च न संभवति, गवान्तरेऽपि गोसदृशत्वहेतोर्वर्तनेन विरुद्धत्वादिति ।

२ तत्र वृत्त्यन्तरे सतीति, गोसदृशपदार्थे लक्षणागुणवृत्त्योरसंभवे सति, तत्र प्रयुज्यमानत्वादित्यर्थः ।

यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते स तस्य वाचको यथा गोशब्दो गोत्वस्य, प्रयुज्यते चायमसति वृत्त्यन्तरे गवयशब्दः पुरोवर्तिनि, तस्मात् तस्य वाचक इत्यनुमानादेव संबन्धाधिगतिसिद्धेः ।

न च विशेषणासिद्धो हेतुः, शङ्क्यमानगोसादृश्यस्य[1] गवयशब्दप्रवृत्तिनिमित्तत्वानुपपत्तेः, अप्रतीतगवामारण्यकानां गोसादृश्यानधिगतौ गवय इति व्यवहाराभावप्रसङ्गात् ।

गवयत्वस्यापि निमित्तत्वाददोष इति चेत्, मैवम्, अप्रतीतगोपदार्थस्य गवयत्वं निमित्तम्,प्रतीतगोस्तु तत्सादृश्यं निमित्तमित्युभयत्रापि शक्तिकल्पनायां गौरवप्रसङ्गात्, गोविशेषितसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वे गवि तत्सादृश्ये च शक्तिः कल्पनीयेत्यपि गौरवं स्यात्, अन्यथोपमानस्य[2] मानान्तरत्वेऽपि गवयशब्दस्य गोसादृश्यस्य निमित्तताशङ्काया दुष्परिहरत्वात्, गवयत्वं निमित्तीकृत्य गवयशब्दोऽत्र प्रवृत्त इत्युपमानादपि निर्धारणा न सिध्येत् ।

किंच,अनवगतसंगतित्वविशेषणं व्यर्थम्, अभ्युपगतप्रमाणसंप्लववादिनः प्रत्यक्षाधिगतेऽपि पुनः पुनः प्रत्यक्षवदनुमितेऽप्यनुमानवच्चोपमितेऽपि पुनरुपमानप्रवृत्त्युपपत्तेः ।

अपिच, इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्राप्रसिद्धमधुकरपदार्थस्य प्रसिद्धेतरपदार्थस्य च प्रसिद्धपदसमभिव्याहारान्मधुकरशब्दार्थप्रतीतिवद्गवयशब्दार्थप्रतीतिः किं न स्यात् ।

न च सर्वत्र समभिव्याहारादधिगतिरुपमितिः, तत्करणस्य सादृश्यज्ञानस्य तत्राभावात्, असत्यपि च सादृश्यज्ञाने संज्ञासंज्ञिसंबन्धप्रतिपत्तिरेवोपमितिरित्याधुनिकमतानुप्रवेशे सूत्रवार्तिकप्रसिद्धसिद्धान्तविरुद्धाभ्युप-

१ अत्र तावल्लक्षणा वृत्तिर्न शङ्कामप्यधिरोहति, तदा हि गोसादृश्यवाचकस्य सतो गवयत्वे त्वेतदविनाभूते लक्षणया प्रयोग इति शङ्कितव्यम्,तच्च न संभवति, अदृष्टगोपदार्थानामरण्यैकनिवासिनां गोसादृश्यानधिगमे गवयपदाप्रयोगप्रसङ्गादित्यर्थः ।

२ तवा ेता युक्तयः शरणमिति न त्वां प्रति विशेषणासिद्धिरित्याहान्यथोपमानस्येति ।

गमो वज्रलेपायते, तथा च भगवदक्षपादप्रणीतं सूत्रम्, "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमान"मिति, व्याख्यातं चैतदुद्द्योतकरेण वार्तिककृता, 'आगमाहितसंस्कारस्मृत्यपेक्षं सादृश्यज्ञानमुपमान'मिति, अथावधीरितापसिद्धान्तप्रसङ्गभीतेरियं पृथिवी शब्दवाच्या गन्धवत्त्वाद् यन्नैवं तन्नैवमित्यादिकेवलव्यतिरेक्यनुमानमपि संज्ञासंज्ञिसंबन्धप्रतिपत्तिफलमुपमानमापद्येतेत्यलमतिविस्तरेण ।

शाब्दप्रमाणमपि दुर्निरूपम्,तथाहि, शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानमिति मीमांसकाः, शब्दविषयं विज्ञानं शब्दविज्ञानं तस्मादसंनिकृष्टेऽर्थे ज्ञातुरनधिगतेऽबाधिते च विषये यद्विज्ञानं तच्छाब्द प्रमाणमिति यावत्, उक्तं हि वार्तिककारैः,

"असंनिकृष्टवाचा च द्वयमत्र जिहासितम् ।
तादूप्येण गृहीतत्वं तद्विपर्ययतोऽपि वा" ॥

इति ।

यद्वा शब्दाज्जनितं पदार्थविषयं यद्विज्ञानं तस्मादसंनिकृष्टेऽर्थे बुद्धिः शाब्दमिति, तदयुक्तम्, शब्दलिङ्गकवक्तृविशेषानुमानेऽतिव्याप्तेः, भवति हि बहिष्ठस्याध्ययनध्वनिश्रवणाद्भवनान्तर्वर्तिपुरुषविशेषानुमानम्, द्वितीयेऽपि धूमादिपदात् तदर्थविज्ञाने धूमध्वजादौ जायमानानुमानादावतिव्याप्तिः ।

लिङ्गाद्यजन्यत्वे सतीति विशेषणाददोष इति चेत्, तर्हि तावदेवास्तु लक्षणं किमनेन शब्दविज्ञानादित्यादिना विशेषणेन कण्ठशोषकरेण ।

कश्चायं शब्दो नाम, यद्विज्ञानादसंनिकृष्टेऽर्थे बुद्धिः ।

न तावत् पदं पदम्, अभ्यधिकाभावात् स्मारकान्न विशिष्यत इति स्वयमेव तस्यासंनिकृष्टार्थविज्ञानजनकत्वानभ्युपगमात् ।

नापि वाक्यम्, तस्यानिरुक्तेः, तथाहि किं पदसमुदायमात्रं वाक्यमुतैकार्थप्रतिपादकत्वावच्छिन्नः पदसमुदाय उताकाङ्क्षासंनिधियोग्यतावन्ति पदानि ।

नाद्यः, गौरश्वः पुरुषो हस्तीत्यादेरपि वाक्यत्वप्रसङ्गात् ।

नापि द्वितीयः, अर्थस्यैकत्वविषयत्वावच्छिन्नत्वानामनिरुक्तेः ।

तत्रैकत्वं नाम किमेकत्वसंख्यावत्त्वमुताभेदः किं वा स्वरूपमेव ।

नाद्यः, गौरश्वः पुरुष इत्यादेरप्येकत्वसंख्याविशिष्टतया तद्वाचकपदसमुदायस्यापि वाक्यत्वप्रसङ्गात्, एकत्वादिसंख्याप्रतिपादकवाक्याकल्पनाच्च. न ह्येकत्वद्वित्वादावेकत्वं संख्यान्तरमस्ति येन तत्प्रतिपादकपदसमूहो वाक्यं स्यात् ।

न द्वितीयतृतीयौ, गौरश्वः पुरुष इत्यादावप्यभेदस्वरूपयोर्भावात्, विषयविषयिभावस्य च पूर्वमेव[1] निरस्तत्वात् ।

किंचेदमवच्छिन्नत्वम्, विशिष्टत्वमिति चेत्, तदेव किं विशेषणेन संबद्धत्वमिति चेत्, संबद्धत्वमित्यत्रापि संबन्धेन विशिष्टत्वोक्तावात्माश्रयता ।

विशेषणव्यावृत्तसंबन्धाधारत्वोक्तौ को दोष इति चेत्, व्यावृत्त[2]-शब्देन विशिष्टत्वोक्तावात्माश्रयता प्रथमः, विशेषणविशेष्ययोः प्रत्येकं विशिष्टत्वापत्तिर्द्वितीयः, संबन्धस्य च विशिष्टत्वाभावस्तृतीयः, तस्य संबन्धान्तराभावात्, भावे चानवस्था ।

किंच विशेषणविशेष्यतत्संबन्धेभ्यो विशिष्टं भिन्नमभिन्नं वा ।

नाद्यः, अनुपलम्भपराहतत्वात्, दण्डिनमानयेत्युक्तेऽन्यस्यैवानयनप्रसङ्गात् ।

नापि द्वितीयः, त्रयाणामपि प्रत्येकं विशिष्टत्वाद् दण्डादीनामन्यतमानयने दण्डी समानीत इति व्यवहारप्रसङ्गात् ।

किंचेदं विशेषणं नाम, यद्विशेषितं तत्त्वान्तरं स्यात् ।

व्यावर्तकमिति चेत्, किं व्यावृत्तेर्भेदस्य जनकमुत तत्प्रतीतेः ।

नाद्यः, असंभवात्, नहि कठोरकुठारधारया तरोरिव देवदत्तस्य दण्डकुण्डलादिना विधीयते द्वैधीभावः ।

१ पूर्वमेवेति, प्रपञ्चमिथ्यात्ववादे ।

२ विशेषणव्यावृत्तेत्यत्र व्यावृत्तत्वं विशिष्टत्वमिति वक्तव्यं तथा चात्माश्रयः ।

नापि द्वितीयः, नयनादेरपि भेदप्रतीतिजनकस्य विशेषणत्वप्रसङ्गात् ।

तदपि क्वचित् कस्यचिद्भवत्येव विशेषणमिति चेत्, हन्त तर्हि वस्तुमात्रमित्येव विशेषणलक्षणमस्त्वलमनया ग्रन्थकथाकन्थया ।

अस्तु तर्हि विषयीक्रियमाणतया यद् व्यावृत्तिबुद्धिजनकं तद्विशेषणलक्षणमिति चेत्, मैवम्, विशेष्येऽपि[1] प्रसङ्गात् ।

तदन्यत्वे सतीति विशेषणाददोष इति चेत्, न, उपलक्षणेऽपि प्रसङ्गात्, विशेषण[2]सिद्धौ तदुपजीविनो विशेष्यस्य सिद्धिस्ततश्च ततोऽन्यत्वेन विशेषणसिद्धिरिति परस्पराश्रयता ।

एतेन[3],

"स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्" ।

इति भट्टपादीयमपि लक्षणं परास्तम्, परस्परा[4]श्रयताया दर्शितत्वात् ।

यत् पुनरुदयनेनोदीरितं "सामानाधिकरण्येन[5] प्रतीयमानं विशेषणं व्यधिकरणतया प्रतीयमानमुपलक्षण"मिति तदप्यसत्, विकल्पासहत्वात्, किमार्थिकं सामानाधिकरण्यं विवक्षितमुत शाब्दम् ।

नाद्यः, असंभवात्, न ह्यस्ति दण्डदेवदत्तयोः शौक्ल्यपटयोश्चैकाधिकरण्यम्, तयोः प्रतिनियताधिकरणत्वात् ।

दण्डित्वदेवदत्तत्वयोरैकाधिकरण्यमस्ति दण्डिन एव देवदत्तत्वादिति चेत्, तर्हि तयोरेवास्तु विशेषणविशेष्यभावो न तु दण्डदेवदत्तयोः, न हि दण्ड एव दण्डी ।

न द्वितीयः, तत् किमेकविभक्तिकानेकपदाभिधेयत्वमुत भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः । (शेषमग्रे)

१ विशेष्यस्यापि विषयीक्रियमाणतया व्यावृत्तिबुद्धिजनकत्वेन तत्रातिव्याप्तिः ।

२ विशेष्यान्यत्वे सति नियमेन विषयीक्रियमाणतया तज्जनकं विशेषणं न तदुपलक्षणस्यास्ति, असतोऽप्युपलक्षणतया तत्र तस्यासंभवादिति ब्रूयात् तं प्रति दूषणान्तमाह विशेषणेति ।

३ एतेनेति, विशेष्यं येन पदार्थेन स्वबुद्ध्या रज्यते स रञ्जको विशेषणं न ह्युपलक्षणस्योपरञ्जकत्वमस्ति तटस्थत्वादिति भावः ।

४ अस्यापि विशेष्यगर्भत्वात् पूर्ववदन्योन्याश्रय इत्याह परस्परेति ।

५ जटी तापस इतिवदित्यर्थः ।

# ॥ माधवीयधातुवृत्तिः ॥

(*Continued from page* 430. Vol. V.)

वीज अव्यक्ते शब्दे ॥ वीजति । विवीज । वीजिता । विवीजिषति । वेवीज्यते । वेवीक्ति । वीजयति । अविविजत् । णौ चङीति ह्रस्वः । कूजिना सहायं न पठितोऽप्रसिद्धत्वात् ॥ २३५ ॥

लज लजि भर्त्सने ॥ लाज लाजि भर्त्सने च । चकारो भिन्नक्रमः एतावपि भर्त्सनइति मैत्रेयः । भर्त्सनग्रहणं भर्जनस्याप्युपलक्षणमिति पुरुषकारः । लजति । ललाज । लेजतुः । लजिता । अलजीत् । अलाजीत् । अतो हलादेरिति वा वृद्धिः । लिलजिषति । लालज्यते । लालक्ति । लाजयति । अलीलजत् । लञ्जति । ललञ्ज । लञ्जिता । लिलञ्जिषति । लालञ्ज्यते । इदित्त्वान्नलोपाभावः । लालङ्क्ति । लञ्जयति । अललञ्जत् । एवं लाजति लाञ्जतीत्यादि । लाजः । ओलजी ओलस्जी व्रीडनइति तुदादौ । लज प्रकाशनइति कथादौ । लजिति दण्डके भाषार्थः ॥ २३९ ॥

जज जजि युद्धे ॥ जजति । लजिवत् । जाङ्गलम् । बाहुलकात् कलप्रत्ययः कुत्वं च । कुरुजङ्गलेषु भवं कौरुजाङ्गलम्, कौरुजङ्गलम् । तत्र भव इत्यण् । 'जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरमि'ति पूर्वपदस्य नित्या वृद्धिः, उत्तरपदस्य तु वा ॥ २४१ ॥

तुज हिंसायाम् ॥ तोजति । तुतोज । तोजिता । तुतोजिषति । तुतुजिषति । तुजित्वा । तोजित्वा । रलोऽव्युपधादिति क्त्वाविकल्पः । तोतुज्यते । तितोक्ति । तोजयति । अतूतुजत् । भावादिकर्मणोरुदुपधादिति क्त्वविकल्पनात् तुजितमनेन तोजितमनेनेत्यादि ॥ २४२ ॥

तुजि पालने । तुञ्जति । तुतुञ्ज । तुञ्जिता । तुतुञ्जिषति । तोतुञ्ज्यते । तोतुङ्क्ति । अतोतुङ् । तुञ्जयति । अतुतुञ्जत् । तुङ्गः । वार्त्तिकमते न्यङ्क्वादित्वात् कुत्वम् । भाषार्थोयं युजादौ ॥ २४३ ॥

गज गजि गृज गृजि मुज मुजि शब्दार्थाः । गजति । गञ्जतीत्यादि ।

लजललजिवत् । जगजतुरित्यादा ग्रादेशादित्वाचेत्वाभ्यासलोपौ । गजः । ग्रच् । गञ्जा तु मदिरागृहम् । गर्जति । जगर्ज । गर्जिता । जिगर्जिषति । जरीगृज्यते । जर्गृजीतीत्यादि पूर्ववत् । गर्जयति । ग्रजगर्जत् । ग्रजीगृजत् । 'उर्ऋत्' । गृञ्जति । जगृञ्ज । गृञ्जिता । जिगृञ्जिषति । जरीगृञ्ज्यते । रीगृत्वत इति रीक् । जरिगृञ्जीतीत्यादि । मोर्जति । मुञ्जतीत्यादि । तुजिवत् । मृञ्जमृञ्जीति स्वामिचन्द्रौ । गज मदने च । ग्रयं चुरादावपि शब्दार्थः । गर्ज शब्दइत्यन्ये ॥ २४९ ॥

वज व्रज गतौ । वजति । ववाज । ववजतुः । वजितेत्यादि । न शसददवादिगुणान्येत्वाभ्यासलोपनिषेधः । ग्रवजीत् । ग्रवाजीत् । ग्रतो हलादेरिति वा वृद्धिः । वाजः । वाज्यम् । घञ्ण्यतौ । 'ग्रजिव्रज्योश्चे'ति चकारेण कुत्वनिषेधः । व्रजतीत्यादि । लुङि वदव्रजेति नित्या वृद्धिः । ग्रव्राजीदिति । व्रज्या । 'व्रजयजोर्भावे क्यबिति क्यप् । व्रजः । 'गोचरसंचरवहव्रजव्यजापणनिगमाश्चे'ति ग्रधिकरणे घञन्तो निपातितः । परिव्राट् 'परौ व्रजेः षः पदान्त'इति क्विपि षत्वं दीर्घश्च । गतौ चुरादावपि ॥ शुचादय उदात्ता उदात्तेतः चिवर्जम् ॥ २५१ ॥

ग्रथ क्रमेण प्राप्तानात्मनेपदिनष्टवर्गीयान्तानाह । ग्रट्ट ग्रतिक्रमहिंसयोः ॥ इतः शाद्यन्ता उदात्ता ग्रनुदात्तेतः । दोपधोऽयं स्मर्यतइति मैत्रेयः । तोपधोयमिति 'ष्टुना ष्टुरि'त्यत्र न्यासवृत्तिप्रदीपकारादयः । स्वाम्यपि क्विपि ग्रदिति तकारश्रवणार्थं तोपधत्वमुक्त्वा दोपधत्वमप्याह । मैत्रेयस्तु स्वमते दोपधत्वमुक्त्वा तोपधत्वं मतान्तरमाह । ग्रड्डइति डान्तपाठः प्रकरणविरोधादुपेक्ष्यः । ग्रट्टते । ग्रानट्टे । ग्रट्टताम् । ग्राट्टत । ग्रट्टेत । ग्राशिषि । ग्रट्टिषीष्ट । मा भवानट्टिष्ट । ग्राट्टिष्यत् । ष्टुत्वं सर्व्वत्र डोपधत्वे चर्त्वे ग्रटिट्टिषते । तोपधत्वे 'पूर्वत्रासिद्धीयमद्विर्वचन'इति ष्टुत्वस्यासिद्धत्वाभावाद् द्विटकारस्य सनन्तस्य द्विर्वचने हलादिशेषे रूपम् । यद्यपि प्राणिणिषतीत्यादौ णत्वे कृते तस्यासिद्धत्वाभावात्सणस्य द्विर्वचनेनैवेष्टसिद्धौ 'उभौ साभ्यास स्ये'ति पुनर्णत्वविधानात् 'पूर्वत्रासिद्धीयमद्विर्वचन'इत्यस्यानित्यत्वज्ञापनात् ष्टुत्वस्यासिद्धत्वात् तकारादेर्द्वि-

वचनं तदापि शर्पूर्वाः खय इति टकारस्यैव शेषादिदमेव रूपम् । एवं च पुरुषकारादिषु अतिट्टिषतीति तकारस्य शेषेणोदाहरणप्रदर्शनं चिन्त्यम् । दोपधत्वे तु 'पूर्वत्रासिद्धीयमद्विर्वचन' इत्यस्य द्विर्वचनविषयत्वाव न्द्रा इति द्विर्वचननिषेधे प्रवृत्त्यभावात् ष्टुत्वस्यासिद्धत्वात् दकारवर्जं द्विरुच्यते, दकारस्य पुनष्टुत्वे चर्त्वं च अट्टिटिषत इति भाव्यम् । अट्टयति । आटिट्टत् । दोपधत्वे तु आट्टिटत् । अट्टा । गुरोश्चेत्यकारः अट्टां करोति । अट्टायते । अटाढ्येत्यादिना क्यप् । अयमनादरे चुरादिः ॥ २५२ ॥

वेष्ट वेष्टने । वेष्टते । विवेष्टे । वेष्टिता । विवेष्टिषते । वेवेष्ट्यते । वेवेष्टीति । वेवेष्टि । वेवेष्टः । लङि अवेवेट् । वेष्टयति । अविवेष्टत् । अववेष्टत् विभाषा वेष्टिचेष्ट्योरिति चङ्परे णावभ्यासस्य पक्षे अकारः । कर्मादौ वेष्ट्यत इत्यादि ॥ २५३ ॥

चेष्ट चेष्टायाम् ॥ वेष्टिवत् अकर्मकस्त्वयम् ॥ २५४ ॥

गोष्ट लोष्ट संघाते ॥ गोष्टते । जुगोष्टे । गोष्टिता । लोष्टते । लुलोष्टे । लोष्टितेत्यादि, वेष्टिवत् ॥ २५६ ॥

घट्ट चलने ॥ घट्टते । जघट्टे । घट्टितेत्यादि । अयं चुरादावपि ॥

स्फुट विकसने ॥ स्फोटते । पुस्फुटे । स्फोटितेत्यादि । पुस्फुटिषते । पुस्फोटिषते । स्फुटित्वा । स्फोटित्वा । रलोव्युपधादिति क्त्वविकल्पः । पोस्फुट्यते, पोस्फुटीति पोस्फोट्टि । अपोस्फोट् । स्फोटयति । अपुस्फुटत् । अयं तुदादावपि विशरणार्थोऽयं परस्मैपदिषु, भेदनार्थश्चुरादौ ॥

अटि गतौ ॥ अण्टते । आनण्टे । अण्टिता । अण्टिटिषते । अण्टयति । आण्टिटत् । न न्द्रा इति नवर्जं द्विरुच्यते ॥ २५७ ॥

वठि एकचर्यायाम् ॥ एकचर्या सहायगमनम् । वण्ठते । ववण्ठे । वण्ठिता । विवण्ठिषते । वावण्ठीति । ष्टुत्वम् । चर्त्वम् । लोटि हेर्धित्वे जश्त्वे । वावण्ढि । लङि अवावण् । वण्ठयति । अववण्ठत् । अयमनिदित्स्थौल्यार्थः परस्मैपदिषु ॥ २५८ ॥

मठि कठि शोके ॥ इह शोक आध्यानम् । मातुर्मण्ठते उत्कण्ठत-इत्यर्थः । अधीगर्थेति कर्मणि शेषे षष्ठी । मठ मदनिवासयोः । कठ कृच्छ्रजीवनइत्यये परस्मैपदिष्वनिदितौ । कठि शोकइतीदित् चुरादौ ॥ २५९ ॥

मुठि पालने ॥ मुण्ठतइत्यादि ॥ २६० ॥

हेठ विबाधायाम् ॥ अमुं परस्मैपदिष्वपि केचित् पठन्ति । विबाधनं शाठ्यम् । हेठते । जिहेठे । हेठिता । इत्यादि, हेठयति । अजीहिठत्, अजिहेठत् 'काण्यादीनां वे'ति णौ चङ्युपधाया ह्रस्वविकल्पः । काणेराणेस्तथा भाणिभाणिहेठिलुठेरपीति णयन्तस्य भाष्यकारेण काण्यादित्वं प्रदर्शितम् ॥

बोधिन्यासकृता लोठिर्लोपिर्त्राणिश्च व्हायिना ।
सहिताः पूर्वमुक्ताश्च काण्यादौ परिकीर्त्तिताः ॥
दुर्गश्चाणिं च काण्यादिं मन्यते शाकटायनः ।
लोठिं तदेव मैत्रेयो धातवो द्वादश स्मृताः ॥ २६१ ॥

एठ च ॥ विपूर्वोयमिति स्वामिकाश्यपौ । मैत्रेयादयस्तु केवलमेवोदाजहुः । एठते । एठांचक्रे । एठिता । एटिठिषते । एठयति । मा भवानिटिठत् । द्विर्वचनात् पूर्वमुपधाह्रस्व इत्युक्तम् ॥ २६२ ॥

हिडि गत्यनादरयोः ॥ हिण्डते । जिहिण्डे । हिण्डिता । जिहिण्डिषते । जेहिण्ड्यते । जेहिण्डि । अजेहिन् । अजिहिण्डत् ॥ २६३ ॥

हुडि संघाते ॥ हुण्डते । जहुण्डे । हुण्डितेत्यादि पूर्ववत् । अत्र काश्यपः । आर्यास्तु न पठन्ति । द्राविडास्तु पठन्तीति । भाष्यादौ तु हुण्डेत्यविगीतमुदाह्रियते ॥ २६४ ॥

कुडि दाहे ॥ कुण्डतइत्यादि । कुण्डः । कुण्डम् । अच् । स्त्रियां कुण्डी । 'जानपदकुण्डगोणस्थलभाजनागकलनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्रणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु' इति अमत्रे ङीष् । अन्यत्र कुण्डा । वैकल्पार्थोत्रैव पठ्यते, रक्षणार्थश्चुरादौ ॥ २६५ ॥

वडि विभाजने ॥ मडि च ॥ अत्र स्वामी वडि विभाजने, मडि-चेति पृथक्सूत्रणादर्थान्तरेपि । नन्दी तु वडि विभाजने । मडि वेष्ठन-इति भङ्क्त्वा पठतीति । वण्डते । ववण्डे । वण्डिता । मण्डते । ममण्डे । मण्डितेत्यादि । मण्डूकः । शरिमण्डिभ्यामूकणित्यूकण् । कूपमण्डूकः । उदपानमण्डूकः । कच्छमण्डूकः 'पात्रेसमितादयश्चे'ति क्षेपे सप्तमीत-त्पुरुषः । क्षेपश्च कूपे मण्डूक इवेत्यदृष्टविस्तारतायवगमात् । क्रुधमण्डा-र्थेभ्यश्चेति युज्विधौ भूषणार्थ एव वृत्तौ उदाहृतः । तस्यानुदात्तेत इति युचः सिद्धत्वाच्च त्वस्य युजनेतीति । मण्डि भूषायामित्ययं परस्मैपदिषु णौ हर्षे च ॥ २६७ ॥

भडि परिभाषणे ॥ परिहास इति देवः । परितो भाषणं परिभाष-णमिति स्वाम्यादयः । यः सनिन्दनमुपालम्भस्तत्र स्यात्परिभाषणमिति । निघण्टुः । भण्डतइत्यादि । भण्डिलो दूतः । सलिकल्यनिमहिभण्टीत्यादिना इलच् । कल्याणार्थश्चुरादौ ॥ २६८ ॥

पिडि संघाते ॥ पिण्डतइत्यादि । पिण्डिलो माणवकः । पूर्व-वदिलच् । चुरादावप्ययम् ॥ २६९ ॥

मुडि मार्जने ॥ शुद्धिन्यग्भावो मार्जनम् । मुण्डतइत्यादि । खण्ड-नार्थः परस्मैपदिषु ॥ २७० ॥

तुडि तोडने ॥ तोडनं दारणं हिंसनं च । तुण्डतइत्यादि । तुण्डिः । इनितीन्प्रत्ययो नाभिवृद्धौ । सास्यास्तीति तुण्डिलः । तुण्डादिभ्य इल-च्चेत्यत्र स्वाङ्गाद् वृद्धाविति गणसूत्रेण वृद्धौ वृत्तात्स्वाङ्गादस्मादिलच् । तुण्डिल एव तुण्डिभः 'तुण्डिवलिवटेर्भः' इति मत्वर्थीयो भः । तुण्डिलो बहुभाषी । सलिकल्पनीत्यादिनेलच् । अयमनिदित्परस्मैपदिषु ॥ २७१ ॥

हुडि वरणे ॥ वरणं स्वीकारः । हरणमिति मैत्रेयः । 'हुण्डते । जुहुण्डे । हुण्डितेत्यादि । स्फुडि विकसनइत्येके पठन्ति ॥ २७२ ॥

चडि कोपे ॥ चण्डतइत्यादि । चण्डनः । क्रुधमण्डेति वा अनुदा-त्तेत इति वा युच् । चण्डालः । चण्डपतिभ्यामालञित्यालच् । चण्डाल-स्यापत्यं, चाण्डालकिः । अत इञि सुधातुरकङ् च व्यासवरुडनिषादचण्डा-

लविभ्यानामित्यकङादेशोऽन्त्यस्य । चाण्डालीति शार्ङ्गरवादित्वात् ङीनि तस्यैवक्तादितिसूत्रप्रकरणे कुलालवरुटकर्मारव्यासवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानमिति उक्तत्वाच्छान्दसः । चण्डालः । चण्डीति कृदिकारादक्तिन इति ङीष् । अयं चुरादौ च ॥ २७३ ॥

शडि रुजायां संघाते च ॥ तालव्योष्मादिः । शण्डतइत्यादि । शण्डः असुरपुरोहितः । शण्डिलः तीर्थमृषिश्च ॥ सलिकल्यनीत्यादिनेलच् ॥ २७४ ॥

तडि ताडने ॥ तण्डतइत्यादि । तण्डः । अच् । वतण्डः । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्युपसर्गस्याल्लोपः । वतण्डस्य गोत्रापत्यं, वातण्ड्यः । वातण्डः । 'गर्गादिभ्यो यञ्', 'शिवादिभ्योऽण्' इति यञणौ । यदा त्विदमपत्यमाङ्गिरसं भवति तदा वतण्डाच्चेति शिवाद्यणं बाधित्वा यञेव । अपत्ये तु स्त्रीलिङ्गे लुक् स्त्रियामिति लुक् । 'शार्ङ्गरवाद्यञो ङीनि' ति ङीना वतण्डी । अनाङ्गिरसे तु लुगभावात् वातण्ड्यायनी । 'प्राचां ष्फ तद्धित' इति यञन्तात् ष्फः, फस्यायनादेशः । षित्करणसामर्थ्यात् स्वार्थे ङीष् । ष्फप्रत्ययाभावे यञश्चेति ङीपि यस्येति चेत्यल्लोपे आपत्यस्य च तद्धितेनातिʼ आपत्ययकारस्यानकारादौ भसंज्ञानिमित्ते तद्धित इति च परे लोपे वातण्डी । अनातीति वचनात् वातण्ड्यायनीत्यत्र यलोपो न भवति । वितण्डा, तण्डुला ॥ लुठितनितण्डिभ्य उलजित्युलच् ॥ २७५ ॥

पडि गतौ ॥ पण्डते । पण्डितः । गोष्ठेपण्डितः । पात्रेसमितादयश्चेति क्षेपे सप्तमीतत्पुरुषः । तत्रैव पाठादलुक्. गोष्ठएव पण्डितो न सदसीति क्षेपावगतिः । पण्डः । अच् । पणतेर्वा अमन्ताड्डः । पण्डस्यापत्यं,पाण्डारः । 'आरगुदीचा' मित्यत्र रकापि गोधार इति सिद्धे आरग्वचनादन्यत्रापि भवतीति वृत्तावुक्तम् । नाशार्थश्चुरादौ ॥ २७६ ॥

कण्ड मदे ॥ कण्डतइत्यादि । भेदने चुरादिः । अनिदिदिहैव । भ्वादौ च परस्मैपदी ॥ २७७ ॥

खडि मन्थे ॥ खुडीत्यप्येके पठन्ति। खण्डते । खण्डः । खडि भेदने चुरादिः ॥ २७८ ॥

हेडृ होडृ अनादरे ॥ हेडते । जिहेडे । हेडिता । जिहेडिषते । जेहेड्यते । जेहेड्डि । हेडयति । अजिहेडत् । ऋदित्त्वान्नोपधाह्रस्वः । एवं होडते । जुहोडइत्यादि । होडः । पचाद्यच् । होडइवाचरति । होडते । 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वेति' क्विप् सनाद्यन्ता इति धातुत्वे लादयः । होडादीनामकारस्यानुदात्तत्वानुनासिकत्वयोः प्रतिज्ञानात् अनुदात्तङित इति तङ् । तथा च भाष्यम् । सर्वप्रातिपदिकेभ्यः क्विब्वेत्युक्त्वा न तर्हीदानीं गल्भाद्यनुक्रमणं कर्त्तव्यं कर्त्तव्यं च । आत्मनेपदार्थमनुबन्धानासङ्क्ष्यामीति क्विन्न भवति 'कर्तुः क्यङ्सलोपश्चे'ति उपमानात्कर्तुः सुबन्तादाचारे क्यङिति क्यङ्। उपमानस्य कर्तृत्वसंनिधानादाचरणक्रियापेक्षं लोपश्चेति चशब्दस्यान्वाचयशिष्टत्वात् यत्रान्त्यः सकारःसंभवति तस्य लोपः, स च व्यवस्थितविभाषया होडायते । अनुनासिकत्वप्रतिज्ञा च क्विप्संनियोगेनैवेतीत्संज्ञाया अभावादकृत्सार्वधातुकयोरिति दीर्घः। हेडृ वेष्टनइति घटादौ । होडृ गतावित्यत्र परस्मैपदी ॥ २८० ॥

वाडृ आप्लाव्ये ॥ वशादिः । आप्लवनमाप्लवः । वाडते । अववाडदित्यादि ॥ २८१ ॥

द्राडृ ध्राडृ विशरणे ॥ द्राडते । ध्राडतइत्यादि ॥ २८३ ॥

शाडृ श्लाघायाम् ॥ शाडतइत्यादि । लडयोरैक्यात् शालत इति काश्यपः । अत एव मैत्रेये रूपशाली शालेत्युदाहृतं, लस्येत्यत्र भाष्यकैयटयोः शालेति श्यतेर्लप्रत्यये व्युत्पादनीयः । शालीनः अधृष्टः । 'शालीनकौपीने अधृष्टाकार्ययो' रिति खञ् निपातितः । गवां शाला, गोशालं गोशाला । 'विभाषासेनासुराच्छायाशालानिशाना'मिति सेनाद्यन्तस्य तत्पुरुषस्य वा नपुंसकत्वं, गोशाले जातः । गोशालः । तत्र जात इत्यण् 'स्थानान्तगोशालखरशालाच्चे'ति लुक् । लिङ्गविशिष्टपरिभाषया गोशालाशब्दादप्यणो लुग्भवति । एवं खरशालः । वत्सशालायां जातः, वत्सशालः । वात्सशालो वा । 'वत्सशालाभिजिदश्वयुक्शतभिषजो वे'ति अणो

वा लुक् । शालिः, इनितीन् । शालीनां भवनं क्षेत्रं शालेयम् । 'व्रीहिशाल्योर्ढगि'ति ढक् ॥ अट्टादय उदात्ता अनुदात्तेतः ॥ २८४ ॥

शौटृ गर्वे ॥ इतो गडन्ता उदात्ता उदात्तेतः । शौटति । शुशौट । शौटिता । शौटिष्यति । शौटतु । अशौटत् । अशिषि शौट्यात् । अशौटीत् । अशौटिष्यत् । शुशौटिषति । शोशौट्यते । शोशौट्टि । अभ्यासस्य ह्रस्वः । गुणः । शौटयति, अशुशौटत् । शौटीरः । कृगपृकटिपटिशौटिभ्य ईरनितीरन् ॥ २८५ ॥

यौटृ बन्धे ॥ यौटतीत्यादि ॥ २८६ ॥

म्रेटृ म्लेडृ उन्मादे ॥ द्वितीयस्तृतीयान्तः । तथा च 'तस्य परमाम्रेडित'मिति दृश्यते, अत्र न्यासे आम्रेड्यते आधिक्येनोच्यतइति, टान्तमध्ये पाठस्तु तदर्थसाम्याचार्थतिवत् । म्रेडति । म्लेडतीत्यादि ॥ २८८ ॥

कटे वर्षावरणयोः ॥ अयमनेदिदयं । कटति । चकाट । कटितेत्यादि । अकटीत् । अतो हलादेरिति वा वृद्धिः ह्म्यन्तक्षणश्वसजागृणिश्व्येदितामिति एदितां निषिध्यते । कटः । पचाद्यच् । कटी । कटात्तु श्रोणिवचनइति ङीष् । निकटे वसति नैकटिकः 'निकटे वसती'ति सप्तम्यन्ताद्वसत्यर्थे ठक् । काटेकूलमधिकरणे संज्ञायां घञ् । कटीरः । जघनं कन्तुकम् । कृगृप्रत्यादिना ईरन् । कटिरं चर्म । असित्रादिनेरन् । कटित्रं चर्म । अशित्रादिभ्य इत्रोत्रः । कटकम् । 'क्वुन् शिल्पिसंज्ञयो'रिति क्वुन् । कटुः । बाहुलकादुप्रत्ययः । कट्वरः । छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंयद्वरा इति वरचि निपात्यते । चटेत्येकइति काश्यपः । चटतीत्यादि पूर्ववत् । चाटुः । सनिजनिचटिरहिभ्य ञुणिति उण् । चटुः । बाहुलकादुकारः । चटुलः । बाहुलकादुलच् । चटकः । क्वुन् शिल्पिसंज्ञयोरिति क्वुन् । चटका । अजादिपाठाट्टाप्, प्रत्ययस्थादितीत्वाभावश्च । चटकाया अपत्यं, चाटकैरः । चटकाया ऐरगित्यैरक् । चटकाच्चेति वक्तव्यात् चटकस्यापत्यमपि चाटकैरः, स्त्रियां त्वपत्ये 'स्त्रियामपत्ये लुग्वक्तव्य' इति ऐरको लुकि चटकेति भवति । भेदनार्थोयं चुरादौ ॥ २८९ ॥

अट पट गतौ ॥ अटति । आट । अटिता । अटिष्यति । अटतु । आटत् । अटेत् । आशिषि अट्यात् । मा भवानटीत् । 'नेटि' इति सिचि वृद्ध्यभावः । अटिटिषति । अटाट्यते । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानमिति' यङ् अजादित्वात् ट्यशब्दस्य द्विर्वचने ऽभ्यासस्य दीर्घोकित'- इति दीर्घः । नन्वत्र यङेव कार्यी निमित्तं च एकस्य कार्यिनिमित्तत्वे च विरुद्धे । नैतत् । आकारभेदात्, अनभ्यासाकारेण कार्यी यङाकारेण निमित्तम् । तथा हि । देवदत्तशालायां ब्राह्मणा आनीयतामित्युक्ते यदि देवदत्तोऽपि ब्राह्मणश्च शालास्थश्च भवति तदा सोऽप्यानीयते, यङ्लुकि सन्यङो- रित्यस्य षष्ठ्यन्तत्वात् यङपेक्षया पूर्वस्य कार्याभावात् न लुमतेति प्रत्ययलक्षणस्य प्रतिषेधाभावाद्यङन्तत्वाद् अटशब्दस्य द्विर्वचने हलादिशेषे दीर्घोकित इति दीर्घे सवर्णदीर्घे च तिपष्टुत्वे आट्टि इति भवति । ईट्पक्षे तु । आटीति । आट्टः । आटति । आट्सि । आट्ठः । आटांचकारे- त्यादि । आड्ढीत्यत्र हेर्धिभावे ष्टुत्वे पूर्वस्य जश्त्वं डकारः । लङि हल्ङ्या- दीना तिस्योर्लोपे आट् । अटतीत्यटा । अचि टाप् । तां करोति । अटा- यते । अटाट्येत्यादिना क्यङ् कुलस्य अटा कुलटा । शकन्ध्वादित्वात् 'कुलटाया वे'ति निर्देशाद्वा पररूपं कुलटाया अपत्यं, कौलटिनेयः । कौलटेयः । स्त्रीभ्यो ढकि 'कुलटाया वे'ति पक्षे इनङादेशोऽन्त्यस्य । यदायं कुलटाशब्दः क्षुद्रायां वर्तते क्षुद्रा दुःशीला अङ्गहीना वा तदा 'क्षुद्राभ्यो वे'ति ढ्रकि कौलटेर इति भवति, तदभावे वाशब्देन ढकि कौलटेय इति । अटाट्या । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यान'मिति गमनमात्रे शप्रत्यये यकि द्विर्वचनहलादिशेषाभ्यासदीर्घेषु निपात्यते । पटति । पपाट । पेटतुः । पेटिथ । पटिता । अपटीत् । अपाटीत् । अतो हलादेरिति वृद्धिः । पिपटिषति । पापट्यते, पापटीति । पापट्टीत्यादि । पाटयति । अपीपटत् । पाटूपटः । ण्यन्तात्पचाद्यचि पाटेर्णिलुक्चोक्चाभ्यासस्येति णिलुक् द्विर्वचनमभ्यासस्योगागम उपधादीर्घश्च, ऊको दीर्घोच्चारणसामर्थ्यात् ह्रस्वस्याभावः । अस्यागमत्वसामर्थ्याच्च हलादिशेषः । अन्यथादेशमेव विदध्यादुकारम् । अभ्यासस्यानचीति वा हलादिशेषह्रस्वयोरभा

वः । अभ्यासस्य यदुक्तं तदपि नेति सोरनिटीति णिलोपे सिद्धे गुरवचनं प्रत्ययलक्षणेन वृद्धेरभावार्थं. पाट्यका सुराविशेषः । पाट्यकालावदातसुरायामिति स्थूलादिपाठात् ण्यन्तादस्मात् क्वुन् । पटुः, कलिपाटिनमिमनिजनां गुक्पाटनाकिधतश्चेत्युप्रत्यये यथासंख्यात्पटादेशः, अत्र गुगेक आगमः अन्ये आदेशाः पटेर्भावकर्मणी । पटिमा । 'पृथ्वादिभ्य इमनिज्वे'-तीमनिच्. टे'रिति टिलोपः । तदभावे 'इगन्ताच्च लघुपूर्वादि' त्यणि पाटवम् । गोष्ठेपटुः । पात्रेसमितादयश्चेति लपे सप्तमीतत्पुरुषः तत्रैव पाठादलुक् गोष्ठएवपटुर्न सदसीति लपावगतिः । पटाका । शलिपटिपदिभ्यो निदित्याकिचिच्च । पटलम् । वृषादिभ्यश्चिदिति कलप्रत्ययः किच्च । पटलिका संज्ञायां कन् । पटीरः । कगॄद्दत्यादिनेरन् । पाटलम् । ण्यन्तात्कलप्रत्ययो बाहुलकात् । पाटली । 'जातेरस्त्रीविषयादयोपधा'दिति ङीष् । पाटल्याः पुष्पाणि, पाटलानि । बिल्वादिभ्योऽणिति विकारावयवयोरण् तस्य 'पुष्पफलमूलेषु बहुल'मिति लुप् तत्रैव बहुलग्रहणान्न भवति, लुपि हि कौशीतक्याः फलानीत्यादिवत् । 'लुपि युक्तवद्व्यक्तिवचने'इति युक्तवद्भाव एव स्यात् ॥ २९१ ॥

रट परिभाषणे ॥ रटतीत्यादि । परिराटी । 'संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्चे'ति । परिपूर्वादस्मात्ताच्छीलिको घिनुण् । परिराटकः । निन्दहिंसेत्यादिना वुन् ताच्छीलिकः ॥ २९२ ॥

लट बाल्ये ॥ लटतीत्यादि । लट्वा । अशुप्रुशपुटिलटिकाणिखटिपिशिभ्यः क्वचिति क्वन् । लाटयतीति लाटः । ण्यन्तादच् । केवलाद्वा संज्ञायां घञ् ॥ २९३ ॥

शट रुजाविशरणगत्यवसादनेषु ॥ शटतीत्यादि । शाटकः । घञन्तात्संज्ञायां कन् । शाटी । जातिलक्षणो ङीष् ॥ २९४ ॥

वट वेष्टने ॥ वटति । ववाट । ववटतुः । वादित्वादेत्त्वाभ्यासलोपाभावः । वटिः । इनितीन्प्रत्ययः । वटिभः । 'तुन्दिवलिवटेर्भ' इति मत्वर्थे भः ।

वटकः । संज्ञायां कन् । वटका अस्यामस्यां पौर्णमास्यां वटकिनी पौर्णमासी । 'तदस्मिन्नन्नं प्राये संज्ञाया'मित्यत्र 'वटकेभ्य इनिर्वक्तव्य' इतीनिः । घटादावयं परिभाषणार्थः । पट वट ग्रन्थइति कथादौ । वट वेष्टनइति क्षीरस्वामी । यस्तु तत्र विभाजनार्थः तं वटीति शाकटायनादयः पठन्ति । वटी विभाजनइति इहैवाग्रे चुरादौ चानदन्तेषु ॥ २९५ ॥

किट खिट त्रासे ॥ केटति । चिकेट । केटिता । चिकिटिषति । चिकेटिषति । किटित्वा । केटित्वेत्यादि. एवं खेटतीत्यादि । खेटः । 'हलश्चे'ति संज्ञायां घञ्, इह त्रासो भयोत्पादनम् । किटिगत्यर्थोऽग्रे भविष्यति । इहैके न पठन्ति । मैत्रेयादीनामर्थभेदात् पुनः पाठ इत्यभिप्रायः ॥ २९७ ॥

शिट षिट अनादरे ॥ आद्यस्तालव्यादिः, अपरो मूर्द्धन्यादिः । शेटति । सेटतीत्यादि किटिवत् । सिसेटिषतीत्यत्र स्तौतिण्योरेवेति नियमान्न षत्वं,षोपदेशफलं तु सेषिट्यते, । असीषिटदित्यादौ ॥ २९९ ॥

जट झट सङ्घाते ॥ जटति । जजाट । जेटतुः । जटिता । जटा । अजादित्वाट्टाप् । निन्दिता जटा अस्य जटालो जटिलः । जटाघटाकलाः क्षेपइति सिध्मादौ पिच्छादौ च पाठाल्लजिलचौ । जटीति भाष्यकारप्रयोगाद् अनदन्तान्ङीपीनिः । झटति । जझाट । जझटतुः । झटितेत्यादि ॥ ३०१ ॥

भट भृतौ ॥ भटति । भटित्रं शूलेन संस्कृतं मांसमिति निघण्टुः । वेतनमित्युणादिवृत्तौ । अशित्रादिभ्य इतीत्रः । अयं घटादिः परिभाषणार्थः ॥ ३१२ ॥

तट उच्छ्राये ॥ तटति । तटोस्या अस्तीति तटिनी । 'अत इनिठना'विति मत्वर्थे इनिः । तटी । गौरादिपाठान् ङीष् । तड अघातइति इकारान्तश्चुरादौ ॥ ३०३ ॥

खट काङ्क्षायाम् ॥ खटति । खट्वा । अशूप्रषीत्यादिना क्वन् । खट्वारूढो जाल्मः । 'खट्वा क्षेप'इति क्षेपे गम्यमाने द्वितीयान्तस्य खट्वाशब्दस्य क्तान्तेन तत्पुरुषः ॥ ३०४ ॥

णट नृत्तौ ॥ अत्र पुरुषकारे णट नृत्तावित्यपि क्षीरस्वामी इत्युभयथापि नर्तनमेवार्थ इति अयं णोपदेशः । नृतिनन्दीति णोपदेशपर्युदासवाक्ये नाटीति सवृद्धिकस्य ग्रहणादस्य घटादित्वान्मित्त्वात् नाटिरूपाभावादग्रहणम् । यदाह हरदत्तः । ज्ञासिनिग्रहणेत्यत्र नट नृतावित्यस्य घटादिपठितस्याग्रहणं, विकृतनिर्देशादिति अत एव नोपदेशपर्युदासविवरणेपि न्यासपदमञ्जरीपुरुषकारादिभिरवस्यन्दनार्थस्य चौरादिकस्य ग्रहणं कृतम् । ननु क्षीरस्वामी घटादौ नट नृताविति पठित्वा नटयति शाखा इत्युदाहृत्य नृत्तौ नाटयतीति वक्ष्यति, अवश्यं हरदत्तादिभिरप्युभयत्र पाठसामर्थ्यादस्य नाटयतीत्यङ्गीकार्यं, तत्कथमुक्तं विकृतनिर्देशादिति । उच्यते । द्वयोर्ग्रहणे नटीत्येव निर्दिशेत् न नाटीति विकृतं तत्सामर्थ्यात् यस्य नाटीत्येव रूपं तस्यैव पर्युदासो विज्ञास्यते न तु यस्य नटिरूपं नाटिरूपं च । ननु योऽस्ति घटादिधातुर्नित्यं नटिरूपमापन्नः, स एव विकृतनिर्देशेन व्यावर्त्यते, मैवम् । ये ऽन्यत्र पठिता घटादौ पठ्यन्ते न ते पृथग्धातवः । किन्तु मित्त्वार्थमेव तेषामनुवाद इति तत्र स्थितत्वात् । इह नृत्तिर्नर्तनं, यत्कारिषु नटव्यपदेशः । न तु मार्गदेशीशब्दाभ्यां प्रसिद्धं नृत्त नृत्यं च, यत्कारिषु नर्त्तकव्यपदेशः । तत्र वाक्यार्थाभिनयो नाट्यं पदार्थाभिनयस्तु नृत्यम् । अभिनयशून्यः पुनः शास्त्रोक्ताङ्गभङ्गः स्वगात्रविक्षेपो नृत्त इति तद्विदः, नैघण्टुकानां तु ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्त्तनमिति अभेदव्यवहारो निरूढलक्षणया नेयः । प्रणटतीत्यादि । नटी । गौरादित्वात् ङीष् ॥ ३०५ ॥

पिट शब्दसङ्घातयोः ॥ पेटति । पिपेट । पेटितेत्यादि । पिपिटिषति । पिपेटिषति । पिटित्वा । पेटित्वा । पेटयति । अपीपिटत् । पिटकम् । क्वुन् शिल्पिसंज्ञयोरिति क्वुन् । पिटाकः । पिटाकादयश्चेत्याकः ॥ ३०६ ॥

हट दीप्तौ ॥ हटति । जहाट । हटिता । अहटीत् । अहाटीदित्यादि । हाटकम् । 'संज्ञायां चे'ति ण्वुल् बाहुलकादस्त्रियामपि हाटशब्दात् कन्वा ॥ ३०७ ॥ (शेषमग्रे)

॥ श्रीः ॥

# ॥ योगवार्त्तिकम् ॥

(*Continued from page* 495. Vol. V.)

इदानीमुक्ताभ्यां कर्मतद्विपाकाभ्यां क्लेशानां मुख्यफलमाह ।

## ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥

ते विपाकाः सर्वएव समुच्चितसुखदुःखफलकाः समुच्चितपुण्यपापहेतुकत्वादित्यर्थः । अत्र सुखावच्छेदेन पुण्यहेतुका दुःखावच्छेदेन पापहेतुका इति विभज्य प्रतिपादयति । ते जन्मायुरित्यादिना । सुखदुःखयोश्च फलत्वं भोग्यतयेति प्रागेव व्याख्यातं विपाकान्तरगतभोगश्च शब्दाद्याकारवृत्तिरेवेति तस्यापि सुखदुःखहेतुत्वमुपपन्नम् । तदेवमनेकसूत्रैः प्रोक्तमविद्याया दुःखनिदानत्वं न्यायाचार्यैरेकसूत्रेणैवार्थादुक्तं, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति । कारणनाशादेव हि कार्यानुत्पाद इति । तदेवं दुःखनिदानतया क्लेशानां हेतुत्वमुक्तम् । ननु सर्वे विपाकाः कथं सुखदुःखफलकाः ब्रह्मलोकादौ दुःखासंभिन्नसुखसत्त्वादित्याशङ्क्य परिहरति । यथा चेदमिति । यथा चेदं परिदृश्यमानरोगादिदुःखं प्रतिकूलात्मकद्वेष्यस्वभावं भवति एवं सर्वत्रैव विषयसुखकालेपि दुःखं योगिनां प्रतिकूलात्मकं तिष्ठतीत्यर्थः । दुःखतत्साधनयोरेकरूपेण ग्रहणाय प्रतिकूलात्मकमित्युक्तम् । मूढानां दुःखसमुद्रमग्नानां सुखनान्तरीयकसूक्ष्मदुःखेषु दृष्टिर्नास्तीति योगिन इत्युक्तम् । तथा च लौकिकदुःखमिव विषयसुखमपि दुःखशबलतया दुःखत्वेन हेयमेवेति भावः । यद्यपि स्वर्गादौ सुखमधिकं तथाप्यल्पमपि दुःखं बलवद्द्वेषविषयो भवति । बलवत्त्वं च सुखाभिलाषाभिभावकत्वम् । तथा च सांख्यसूत्रम् । यथा दुःखाद् द्वेषः पुरुषस्य न तथा सुखादभिलाष इति । अस्मिन्सूत्रे सुखदुःखयोरेव कर्मविपाकफलत्ववचनात् जीवन्मुक्तानामपि प्रारब्धविपाकेषु सुखदुःखे शारीरे भवत एव आभिमानिके तु न भवतः तत्कारणक्लेशाभावादिति सिद्धान्तः । तथा च श्रुतिः । 'न ह वै सशरीरस्य प्रियाप्रिय-

योरपहतिरस्ति' इति। 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदि'ति च। स्मृतिश्च 'वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यत' इति। सूत्रान्तरमवतारयितुं सुखस्यापि ज्ञानिदृष्ट्या दुःखत्वे हेतुं पृच्छति। कथमिति। तदुपपादकतयोत्तरसूत्रमवतारयति। तदुपपद्यतइति।

परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च
दुःखमेव सर्वं विवेकिनः ॥ १५ ॥

परिणामश्च तापश्च संस्कारश्च तज्जानि दुःखानि तैः संबन्धात् तत्कारणत्वादिति यावत्। तथा गुणवृत्त्यविरोधाच्चार्थतो दुःखसंभिन्नत्वाच्च प्रकृतितत्कार्यसुखादिकं सर्वं दुःखमेव विवेकिनः। सुखदुःखतत्त्वसाक्षात्कारिणो मतमिति वाक्यार्थः। प्रतिपदं च व्याख्या भाष्ये भविष्यति एवकारेण चानुकूलात्मकसुखरूपता व्यवच्छिन्ना। यद्यप्ययोगिनोपि दुःखमेव सर्वं तथापि स मूढत्वात्सुखकाले दुःखतया न जानाति योगी तु सुखकालेपि तस्य दुःखात्मकत्वं पश्यतीति प्रतिपादयितुं विवेकिन इत्युक्तम्। ननु सुखसाधनतया सुखसंभिन्नतया च सुखमेव कथं सर्वं न भवतीति चेत् न। दुःखेषु बलवद्द्वेषस्योक्तत्वात्। सामान्यतो बाहुल्यस्याप्यत्र नियामकत्वाच्च वैशेष्यात्तद्वाद इति न्यायात्। तदुक्तं विष्णुपुराणे। 'कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः। क्रियते न तथा भूरि सुखं पुंसां यथा ऽसुख'मिति। संसारे च सुखापेक्षया च दुःखबाहुल्यं जैगीषव्यावट्यसंवादे व्यक्तीभविष्यतीति। तत्रपरिणामदुःखहेतुतया सुखस्यापि दुःखतां प्रतिपादयति। सर्वस्यायमिति। उत्सर्गतः सर्वलोकस्य सुखानुभवकाले तत्र सुखे रागो जायते रागाच्च सुखमिदं मे स्थिरं भवतु परमेश्वर मा नश्यत्वित्यादि संकल्पात्मको मानसः कर्माशयो धर्माधर्मरूपो भवति कर्माशयाच्च जन्मादिदुःखमिति प्रागेवोक्तमित्यर्थः। सुखभोगकाले रागजकर्माशयवद्द्वेषमोहजोपि कर्माशयः परिणामदुःखहेतुरस्तीत्याह। तथा च द्वेष्टीति। तथा च सुखभोगकाले तद्विरोधितया दुःखसाधनानि द्वेष्टि सुखभ्रंशे दुःखं मे मा भूयात्

शत्रुश्च मे नश्यत्वित्यादिरूपेण । तथा दुःखसाधनानि परिहर्त्तुमशक्तो मुह्यति चेत्यतो द्वेषमोहकृतोऽप्यस्ति कर्माशय इत्यर्थः । रागद्वेषमोहानां च प्रवृत्त्यादिद्वारेणैव साक्षादप्यदृष्टहेतुत्वमस्तीति । तथा चोक्तमिति । सुखस्य रागानुबद्धत्वं च मयैवोक्तं सुखानुशयी राग इति सूत्रे सुखाभिज्ञस्येत्यादिभाष्येणेत्यर्थः । मानसकर्माशयद्वारा सुखस्य परिणामदुःखत्वं प्रतिपाद्य शरीरकर्माशयद्वारापि तदाह । नानुपहत्येति । शारीरः कर्माशय इति । सुखभोगकालइति शेषः । एताभ्यां च मानसशारीराभ्यां कर्माशयाभ्यां वाचनिकोऽपि कर्माशयः शापाशीर्वादज उपलक्षणीयः । सुखस्यापि परिणामदुःखसंबन्धेन दुःखत्वे ऽविद्यासूत्रं प्रमाणीकृत्योपपादयति । विषयसुखं चेत्यादिना । ननु सर्वदुःखान्त एवेदं वक्तुमुचितमिति चेच्च । सुखस्याविद्यात्वोपपादनकालएव दृष्टद्वारापि परिणामदुःखमुपदेष्टुमादावेव विषयसुखस्याविद्यात्वप्रतिपादनात् अत्र च वक्ष्यमाणपारमार्थिकसुखव्यावर्त्तनाय विषयेत्युक्तम् । अविद्याविषयपदार्थानां बुद्धिमात्रतया सुखमविद्येत्यभेदनिर्देशः । भोगेन सुखं भवतीत्येवंरूपा भोगजदुःखे सुखबुद्धिरविद्या, सा चाविद्या न तत्सूत्रे विवेचिता अतोऽत्र तामविद्यां प्रतिपादयन्नेव प्रकारान्तरेण परिणामदुःखं दर्शयति । या भोगेष्विति । तत्रादौ पारमार्थिके सुखदुःखे कथयति । तद्दुःखमित्यन्तेन । अयंभावः । विषयसुखं पारमार्थिकसुखं न भवति दुःखबहुलत्वेन दुःखसंभिन्नत्वेन च विवेकिनां निरुपाधिप्रियत्वाभावात् । सुखानुशयी राग इतिसूत्रानुसारेण निरुपाधिप्रियत्वस्यैव सुखलक्षणत्वादिति । अतः शान्तिश्चित्तस्य व्यापारोपरमस्तन्निमित्तिका दुःखनिवृत्तिरिति यावत् । सैव पारमार्थिकं सुखं, सुखं दुःखसुखात्यय इति स्मरणात् । तृष्णादिदुःखासंभिन्नतया विशेषदर्शिनामपि निरुपधिप्रियत्वाच्च । तस्य च साधनं भोगेष्विन्द्रियाणां तृप्तिरिच्छाविच्छेद एव । तथा च श्रुतिः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्येति । स्मृतिश्च । न चाभावयतः शान्तिरशान्तस्य कुतः सुखमिति । अत्र विषयसुखशब्देन चित्तस्य शान्तिनिमित्तकाल्हादोऽपि गृहीतः तस्यापि दुःखसंभिन्नत्वेन दुःखत्वस्याविद्यालक्षणे विवक्षितत्वात् इति । या लौल्या-

विति । या चेन्द्रियाणां लौल्यात् भोगतृष्णातश्चित्तस्यानुपशान्तिर्वृत्तिवाऽत्यल्यं तद्दुःखं दुःख बाहुल्यतो विवेकिभिर्हेयत्वादित्यर्थः । सुखदुःखयोस्तत्साधनयोश्चैवं निर्णये सति विषयसुखस्य तत्साधनभोगस्याविद्यकमेव सुखत्वं तत्साधनत्वं च लब्धम् । अतश्च विषयसुखस्य परिणामदुःखत्वमित्येतत्प्रघट्टकेनाह । न चेन्द्रियाणामित्यादिना मग्न इत्यन्तेन । भोगाभ्यासमन्विति । तथा चोक्तं, 'न जातु कामःकामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते' इति । वृश्चिकेति । वृश्चिकविषभीतः कामादिक्षुद्रदुःखभीतस्तन्निवृत्त्याख्यसुखार्थी स्त्रीपुत्रादिभयमहादुःखसर्पैर्दष्ट इति दृष्टान्तार्थः । विषयानुवासित इति परिणामदुःखपङ्कमग्नतायां हेतुरुक्तः । विषयसंस्कारसंस्कृत इत्यर्थः । परिणामदुःखमुपसंहरन्नेव विवेकिन इतिविशेषणव्यावर्त्यमाह । एषा परिणामेति ! दुखता दुःखसमूहो जनतेतिवत् प्रतिकूला दृष्ट्या सुखकालेऽपि योगिनमेव क्लिश्नाति दुःखाकरोतीत्यर्थः । भूते पश्यन्ति बर्बरा इतिन्यायेनायोगिनं परिणामकालएव विषयसुखं दुःखाकरोति योगिनं तु स्वकालएवानर्थहेतुतादर्शनेन दुःखाकरोतीति भावः । क्रमप्राप्तं तापदुःखं व्याख्यातुं पृच्छति । अथ केति । तापो दुःखं किं तापजन्यदुःखसामान्यमित्यर्थः । उत्तरं, सर्वस्येति । पूर्ववदेव व्याख्येयम् । पूर्वं सुखानुभवो रागानुविद्ध उक्त इदानीं च दुःखानुभवो द्वेषानुविद्ध उच्यते इत्येव विशेष इति । स कर्माशय इति । संतापकालीनः कर्माशयो द्वेषेणेव रागमोहाभ्यामपि पूर्ववन्मानसो भवतीत्यर्थः । मनसा परिस्पन्दनं यदुक्तं तत्कायिकहिंसार्थमेव न तु स्वातन्त्र्येण मानसकर्माशयहेतुरतो न पौनरुक्त्यम् । यद्यपि तापदुःखतायामपि परिणामदुःखतैवात्र प्रदर्श्यते तथापि पूर्वकाल-उत्तरकाले च सर्वदैव दुःखत्वात् तापजदुःखस्य परिणामदुःखात् पृथङ्निर्देशः । अतः परिणामात् दुःखं परिणामदुःखमिति बोध्यम् । क्रमप्राप्तं संस्कारदुःखं पृच्छति । का पुनरिति । सुखदुःखसंस्कारजन्यदुःखसामान्यमित्यर्थः । उत्तरसुखानुभवादिति । अत्रेयं प्रक्रिया । आदौ सुखदुःखानुभवैस्तत्संस्काराशयेमुद्बुद्धसंस्कारस्ततः कालादिविशेषैस्तदुद्बोधः ततः स्मृतिस्ततो रागद्वेषौ तयोश्च प्रवृत्तिः ततश्च पुनर्दुःखमिति । ज्ञान-

संस्कारात् दुःखं प्रतिपाद्य धर्माधर्मरूपात् कर्मसंस्कारादपि दुःखं प्रतिपादयति । एवं कर्मभ्य इति । सुखदुःखरूपे विपाक इत्यन्वयः । नन्वियमपि परिणामदुःखतैवेति चेत् सत्यं तथापि संस्कारपरंपराया अनन्तदुःखप्रतिपादनाय गोबलीवर्दन्यायेनास्य दुःखस्य पृथगुपन्यासो बोध्यः । विवेकिन इतिविशेषणस्याभिप्रायं विस्तरतः सकलदुःखसाधारणमाह । एवमिदमिति । स्वाभाविकतया अनन्तत्वलाभायानादीत्युक्तं स्रोतसो विशेषणं विप्रसृतमिति । विस्तीर्णमित्यर्थः । अक्षिपात्रेणाधारेण गोलकेन तुल्यो विद्वानित्युक्तं विवृणोति । यथोर्णेति । एतानि भाविदुःखानि इतरमयोगिनं प्रतिपत्तारं शब्दादिना परिणामदुःखज्ञातारमप्यविद्वांसमित्यर्थः । इतरं तु वर्त्तमानकालएव क्लिश्नन्तीत्याह । इतरं त्विति । इतरं तु योगिनं त्रिपर्वाणस्तापा अनु स्वोत्पत्त्यनन्तरमेव प्लवन्ते व्याप्नुवन्तीत्यन्वयः । न तु पूर्वमिति शेषः । आधिभौतिकाधिदैविकाध्यात्मिकरूपाणि पर्वाणि येषां तापानां ते तथा त्रिपर्वत्वं हेतुगर्भविशेषणम् । बाह्येति । बाह्यशब्देनाधिभौतिकाधिदैविकयोर्ग्रहणम् इतरस्य विशेषणान्तरमनादीत्याद्यनुपातिनमित्यन्तम् । अनादिवासनाभिर्विचित्रया नानारूपया चित्तवृत्त्या चित्तनिष्ठया अविद्ययानुविद्धं लिप्तमिव । अत एव हातव्येऽपि देहेन्द्रियादावहंकारममकारवन्तमिवेत्यर्थः । आत्मनोऽविद्यास्मिताद्यभावप्रतिपादनाय इवेत्याद्युक्तम् । शेषमतिरोहितम् । परिणामादिदुःखत्रयस्य साचिनो[1] ज्ञानेन यत्फलं तदपि प्रसङ्गादाह । तदेवमिति । सुगमम् । गुणवृत्तिविरोधाच्चेतिहेतुं व्याख्यातुकामो योजयति । गुणेति । गुणानां सत्त्वादीनां ये वृत्त्यतिशयास्तेषामेव विरोध एकदानवस्थानं न तु न्यूनाधिकभावेन वृत्तीनां विरोधोस्ति अतः प्राधान्येन सत्त्वपरिणामे सुखात्मकचित्तवृत्तावपि तदुपसर्जनतया रजोंशपरिणामभूतं दुःखमप्यल्पमस्त्येवेति दुःखसंभिन्नत्वात्सर्वं सुखाद्यपि दुःखमेव विवेकदृष्टेति तस्य दलस्यार्थः । गुणवृत्तिविरोधादिति प्रामादिकपाठे तु गुणवृत्त्यति-

१ 'साचिन' इत्यस्य स्थाने 'भाविन' इति पुस्तकान्तरे

शयस्यैव विरोधादित्यर्थः । तदेतद्व्याचष्टे । प्रख्याप्रवृत्तीति । प्रख्या प्रकाशः प्रवृत्तिः क्रिया स्थितिः स्तम्भः धर्मधर्म्यभेदात्तद्रूपाः सत्त्वादयो वृद्धिरूपेण परिणता गुणाः परस्परसाहाय्याः सन्तः शान्त्यादिरूपं प्रत्ययं वृत्तिं त्रिगुणं सुखदुःखमोहवन्तमेवारभन्ते सुखादीनां सत्त्वादिकार्यत्वात् । यः कश्चन प्रत्ययः शान्तो वा घोरो वा मूढो वा भवति स सर्वोऽपि त्रिगुण एव नैकैकमात्रगुण इत्यर्थः । शान्तादिपरिभाषात्रयं च सुखदुःखमोहाधिक्यमात्रेणेति । तथा च सुखवत्यपि प्रत्यये दुःखमस्त्येव । अत एकप्रत्ययोपादानत्वेन सुखेऽपि दुःखस्याविभागलक्षणाभेदो हरीतक्यामिव षण्णां रसानामिति । प्रत्ययश्च बुद्धेर्वृत्तिः प्रदीपशिखावत् बुद्धेः शिखा द्रव्यरूपा 'भागगुणाभ्यां तत्त्वान्तरं वृत्तिः संबन्धार्थं सर्पती'ति सांख्यसूत्रात् । अतः प्रत्ययस्य सुखादिगुणवत्ता घटते इति । ननु सुखकाले सूक्ष्मो दुःखात्मको रजःपरिणामो नियमेन भवतीत्यत्र किं मानं तत्राह । चलं चेति । प्रदीपावयवानामिव बुद्ध्यवयवानां गुणानां वृत्तं क्रिया चञ्चला प्रतिक्षणमन्यान्या च भवति न तु निर्व्यापारा गुणास्तिष्ठन्ति अतस्तान्त्रिकैश्चित्तं क्षिप्रपरिणाम्युक्तमित्यर्थः । यद्यपि सर्वं जडवस्तु प्रतिक्षणपरिणामि तथापि स्पष्टत्वाभिप्रायेण चित्तमिति विशेषवचनम् । तथा च चित्तगतस्य सत्त्वस्य वृत्तिकाले रजसो वृत्तिरावश्यकीति भावः । नन्वेक एव प्रत्ययः कथं विरुद्धसुखादित्रयात्मकः स्यात्तत्राह । रूपातिशया इति । बुद्धे रूपाण्यष्टौ भावा धर्मादयो धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि वृत्तयश्च द्रव्यरूपाः शान्तादिनामकाः परिणामास्तेषामतिशया उत्कर्षा एव परस्परं विरुध्यन्ते यदा धर्म उत्कृष्यते तदा नाधर्म उत्कृष्यते एवं यदा ज्ञानादि तदा नाज्ञानादि तथा शान्ताद्युत्कर्षकाले घोराद्युत्कर्षश्च विरुध्यते सामान्यानि त्वपकृष्टानि अतिशयैः सह प्रवर्त्तन्त एवेत्यर्थः । ननु भवतु चित्तस्य सुखात्मकप्रत्यये दुःखत्वं सुखात्मकेषु शब्दादिविषयेषु कुतो दुःखत्वं येन सर्वं दुःखं स्यादित्यत आह । एवमेतदिति । यथा चित्तस्य प्रत्ययाः एवमेव सर्वे पदार्थाः सर्वरूपाः सुखदुःखमोहधर्मका भवन्ति अत एते गुणाः सत्त्वादयो घटादिरूपेणापि परिणताः परस्परसाहित्येनोत्पादित-

सुखदुःखमोहात्मकप्रत्यया इतीत्यर्थः । नहि विषयगतविशेषं विना विषयसम्बन्धमात्रेण सुखाद्यात्मकचित्तवृत्तिहेतुमर्हति अव्यवस्थापत्तेः । विषयगतविशेषस्य चित्तगतसुखादिनियामकत्व दारुविशेषः सुखादिरूप एव विषयेषु कल्प्यते कार्यानुरूपस्यैव कारणस्यौचित्यात् । अतो विषयेपि सुखादिधर्मान्तरं सुखादिवत्सिध्यतीति भावः । ननु सुखदुःखे रूपादिवद्विषयधर्मौ स्यातां मोहस्तु ज्ञानरूपः कथं विषयधर्मः स्यादिति चेन्न । अत्र स्मिंस्तदाकारतामात्रस्यैव मोहशब्दार्थत्वात् । सा च विषयेष्वप्यस्ति महदादिविकाराकारतायाः प्रकृतावपारमार्थिकत्वात् । तदुक्तं मोक्षधर्मे ।

जगन्मोहात्मकं विद्धि अव्यक्तंव्यक्तसंज्ञकम् ।

इति । अपि च सर्वकार्याणां बुद्ध्यात्मत्रिगुणात्मकमहत्तत्त्वस्य परिणामत्वादपि मोहवत्त्वमिति । ननु सर्वं यदि सर्वरूपास्तर्हि सर्वं सुखात्मकमपि स्यादिति न दुःखस्यापि हेयत्वं स्यादित्याशङ्कायामाह । गुणप्रधानेति । तथा च दुःखबहुलतया दुःखप्राधान्यात् दुःखमेव सर्वमिदं सुखं वैशेष्यात्तद्वाद इतिन्यायेनेति भावः । उपसंहरति । तस्मादिति । तस्मात् परिणामेत्यादिसूत्रहेतुज्ञानादित्यर्थः । तदेवमत्र ध्यानादेर्व्युत्थितचित्तस्य योगमासनं क्रियायोगमुक्त्वा तत्फलप्रसङ्गेन क्लेशास्तद्धानोपायाश्च तेषां हेयत्वाय दुःखनिदानत्वं दुःखं च प्रतिपादितम् इदानीं संक्षेपेणोक्तः समग्रशास्त्रार्थो विस्तारेण सूत्रकारः पुनर्वदति सूत्रजातैः शास्त्रसमाप्तिपर्यन्तैः तान्यवतारयितुं तेषां विषयजातमादौ सामान्यतः संकलय्य दर्शयति । तदस्येति । तत्तस्मादस्य दृश्यसामान्यरूपस्य दुःखसमूहस्योत्पत्तेर्बीजं मुख्यनिमित्तकारणमविद्या प्रथमक्लेशः तस्याश्चाविद्याया अत्यन्तोच्छेदहेतुस्तत्त्वज्ञानमतश्चिकित्साशास्त्रवदिदं योगशास्त्रं चतुर्व्यूहं चत्वारो व्यूहा हेयादीनां राशयः प्रतिपाद्याः अस्मिन्निति चतुर्व्यूहमित्यर्थः । रोगादितुल्यत्वं प्रतिपादयन्नेव तेषां व्यूहानां स्वरूपाण्याह । तत्र दुःखेति । संसरत्यस्मिन्निति संसारोऽत्र प्रपञ्चः । ननु दुःखमेव हेयमिति वक्ष्यति तत्कथं संसारो हेय उच्यते तत्राह । दुःखबहुल इति । दुःखबहुलत्वात्संसार एव दुःखमित्यर्थः । प्रधा-

नेति । ननु अविद्या दुःखहेतुरित्युक्तत्वाच्च संयोगः कथं दुःखहेतुः साध्यत इति चेत्, व्यापारकथनायेत्यवेहि । अविद्या हि बुद्धिपुरुषसंयोगाख्यजन्मद्वारैव दुःखहेतुः कार्यकारणाभेदेन च सैव बुद्धिरत्र प्रधानशब्दार्थः द्रष्टृदृश्ययोः संयोगो हेयहेतुरित्यागामिसूत्रादिति । संयोगस्येति । उक्तसंयोगस्यात्यन्तिकी निवृत्तिरेव हानं दुःखहानमिति यावत् । तच्चरमकारणत्वादित्यर्थः । हानोपाय इति । सम्यग्दर्शनइति प्रकृतिपुरुषविवेकसाक्षात्कारो दुःखहानोपायो मोक्षोपाय इत्यर्थः । असंप्रज्ञातयोगस्तु आशुतरमोक्षार्थमेवापेक्ष्यतइत्याशयः । येन योगो हानोपायतयात्र नोक्तः । ये तु नास्तिका मन्यन्ते संयोगहानं न मोक्षः किं तु चित्तरूपस्यात्मनस्त्याग एव मोक्षः । किं चासंसारिविज्ञानसन्तानोच्छेदेन जीवन्मुक्तविज्ञानसन्तानलाभ एव मोक्ष इति तन्मतनिरसनपूर्वकं स्वशास्त्रस्यैव सम्यग्दर्शनत्वमवधारयति । तत्र हीति । तत्र चतुर्व्यूहमध्ये आत्मनो हानमुपादानं वा न पुरुषार्थ इत्यर्थः । इतिशब्दस्य हेतुवाद इत्यनन्तरमन्वयः । उक्तार्थे हेतुमाह । हाने तस्येति । तस्य हाने स्वत्यागे हि स्वोच्छेदवचनं प्रसज्येत मुख्यत्यागस्य भेदतन्त्रत्वेनात्मन्यसंभवात् तच्चायुक्तं स्वनाशस्य लोके पुरुषार्थत्वादर्शनात् स्वीयतयैव सुखदुःखाभावयोः पुरुषार्थत्वादित्यर्थः । स्वयं म्रियमाणोपि दुःखहानार्थमेवाग्निप्रवेशादौ प्रवर्त्तते न तु स्वनाशार्थमित्यर्थः । हेतुवादइति । हेतुः स्वरूपस्य स कारणतावादः स्यात् । तथा च भावकार्यत्वेन विनाशित्वप्रसङ्ग इत्यर्थः । उभयेति । इत्यतो हानोपादानोभयनिषेधे स्वयंनित्यतावाद एव परिशेषात्सिध्यतीति । अत एतदेव यथोक्तचतुर्व्यूहशास्त्रं सम्यग्दर्शनं सम्यग्दृश्यतेनेनेति व्युत्पत्त्येत्यर्थः । इदानीं वक्ष्यमाणसूत्रगणमवतारयति । तदेतदिति तदेतच्छास्त्रं चतुर्व्यूहमितिक्रमेणाभिधीयते प्रतिपाद्यते सूत्रकारेणेत्यर्थः ।

( शेषमग्रे )

| | |
|---|---|
| काशीस्थराजकीयप्रधानपाठशालायां | सांख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री ।<br>ज्योतिषशास्त्राध्यापकः केशवशास्त्री च । |

# ॥ अथ चित्सुखी ॥

## ॥ तत्र द्वितीयपरिच्छेदावशेषः ॥

(*Continued from page* 550. Vol. V.)

न प्रथमः, असंभवादेव, न हि विशेषणविशेष्यभावेन प्रसिद्धयोर्दण्डदेवदत्तयोर्दण्डो देवदत्त इत्येकविभक्तिकानेकपदाभिधेयत्वमस्ति ।

नापि चरमः, दण्डी देवदत्त इत्यत्रैवादर्शनात्, न हि यथा शुक्लः पट इति शुक्लगुणं पटत्वं च निमित्तीकृत्य पदद्वयं पटे प्रवृत्तं तथा दण्डित्वं दण्डं वा निमित्तीकृत्य दण्डपदं देवदत्ते प्रवृत्तं येन समानाधिकरणता स्यात् ।

दण्डित्वं निमित्तीकृत्य दण्डिशब्दो देवदत्ते प्रवृत्त इति चेत्, प्रवर्तनां नाम, न तु तद्विशेषणम्, दण्डविशिष्टरूपत्वात् तस्य ।

किंच जटी तापसो जटाभिस्तापस इति वैकल्पिकप्रतिभासमात्रेण विशेषणोपलक्षणव्यवहारमङ्गीकुर्वाणः सर्व एवायं मानमेयादिव्यवहारो बुद्ध्यारूढेन धर्मधर्म्यादिभावेन बहिः सदसत्त्वमपेक्षत इति सौगतमतानुप्रवेशमात्मनस्तार्किकमन्यो नालोचयते ।

एतेन संबद्धमेव व्यावर्तकं विशेषणम्, असंबद्धमपि व्यावर्तकमुपलक्षणमित्यपि परास्तम् ।

अस्तु वा भवदिच्छया यत्किंचनावच्छेदकमवच्छिन्नं तथापि किं तत् पदमिति विवेचनीयम्, यत्समुदायो वाक्यम् ।

ननु प्रसिद्धिसिद्धमेव सुप्तिङन्तं पदमिति किमिह विवेचनीयमिति चेत्, मैवम्, एकैकस्य मिलितस्य वा लक्षणत्वे सुबन्तेऽपि तिङन्तस्य तिङन्तेऽपि सुबन्तस्योभयोरुभयत्र चाव्याप्तेः ।

उभयान्यतरदिति चेत्, अन्यतरशब्देनैकैकस्य मिलितस्य वाभिधाने पूर्वदोषानुषङ्गात् ।

उभयान्यान्यदिति चेत्, न, उभयशब्देनोभयत्वसंख्याविशिष्टत्वविवक्षायामन्यशब्देन चान्यत्वाधिकरणत्वविवक्षायामुभयोरपि तत्संभवेन पूर्वोक्तदोषानतिवृत्तेः ।

अपिच सुप्तिङन्तं पदमिति यत्र सुप्तिङौ स्तस्तत् पदं यत्र वा तौ विधित्सितौ तत् पदम् ।

नाद्यः, विभक्तिसत्त्वस्य विशेषणत्वेऽव्ययानां लुप्तविभक्तिकानामपदत्वप्रसङ्गात्, उपलक्षणत्वे तु प्रातिपदिकस्यापि पदत्वम्, भाविनापि विनाशेन विनाशी घट इतिवद् भाविनापि विभक्तिसत्त्वेनोपलक्षितत्वोपपत्तेः ।

अत एव न द्वितीयः, एतेन विभक्त्यन्ता वर्णाः पदमित्यपि निरस्तम् ।

ननु शाब्दप्रतीत्यजन्यशाब्दप्रतीतिजनकं वर्णात्मकं पदमिति लक्षणम्, अत्र च शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं वाक्यं प्रथमविशेषणेन व्यावर्त्यते द्वितीयेन च प्रत्यक्षानुमानादावतिव्याप्तिर्व्युदस्यते वर्णात्मकत्वविशेषणेन चादृष्टेश्वरादि ।

तदिहाधुनिकलक्षणे न कोऽपि दोष इति चेत्, मैवम्, विकल्पासहत्वात् ।

तत्र किं शब्दशब्देन पदं विवक्षितमुत वाक्यम् ।

नाद्यमः, पदस्याद्याप्यसिद्धेः ।

न पश्चिमः, पदासिद्धौ तस्याप्यसिद्धेः ।

नाप्याकाङ्क्षासंनिधियोग्यतावन्ति पदानि वाक्यमिति तृतीयः पक्षः, आकाङ्क्षायाः पुरुषधर्मस्याचेतनेषु पदेष्वभावात्, आकाङ्क्षा हि जिज्ञासा, उक्तं हि,

"अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा ।
प्रतियोगिनि जिज्ञासा या साकाङ्क्षेति गीयते" ॥

इति ।

योग्यतापि किं पदानामेव सह प्रयोगयोग्यत्वमुतान्योन्यान्वययोग्यार्थत्वम् ।

नाद्यः, 'वह्निना सिञ्चे'दित्यादावपि सह प्रयोगदर्शनात् ।

नापि द्वितीयः, वाक्याभासेऽपि प्रसङ्गात्, नाद्यास्तीरे फलानि सन्तीति विप्रलम्भकवाक्यस्थपदानामप्यन्योन्यान्वययोग्यार्थकत्वात्, अन्यथा प्रामाणिकवाक्येऽपि तेषामनन्वयापत्तेः ।

प्रमाणान्तरविरोधादिह पदार्थानामन्वययोग्यता नास्तीति चेत्, न, संसर्गाभावेऽपि संसर्गयोग्यस्वभावस्याखण्डितत्वात् ।

अस्तु वा यत् किंचिदविचारितरमणीयं पदम्, तत्समूहश्च वाक्यम्, तथापि कुत्र प्रमाणमिति विवेचनीयम् ।

शब्दो मानं विवक्षायां ज्ञानेऽर्थे वा भवन् भवेत् ।
नाद्यौ तद्व्यभिचारित्वान्नान्त्यः संगत्ययोगतः ॥ ३१ ॥

न तावद्देवदत्त गामभ्याजेति पदनिचयस्तद्विवक्षायां तज्ज्ञाने वा लिङ्गतया मानम्, व्यभिचारित्वात्, भ्रान्तस्यापि पिपासोः पानीयविवक्षायां कुङ्कुदं देहीति प्रयोगदर्शनात्, अन्यथा[1] जानतोऽपि विप्रलम्भस्यान्यथा प्रयोगदर्शनाच्च ।

आप्तवाक्यमेव तयोर्लिङ्गं नेतरदिति चेत्, [2]अस्तु तर्हि तदर्थस्यैव प्रतिपादकत्वम्, तस्य तेनाव्यभिचारात् ।

किंच वाक्यं वाक्यार्थेनाविशेषितज्ञानविवक्षयोर्मानमुत विशेषितयोः ।

नाद्यः, व्यवहारा[3]भावप्रसङ्गात् ।

द्वितीये तु तद्विशेषणभूतोऽर्थः केनाधिगत इति वाच्यम् ।

न तावत् प्रत्यक्षेण, नदीतीरे फलसत्तायाः श्रोतुरिन्द्रिया[4]संनिकर्षा-

१ विवक्षाव्यभिचारमुदाहृत्य ज्ञानव्यभिचारमुदाहरत्यन्यथेति ।

२ अस्तु तर्हीति, अनाप्तवाक्येष्वर्थव्यभिचारदर्शनेन खलु विवक्षाज्ञानयोः प्रामाण्यमाश्रीयते, तत्रापि चेदाप्तवाक्यत्वेन विशेषणमर्थ एव किमिति, तर्हि तादृशं वाक्यं प्रमाणं न स्यात्, अस्ति हि तेनापि तस्याव्यभिचारः ।

३ व्यवहारेति, नहि ज्ञानमात्रविवक्षामात्रप्रतिपत्त्या गवानयनादौ प्रवृत्तिः संभवतीत्यर्थः ।

४ इन्द्रियासंनिकर्षाकष्टत्वात्, वाक्यप्रयोगसमय इति शेषः ।

क्लृप्टत्वात्, नानुमानेन, तद्व्याप्तलिङ्गाभावात्, नाप्येतदवगतिः स्मृतिः, पूर्वमननुभूतत्वात्, नाप्युत्प्रेक्षा, तस्याः प्रत्यक्षानुमानयोरनन्तर्भावात्, नापि संशयः, कोटिद्वयानवलम्बित्वात्, नापि विपर्ययः, तत्र प्रवृत्तस्य तत्प्राप्त्यभावप्रसङ्गात्, शब्दादेव तदधिगमे तु परस्पराश्रयता, अनुमानवैयर्थ्यं च, अनधिगमे तु तद्विशिष्टज्ञानानुमानायोगः, 'नागृहीतविशेषणा विशेष्ये बुद्धि'रिति न्यायात् ।

नापि तृतीयः, अर्थेन शब्दसंगत्यभावात्, शब्दार्थयोरेकदेशकालत्वनियमाभावात् ।

वाच्यवाचकलक्षणः संबन्धोऽस्तीति चेत्, वाचकत्वं नाम तद्विषयप्रतीतिजनकत्वं वाच्यत्वं तज्जन्यप्रतीतिविषयत्वं तदेवासति संबन्धे कथं स्यादिति पर्यनुयोगे तस्मादेव यद्भवतीति ब्रुवाणः पण्डितगोष्ठी[1]षु कथं नापत्रपेत, अन्तरेण च संबन्धं शब्दस्यार्थविशेषप्रतीतिजनकत्वेऽध्यक्षानुमानयोरपि संबन्धसमर्थनवैयर्थ्यापातः ।

कस्य चायं शब्दो वाचकः, किं जातेरुत व्यक्तेः किं वा जातिविशेषिताया व्यक्तेः ।

नाद्यः, विशेषविषयव्यवहाराभावप्रसङ्गात् ।

अथ जातावेवावसितसंगतिकानि पदान्यनाकलितविशेषायास्तस्या बोद्धुमशक्यत्वात् तत्रापर्यवसितव्यापाराणि विशेषानपि बोधयन्तीति मतम्, तदपि न, विकल्पासहत्वात् ।

तथाहि, प्रथमं जातिमात्रमवबोध्यापर्यवसानादनन्तरं विशेषमवबोधयन्ति किं वान्तर्भावितविशेषामेव जातिम् ।

नाद्यः, पदबुद्धोर्विरम्य व्यापाराभावात् ।

द्वितीयेऽपि विशेषेषु पदानां शक्तिरस्ति न वा, अस्ति चेत्, जातिरेव शब्दार्थ इत्यभ्युपगमभङ्गप्रसङ्गः ।

अस्तु तर्हि जातिरेव वाच्या व्यक्तिस्तु तदविनाभावाल्लक्ष्येति चेत्, मैवम्, अविनाभावासिद्धेः ।

१ सदःस्वित्यर्थः ।

किं गोत्वजातेर्व्यक्तिमात्रेणाविनाभावः किं वा गोव्यक्त्या ।

नाद्यः, गोत्वजातेर्घटादिव्यक्तिभिरविनाभावाभावात् ।

न द्वितीयः, आत्माश्रयत्वात्, गोत्वजातिविशिष्टायां गोत्वस्य वर्तनाङ्गीकारात्, विशिष्टस्य लक्ष्यत्वे विशेषणभूताया जातेर्लक्ष्यत्वप्रसङ्गात्, एतेन[1] सास्नावता विशेषेणाविनाभाव इत्यपि प्रत्युक्तम् ।

किंच[2] सापि शक्तिरनधिगता न कार्याय पर्याप्तेति तदधिगतिरवश्याश्रयणीया ।

न च सा शक्या, विशेषाणामानन्त्यात्, व्यभिचाराच्च, नास्ति चेत्[3], व्याघातः, तत्रा[4]समर्थानि बोधयन्ति च तानीति ।

अपिच जातिरेव शब्दार्थ इति नियमे कालाकाशदिगादिशब्दाना मवाचकत्वप्रसङ्गात्, कालादौ कालत्वादिजातेरभावात् ।

यत्र संभवति तत्र जातिरितरत्र तु व्यक्तिरिति व्यवस्थेति चेत्, न, पाचकादिशब्दानामुपाधिपरत्वस्वीकारात् ।

अस्तु तर्हि त्रितयं शब्दार्थ इति चेत्, न, जातिशब्दार्थत्वदोषाणामुपाधिष्वपि तुल्यत्वात् ।

न च त्रितयस्य मिलितस्यैकैकस्य वा शब्दार्थत्वप्रयोजकता, व्यभिचारित्वात्, अन्यतमत्वस्य च खण्डितत्वात्, एतेन व्यक्तेरपि शब्दार्थता प्रत्याख्याता, आनन्त्यव्यभिचारयोस्तत्रापि तुल्यत्वात्, विशिष्टस्यापि व्यावृत्तत्वाविशेषाद्व्यक्तेरिव तस्यापि शब्दार्थता निरसनीया ।

अथ जातिवैशिष्ट्यं सर्वत्रानुगतमेव शब्दार्थः, तदापि जातेः शब्दार्थतायामुक्तं दूषणं न प्रत्युद्ध्रियेत ।

१ सोऽपि गोत्वविशिष्ट एवेति पूर्वोक्तदूषणद्वयं स्यादिति ।

२ किंच यया कयापि भवत्वविनाभावः, तथापि तासु व्यक्तिषु बोधनसामर्थ्यमस्ति न वा, अस्ति चेत्, अगृह्यमाणा गृह्यमाणा वा, आद्ये प्राह किंच सापीति, द्वितीये प्राह न च सेति ।

३ ननु नास्त्येव तादृशी शक्तिः, अभिधेयनिष्ठत्वाच्छक्तेरिति, तत्राह नास्ति चेदिति ।

४ व्याघातमेव दर्शयति तत्रेति ।

किंच वाच्यत्वमर्थस्य धर्मो वाचकत्वं च पदस्य, तथा च प्रतिवस्तुनियते वाच्यत्वे वाचकत्वे च संबन्धग्राहोयुक्तिः कुतस्त्या ।

एतेन सांकेतिकः शब्दार्थयोः सबन्ध इत्यपि परास्तम्, संकेतस्यापि जातौ व्यक्तौ विशिष्टे वाभिहितन्यायेन दुर्ग्रहत्वात्, तस्माच्छ्रान्तं शब्दविज्ञानादसंनिकृष्टेऽर्थे बुद्धिरिति लक्षणमलक्षणम्, तथाप्तवाक्यं शब्दप्रमाणमिति नैयायिकानामपि ।

आप्तोदीरितवाक्येषु मालतीमाधवादिषु ।
व्यभिचारान्न तद्युक्तमाप्तत्वस्यानिरुक्तितः ॥ ३२ ॥

स्वकपोलकल्पितमालतीमाधवादिवाक्येषु प्रामाण्याभावादतिव्याप्तिः, न हि पुराप्त एव सनाटकनाटिकादिप्रबन्धविरचनमात्रेणानाप्तो भवति भवभूतिः, उक्तं चैतदुम्बकेन, "यद्याप्तोऽपि कस्मैचिदुपदिशति न त्वयाननुभूतार्थविषयं वाक्यं प्रयोक्तव्यम्, यथाङ्गुल्यग्रे हस्तियूथशतमास्त इति", तत्रार्थव्यभिचारः स्फुट इति ।

कश्चायमाप्तो नाम यथादृष्टार्थवादीति चेत्, न, भ्रान्तवाक्येऽपि प्रसङ्गात्, प्रमाणदृष्ट इति विशेषणेऽपि प्रमाणदृष्टस्य प्रमादादिनान्यथाकथनेऽपि प्रसङ्गात् ।

प्रमाणेन यथा दृष्टं तथा वादीति चेत्, मैवम्, एकदेशे तथाभूतवादित्वेऽप्यंशान्तरेऽन्यथाभूतवादिन्यपि प्रसङ्गात् ।

यावत् प्रमाणदृष्टं तावत एव वक्ताप्त इति चेत्, न, अज्ञातसंदिग्धानुवादादिवाक्यप्रयोक्तुरनाप्तत्वप्रसङ्गात् ।

अथ निर्दोष आप्त इति चेत्, मैवम्, आप्तानामपि क्वचिद्रागादिदोषसंभवात् ।

यत्र विषये यो निर्दोषः स तत्राप्त इति चेत्, न, यत्तच्छब्दयोर्विशेषविषयत्वेनासाधारण्यादव्याप्तेः, तस्मादाप्तवाक्यमागम इत्यप्यलक्षणम् ।

यथार्थवाक्यं शब्दप्रमाणमित्यपि न, यथार्थत्वस्य प्रमितिखण्डनावसर एव खण्डितत्वात् ।

एतेन समयबलेन सम्यक्परोक्षानुभवसाधनं शाब्दमिति भूषणस्याऽपि लक्षणमपास्तम्, ऊर्ध्वीकृततर्जन्या दशसंख्यानुमाने शङ्खध्वनौ चानुविधेयपुरुषाभिप्रायानुमापके व्यभिचारात्, समयसम्यक्त्वयोश्च पूर्वमेव निरासात्, तदेवं शाब्दलक्षणमपि दुर्भणमिति सिद्धम् ।

तथार्थापत्तिलक्षणमपि. अन्यथानुपपद्यदर्शनादुपपादके बुद्धिरर्थापत्तिः, यथा जीवतो देवदत्तस्य गृहान्तरभावमवलोक्य बहिरवस्थानज्ञानम् ।

नन्विदमनुमानमेवास्तु देवदत्तो बहिरस्ति जीवनत्वे सति गृहेऽभावात् संप्रतिपन्नवदिति चेत् मैवम्, देवदत्तप्रतियोगिकाभावस्य गृहाधिकरणतया देवदत्तधर्मत्वाभावात् ।

गृहनिष्ठाभावप्रतियोगित्वं हेत्वर्थ इति चेत्, मैवम्. यदा जीवन्नस्ति क्वचिद्देवदत्त इत्याप्तवाक्यादनिर्धारितदेशविशेषनिष्ठतया देवदत्तसत्तावगता ग्रामाद्बहिरवस्थितेनैव चैत्रेण, स च तदागत्य गृहान्तस्तदभावमालोक्य बहिःसत्त्वमनुमिमीत इति वाच्यम्, तच्चानुपपन्नम्, साधारणदेशमात्रावस्थानविषयस्यागमस्यार्थापत्त्या यावन्न बहिर्देशसत्ताविषयत्वं परिकल्प्यते तावदागमापबाधितविषयतयानुमानस्यानुत्थानात्, कल्पिते तु बहिर्देशविषयत्वेऽनुमानात् प्रागेवार्थापत्तिलब्धप्रमेयेति कृतमनुमानेनेति भाट्टाः प्रतिपेदिरे, तदिदमसुन्दरम् ।

आगमस्य बहिर्देशविषयत्वस्य कल्पनात् ।
प्रागेव देवदत्तस्य गृहेऽभावो मितो न वा ॥ ३३ ॥
आद्येऽनुमानं तेनैव निष्प्रत्यूहं प्रवर्तताम् ।
द्वितीये कल्पकाभावादर्थापत्त्युदयः कुतः ॥ ३४ ॥

भाट्टानामप्याप्तवाक्यस्य बहिर्देशविषयत्वकल्पनात् प्रागेव देवदत्तस्याभावः प्रमितोऽप्रमितो वा ।

प्रमितत्वे तत एवानुमानोदयादलमर्थापत्तिप्रकल्पनादुर्व्यसनेन ।

द्वितीये कल्पकाभावात् कुतोऽर्थापत्तेरुदयः ।

इयांस्तु विशेषः, प्रत्यक्षाभाववादिनो मते प्रत्यक्षस्यागमाद्बलीय-

सत्त्वादागममवगणय्यापि प्रत्यक्षाधिगतगृहाभावलिङ्गेन भवति बहिर्देवदत्तसत्त्वानुमानम्, अभावप्रमाणाधिगम्यत्वे पुनरभावस्यागमाद् दुर्बलतया तद्विरोधिगृहाभावस्यैव प्रमातुमशक्यतया नार्थापत्तिः प्रसरति, तदुपलम्भकप्रमाणपञ्चकस्तमय एवाभावप्रमाणप्रवृत्त्यङ्गीकारात्, यथाहुः,

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता" ॥

इति ।

किंच यद् यस्य कल्पकमिष्यते तत् तेनाविनाभूतमिष्यते न वा ।

आद्ये भङ्ग्यन्तरेण भवताप्यनुमानमेवाभिहितमिति न प्रमाणान्तरावकाशः ।

द्वितीयेऽप्यनियतमेव यत् किंचित् कल्पयेदिति नार्थापत्तिप्रमेयसिद्धिः ।

अनुपपद्यमानस्योपपादकासत्त्वे विरोधो गमक इति नानुमानमिति चेत्, मैवम्, अनुपलब्धिरप्यनुपलभ्यमानसत्त्वे विरोध एवाभावगमक इत्यभावमानापह्नवप्रसङ्गात्, धूमोऽपि धूमध्वजस्यासत्त्वे विरोधादेव तद्गमक इत्यनुमानविलयापत्तेश्च ।

यत्र कार्यकारणभावं विनाऽविनाभावाद्रेव गमकत्वं रसरूपादौ तत्र भवत्येवानुमानं लब्धावकाशमिति चेत्, न, तत्रापि रूपासत्त्वे रसस्य विरोधादेव गमकत्वोपपत्तेः ।

कश्चायं विरोधः, किं प्रमाणयोरुत प्रमाणत्वेनाभिमतयोरनिर्णीतप्रामाण्याप्रामाण्ययोर्वा सामान्यप्रवृत्तप्रमाणेन विशेषप्रवृत्तप्रमाणार्थबाधसंशयो वा तर्कयोरेव वा ।

तदसिद्धिरतिव्याप्तिः सक्तिः स प्रतिसाधने ।
असंभवोऽतर्कता च दोषास्तेषां क्रमादमी ॥ ३५ ॥

न तावदाद्यः, उभयोः प्रामाण्ये विरोधस्य विरोधे वा प्रामाण्यस्यैवासंभवादसिद्धेः, अन्यथा वस्तुनो द्वैरूप्यापत्तेः ।

नापि द्वितीयः, अभिमतशब्देन प्रमाभिधाने ज्ञानमात्रविवक्षायां वा भ्रमज्ञानयोः प्रमाणत्वेन गृहीतयोर्विरोधाद्विभिन्नविषयत्वकल्पनाया अप्यर्थापत्तित्वप्रसङ्गात् ।

नापि तृतीयः, वायुर्बाह्यकरणाप्रत्यक्षोऽरूपिद्रव्यत्वात् कालादिवत्, वायुः प्रत्यक्ष उपलभ्यमानस्पर्शाधिष्ठानत्वाद् घटादिवत्, इत्यनिर्णीतप्रामाण्याप्रामाण्ययोरनुमानयोर्विरोधेऽप्यर्थापत्त्युदयप्रसङ्गात् ।

नापि चतुर्थः, असंभवात्, नहि यद् यत्र विशेषतः प्रमितं तस्य तत्रापि तद्विपरीतप्रमाणविषयत्वसंशयः, न खलु स्थाणुरयमिति निश्चयेऽपि स्थाणुर्वा पुरुषो वेति संशेरते जनाः ।

नापि पञ्चमः, मिथो विरोधेन तर्कयोरेवाभासत्वात् ।

किंच· उपपादकेन येन विनानुपपद्यमानत्वं तत् प्रमितं न वा ।

प्रथमे गृहीतग्राहित्वादर्थापत्तिर्न प्रमा स्यात् ।

द्वितीये तु विशेषणासिद्धेस्तद्विशेषितानुपपद्यमानार्थाप्रतीतौ कल्पकाभावादर्थापत्तिरुदयमासादयेदित्यलमतिविस्तरेण ।

अभावाख्यं प्रमाणमपि दुर्निरूपम्, एवं हि वर्णयन्ति, योग्यानुपलब्धिकरणकमर्थाभावज्ञानमभावः, यथेह भूतले घटो नास्तीति ज्ञानम् ।

न चेदं प्रत्यक्षम्, इन्द्रियसंनिकर्षाजन्यत्वात्, न ह्यभावेनेन्द्रियसंनिकर्षः संयोगः समवायो वा संभवति, तयोर्भावधर्मत्वात् ।

नापि विशेषणविशेष्यभावः, तस्यापि मूलसंबन्धगर्भतया तन्निवृत्तौ निवृत्तेः, अन्तरेणापि मूलसंबन्धं विशेषणविशेष्यभावाङ्गीकारेऽपि तस्य प्रत्यक्षाङ्गतायाः पुरैव निरासात् ।

न चेदमनुमानादावन्तर्भवति, चक्षुरादिवदनुपलब्धेरज्ञायमानाया एव करणत्वात्, अन्यथानुपलब्धेरप्यनुपलब्ध्यन्तरोपलभ्यमानतायामनवस्था स्यादिति, तदयुक्तम्,

केवलानुपलम्भस्य व्यभिचारनिवारणी ।
योग्यता चेत् कुतो न स्यादनुमानमभावधीः ॥ ३६ ॥

अनुपलम्भमात्रस्य सुषुप्त्यादावभावज्ञानाजनकतया तद्व्यभिचारवारणाय योग्यानुपलब्धिरिति विशेष्यतेति चेत्, तर्हि योग्यानुपलब्धेर्धूमादिवदव्यभिचारितयाऽभावज्ञानजनकत्वोपपत्तौ कुतः प्रमाणान्तरता ।

न चाज्ञायमानतया करणत्वेनानुमानाद्बहिर्भावोऽन्यथानवस्थाप्रसङ्गादिति वाच्यम्, स्वतः सिद्धसाक्षिप्रसादादेवोपलब्धिवदनुपलब्धेरपि सिद्धावनवस्थादुःस्थताऽभावात्, अन्यथानवस्थायास्तत्रापि दुरुत्तरत्वात्, तथाहि, अनुपलब्धेः सर्वथानवगतत्वे तत्करणत्वस्य दुरधिगमत्वात् तदधिगतिरवश्याश्रयणीया, सापि चेदनुपलम्भान्तरात् सिध्येत् तदपि तथैवेति कथं नानवस्था, एवं तत्र तत्र प्रमाणानुपन्यासे तत्तदनुपलम्भसत्ताया एवासिद्धिः, प्रपञ्चितं चैतत् पुरस्तात् ।

भवतु वा भिन्नैवानुपलब्धिरनुमानात् तथापि नाभावः प्रमितिकरणम्, विकल्पासहत्वात्. तथाहि किमुपलब्धेः प्रागभावोऽनुपलब्धिरुत प्रध्वंसः किं वान्योन्याभावोऽत्यन्ताभावो वा ।

नाद्यः, दृष्टनष्टे घटे उपलब्धिप्रागभावाभावेऽप्यभावप्रमितिदृष्टेः ।

नापि द्वितीयः, प्रागभावात्यन्ताभावप्रमित्यनुत्पत्तिप्रसङ्गात्, प्रतियोग्युपलब्धेरसंजातत्वादेव तत्प्रतियोगिकप्रध्वंसाभावात् ।

नापि तृतीयः. सत्यपि घटोपलम्भे तदभावप्रतीतिप्रसङ्गात् ।

नापि चतुर्थः, दृष्टनष्टादिभावे प्रमित्यनुदयापत्तेः ।

एतेनोपलम्भसंसर्गाभावः कारणमित्यपि निरस्तम्, तत्रापि प्रागभावादिविकल्पानामप्रतिबद्धप्रसरत्वात्, अन्यतमत्वखण्डनस्य पूर्वमेव कृतत्वात् ।

न चानुपलब्धेः करणत्वम्, अवान्तरव्यापारानिरूपणात् ।

न च प्रतियोगिस्मरणमधिकरणग्रहणं वा तद्व्यापारः, तयोर्भावविषययोरनुपलम्भाजन्यत्वात्. तज्जन्यस्तज्जन्यजनको व्यापार इति हि तद्विदः, केवलानुपलम्भस्य तदजनकत्वेऽपि योग्यताविशिष्टस्यास्त्येव तज्जनकता ।

तत्तद्विनाभूतेतरप्रमाकारणसाकल्यं हि योग्यतेत्यङ्गीकारादिति चेत्, तर्हि भावप्रमितीनामिन्द्रियादिसहकृतभावानुपलम्भकारणजन्यतया तासु तासु प्रमास्वसाधारणकारणत्वप्रवादः प्रत्यस्तमियात् ।

कश्चायमनुपलम्भः, किं प्रमाभावः किं वा ज्ञानमात्राभावः ।

नाद्यः, इदं रजतमिति रजतारोपस्थले रजताभावप्रमित्यजनके रजतप्रमाभावेऽतिव्याप्तेः, अन्यथा रजतारोप एव न स्यात् ।

नापि द्वितीयः, शङ्खधवलिमप्रतिसंधानवतः पीत इति भ्रमानुदयप्रसङ्गात् ।

अपिच यत्राभाव एव लक्षणतो दुर्निरूपः कुतस्तत्रेदं प्रमाणमिदं प्रमेयमिति विचारावतारः ।

तथाहि, कोऽयमभावः, भावादन्यो वा भावत्वानधिकरणं वा भावविरोधी वा भावेन स्वभावप्रत्यासन्नो वा नास्तीति प्रत्ययविषयो वा प्रतियोगिसापेक्षनिरूपणो वा अस्तीति बुद्धेरविषयो वा निर्विकल्पकबुद्धेरविषयो वा भावलक्षणरहितो वा ।

नाद्यः, भावस्यापि भावादन्यत्वेनातिव्याप्तेः ।

न द्वितीयः, अनधिकरणपदेनाधिकरणत्वाभावविवक्षायामात्माश्रयत्वात् ।

न तृतीयः, किंचिद्भावविरोधस्य भावेऽपि सद्भावादतिव्याप्तेः, सर्वभावविरोधित्वस्याभावेऽप्यभावेनासंभवित्वात्, न खलु घटाभावः सर्वभावविरोधी, सति घटाभावे विश्वाभावप्रसङ्गात्, विरोधिशब्देन च तादात्म्यासहिष्णुत्वविवक्षायां भावेष्वपि भावात् ।

नापि चतुर्थः, समवायादावपि भावात् ।

नापि पञ्चमः, इह भूतले घटो नास्तीति घटभूतलयोरपि विशिष्टाभावबुद्धिविषयत्वात्, अनुगताकारानिरूपणाच्च ।

नापि षष्ठः, ह्रस्वदैर्घ्यादिष्वपि भावात् ।

न सप्तमः, घटस्याभावोऽस्तीत्यभावस्याप्यस्तिप्रत्ययविषयत्वेनासंभवित्वात् ।

नाप्यष्टमः, ब्राह्मणत्वादिष्वपि भावात् ।

"संस्थानेन घटत्वादिब्राह्मणत्वादिजन्मतः ।

क्वचिदाचारतश्चापि सम्यगाज्ञानुपालितात् ॥

तैलाद् घृतं विलीनं च गन्धेन च रसेन च" ।

इत्यादिन्यायेन तेषामपि सविकल्पकमात्रविषयत्वात् ।

नापि नवमः, राहित्यशब्देनाप्यभावाभिधानादात्माश्रयत्वापत्तेः ।

किंच किंचिद्भावलक्षणरहितत्वे भावेष्वपि प्रसङ्गः, सर्वभावलक्षणरहितत्वशब्देन च सर्वभावलक्षणानधिकरणत्वविवक्षायामेकैकस्यापि भावस्य तत्त्वादतिव्याप्तिः, सर्वभावलक्षणाभावाधिकरणत्वाभिधाने च तेष्वेव लक्षणाभावेष्वव्याप्तिः, तेषां स्वाधिकरणत्वाभावात्, तेष्वभावान्तराभ्युपगमे चाननुगमप्रसङ्गः ।

किंचेदं भावत्वं यदनधिकरणमभावः, किमस्तीति प्रत्ययविषयत्वं नास्तीति प्रत्ययाविषयत्वं वा प्रतियोग्यनपेक्षनिरूपणत्वं वा निर्विकल्पबुद्धिबोध्यत्वं वा षड्लक्षणलक्षितत्वं वा षड्लक्षणान्यतमलक्षणलक्षितत्वं वा ।

नाद्यः, घटस्याभावोऽस्तीत्यस्तिप्रत्ययविषयत्वेनाभावेऽतिव्याप्तेः ।

न द्वितीयः, भूतले घटो नास्तीति प्रत्ययविषयस्यापि घटादेर्भावत्वात् ।

न तृतीयः, प्रतियोग्यपेक्षनिरूपणे ह्रस्वदीर्घत्वादावव्याप्तेः ।

न चतुर्थः, निर्विकल्पबुद्धेः प्रागूर्ध्वमपि घटादेर्भावत्वात्, तदत्यन्ताभावानधिकरणत्वे चात्यन्ताभाव एवातिव्याप्तिः, तत्रात्यन्ताभावान्तराभ्युपगमे लक्षणस्याननुगमः ।

न पञ्चमः, षड्लक्षणलक्षितत्वस्य प्रत्येकं द्रव्यादिष्वभावेनाव्याप्तेः ।

न षष्ठः, अन्यतमत्वस्य प्रागेव निरस्तत्वात् ।

कश्चायं प्रागभावः, विनाश्यभाव इति चेत्, न, विनाशिशब्देनोत्पत्तिमद्भाववत्त्वाभिधाने लक्षणस्यासंभवित्वात्, नहि प्रागभावस्य घटव्यतिरेकेणोत्पत्तिमानन्योऽभावो निवृत्तिः,अन्यस्यानुपलम्भात्, अपोह्यमाने चाभावे भाव एवावशिष्यत इत्यभ्युपगमाच्च ।

नन्वनिवृत्तेः प्रागभावे घटजन्मन एवासंभवादन्यैव तन्निवृत्तिरभ्युपेया ।

( शेषमग्रे )

॥ श्रीः ॥

# ॥ योगवार्त्तिकम् ॥

(*Continued from page* 570. VOL. V.)

## हेयं दुःखमनागतम् । १६ ।

अनागतमितिविशेषणस्य फलमाह ॥

दुःखमतीतमित्यादिना । अतिवाहितमतिक्रान्तमतः सिद्धतया तद्धानं न पुरुषार्थः तथा वर्त्तमानमपि स्वसत्ताकाले भुज्यत एवेति त्वया वक्तुं न शक्यते । स्वोत्तरोत्पन्नगुणेन च तृतीयक्षणे स्वयमेव भङ्क्ष्यतीति तद्धानार्थः प्रयासो विफल इत्यर्थः । नन्वेवमनागतस्यापि हेयत्वं न घटते परचित्तदुःखस्य स्वचित्ते स्वत एवाभावात् । स्वचित्तवृत्तेश्चानागतदुःखस्यावश्यंभावित्वात् । अन्यथा सत्त्वप्रमाणाभावादितिचेन्न । स्वचित्तस्यैवानागतदुःखस्य कारणोच्छेदेनानुत्पत्त्या हेयत्वात् वर्त्तमानलक्षणमप्राप्तस्याप्यनागतदुःखस्य चित्तनाशेन नाशात्कदाचिद्वर्त्तमानोपि चानागतधर्मानुमानात्सिध्यति सर्वं सर्वात्मकमिति भाष्यकारेण तृतीयपादे सर्वत्रैव परिणामिवस्तुनि विकारजननशक्तेः कार्यानागतावस्थारूपाया जलभूम्यादिदृष्टान्तैः शान्तोदिताव्यपदेश्येत्यादिसूत्रेनुमेयत्वादिति, शेषं पूर्वसूत्रे व्याख्यातप्रायम् । अस्माच्च सूत्रादात्यन्तिकी दुःखनिवृत्तिरेव मोक्ष इति सिद्धम् । अस्मिन्सूत्रे दुःखं मुख्यमेव ग्राह्यं मुख्यस्यैव स्वतो हेयत्वात् । तद्धानं च समवायसंबन्धेन यद्यपि पुरुषे नित्यसिद्धं तथापि भोग्यतारूपस्वत्वसंबन्धेन धनादिनामिव तद्धानं न नित्यसिद्धमिति । तेन संबन्धेन तद्धानं पुरुषार्थ इत्याशयः । तथाहि वक्ष्यति 'तस्मिन्निवृत्ते पुरुषः पुनरिदंतापत्रयं न भुङ्क्ते' इति । तदेतदुक्तं सांख्यन्याययोः त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इति । दुःखात्यन्तविमोक्षोपवर्ग इति च । यत्तु आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्येवंविधवाक्यजातं तत् दुःखनिवृत्त्याख्यसुखपरमेव तदानीमभोग्यसुखस्यापुरुषार्थत्वात् । सुखं दुःखसुखात्ययइतिपरिभा-

यथा रूढिबाधनाच्च । हेयस्य सूत्रं व्याख्याय क्रमप्राप्तहेयहेतुप्रतिपादकं सूत्रमवतारयति । तस्माद्यदेव हेयमिति ।

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

द्रष्टृपदार्थमाह । द्रष्टेति । बुद्धेः प्रतिसंवेदनं संवेदनस्य बुद्धिवृत्तेः प्रतिबिम्बः । प्रति अनिवद्य प्रयोगः । सोऽस्यास्तीति बुद्धिमानीति फलितार्थः । दृश्यपदार्थमाह । दृश्या बुद्धिसत्त्वेति । बुद्धिसत्त्वस्यापि दृश्यत्वेनात्र विशेषणं विवक्षितं धर्मायइति च बुद्ध्यारूढत्वेन बुद्धिधर्मत्वमभिप्रेत्योक्तं न तु बुद्धिकार्यत्वाभिप्रायेण प्रधानादेरपि दृश्यत्वेन तत्त्यागानौचित्यात् उत्तरसूत्रे प्रधानस्यैव मुख्यतो दृश्यत्ववचनाच्च । यद्यपि बुद्ध्यारूढो भवन् पुरुषोऽपि दृश्यः तथापि तस्य निर्दुःखतया तद्दर्शनं न हेयहेतुरित्याशयेनात्र दृश्यमध्ये पुरुषं न गणयिष्यतीति । तथा च सुखदुःखमोहात्मकदृश्यवत्या बुद्ध्या सह द्रष्टुः साक्षिणः काष्ठाग्निवत् संबन्धो * बन्धाख्यः पुरुषस्य दुःखहेतुरिति सूत्रार्थः न तु बुद्ध्यारूढैर्दृश्यैर्द्रष्टुर्ज्ञानरूपः संयोगो हेयहेतुरत्र विवक्षितः स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोग इत्यागामिसूत्रेणास्य संयोगस्य ज्ञानहेतुत्वेनैव लक्षणीयत्वात् न तु ज्ञानरूपत्वेनेति । अस्माच्च सूत्राद्बुद्ध्यात्मसंयोगवत् घटाद्यात्मसंयोगोऽपि भोगहेतुर्बोध्यः भोक्तृभोग्यसंयोगस्यैव सामान्यतो भोगहेतुतया लाघवेनौचित्यात् । विषयभोगे च बुद्ध्यवच्छेदेन विषयसंयोगस्य हेतुत्वान्नातिप्रसङ्ग इति । अस्य च संयोगस्य पुरुषार्थो हेतुरिति वक्तुं सकलपुरुषार्थवत्स्वरूपं स्वत्वं बुद्धौ पुरुषस्य प्रतिपादयति । तदेतदिति । न च तस्य हेतुरविद्येत्यागामिसूत्रेणैव संयोगस्य कारणं वक्ष्यतइति नास्ति संयोगकारणापेक्षेति वाच्यम् । अविद्याया अपि पुरुषार्थासमाप्तिद्वारैव बन्धहेतुतया वक्ष्यमाणत्वात् इति । तदेतदित्यादेरयमर्थः । तद्बुद्धिसत्त्वं एतज्जगद्दृश्यं यत्रास्तीत्येतद्दृश्यम् अतोऽयस्कान्तवत्संनिधिमात्रेणोपकारितया स्वयं दृश्यतया च ज्ञानमात्रस्वरूपस्य स्वामिनः पुरुषस्य स्वमात्मीयं भवतीति । ननु बुद्धेः कथमन्यः स्वामी स्वीक्रियते

* संयोग इति पाठान्तरम् ।

सैवापरतन्त्रा स्वयं द्रष्ट्री स्वार्थैव भवतु तत्राह। अनुभवकर्मेत्यादि। यतः कर्म-कर्तृविरोधेन स्वदृश्यत्वानुपपत्त्या अनुभवाख्यं यत्पुरुषस्य कर्म तद्विषयतामापन्नं सदेवान्यरूपेण पुरुषचैतन्येन प्रतिलब्धात्मकं सिद्धसत्ताकं, अन्यरूपेणान्यप्रयोजनेन लब्धस्थितिकं वा अतः स्वतन्त्रं पुरुषानाश्रितमपि परार्थत्वात् परतन्त्रं परस्य समित्यर्थः। तदेवं दृश्याख्यभोग्यात्मकाखिलपुरुषार्थस्य बुद्धिनिष्ठत्वे सिद्धे स एव पुरुषार्थोनागतावस्थो बुद्धिपुरुषयोः संयोगे हेतुरिति वदन् सूत्रवाक्यार्थमाह। तयोरिति। तयोः स्वस्वामिनोः, दृश्यतेनयेति दर्शनं बुद्धिः। अनादिश्चात्र प्रवाहरूपेण पुरुषार्थकृतत्ववचनात्। ननु पुरुषार्थसंयोगाङ्गीकारे सत्यपरिणामित्वभङ्ग इति चेन्न। सामान्यगुणातिरिक्तधर्मान्यत्तरेव व्यवहारानुसारेण परिणामशब्दार्थत्वावधारणात्। घटाद्यसंयोगाद्यैराकाशस्य द्वित्वादिभिश्च पुरुषस्य परिणामव्यवहाराभावात्। पद्मपत्रस्थतोयेन पद्मपत्रस्यापरिणामासंयोगादिश्रवणाच्च। संयोगविभागसंख्यादयस्तु द्रव्यसामान्यगुणा इति। अपि च श्रुतिस्मृत्योः सुखादिरूपाः परिणामा एव पुरुषे नाभ्युपगम्यन्ते, मनोन्वयव्यतिरेकेण मनस्येव लाघवतस्तत्कल्पनात् मनसोवच्छेदकत्वं परिकल्प्यात्मन्यत्र तत्कल्पने गौरवात्। संयोगादिकं प्रति तु द्रव्यत्वेनैव हेतुतया पुरुषस्यापि तत्संभवात्। पुरुषस्य द्रव्यत्वं चानाश्रितत्वतः परिमाणतश्च सिद्धमिति। यद्यपि कारणावस्थबुद्धिः पुरुषश्च विभुः। तथापि तयोः संयोगः परिच्छिन्नगुणान्तरावच्छेदेन संभवत्यत्र महदाद्यखिलपरिणामानां त्रिगुणसंयोगं विनानुत्पत्तेः, स च संयोगजः संयोगः न तु कर्मजः, अवयवसंयोगादवयविसंयोगवदवच्छेदकीभूतगुणसंयोगादेव विभुनोः संयोगोत्पत्तेः। भूतलस्य घटसंयोगेन घटावच्छिन्नाकाशसंयोगोत्पत्तिवत् वैशेषिकशास्त्रे विभुनोः संयोगश्च साक्षादेव निषिद्धः न तु संयोगजः संयोग इति। यदि चात्मनः संयोग एव नास्तीति स्वीक्रियेत तर्हि प्रकृतिपुरुषसंयोगात्सृष्टिस्तद्वियोगतश्च प्रलय इति श्रुतिस्मृतिसूत्राणि नोपपद्येरन्। न च भोक्तृभोग्ययोग्यतैवात्रोपचारिकोत्रसंयोगो वक्तव्यः तस्याः स्वस्वामिभावरूपत्वनानादितया कार्यत्वस्याञ्जसानुपपत्तेः। किं च तस्या अविनाशित्वे

ज्ञाननाश्यत्ववचनविरोधः नाशित्वे परिणामः पुरुषस्य स्यादिति । ननु संयोगस्वीकारे पुरुषस्यासंगताक्षतिरिति चेन्न । पुष्करपत्रे पुरुषदृष्टान्ते संयोगसत्त्वेऽपि असंगताभ्युपगमात् । स्वाश्रयविकारहेतुसंयोगस्यैव संगत्वात् । पुरुषे च तादृशसंयोगास्वीकारादिति । तस्मात् पुरुषार्थनिमित्तको बुद्धिपुरुषयोः संयोगो भवति स एव च जन्मरूपतया दुःखहेतुरिति सिद्धम् । स च संयोगविशेषः परमेश्वरस्य योगमाया योगीन्द्रैरपि अचिन्त्या श्रुतिस्मृतिगम्या न विशेषतस्तर्कगोचरा भवति । यथा खलु नित्यमुक्तमसंगमविद्यादिरहितं विभु चिन्मात्रमात्मानं जीवजातमीश्वरो निबध्नाति । तथा चोक्तम् । 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदिति । सेयं भगवतो माया यन्नये न विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनमिति च । संयोगस्य दुःखहेतुत्वे पञ्चशिखाचार्यस्य संवादमाह । तथा चोक्तमित्यादिना प्रतीकार इत्यन्तेन । तयोर्बुद्धिपुरुषयोः संयोगो दुःखहेतुस्तस्य परिवर्जनादत्यन्तोच्छेदात् दुःखस्यात्यन्तिकः प्रतीकार उच्छेदः स्यादित्यर्थः । नन्वनादिकालप्रवृत्तस्य दुःखहेतुसंयोगस्योच्छेदो न शक्यसंभावन इत्याशयेन पृच्छति प्रसङ्गात्तच्छक्यत्वमवधारयितुम् । कस्मादिति । उत्तरम् । दुःखहेतोरिति । परिहार्यस्येत्यनेन प्रकृत्यादिनित्यव्यावृत्तिः । तथा च दुःखहेतुत्वनित्यत्वलिङ्गेन संयोगस्य शक्योच्छेदकत्वम् अनुमेयमित्याशयः । दुःखहेतोः प्रतीकार्यत्वे लौकिकमुदाहरणमाह । तद्यथेति । भेद्यत्वं भेदजदुःखभागित्वं भेत्तृत्वं च भेदद्वारा दुःखहेतुत्वं पदानधिष्ठानं पादेनानारोहणम् । पादत्राणमुपानत् । तद्व्यवहितेन वा पदा कण्टकस्यारोहणमित्यर्थः । एतत्त्रयं दुःखाश्रयदुःखहेतुतत्परीहारोपायरूपमित्यर्थः । यो वेदेत्यनेनैतत्त्रयज्ञानस्य प्रतीकारहेतुत्वं वदन् एतत्त्रयं मुमुक्षुभिर्ज्ञेयमित्यपि सूचितवान् । ननु तापो दुःखमिति पर्यायः तथा च दृष्टान्ते यथा भेद्यभेतृप्रतीकाररूपं त्रितयमस्ति नैवं दार्ष्टान्तिके तत्रैकस्या बुद्धेरेव तप्यतापकोभयरूपताभ्युपगमात् पुरुषस्य निर्दुःखत्वादित्याक्षिपति । कस्मादिति । सिद्धान्तमाह । त्रित्वोपलब्धेरिति । बाह्यदुःखस्थलउक्तत्रयोपलब्धिबलादन्तर्दुःखस्यापि त्रयसिद्धिरिति भावः । तस्य प्रकारमाह । अत्रापीति ।

अत्रापि दार्ष्टान्तिकेऽपि । अयं भावः । बुद्धेरेकत्वेपि त्रिगुणात्मकत्वादंशत्रयमस्ति । तत्र रजोंशस्तापकः सत्त्वांशस्ताप्यो बुद्धिपुरुषयोर्वियोगश्च दुःखप्रतीकार इति त्रयमुपपन्नमिति । ननु पुरुष एव कथं न ताप्यो भवतीत्याशयेन पृच्छति । कस्मादिति । सिद्धान्तमाह । तथापीत्यादिना वेत्तन्न इत्यन्तेन । कर्मस्थत्वात् । कर्मतन्त्रत्वात् सकर्मकत्वादिति यावत् । कर्मत्वं च क्रियाव्याप्यत्वं दुःखव्याप्यत्वं वा परिणामिनि न संभवतीत्यर्थः । वृत्तिव्याप्यत्वं तु विषयताख्यमपरिणामिन्यपि संभवतीत्यतो ज्ञानक्रियाकर्मत्वं पुरुषस्योपपद्यतइति विशेषः । यच्च पुरुषस्य स्वज्ञेयत्वं तदपि स्वप्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वमेवेति न तत्रापि परिणामापेक्षेति । नन्वेवं कथं दुःखनिवृत्तिः पुरुषार्थः परदुःखस्याहेयत्वात् । न च पुरुषनिष्ठत्वभ्रमात् दुःखं हेयं स्यादिति वाच्यम् । विदुषामपि दुःखहानार्थमसंप्रज्ञातार्थितायाः स्वीकारादित्याशङ्कां समाधत्ते । दर्शितविषयत्वादित्यादिना । पुरुषो यतो दर्शितविषयो बुद्धिसत्त्वेन निवेदितविषयोऽतः सत्त्वे ताप्यमाने प्रतिबिम्बरूपेण बुद्धिसत्त्वसमानाकारो भवन्न तु ताप्यतइति मूढैर्दृश्यते अनुताप्यत इवेत्यर्थः । नहि स्वाकारप्रतिबिम्बनातिरिक्तं विषयनिवेदनमपरिणामिनि संभवति प्रतिपादितं चैतद्वृत्तिसारूप्यमितरत्रेति सूत्रे, तथा च प्रतिबिम्बरूपेण भोगाख्यसंबन्धेन विदुषामपि दुःखस्य हेयत्वान्न पुरुषार्थासंभवदोष इति भावः । ये तु पुरुषस्य भोक्तृत्वमपि नेच्छन्ति तेषामेवाधुनिकवेदान्तिब्रुवाणामयं दोषः । इदानीं द्रष्टृदृश्यसंयोगानां त्रयाणामेव स्वरूपं सूत्रकारो वक्ष्यति । तत्र दृश्यरूपप्रतिपादकं सूत्रमवतारयति । दृश्यस्वरूपमुच्यतइति । अत्र पाठक्रमवैपरीत्येनादौ दृश्यकथनस्येदं बीजं दृशिमात्र इत्यागामिसूत्रे मात्रशब्देनाखिलदृश्यभेदतो द्रष्टा प्रतिपादनीयः । तत्र च प्रतियोगिनां दृश्यानां ज्ञानमादावपेक्ष्यतइति । पूर्वसूत्रे च प्राधान्यादादौ द्रष्टुरुपन्यास इति बोध्यम् ।

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥

प्रलये प्रकाशादिकार्याभावाच्छीलपदोपादानं. प्रकाशो बुद्ध्यादिवृत्तिरूपालोको भौतिकालोकश्च । क्रिया यत्नश्चलनं च । स्थितिः प्रकाशक्रियाभ्यां यथोक्ताभ्यां शून्यत्वं तयोः प्रतिबन्ध इति यावत् । तच्छीलं गुणत्रयमिति विशेष्यपदमत्रोत्तरसूत्रे गुणपर्वाणीति विभागवचनात् लभ्यते, ऽत एव भाष्यकारैरेते गुणा इति व्याख्यास्यन्ते । तादृशेषु गुणेषु प्रमाणमाह । भूतेति । भूतेन्द्रियात्मकं स्थूलसूक्ष्मरूपाणां भूतानां स्थूलसूक्ष्मरूपाणां चेन्द्रियाणां कारणं तेन महदाद्यखिलकार्यकारणत्वमेव लब्धं तच्च गुणेषु तेषां प्रकाशादिरूपतायां च प्रमाणं त्रिगुणात्मकानां च जडकार्याणां त्रिगुणात्मकजडकारणं विनानुपपत्तेरिति । गुणानां कार्यमुक्त्वा स्वरूपसत्ताप्रयोजकं प्रयोजनमाह । भोगापवर्गार्थमिति । भोगापवर्गप्रयोजनवदिति सूत्रार्थः । नन्वेवं गुणत्रयस्यैव दृश्यत्वं प्राप्तं न तु विकाराणामिति चेव। गुणपर्वतयोत्तरसूत्रेण तेषामपि संग्राह्यत्वादिति । तदेतत्सूत्रं व्याचष्टे । प्रकाशशीलमिति । ननु सत्त्वादिगुणा एव चेत् प्रकाशादिशीला दृश्यत्वेनात्रोक्तास्तर्हि प्रकृत्यवचनात सूत्रकारस्य न्यूनता । तथा सत्त्वादिगुणानामेव भूतेन्द्रियात्मकत्वस्वीकारात् प्रकृतिसिद्धान्तत्वतिर्वैयर्थ्यादित्याशङ्क्य गुणा एव प्रकृतिशब्दवाच्याः न तु तदतिरिक्ता प्रकृतिरस्तीत्यवधारयति । एते गुणा इति । सत्त्वादयो गुणा एते प्रकृतिशब्दवाच्या भवन्ति प्रधीयते ऽस्मिन्कार्यजातमित्यादिव्युत्पत्त्या प्रधानप्रकृत्यादिशब्दैरुच्यन्त इत्यन्वयः । तथा च सांख्यसूत्रं 'सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वा'दिति । सत्त्वादिषु गुणत्वं च पुरुषोपकरणत्वात्तद्बन्धकत्वाच्च न तु प्रकाशक्रियादिवत् परसमवेतत्वादिति भावः । प्रधानशब्दवाच्यत्वोपपादनाय गुणानामेव जगत्कारणत्वनित्यत्वादिकं हेतुगर्भविशेषणैरुपपादयति । परस्परेति । सत्त्वस्य प्रविभागो ऽधिकभागः स्वल्पाभ्यां च रजस्तमोभ्याम् उपरक्तः संसृष्टः । एवं रजसः तमस इत्येवं परस्परोपरक्तप्रविभागाः । तथा संयोगविभागधर्माणः परस्परं संयोगविभागस्वभावाः । एतेन गुणानां द्रव्यत्वं सिद्धम् । तथा इतरेतरसाहाय्येनोत्पादितावयविनः कार्यकारणाभेदेन चारम्भवादाद्विशेषः । ननु यदीतरसाहाय्येन सर्वे गुणाः सर्वकार्यकारणानि तर्हि सत्त्वादेरपि क्रियादिहेतुत्वेन सक्रिय-

त्वाव्याप्त्या प्रकाशादिशक्तिसाङ्कर्यमिति तत्राह । परस्पराङ्गाङ्गित्वेपीति । अन्योन्याङ्गाङ्गिभावेन उत्पादितेपि द्रव्ये प्रकाशगुणः सत्त्वस्यैव क्रियागुणो रजस एव स्थितिगुणस्तमस एवेत्यतो न प्रकाशादिशक्तिविभागस्य संभेदः संमिश्रणमित्यर्थः । तथा तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः सत्त्वादिजात्या सजातीया विजातीयाश्च ये सहकारिशक्तिविशेषाः तदनुपातिनस्तेषामविशेषेणोपष्टम्भकस्वभावा इत्यर्थः । एतेन सत्त्वादीनि व्यक्तिरूपेणानन्तानि । त्रिगुणत्वादिव्यवहारस्तु सत्त्वत्वादिजातिमात्रेण वैशेषिकाणां नवद्रव्यव्यवहारवदिति सिद्धम् । अत एव लघुत्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं च गुणानामिति सांख्यसूत्रेण सत्त्वादीनां साधर्म्यवैधर्म्ये लघुत्वादिरूपे प्रदर्शिते इति । तथा प्रधानवेलायां स्वस्वप्राधान्यकाले ऽभिव्यक्तसांनिध्या विकारेषु भवन्ति तथा गुणत्वेपि इतरोपसर्जनतादशायामपि व्यापारमात्रेण तथा विषयविधया अयस्कान्तमणिवच्चित्तस्याकर्षकाः । वक्ष्यति हि । अयस्कान्तमणिकल्पा विषयाः अयःसधर्मकं चित्तमिति । तथा प्रत्ययमन्तरेण अभिव्यक्तिं विना स्वानभिव्यक्तिकालइति यावत् । तदानीमेकतमस्य यस्य कस्य चित् गुणान्तरस्य वृत्तिमनु सूक्ष्मवृत्तिमन्तः वृत्त्यतिशयानामेव विरोधस्योक्तत्वादिति विशेषणवर्गार्थः । एतद्दृश्यमित्युच्यतइति । एतद्गुणत्रयमेव कार्यकारणभावापन्नं दृश्यमुच्यते नास्ति ततोतिरिक्तं दृश्यान्तरमित्यर्थः । एतएव च गुणा न्यायवैशेषिकाभ्यां द्रव्याष्टकरूपेण विभज्यन्ते । वेदान्तिभिस्तु मायेत्युच्यते । मायां तु प्रकृतिं विद्यादिति श्रुतेः । तदुक्तं बृहद्वासिष्ठे । 'नामरूपविनिर्मुक्तं यस्मिन्संतिष्ठते जगत् । तमाहुः प्रकृतिं के चित् मायामन्ये परे त्वणूनि'ति । स्यादेतत् । यदि त्रिगुणातिरिक्ता प्रकृतिर्नास्ति तदा अजामेकां लोहितशुक्लकृष्णामित्यादि श्रुत्युक्तं प्रकृतेरेकत्वादिकं व्याहन्येत । तथा । 'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्'इत्यादिनोक्तो व्यापकत्वाक्रियत्वनिरवयवत्वादिरूपश्च सांख्यादिसिद्धान्तो व्याहन्येत । तथा 'एते प्रधानस्य गुणास्त्रयः स्युरनपायिन' इत्यादिस्मृतिपरंपरासु प्रधानस्य गुणानां चाधाराधेयभावहेतुहेतुमद्भावयोर्वचनं नोपपद्येत । 'तथा सत्त्वं

रजस्तम इति गुणाः प्रकृतिसंभवा' इति गीतादिवाक्योक्तं सत्त्वादेः प्रकृतिकार्यत्वं चानुपपन्नम् । तथाष्टाविंशतितत्त्वपक्षोऽपि नोपपद्यतेति । अत्रोच्यते । पुरुषभेदेन सर्गभेदेन च भेदाभाव एव प्रकृतेरेकत्वमजादि वाक्यैस्तन्मूलकसांख्यादिभिश्च प्रतिपाद्यते अजावाक्ये तथातात्पर्याव-धारणात् । भोग्यभोक्त्रोर्हि मध्ये भोग्या गुणा भोग्यत्वाभोग्यत्वाभ्यां सर्ग-भेदेन भिद्यन्ते । एते भोगार्हा एते च नेति मुक्तपुरुषोपकरणानामप्यन्यपुरु-षभोग्यत्वात् । भोक्तारस्तु पुरुषाः भोक्तृत्वाभोक्तृत्वाभ्यां सर्गभेदेन भिद्यन्ते पूर्वसर्गमुक्ता नोत्तरसर्गे भोक्तारः किं त्वन्य एवेति । अतः प्रकृतिरेका पुरुषस्त्व-नेक इत्युच्यते । तथा त एव गुणाः सर्वसर्गेषु स्रष्टारो भवन्ति महदादिविकारा-णां तु सर्गभेदेन भिन्नत्वं स्पष्टमेव अतीतव्यक्तेः पुनरनुदयस्य वक्ष्यमाणत्वा-दिति । यदि तु प्रकृतिरेकैव व्यक्तिः स्यात् तदा निमित्तमप्रयोजकं प्रकृतीना-मिति प्रकृतिबहुत्वसूत्रविरोध इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुति-विरोधश्चेति । व्यापकत्वं च प्रकृतेः कारणत्वसामान्येनैव बोध्यम् । कारणशू-न्यप्रदेशाभावात् गन्धादेः पृथिव्यादिव्यापकत्ववत् । महदादिकं तु सामा-न्येनापि न व्यापकमिति । अत एवांशभेदेन प्रकृतेर्व्यापकत्वपरिच्छिन्नत्वयोर-भ्युपगमाज्जात्यन्तरपरिणामः प्रकृत्यापूरादित्यागामिसूत्रोक्तः प्रकृत्यापूरो घटतइति । प्रकृतेरक्रियत्वं चाध्यवसायाभिमानादिरूपप्रतिनियतकार्यशून्य-त्वमेव न तु चलनादिकर्मशून्यत्वं 'प्रधानात् क्षोभ्यमाणाच्च तथा पुंसः पुरातनात् । प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मक'मित्यादिस्मृतिषु प्रकृ-तेरपि चलनापरनामकक्षोभावगमात् । 'प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मा-नवि । चेष्टा यतः स भगवान् काल इत्यभिधीयते' इति स्पष्टं क्रिया-स्मरणाच्च । यत्तु क्वचित्पुरुषस्यापि क्षोभः श्रूयते स संयोगानुकूलत्वेन गौणः प्रकृतिकर्मणैव संयोगोत्पत्तेरिति । प्रकृतेर्निरवयवत्ववाक्यानि चारम्भकावयवनिषेधकानि न तु वनांशवृक्षतुल्यानामंशानां निषेध-कानि । एतेन एते प्रधानस्य गुणा इत्यादिवाक्यान्यप्युपपादितानि वनतुल्यस्य प्रधानस्यांशिनः पनसाम्रदाडिमादितुल्यस्य गुणद्रव्यस्यांश-त्वाभ्युपगमात् इति । यच्च सत्त्वादीनां प्रकृतिकार्यत्ववचनं तद्गु-

वहाराभिप्रायेण प्रकाशादिफलोपहिततयैव हि सत्त्वादिव्यवहारो दृश्यते इति अन्यथा गुणनित्यत्वसिद्धान्तव्याघातात् । अखण्डैकप्रकृतेर्विचित्रपरिणामासंभवाच्च संभवे वा महदादिकार्यान्तराणामपि केवलप्रकृतेरेव संभवात् गुणकल्पनावैयर्थ्यम् । किं च गुणरूपावच्छेदभेदादेव तत्संभव इति चेत्, न । तथा सति गुणेभ्य एव सर्वकार्योपपत्त्या तदतिरिक्तप्रकृतिवैयर्थ्यम् । किं च यदि गुणत्रयातिरिक्ता प्रकृतिः स्यात् तदा

गुणसाम्यमनुद्रिक्तमन्यूनं च महामते ।
उच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ॥

इत्यादिस्मृतिषु सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति सांख्यसूत्रे च साम्यावस्थगुणानां प्रकृतित्ववचनमाञ्जस्येन नोपपद्येत, नोपपद्यते च 'विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि' 'ते व्यक्तसूक्ष्मा गुणात्मानः' 'परिणामक्रमसमाप्तिर्गुणाना'मित्यादिसूत्रेषु भाष्ये च गुणानामेव मूलकारणत्ववचनमित्यादिदूषणं स्यादिति । साम्यावस्था च न प्रकृतिलक्षणे विशेषणमपि तु यदा कदाचित्संबन्धेनोपलक्षणम् । काकवन्तो देवदत्तस्य गृहा इतिवत्, सा च न्यूनाधिकभावेनासंहननावस्था अकार्यावस्थेति यावत् । तदुपलक्षितगुणत्वं च प्रकृतिलक्षणं महदादिव्यावृत्तं तेन सर्गकालेपि गुणानां प्रकृतित्वोपपत्त्या न प्रकृतिनित्यताक्षतिः नापीश्वरस्य सदैकरूप्येण साम्यावस्थाशून्यत्वेऽपि तत्र प्रकृतिलक्षणातिव्याप्तिरिति दिक् । गुणेषु प्रमाणोपदर्शकं भूतेन्द्रियात्मकमिति विशेषणं व्याचष्टे । तदेतद्गु तेति । भूतभावेनेत्यस्य विवरणं पृथिव्यादिनेति । तत्राप्यवान्तरविशेषमाह । सूक्ष्मस्थूलेनेति । तन्मात्राणि सूक्ष्माणि पृथिव्यादीनि महाभूतानि स्थूलपृथिव्यादीनि । इन्द्रियभावेनेत्यस्य विवरणं श्रोत्रादिनेति । तत्राप्यवान्तरविशेषमाह । सूक्ष्मस्थूलेनेति । महदहंकारौ सूक्ष्मेन्द्रियमेकादश च स्थूलेन्द्रियाणि । इन्द्रियस्य संघाते ईश्वरस्य कारणत्वादित्यर्थः । भोगापवर्गार्थमिति गुणस्यैवापरं विशेषणं, मोक्षोपपादकं व्याचष्टे तत्तु नाप्रयोजनमित्यादिना । तद्गुणत्रयं न प्रयोजनशून्यं सत् भूतेन्द्रियरूपेण प्रवर्त्तते अपि तु प्रयोजनं स्वीकृत्यैव प्रवर्त्तत-

इत्यतस्तादृशं गुणत्रयं पुरुषस्य भोगापवर्गार्थं हि भोगापवर्गफलकमेवेत्यर्थः। भोगापवर्गौ व्याचष्टे । तत्रेष्टानिष्टेति । इष्टानिष्टगुणाः सुखदुःखात्मकाः शब्दादयः तत्स्वरूपावधारणं तदाकारा बुद्धिवृत्तिः न तु पुरुषनिष्ठः साक्षात्कारः बुद्धिनिष्ठतायाः वक्ष्यमाणत्वात् । स हि तत्फलस्य भोक्तेत्यनेन पुरुषनिष्ठस्य भोगान्तरस्य वक्ष्यमाणत्वात् पुरुषनिष्ठभोगस्य चित्स्वरूपतया नित्यत्वेन न फलत्वमञ्जसास्तीति भावः । शब्दादिवृत्तिकाले विवेकख्यातिसत्त्वे वक्ष्यमाणापवर्ग एवेति तादृक्शब्दादिव्यावृत्त्यर्थमविभागापन्नमिति विशेषणं पुरुषेण सहाविविक्तम् । अहंकारेण ममेत्यात्मनिष्ठतयाभिमन्यमानमिति यावत् । जीवन्मुक्तस्य भोगाभासएव । अहं शृणोमीत्याद्यभिमानगर्भेष्वेव शब्दादिवृत्तिगुणेषु[१] भोगव्यवहारात् । भोक्तुरिति । भोक्तुः पुरुषस्य यत्स्वरूपमुपाधिविविक्तचैतन्यं तदाकारा बुद्धिरपवर्गः ।

> आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
> कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥

इति । पञ्चशिखवाक्यात् । अपवृज्यतेऽनेनेति व्युत्पत्तेर्वेत्यर्थः । ननु भोगापवर्गातिरिक्तार्थमपि दृश्यं कथं भवतीत्याकाङ्क्षायामाह । तयोरिति । दर्शनं बुद्धिवृत्तिः । अविभागापन्नतायां पञ्चशिखाचार्यसंवादमाह । तथा चोक्तमिति । अयं लोकेषु गुणेषु सर्वकर्तृषु सत्सु गुणत्रयापेक्षया चतुर्थे तुरीये पुरुषे गुणव्यापाराणां जाग्रदादीनां साक्षिमात्रे कर्तर्युपनीयमानान् बुद्ध्या समर्प्यमानान् गुणपरिणामान् तत्रैव पुरुषे उपपन्नान् युक्तिसिद्धानिव पश्यन् मूढो न गुणेभ्योऽन्यद्दर्शनं चैतन्य शङ्कते संभावयत्यपीत्यर्थः । अत्र विवेकाग्रहणे भिन्नत्वे च हेतुस्तुल्यातुल्यजातीय इति । पुरुषविशेषणम् । बुद्धिपुरुषयोर्द्वयोरपि स्वच्छत्वसूक्ष्मत्वादिना साम्याद्गुणपुरुषयोस्तुल्यजातीयत्वं जडाजडत्वपरिणामित्वापरिणामित्वादिभिश्च वैजात्यमित्याशयः । अत्र भाष्ये गुणत्रयापेक्षया पुरुषस्य चतुर्थत्ववचनात् अन्यान्यपि

१ शब्दादिवृत्तिगुणेष्विति पाठान्तरम् ।

तुरीयवाक्यानि जाग्रदाद्यवस्थसत्त्वादिगुणत्रयापेक्षया साक्षित्वमेव पुरुषस्य तुरीयावस्थां वदति इति सिद्धम् । तथा च स्मर्यते ।

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापनं तु तमसा तुरीयं त्रिषु संततम् ॥

इति । ननूक्तयोर्भोगापवर्गयोर्गुणकार्यतया गुणनिष्ठत्वेन कथं पुरुषस्य भोगापवर्गार्थं दृश्यमित्युक्तमित्याशङ्कते । तावेताविति । यतो बुद्धिकृतौ अन्वयव्यतिरेकाभ्यां बुद्धिकार्यौ अतो लाघवेन बुद्धावेव वर्त्तमानौ न तु पुरुषनिष्ठौ इत्यादिरर्थः । दृष्टान्तप्रदर्शनपूर्वकं परिहरति । यथेत्यादिना । पुरुषे स्वामित्वाज्जयादिवत् तौ व्यपदिश्येते इति वाक्यार्थः । बन्धमोक्षौ यथोक्तभोगापवर्गौ । स हि तत्फलस्येति । बुद्धिगतयोर्विषयावधारणपुरुषावधारणयोः फलस्य सुखादिरूपस्य भोक्ता स्वप्रतिबिम्बितस्य साक्षी अतस्तयोः स्वामीत्यर्थः । अत्र पुरुषस्यापि स्वातन्त्र्येण भोगस्योक्तत्वात् स्वरूपप्रतिष्ठा वा चितिशक्तिरिति शास्त्रप्रान्तसूत्रे पुरुषस्य स्वतोऽपि मोक्षस्य वक्ष्यमाणत्वाच्च पुरुषस्य भोगापवर्गौ न निराक्रियेते बुद्धिगतभोगापवर्गयोः स्वतोऽपुरुषार्थत्वाच्च करणव्यापारस्य पुरुषार्थतासिद्धान्ताच्च, अपि तु परिणामरूपौ यथोक्तभोगापवर्गावेव पुरुषस्य निराक्रियेते । अत एव तावेतावित्यनेन भोगापवर्गौ विशेषितौ भाष्यकारेणेति । पुरुषाणां च संसारिणां मुख्य एव भोगो बुद्धिवृत्त्यविविक्तः सुखादिसाक्षात्कारः । जीवन्मुक्तेश्वरयोस्तु गौणो भोगः सुखादिसाक्षात्कारमात्ररूप इतीश्वरलक्षणसूत्रे प्रतिपादितमस्माभिरिति । यदि च पुरुषे पृथग्भोगमोक्षौ न स्वीक्रियेते तदा ।

कार्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ।

इत्यादिवाक्यानि नोपपद्येरन्निति दिक् । बुद्धेरेव परमौ बन्धमोक्षावपि दर्शयति । बुद्धेरेवेति । बुद्धिरूपेण परिणतानां गुणानामेवेत्यर्थः । तदर्थावसायो विवेकख्यात्याः । पुरुषार्थसमाप्तिः । तथा च यथोक्तभो-

गापवर्गरूपैः पुरुषार्थैः संबन्धो बुद्धेर्बन्धोवियोगश्च मुक्तिरिति भावः । एतौ च बुद्धेः परमबन्धपरममुक्ती । पूर्वोक्तौ तु भोगापवर्गौ अपरबन्धजीवन्मुक्ती इत्यविरोधः । एतेनेति । एतेन शब्दादिविषयभोगविवेकख्यात्योः पुरुषेष्वौपचारिकत्वेन ग्रहणादयोपि पुरुषेषूपचरितसत्ताका वेदितव्या इति शेषः । ग्रहणं स्वरूपमात्रेणार्थज्ञानं, धारणा चिन्तनम् ऊहोऽर्थगतविशेषाणां वितर्कणमपोहो वितर्कितमध्ये विचारतः कियतां निराकरणं तत्त्वज्ञानं वितर्कितमध्ये एव विचारतः कियद्विशेषावधारणम् अभिनिवेशस्तदाकारतापत्तिरिति । प्रकृतस्य योगस्य भूमिकारूपतयैव चित्तपरिणामा अत्र गणिता एतैश्चान्येपीच्छाकृत्यादय उपलक्षणीया इति । नन्वनेन सूत्रेण गुणानामेव दृश्यत्वं प्रोक्तं न तु विकाराणामिति न्यूनतानिरासाय प्रवर्त्तमानं सूत्रान्तरमवतारयति । दृश्यानां त्विति । स्वरूपभेदावधारणार्थम् अवान्तरभेदप्रतिपादनार्थमित्यर्थः ।

( शेषमग्रे )

काशीस्थराजकीयप्रधानपाठशालायां } सांख्ययोगाध्यापकस्तात्याशास्त्र्यपरनामा रामकृष्णशास्त्री । ज्योतिषशास्त्राध्यापकः केशवशास्त्री च ।

---

# सटीकसंक्षेपशारीरकम् ।

(*Continued from page* 534. VOL. V.)

मू० ॥ चित्रायागः पशुफल इति श्रूयमाणोऽपि चित्राऽ-
पूर्वे द्वारं पशुफलतयाक्षिप्यते तच तद्वत् ॥
चैतन्यात्मा जगदुदयकृच्छ्रूयतेऽचापि पश्चा-
न्मायादीनां भवति जगति द्वारभावः फलेऽस्मिन् ॥ ३३२ ॥

टी० ॥ ननु यदि मायाशबलस्य कारणतां श्रुतिर्न प्रतिपादयति कुतस्तर्हि मायाप्रकृतित्वसिद्धिस्तत्राह । चित्रायाग इति । चित्रया यजेत पशुकाम इति पशुफले यागे श्रूयमाणेऽपि श्रुतेऽपि क्षणिकस्य यागस्य कालान्तरभाविपशुसाधनताऽनुपपत्त्या चित्रासंज्ञितयागजन्यं पशुफलसाधनतया-

ऽपूर्वं तत्र कर्मकाण्डे यद्वदाक्षिप्यते कल्प्यते, तद्वदत्रापि काण्डे चैतन्यात्मा जगदुदयकृदिति श्रूयते । श्रुतेऽपि तस्य निर्विकारस्य जगत्कारणत्वानुपपत्त्या पश्चादस्मिन्जगति फले कार्ये मायादीनां द्वारभावो भवति भवेदिति कल्प्यते । कूटस्थब्रह्मणः श्रुतिप्रदर्शितकारणत्वाऽऽदिसंरक्षणार्थं जडप्रपञ्चोपादानतयानुमितमज्ञानं तद्घटकतयाश्रितमिति न तदसिद्धिरिति भावः ॥ ३३२ ॥

मू० ॥ कारणत्वमुपलक्षणं चिते-
ब्रह्मणो न खलु तद्विशेषणम् ॥
इत्यपीदमुपपद्यते तदा
चेतना भवति कारणं यदा ॥ ३३३ ॥

टी० ॥ शबलकारणत्वं न श्रुतिसंमतमित्यत्र ब्रह्मविदामभ्युपगमं लिङ्गमाह । कारणत्वमिति । जगत्कारणत्वं हि चिद्रूपब्रह्मणो गृहस्येव काकसंबन्ध उपलक्षणं तटस्थलक्षणं न खलु तद्विशेषणमिति यद्ब्रह्मविद्भिरभ्युपेतमिदमपि तदोपपद्यते यदा चेतनात्मा कारणं भवेदिति संबन्धः ॥ ३३३ ॥

मू० ॥ अन्यदेव यदि कारणं भवे-
त्कारणत्वमुपलक्षणं कथम् ॥
चेतनस्य घटतेऽन्यगामिना
वस्तु नान्यदुपलक्ष्यते यतः ॥ ३३४ ॥

टी० ॥ ननु शबलकारणत्वेऽपि तदुपलक्षणं किमिति न भवेदित्याशङ्क्यालक्ष्यवृत्तिधर्मस्य तदनुपपत्तेरित्याह । अन्यदेवेति । शुद्धब्रह्मणोऽन्यच्छबलमेवेत्यर्थः । चेतनस्य ब्रह्मणः कथं घटत इति संबन्धः । कुत इत्यत आह । अन्यगामिनेति । लोकेऽलक्ष्यवृत्तिधर्मस्य लक्षकत्वादर्शनात् । शुद्धं ब्रह्म शबलवृत्तिधर्मेण लक्षितुं न शक्यते यतस्ततो ब्रह्मैव श्रुतिसंमतमुपादानं मायायास्त्वार्थिकं तच्छ्रुत्यानूद्यते ततो भावरूपैव सेति भावः ॥ ३३४ ॥

मू० ॥ अनवबुद्धमतः श्रुतिमस्तके-
विषयतामुपपादयितुं क्षमम् ॥
अनुभवात्मपदं तमसा यतः
पिहितमेतदिह प्रतिभासते ॥ ३३५ ॥

टी० ॥ एवं प्रसङ्गान्मायाप्रकृतितत्त्वचिन्तां परिसमाप्य प्रकृतमनवगतार्थविषयतया सिद्धेऽपि वेदान्तप्रामाण्यसमर्थनमुपसंहरति । अनवबुद्धमिति । यतः अनुभवात्मस्वरूपमुक्तविधया तमसा पिहितं मामहं न जानामीति प्रत्यक्षतोऽपि इह साक्षिणि प्रतिभासतेऽतोऽनवबुद्धमेतत् श्रुतिमस्तकैर्विषयतामुपपादयितुं क्षममिति संबन्धः ॥ ३३५ ॥

मू० ॥ अज्ञानकल्पितमनिर्वचनीयमस्मि-
न्नाबालवृद्धमविवादपदं प्रसिद्धम् ॥
स्वप्ने तथा च भगवानपि वक्ष्यतीदं
सन्ध्येऽस्ति सृष्टिरिति पक्षनिराससिद्धौ ॥ ३३६ ॥

टी० ॥ यदुक्तं प्राक् अज्ञानकल्पितमनिर्वचनीयमित्यादिना नानिर्वचनीयं किंचिद्वस्त्वस्तीति तदिदानीमाशङ्क्य निराक्रियते । ननु स्वप्रकाशब्रह्मणः कथमनवबुद्धत्वं विरोधात्, नच तत्कल्पितमनिर्वचनीयमिति न विरोध इति वाच्यम्, तस्यैव गगनकमलप्रायत्वादित्याशङ्क्य लोके सर्वानुभवसिद्धत्वान्नैवमित्याह । अज्ञानकल्पितमिति । अस्मिन् लोके आबालवृद्धं बालवृद्धमभिव्याप्य सर्वेषामित्यर्थः । शुक्त्यादौ रजतादिर्हि लोके सर्वैरनुभूयते स न तावत् ज्ञानद्वयं ततो रजतार्थिप्रवृत्त्यनुपपत्तेर्ज्ञानस्य स्वविषय एव प्रवर्तकत्वादिति भ्रमसिद्धौ वक्ष्यमाणविधया सोऽनिर्वचनीयविषय इति भावः । किंच सूत्रकारोऽपि स्वप्ने प्रतीयमानस्य रथादेः सत्यत्वनिरासायाऽनिर्वचनीयत्वं वक्ष्यतीति तत्सिद्धिरित्याशयेनाह । स्वप्न इति । यथा लोके प्रसिद्धं तथैवेत्यर्थः । वक्ष्यति पदार्थपाद इति शेषः । इदमनिर्वचनीयत्वम्, सन्ध्येऽस्ति सृष्टिरित्यनेन सन्ध्ये सृष्टिराह हीति सूत्रमुपलक्षयति।

सन्ध्ये स्वप्ने सृष्टिः सृज्यमानो रथादिरस्ति सती, यतोऽथ रथान् रथयोगा-निति श्रुतिः सृष्टिमाहेति सूत्रेण कृतपूर्वपक्षस्य निरासार्थं मायामात्रमि-त्यादिसूत्रेणाऽनिर्वचनीया सेत्युक्तवानित्यर्थः ॥ ३३६ ॥

मू० ॥ मिथ्याशुषिः सवितृमण्डलमध्यवर्ती
प्रत्यक्षदृष्टिपथमापतितोऽचिरेण ॥
द्रष्टुः शरीरकरणप्रविभागरूपं
मृत्युं निवेदयति सत्यमिति प्रसिद्धम् ॥ ३३७ ॥

टी० ॥ ननु गुरुवेदान्तादेरन्यस्य वा प्रपञ्चस्य मिथ्यात्वे कथं ततोऽद्वैतब्रह्मावगमोऽन्यद्वा विचित्रं कार्यं भवेदिति चेच। स्वप्ने तथाभूतादपि सत्यविचित्रकार्यदर्शनादेवं जाग्रत्यपि तत्प्रसिद्धमित्याह । मिथ्याशुषि-रिति । शुषिश्छिद्रम् । आपतितः प्राप्तः, सवितरि रथनाभिच्छिद्रवत्कल्पितं शुषिरं प्रत्यक्षदृष्टिविषयोऽचिरेण द्रष्टुर्मृत्युं मरणं निवेदयति । मृत्युमे-वाह । शरीरेति । स्थूलशरीरात्करणसमूहस्य लिङ्गशरीरस्य प्रविभागरूपम् उत्क्रमणरूपम् । सोऽपि तर्हि मिथ्येत्याशङ्क्य व्यावहारिक इत्याह । सत्य-मिति । एतच्च ऐतरेयकब्राह्मणेन चिरमिव जीविष्यतीति विद्यादित्युप-क्रम्य छिद्र इवादित्यो दृश्यते इति श्रुतिप्रसिद्धमनुभवसिद्धं च, नात्र विम-तिरिति भावः । वस्तुनः कारणत्वे कार्यत्वे च सर्वसंप्रतिपन्नासद्विलक्षणः स्वरूपविशेष एवापेक्षितस्तावतैवानन्यथासिद्धत्वादेः कारणत्वशरीरस्योप-पत्तेः न त्वबाध्यत्वमप्यपेक्षितम् । तदृतेऽनुपपत्त्यभावादस्माकं प्रपञ्चे तद-संप्रतिपत्तेश्च । आत्मा तु कूटस्थो न वस्तुतः कस्यापि कारणम् । अपूर्वमनप-रमिति श्रुतेः। मिथ्याकारणत्वं तु प्रपञ्चमिथ्यात्वं विना न सिद्ध्यतीति न सत्त्वं कारणस्य क्वचिदपि क्लृप्तमिति सवितृशुष्यादेर्मृषावस्तुनोऽपि मरणा-दिनिवेदकत्वमुपपद्यते । ननु तच्छुषिरज्ञानमेव तत्सूचकं न तु तदिति चेत्तर्हि सर्वत्रापि ज्ञानमेव कारणं तच्च जीवस्येश्वरस्य वास्तु न वस्त्विति स्यात् । ज्ञानमात्रस्याऽतिप्रसक्तस्य कारणत्वानुपपत्त्या विषयमिश्रितस्यैव कारणत्वाच्च सोऽपिकारणमिति भावः ॥ ३३७ ॥

मू० ॥ स्वप्नः शुभाशुभफलागमसूचकः स्या-
न्मिथ्यापि सन्निति च सूत्रकृदाह यस्मात् ॥
गुर्वादि सर्वमिदमद्वयबुद्धिहेतु-
र्मायानिबन्धनमिति प्रतिपादनाय ॥ ३३८ ॥

टी० ॥ किंच सूत्रकारोऽप्युक्तन्यायं यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयादित्यादिश्रुतिं च पश्यन्मिथ्यासन्नपि स्त्रीदर्शनकुञ्जरारोहणसुरापानादिदर्शनरूपः स्वप्नः शुभाशुभफलयोरागमस्य प्राप्तेः सूचकः स्यादिति सूचकश्च हि श्रुतेरित्यादिसूत्रेणाहेति तस्यापि संमतमेवेदमित्याह । स्वप्नः शुभाशुभेति । यत्नोऽत्र उक्तन्यायाद्यनुसंधानम् । ननु ब्रह्मविचारमध्ये किमिदं सूत्रकारस्य स्वप्नफलनिरूपणमित्याशङ्क्य तदाशयमाह । गुर्वादीति । मायानिबन्धनमपीदं गुर्वादि अद्वयबुद्धिहेतुरिति प्रतिपादनायेति संबन्धः ॥ ३३८ ॥

मू० ॥ भ्रान्तिप्रतीतिविषयो न च सन्न चास-
न्नाकाशतत्कुसुमयोर्न हि सास्ति नापि ॥
तस्या भवेत्सदसदात्मकगोचरत्वं
न ह्यस्ति तत्किमपि यत्सदसत्स्वरूपम् ॥ ३३९ ॥

टी० ॥ ननु स्वप्नादिविषयस्य मृषात्वमसंप्रतिपन्नमिति चेच्च शुक्त्यादौ रजताद्यर्थिप्रवृत्त्यादिबलाद्भ्रान्तिस्तावदस्तीत्युक्तम् । तत्र भ्रान्तिर्नाम रजताद्याकाराऽविद्यावृत्तिः, तदवच्छिन्नं साक्षिचैतन्यं भ्रान्तिप्रतीतिः । सा किं सविषया निर्विषया वा, आद्ये तद्विषयः किं सत्त्वासत्त्वोभयात्मकः, आद्येऽपि किं तत्रैव सन्नन्यत्र वा । नान्त्यः । अन्यत्र सतोऽत्रापरोक्षप्रतीत्यसंभवात्तद्गतेन्द्रियसन्निकर्षस्य संयोगादेरसंभवात् । न प्रथमः । नेदं रजतमित्यादिरूपेण बाधायोगात् । नाप्यसन् । असतोऽपरोक्षप्रतीत्यनुपपत्तेः । नापि तृतीयः । विरोधेनैकस्य सदसदात्मकत्वासंभवादित्याशयेनाह । भ्रान्तिप्रतीतीति । सदसदेकैकविषयत्वे भ्रान्तिरपि सा न स्यादित्याह । आकाशेति । यतः सा भ्रान्तिराकाशतत्कुसुमयोर्नास्ति । अतो भ्रान्तिप्रतीतिविषयो न च सन्न चासन्निति

पदयोजना । परीत्याकाशेत्युक्तं न ह्याकाशे सति आकाश इति ज्ञानं तत्कुसुमेऽत्यन्तासत्यसदिति ज्ञानं भ्रमो भवतीत्यर्थः । तृतीयेऽपि एकस्य सदसद्विषयत्वानपायाद्भ्रान्तित्वानुपपत्तिस्तुल्येत्यभिप्रेत्याह । नापीति । भ्रान्तेः सदसदात्मकविषयत्वाभावे विषयाऽसंभवमपि हेतुमाह । न ह्यस्तीति । विरुद्धसमुच्चयस्य क्वाप्यदृष्टत्वादिति भावः ॥ ३३९ ॥

मू० ॥ आलम्बनं च विरहय्य न विभ्रमस्य
ज्ञानात्मनो भवति जन्म कदा चिदत्र ॥
सिद्धं ततः सदसती व्यतिरिच्य किं चि-
दालम्बनं भ्रमधियः सकलप्रवादे ॥ ३४० ॥

टी ॥ इदानीं भ्रान्तिर्विषयेति पक्षं प्रतिक्षिपति । आलम्बनमिति । विरहय्य वर्जयित्वा भ्रमस्य निर्विषयत्वाभावे हेतुतया तं विशिनष्टि । ज्ञानात्मन इति । अत्र लोके । तथा च ज्ञानस्य सविषयत्वनियमाद्भ्रमज्ञानस्याविषयत्वमनुपपन्नमितिभावः । अतः परिशेषाद्भ्रान्तिविषयोऽनिर्वचनीय एव सर्वैरप्यभ्युपगन्तव्य इत्युपसंहरन्नाह । सिद्धं तत इति । व्यतिरिच्य विहाय । किं चित् सदसद्विलक्षणमनिर्वचनीयम् । तदालम्बनं सिद्धमित्यर्थः । विषयस्यानिर्वचनीयत्वेन विषयिणोऽप्यनिर्वचनीयत्वमर्थसिद्धमन्यथा तद्विषयत्वायोगादिति भावः । न च सदसत्त्वसमुच्चयवत्तद्विलक्षणयसमुच्चयरूपमनिर्वचनीयत्वमपि विरुद्धमिति वाच्यम् । अनिर्वचनीयत्वस्याप्यनिर्वचनीयत्वेन विरोधस्यालङ्कारत्वादिति भावः ॥ ३४० ॥

मू० ॥ ब्रह्मात्मवस्तु निरवद्यचिदेकरूपं
वन्ह्युष्णतावदपरोक्षवपुः स्वभावात् ॥
निर्दोषवेदशिरसो वचनादतोऽस्मि-
न्ब्रह्मात्मवस्तुनि भवेदपरोक्षबुद्धिः ॥ ३४१ ।

टी० ॥ यत्तु वाक्यप्रसूतमतिरिन्द्रियजन्यधीवन्नार्थापरोक्ष्यजननी भवितुं समर्थेत्यादिना वेदान्तवाक्यस्य ब्रह्मण्यपरोक्षज्ञानजनकत्वायोगादपरोक्षे ब्रह्मणि परोक्षज्ञानस्य प्रमात्वायोगाच्च न तत्र तत्प्रामाण्यमि-

त्युक्तं तद्दूषयति । ब्रह्मात्मवस्त्विति । अवद्यं तद्वापरोक्ष्यप्रतिबन्धको वास्तवो मलस्तद्रहितमित्यर्थः । विरूपमपि दृश्यांशसंवलितं चेत्स्यादपि कदा चित्परोक्षमित्यत एकेतिविशेषणम् । वन्हेरौष्ण्यं यथा स्वभावस्तथा। यथा स्वभावादुष्णस्तथा स्वभावादपरोक्षवपुरित्यर्थः । ततः किं तत्राह । निर्दोषेति । अनेन वेदान्तेभ्यो भ्रमासंभवात्तज्जन्यज्ञानस्य भ्रान्तित्वमिष्टमिति न मन्तव्यमिति दर्शितम् । अपौरुषेये वेदान्ते भ्रान्त्यादिमूलत्वाभावान्निर्दोषत्वं च सर्वसंप्रतिपन्नमेव यतो निरवद्यचिदेकरूपं ब्रह्मात्मवस्तु स्वभावादपरोक्षवपुस्ततोऽस्मिन् ब्रह्मात्मवस्तुनि निर्दोषवेदशिरसोऽपरोक्षबुद्धिर्भवेदिति संबन्धः । ज्ञानापरोक्षत्वं ह्यपरोक्षविषयत्वेनैव न त्विन्द्रियजन्यत्वेन सुखादिज्ञानस्य नित्यसाक्षिरूपस्याऽपरोक्षस्यापीन्द्रियजन्यत्वाभावेनापरोक्षविषयत्वस्यैव तत्र तत्प्रयोजकत्वात् । प्रत्यगभिन्नं ब्रह्म चापरोक्षचिन्मात्रत्वाद्यत्साक्षादपरोक्षादिति श्रुतेश्च नित्यापरोक्षमेवेति तत्र वेदान्ताज्जातं ज्ञानं शब्दप्रसूतमपि विषयमहिम्नाऽपरोक्षमेव भवेदिति नोक्तदूषणमिति भावः ॥ ३४५ ॥

( शेषमग्रे )

काशीस्थराजकीयप्रधानपाठालयाध्यापकेन श्रीद्विवेदहरिनाथशर्मणा ।

---

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टप्रकरणम् ।

*(Continued from page 527. Vol. V.)*

४६३ अन्ये स्वयमेवोत्तरन्ति । यजमान उत्तरन् दक्षिणपादेन तीरदेशं नोदयति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इति मन्त्रेण । सर्वे तीर्थमनवेक्षमाणा देवयजनदेशं गच्छन्ति । सर्वे अर्धमार्गे तिस्रस्तिस्रः समिधो गृह्णन्ति । एकैकसमिद्ग्रहणे एधो ऽस्येधिषीमहीति मन्त्रः । सर्वे आगत्य क्रमेण आहवनीये समिधः प्रक्षिपन्ति । तत्र समित्त्रयप्रक्षेपणे

त्रयो मन्त्राः समिदसि स्वाहा, तेजोऽसि स्वाहा, तेजो मयि धेहि स्वाहा इति । अग्नय इदमिति यजमानस्य सर्वत्र त्यागः । अपो अन्वचारिषमित्यृचा सर्वे आहवनीयमुपतिष्ठन्ते । अथावभृथ इत्यत आरभ्य एतदन्तं कर्म अवभृथेष्टिरवभृथ इति चोच्यते ॥

४६४ इदानीं यजमानो व्रतं विसृजति । उत्तरवेद्यग्निसमारोपणं वैकल्पिकं तस्य करणपक्षे पत्नीयजमानाभ्यामन्वारब्धोऽध्वर्युः समिधि उत्तरवेद्यग्निं समारोपयति अयं ते योनिर्ऋत्विय इति मन्त्रेण । अत्रत्योऽग्निरस्यां समिधि प्रविशतु इति भावनया वन्हौ समिधः प्रतापनं समारोपणमित्युच्यते ॥

४६५ तां समिधं शालामुखीयेऽभ्यादधाति अजुह्वानः सुप्रतीकः पुरस्तादित्यृचा । उद्बुध्यस्वाग्न इत्यृचा आहवनीयं ज्वलयित्वा अपूर्वाज्येन चतुर्गृहीतेन सप्त ते अग्न इत्यृचा पूर्णाहुतिं जुहोति । यजमानस्ततोऽध्वर्यवे वरं ददाति । निवर्तनादि वैश्वदेववत् । तत्र यद्घर्मः पर्यवर्तयदित्यादि पञ्च वाक्यानि पूर्वोक्तान्येव परमेष्ठीत्यादिवाक्यचतुष्टयस्थाने योज्यानि इति विशेषः । यजमानमन्त्रे संवत्सरीणामिति पदस्थाने परिवत्सरीणामिति पदं भवति । इदं द्वितीयं पर्व बहुदेवताकत्वेऽपि वरुणाय घासप्रदानेन वरुणस्य मुख्यत्वाद्वरुणप्रघासपदवाच्यम् ॥

४६६ अथ साकमेधनामकं तृतीयं पर्व । तत्र पूर्वेद्युरात्रेः पश्चिमयामे अपकृष्य प्रातरग्निहोत्रहोमं कृत्वा साकमेधहविर्भिर्यक्ष्ये इति संकल्प्य तत्रेदानीमग्निमनीकवन्तमष्टाकपालेन पुरोडाशेन

यक्ष्यइति संकल्पयति । अस्यामिष्टौ सूर्योदयकाले निर्वाप: प्रधानयागो वा भवेत्तथा संपादनीयम् । यजमानस्यान्नाद इत्यनुमन्त्रणम् । अन्वाहार्यमासाद्य तिस्रो गा दक्षिणां ददाति । ब्राह्मणतर्पणान्तमन्यत्सर्वं प्रकृतिवत् । इयमिष्टिरनीकवतीत्युच्यते ॥

४६७ ततो मरुत: शिवसांतपनांश्चरुणा यक्ष्यइति संकल्पयति यजमान: । अध्वर्युर्मध्याह्नकाले निर्वाप: प्रधानयागो वा भवति तथान्वाधानादौ प्रवर्तते । प्राणैर्त्र्यध्यासमिति यजमानो ऽनुमन्त्रयते । अन्वाहार्यमासाद्य तिस्रो गा दक्षिणां ददाति । ब्राह्मणतर्पणान्ता प्रकृतिवत् । इयं सान्तपनेष्टिरित्युच्यते ॥

४६८ ततो गृहमेधहविषा यक्ष्यइति संकल्पयति यजमान: । मरुद्भ्यो गृहमेधिभ्य: पयसि चरु: । सायमग्निहोत्रं हुत्वा अन्वाधानादि करोति । व्रतं वैकल्पिकम् । इध्माबर्हि: संभरणं नास्ति । परिभोजनीयान् वेदं च कृत्वा पाणी संमृज्य परिस्तीर्य स्फ्यं स्थालीं अग्निहोत्रहवणीं शूर्पं कृष्णाजिनमुलूखलं मुसलं जुहूमुपभृतं स्रुवं ध्रुवामिडापात्रं चरुमेक्षणं प्रणीताप्रणयनं आज्यस्थालीं वेदं दारुपात्रीं योक्त्रं वेदपरिवासनं धृष्टिं चासादयति । अत्र प्रणयनं पयसो न त्वपाम् । अतो ब्रह्मन् पय: प्रणेष्यामीति प्रैषादि भवति । प्रोक्षणीरासादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहीति प्रैष: । ध्रुवामन्त्रेण ध्रुवायामेवाज्यं गृह्णाति यजमानो भूरस्माकमित्यादिनानुमन्त्रयते । प्रोक्षणीशेषनिनयनान्ते वेदिं परिभोजनीयदर्भैस्तूष्णीं स्तृणाति । परिभोजनीयाद्विधृती गृहीत्वा प्रकृतिवत्सादयति ।

तदुपरि जुहूपभृतौ तूष्णीं सादयित्वा ध्रुवां मन्त्रेण सादयति । यथा सदत्सुकृतस्य लोके तां विष्णो पाहीत्यादिमन्त्रेण ध्रुवामभिमृशति। ततः स्रुवामाज्यस्थालीं चासाद्य ध्रुवाज्याज्यस्थाल्याज्ये विष्णुतीस्थे वैष्णवे धामनी स्थः प्राजापत्ये इति मन्त्रेणाभिमन्त्रयते । आज्यस्थालीं स्रुवं चादाय चरुमभिघार्योदञ्चमुद्वास्य व्युद्धरणपात्रीं निर्णिज्योपरि आज्येन परिस्तीर्य स्थाल्यां किंचित्परिशेषयन्नवालयन्नुद्धृत्याभिघार्य मध्ये गर्तं कृत्वा प्रभूतमाज्यमानीयान्तर्वेद्यासाद्य स्रुवं ध्रुवायामवधाय होतारमामन्त्र्य आग्नीध्रं संप्रेष्यत्यग्नीदग्नीं स्त्रिस्त्रिः संमृड्ढीति। तेन संमार्गे कृते आज्यभागमिष्ट्वा जुह्वामुपस्तीर्य मेक्षणेन चरुमवदाय मरुतो गृहमेधिनो यजति । प्राणैरध्यासमिति यजमानानुमन्त्रणम् स्विष्टकृद्धोमानन्तरं प्रकृते परिध्यभावात् परिधिस्थानमुद्दिश्य संस्रावलनं निनयति । प्राशित्रहरणब्रह्मभागयजमानभागचतुर्धाकरणान्यत्र न भवन्ति । इडामार्जनान्ता प्रकृतिवदन्यत्सर्वम् ॥ अन्वाहार्यमासाद्य यजमानश्चतस्रो गा दक्षिणां ददाति । यथार्थमूहेन ऋत्विजां प्रतिग्रहो भवति । ततोऽध्वर्युरिमं विष्णामीतिमन्त्रेण पत्नीयोक्त्रं विमुञ्चति । यजमानः पौर्णदर्वार्थं क्षामकाषशेषमवशेष्य गृहमेधीयशेषं स्थाल्यां पूर्वशेषितमश्नाति । ततो दक्षिणाग्नौ लौकिकाग्नौ वा प्रतिवेशपत्नीपुत्रादिभोजनपर्याप्तमन्नं पक्त्वा यजमानपत्नीपुत्रादयोऽश्नीयुः । सर्वे आञ्जतेऽभ्यञ्जते च । ततो वत्सान्मातृभिः संवासयन्ति । सवात्ययोस्त्वेतस्यां रात्रौ वत्सं बध्नन्ति । स्थाल्यां दृढसंयुक्तश्चरुशेषः क्षामकाष इत्युच्यते ॥

४९९ जीववत्सा मृतवत्सा च ये द्वे गावावेकेन वत्सेन दुह्येते ते सवात्ये इत्युच्येते ॥

५०० अथाध्वर्युरपररात्रे उत्थाय नित्यवत्सायाः पयसाग्निहोत्रमपकृष्य जुहोति । जीववत्सा गौर्नित्यवत्सेत्युच्यते ॥

५०१ अथ पौर्णदर्वहोमः । अध्वर्युर्गार्हपत्यं परिस्तीर्य उत्तरतो दर्भेषु स्रुक्सदृशीं वैकङ्कतीं दर्वीं स्रुवमाज्यस्थालीं दर्भांश्चासाद्य प्रोक्ष्याज्यं संस्कृत्य दर्वीं स्रुवं च निष्टप्य संमृज्य दर्व्यामुपस्तीर्य सर्वं चामकाषमवधाय द्विरभिघार्य पुरोनुवाक्यासंज्ञां पूर्णादर्विपरापतेत्यृचं सस्वरां प्रणवान्तां संधाय देहि मे ददामित इत्यृचा सस्वरया याज्यासंज्ञया सस्वाहाकारान्तया यजमाने ऽन्वारब्धे ब्रह्मणो हिंकारे तिष्ठन्नासीनो वा गार्हपत्ये जुहोति यजमान इन्द्रायेदमिति त्यागमुक्त्वाध्वर्यवऋषभं ददाति । ततो गार्हपत्यं परिषिञ्चति । अयं पौर्णदर्वहोम इत्युच्यते ॥

५०२ तदनन्तरमेव मरुतः क्रीडिनो यक्ष्यइति संकल्पयति । मरुद्भ्यः क्रीडिभ्यः सप्तकपालः पुरोडाशः । सूर्योदयकाले यथा निर्वापः प्रधानयागो वा भवति तथा करोति । वृत्रहेति यजमानस्यानुमन्त्रणे विशेषः अन्वाहार्यमासाद्य तिस्रो गा दक्षिणां ददाति । ब्राह्मणतर्पणान्ता प्रकृतिवत् । इयं क्रीडीयेष्टिरित्युच्यते ॥

( शेषमग्रे )

# पञ्चदशी ।

## तत्त्वविवेकः ।

नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने ।
सविलासमहामोहग्राहग्रासैककर्मणे ॥ १ ॥
तत्पादाम्बुरुहद्वन्द्वसेवानिर्मलचेतसाम् ।
सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते ॥ २ ॥
शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक् ।
ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते ॥ ३ ॥
तथा स्वप्नेऽत्र वेद्यं तु न स्थिरं जागरे स्थिरं ।
तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते ॥ ४ ॥
सुप्तोत्थितस्य सौषुप्ततमोबोधो भवेत्स्मृतिः ।
सा चावबुद्धविषयाऽवबुद्धं तत्तदा तमः ॥ ५ ॥

1. Of the worshipful Guru Sankaránanda I salute the lotus-like feet, the sole work of which is the destruction of the monster Nescience, together with all its manifestations.

2. The Tattvaviveka is writen for the easy instruction of those whose minds are pure through devotion to the lotus-feet of their spiritual guide.

3. Sound, touch, &c., are known as distinct (from each other), in the waking state, because of the variety (in the qualities of the objects heard and touched &c). (Our) consciousness of these objects is distinct from the things themselves, and is indivisible because of its unity of nature (form).

4. This applies also to the dreaming state. But, in this state, the objects known are not abiding; in the waking state they are abiding:—this is the difference between these two states. Consciousness (during waking life and dreams) is a unity, indivisible.

5. In the case of a man awake from sleep, his sense of nescience during his dreamless sleep is held to be recollection. And this recollection must have for its object something which had been perceived (during dreamless sleep). Therefore nescience was perceived during a state of sleep without dreams.

5. सौषुप्ततमोबोधः सुषुप्तिकालीनस्य तमसोऽज्ञानस्य यो बोधो ज्ञानमस्ति न किञ्चिदवेदिषमिति सा स्मृतिरेव ॥

संबोधो विषयाद्भिन्नो न बोधात्स्वप्नबोधवत् ।
एवं स्थानत्रयेऽप्येका संवित्तद्वद्दिनान्तरे ॥ ६ ॥

मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा ।
नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा ॥ ७ ॥

इयमात्मा परानन्दः परप्रेमास्पदं यतः ।
मा न भूवं हि भूयासमिति प्रेमात्मनीक्ष्यते ॥ ८ ॥

6. That consciousness (of nescience during dreamless sleep,) is distinct from the object known (viz., nescience), but not from consciousness itself; just as this was the case with consciousness in the dreaming state. Thus, in the three states, consciousness is a unity, indivisible, and will be the same at any future time.

7. In the many months, years, yugas and kalpas, past and future, this principle of Thought, self-luminous, neither starts into being nor perishes.

8. This principle of Thought is Spirit (Self) (and) since Self is the object of supreme love, it is absolute bliss: wherefore love of Self is manifested in the wish :—"may I never cease to exist; may I continue to exist."

---

8. "The supreme love of Self, as shown in the desire of everlasting life and abhorrence of annihilation, is put forth as a proof of the supremely blessed character of the soul. This self-love does not mean selfishness, as some, taking advantage of the name self have understood, characterising the Vedánta as a selfish system. Vedantic self-love is as far removed from selfishness as self itself is removed from mind and matter. It is not only not incompatible with self-sacrifice, but is attained to by a complete sacrifice of all that pertains to the lower self. My true self is not that which is distinct from my neighbour's but that which is distinct from myself in the ordinary sense of this word. Vedantic self-love is clearly the highest spiritual love, call it "Love of God" or "Átmarati" or "Brahmánanda", according to your own particular view of the highest Being". For the remarks above I am indebted to my friend Babu Pramadádása Mitra, whose ready aid in Vedánta matters I would here gratefully acknowledge.

तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि ।
अतस्तत्परमं तेन परमानन्दतात्मनः ॥ ९ ॥

इत्थं सच्चित्परानन्द आत्मा युक्त्या तथाविधम् ।
परं ब्रह्म तयोश्चैक्यं श्रुत्यन्तेषूपदिश्यते ॥ १० ॥

अभाने न परं प्रेम भाने न विषये स्पृहा ।
अतो भानेप्यभातासौ परमानन्दतात्मनः ॥ ११ ॥

अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ।
भानेप्यभानं भानस्य प्रतिबन्धेन युज्यते ॥ १२ ॥

प्रतिबन्धोस्ति भातीति व्यवहारार्हवस्तुनि ।
तन्निरस्य विरुद्धस्य तस्योत्पादनमुच्यते ॥ १३ ॥

9. The love of Self extended to other objects (e. g. to sons) is not for these objects (in themselves) but for Self, wherefore this love is supreme and since this love is supreme (tena), the absolute bliss of Self is established.

10. In the preceding verses Self has been proved by argument to be existence, thought and supreme bliss. In the Upanishads, Brahma is revealed to be existence, thought and bliss (tathá vidham) and the identity of these two (the Absolute and Self) is taught.

11. If the supreme blessedness of Self were not manifested, there would not be this supreme love for it. And if the bliss were an object of consciousness (to us) there would be no desire for (merely phenomenal) objects. Wherefore this supreme bliss of Self is presented yet not presented.

12. Just as is the case of the word uttered by a son, who recites aloud his lesson along with the rest of the class; his voice, though manifested is not recognised (by his father as being the son's voice). The fact of non-recognition in spite of presentation is conceivable where there is an obstacle to recognition.

13. As regards objects of daily life, we say, these exist, are evident:—that which having destroyed this impression (of their existence and manifestation in our consciousness) begets the opposite impression, (viz., that they do not exist, are not manifest) is called a pratibandha or obstacle.

तस्य हेतुः समानाभिहारः पुत्रध्वनिश्रुतौ ।
इहानादिरविद्यैव व्यामोहैकनिबन्धनम् ॥ १४ ॥
चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता ।
तमोरजःसत्वगुणा प्रकृतिर्द्विविधा च सा ॥ १५ ॥
सत्वशुद्ध्यविशुद्धिभ्यांमायाविद्ये च ते मते ।
मायाबिम्बोवशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥ १६ ॥
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।
सा कारणशरीरं स्यात् प्राज्ञस्तत्राभिमानवान् ॥ १७ ॥
तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ।
वियत्पवनतेजोम्बुभुवो भूतानि जज्ञिरे ॥ १८ ॥

14. The cause of the obstacle to the recognition of the son's voice was the recital aloud and together of the whole class. Nescience, without a beginning, the chief cause of error, is the cause of the non-recognition of the supreme blessedness of Self.

15. The principium of the versatile world (prakṛiti) associated with the reflection of the principle of reality-intelligence-bliss (Brahma,) and possessing the qualities goodness, passion and darkness (indifference), is twofold.

16. The two kinds of Nature ( prakṛiti ) are Máyá and Avidyá, arising respectively from the pure and mixed character of the quality goodness ( sattva). Intelligence reflected in Máyá, which is characterised by pure goodness, and ruling the same ( Máyá ) is the omniscient Iśvara.

17. While the other one, i. e. prájña or jíva, the personal transmigrating sentiency, is itself ruled by Avidyá or Nature characterised by goodness mixed ( with the other two qualities, viz, passion and indifference ). It assumes various forms from the varieties of Avidyá ( which arise from the different degrees of the mixture of the other two qualities ).

18. From the principium (prakṛiteh) in which there was a predominance of the quality indifference, the subtile elements, ether, air, fire, water and earth were created for the fruition of the individual souls (tat), by the command of Iśvara.

सत्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् ।
श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते ॥ १६ ॥
तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा ।
मनो विमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका ॥ २० ॥
रजोंशैः पञ्चभिस्तेषां क्रमात्कर्मेन्द्रियाणि तु ।
वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे ॥ २१ ॥
तैः सर्वैः सहितैः प्राणो वृत्तिभेदात्स पञ्चधा ।
प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः ॥ २२ ॥
बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया ।
शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥ २३ ॥
प्राज्ञस्तत्राभिमानेन तैजसत्वं प्रपद्यते ।

19. The five intellectual organs of hearing, touch, sight, taste and smell are produced from portions, consisting of the goodness quality, of the five subtile elements (teshám) taken in succession.

20. From these goodness portions collectively, (i.e, the portions which respectively formed the five organs of sense taih sarvaih) the common sensory (antahkarana) is produced. The common sensory may be regarded as two-fold according to its modifications (activities) : manas (mind) consisting in reflection (doubting) and buddhi (intellect) consisting in assurance (certainty).

21. The five organs of action, the voice, hands, feet, the excretive and generative organs are produced from the passion portions of all the subtile elements, taken in order severally.

22. From the passion portions of all the subtile elements taken together is produced the vital air (prána), five-fold through its modifications :—respiration, inspiration and assimilation, pulsation of the throat and flatulence (circulation.)

23, The subtile body (súkshmaśaríra) called the lingaśaríra consists of the five organs of intellect, five organs of action, five vital airs, manas and buddhi (dhiyá), seventeen portions in all.

24. The prájña, by being conscious of the subtile body (tatra), as its own (abhimánena) obtains the name taijasa. Iśvara, (by being conscious of this subtile body) obtains the name Hira-

हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता ॥ २४ ॥
समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् ।
तदभावात्ततोन्येतु कथ्यन्ते व्यष्टिसंज्ञया ॥ २५ ॥
तद्भोगाय पुनर्भोग्यभोगायतनजन्मने ।
पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम् ॥ २६ ॥
द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते ॥ २७ ॥
तैरण्डस्तत्र भुवनं भोग्यभोगाश्रयोद्भवः ।
हिरण्यगर्भस्थूलेस्मिन् देहे वैश्वानरो भवेत् ॥ २८ ॥
तैजसा विश्वतां याता देवतिर्यङ्नरादयः ।

nyagarbha. Of these two, taijasa, is the distributive and Hiranyagarbha, the collective sentiency.

25. Iśvara (as Hiranyagarbha) is the collective sentiency, since he recognises his identity with the aggregate of the taijasa sentiencies. By reason of the absence of such recognition in the others, i. e. the taijasas or limited sentiencies, they are spoken of as vyashti or distributive sentiencies.

26. For the enjoyment of personal sentiencies (tad) and for the production again of objects of fruition and abodes of fruition (*i. e.* gross bodies), Iśvara quintuples each of the five subtile elements beginning with ether.

27. Having divided each subtile element into two equal portions and the first halves again into four equal portions, each element contains the five elements by uniting one part of the quadruple division (of one element, sva sva) with the second half of the tripartite division of each of the remaining elements.

28. From these gross elements the egg of Brahma is produced. From it proceed the (fourteen) worlds, above and below, and enjoyers (*i. e.* the four kinds of gross bodies) and objects of enjoyment (*i. e.* food &c.). Hiranyagarbha, when located in this gross body, is termed Vaiśvânara.

29. The personal souls (viewed distributively as taijasas) of gods, animals, men &c., (when located in this gross body) obtain the name of viśva. These (gods, men &c.) view things

तेऽपराग्दर्शिनः प्रत्यक्तत्त्वबोधविवर्जिताः ॥ २९ ॥
कुर्वते कर्मभोगाय कर्म कर्तुं च भुञ्जते ।
नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते ॥
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ॥ ३० ॥
सत्कर्मपरिपाकात्ते करुणानिधिनोद्धृताः ।
प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम् ॥ ३१ ॥
उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ।
पञ्चकोशविवेकेन लभन्ते निर्वृतिम्पराम् ॥ ३२ ॥
अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्च ते ।
कोशास्तैरावृतः स्वात्मा विस्मृत्यासंसृतिं व्रजेत् ॥ ३३ ॥
स्यात्पञ्चीकृतभूतोत्थो देहः स्थूलोन्नसंज्ञकः ।
लिङ्गे तु राजसैः प्राणैः प्राणः कर्मेन्द्रियैः सह ॥ ३४ ॥

as external to themselves and are excluded from recognising the self-presented Self within.

30. Gods, men and the rest act for their own gratification and enjoy the fruit of their actions to act again. Just as insects are hurried in a river flood from eddy to eddy and gain no respite, so gods, men &c. endure birth after birth nor gain emancipation.

31. And just as insects are rescued from the flood by some kind man, (whose kindness) is the result of the ripening of their own good actions in a former birth, and having gained the shade of a tree on the river side they take their rest in peace,—

32. So those who have received instruction from a teacher who knows the truth (that Self and Brahma are one), by discrimination of the five sheaths obtain final emancipation.

33. The five sheaths are the nutrimental, vital, sensorial intellectual and sheath of bliss. Enveloped in these sheaths, one's Self must transmigrate owing to forgetfulness (of its own true nature).

34. The nutrimental sheath is the name for the gross body which is produced from the gross elements. In the subtile body (liṅga), the vital sheath consists of the five vital airs, which are the product of the passion quality, together with the five organs of action.

सात्त्विकैर्धीन्द्रियैः साकं विमर्शात्मा मनोमयः ।
तैरेवसाकं विज्ञानमयो धीर्निश्चयात्मिका ॥ ३५ ॥
कारणेसत्वमानन्दमयोमोदादिवृत्तिभिः ।
ततत्कोशैस्तुतादात्म्यादात्मा तत्तन्मयो भवेत् ॥ ३६ ॥
अन्वयव्यतिरेकाभ्यां पञ्च कोशविवेकतः ।
स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते ॥ ३७ ॥
अभाने स्थूलदेहस्य स्वप्ने यद्भानमात्मनः ।
सोन्वयो व्यतिरेकस्तद्भाने ऽन्यानवभासनम् ॥ ३८ ॥
लिङ्गाभाने सुषुप्तौस्यादात्मनो भानमन्वयः ।

35. The sensorial sheath consists in that state of the Self expressed by doubting, together with the intellectual organs, which are produced from portions of the goodness quality The intellectual sheath consists of the state expressed by assurance, joined with the same organs of intellect.

36. In the causal body, the sheath of bliss consists of the (impure) portions of the goodness quality together with the modifications of pleasure &c. The Self may be held to consist of these sheaths in so far as it (erroneously) identifies itself with them.

37. By a discrimination of the five sheaths, according to the method of concomitance and non-concomitance having regarded the Self as distinct from these sheaths, one can attain to the absolute Reality.

38. While there is no manifestation of the gross body in the dreaming state, the manifestation (at this time) of the Self is termed the concomitance (anvaya). And while Self is presented, the non-presentation of the gross body (anya) is termed the non-concomitance.

39. While during dreamless sleep there is no presentation of the subtile body, the presentation of the Self (during this state)

37. अन्वयव्यतिरेकाभ्यां may be termed the joint method of agreement and difference. The ṭíká shows its application thus:—अत्रायं प्रयोगः प्रत्यगात्मा अन्नमयादिभ्योभिद्यते तेषु परस्परं व्यावर्त्यमानेष्वपि स्वयमव्यावृत्तत्वात् यद्येषुव्यावर्त्यमानेष्वपि न व्यावर्तते तत्तेभ्यो भिद्यते यथा कुसुमेभ्यः सूत्रम् ॥

व्यतिरेकस्तु तद्भाने लिङ्गस्याभानमुच्यते ॥ ३९ ॥
तद्विवेकाद्विविक्ताः स्युः कोशाः प्राणमनोधियः ।
ते हि तत्र गुणावस्थाभेदमात्रात्पृथक्कृताः ॥ ४० ॥
सुषुप्त्यभाने भानन्तु समाधावात्मनोऽन्वयः ।
व्यतिरेकस्त्वात्मभाने सुषुप्त्यनवभासनम् ॥ ४१ ॥
यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परब्रह्मैव जायते ॥ ४२ ॥
परापरात्मनोरेवं युक्त्या संभावितैकता ।
तत्त्वमस्यादिवाक्यैः सा भागत्यागेन लक्ष्यते ॥ ४३ ॥

is termed the concomitance. And the non-presentation of the subtile body, while the Self is presented, is termed the non-concomitance.

40. Through an investigation of the subtile body (tat) the vital, sensorial and intellectual sheaths may be discriminated (from the Self). For these sheaths differ from each other, in the subtile body, by the difference of the qualities (sattva &c.) in each.

41. While during samádhi there is no presentation of nescience, the presentation of Self is termed the concomitance. And while there is a presentation of Self, the non-presentation of nescience is termed the non-concomitance.

42. Just as Ishíká grass may be distinguished from the Muñja species, so if the Self be discriminated from the triad of bodies by competent persons, using skilful arguments, the absolute Reality is also attained.

43. Thus the identity of the supreme Self and personal Self is proved by argument. This identity is intended in such texts as "that thou art" by surrendering the (contradictory) portions (of "that" and "thou").

41. Samádhi does not find its exact equivalent in the term meditation. Trance or catalepsy would be nearer, (cf. "Yoga aphorisms", Bibliotheca Indica, p. 125 translated by Dr. Rájendralála Mitra), though samádhi marks the intensity of the thinking and disregards the purely organic aspect of this state. Sushupti is explained by the ṭíká thus:—सुषुप्तिशब्दोपलक्षितस्य कारणदेहरूपस्याज्ञानस्य.

# ॥ माधवीयधातुवृत्तिः ॥

(*Continued from page* 562. VOL. V.)

षट अवयवे ॥ सटति । ससाट । सेटतुः । सटिता । सिसटिषति । स्तौतिण्योरेवेत्यषत्वम् । साटयति । असीषटत् । सटा । अजन्ताट्टाप् ॥ ३०८ ॥

लुट विलोडने ॥ एतदादयः पठत्यन्ताष्टवर्गतृतीयान्ता इति कौशिककाश्यपनन्दिद्रविडाः । ते चास्मादनन्तरे पिटहटी च पेठुः । लोटति । लुलोट । लोटिता । लुलुटिषति लुलोटिषति । लुटित्वा । लोटित्वा । लोटयति । अलूलुटत् । अलुलोटत् । काण्यादित्वादुपधाह्रस्वविकल्पः । लूसूत्रे सुधाकरः लुल विलोडने इति लान्तोपि दृश्यते । लोलभ्दुजाकारबृहत्तरङ्गमिति माघः । डलयोरेकत्वस्मरणमिति वा प्रतिविधेयमिति । अयं दिवादावपि । भाषार्थश्चुरादौ । प्रतिघाते द्युतादौ इति । स्तेयार्थः परस्मपदिषु । लुठतिः चुरादौ ॥ ३०९ ॥

चिट परप्रेष्ये ॥ चेटतीत्यादि । पूर्ववत् । काण्यादित्वाभावो विशेषः । चेटी । इनन्तात्सर्वतोक्तिन्नर्थादित्येकइति ङीष् ॥ ३१० ॥

विट शब्दे ॥ वेटतीत्यादि । विटः । इगुपधलक्षणः कः । विटपः । विटपविष्टपविशिपोलपा इति निपातितः ॥ ३११ ॥

बिट आक्रोशे ॥ बशादिः । बेटतीत्यादि । हिठेत्यत्र केचित्पठन्ति, हेठतीत्यादि ॥ ३१२ ॥

इट किट कटी गतौ ॥ अत्र मैत्रेयः । कटीति ह्रस्वान्तं पठन्तीति चतुर्थं धातुमुक्त्वा मतान्तरेण दीर्घान्तं पठन्ई इति चतुर्थं धातुं दीर्घमुक्त्वा फलं च व्यपदेशिवद्भावेन गुरुमत्त्वे इजादित्वात् अयांचकारेत्याम्सिद्धिमाह । क्षीरस्वामी तु त्रयो धातवः । तृतीय ईदिदित्यङ्गीकृत्य कटित्वा कट्ट्वा, कट्टवानित्युदाहृत्य अन्ये कटीति धात्वन्तरं प्रश्लिष्टमाहुरिति चोक्त्वा कण्टति । कण्टकः । उदयति दिननाथे याति शीतांशुरस्तमिति चोदाजहार । संमतातरङ्गिण्योस्तु कटि इति चत्वारो धातव इति व्याख्यायि । धनपा-

लशाकटायनौ चौनेव धातूनाहतुः । अयं पक्षः समर्थितः पुरुषकारेण । यदाह, इईइति ह्रस्वः दीर्घो धातुः प्रस्तुत्य अन्ये पुनरुभावपि न पठन्ति । व्यक्तं चैतत् धनपालशाकटायनवृत्त्योः । अपि च शौटृ गर्वेइत्यादिकान् कांश्चन धातून्पठित्वा अन्ते चोदात्ता इत्युच्यन्ते तस्मिन्प्रकरणे ऽयतेरपि पाठे सति तस्य अनिट्स्वरान्तो भवतीति दृश्यतामित्यनुदात्तत्वात् प्राचुर्याभिप्रायेण कथं चिचेयं स्यात्, यथाह मैत्रेयरक्षितः । उदात्तत्वमयतिवर्जं भट्टयामन्यायेनोदात्ता इत्युच्यन्ते इति, स चायं न्यायः सुनिश्चितत्वायतेः पाठे शोभते, विप्रतिपत्तौ पुनरुदात्तत्वोक्त्याऽऽजस्यवशादपपाठ एव ज्यायान् । उदयतीत्यादि चैवमसाध्वेवास्त्विति हरदत्तस्याभिप्रायेयमेव पक्षोऽभिमतः । यदाह 'उपसर्गस्यायता'वित्यत्रायतिरनुदात्तेत्कथं तर्हि उदयति विततोर्ध्वरश्मिरज्जाविति परस्मैपदं, किमनेन वन्यगजशौचेन, यदि वा पचाद्यजन्तादुदयशब्दादाचारक्विपि लट् । केचित्तु इटकिटकटीत्यत्र इकारमपि धातुं पठन्तीति वृत्तिकारोऽपि प्रायेणात्रैवानुकूलः । यदाह एतिस्तुशास्वित्यत्र क्यपि इत्य इत्युदाहृत्य कथमुपेयमिति, ईइत्यस्यैतद्रूपमिति । यदि हीमौ स्यातां प्राथम्यादनयोरेकमुपाददीत । अथोदाहरणानि । एटति । इयेट । ईटतुः । इयेटिथ । पित्वचनेषु 'द्विर्वचनेची'ति गुणस्य स्थानिवत्त्वादिट्शब्दस्य द्विरुक्तौ हलादिशेषे अभ्यासस्यासवर्णइति इयङ् । नन्वेवं गुणस्य स्थानिवत्त्वादवश्यं स पुनः प्रवर्त्तयितव्यः, तस्यां च दशायां गुणादन्तरङ्गत्वात् सवर्णदीर्घेण भाव्यम् । न चास्ति वार्णादाङ्गं बलीय इति, यत इदमाङ्गवर्णयोः समाननिमित्तत्वे प्रवर्त्तते । न च कार्यी निमित्तत्वेमाश्रीयते, सत्यम् । इदानीमेवायं परिहरिष्यते । एटितेत्यादि । इटिटिषति । एटयति । मा भवानिटिटत् । णिलोपस्य 'द्विर्वचनेची'ति स्थानिवत्त्वाट्टिशब्दस्य द्विर्वचनम् । अतः पूर्वमेवोपधाह्रस्व इत्युक्तम् । केटति । चिकेट । केटिता । चिकेटिषति । किटित्वा । केटित्वेत्यादि । किटिः । इगुपधादितीन् कित्त्वाच्च गुणः । कण्टति । चकण्ट । कण्टिता । कण्टकः । संज्ञायां कुन् । कण्टकितम् । तारकादित्वादितच् । अनिदित्वा । एवं कटतीत्यादि । इ इति चतु-

र्यधातुवादिनाम्, अयति । इयाय । ईयतुः । ईयुः । इययिथ । इयेथ । भारद्वाजनियमाद्विकल्पः । इयय । इयाय । इयिव । इयिम । पिद्वचनेषु । गुणवृद्धी'द्विर्वचनेचो'ति स्थानिवत्त्वाद् इकारस्य द्विर्वचने 'अभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र पूर्ववदियङ् । स्थानिवद्भावादिशब्दस्य द्विरुक्तौ पुनरियङः प्रवर्त्तनायां तं बाधित्वा एरनेकाच इति प्राप्तं यणमन्तरङ्गत्वाद्बाधित्वा सवर्णदीर्घः । पुनरियङादेशः । यद्यपि सवर्णदीर्घस्य यणश्चेकार आश्रयो भवति स्थानिवत्त्वेनेति समानाश्रयणे वर्णादाङ्गं बलीय इति दीर्घं बाधित्वा यण् प्रवर्त्तते ततोपीदमेव रूपम् । अत्र पत्ते इययियेत्यत्रापि न दोषः । यतस्तत्रापि समानस्थानित्वे चास्ति समानाश्रयणत्वं दीर्घगुणयोः । एवमपि न सिद्ध्यति. यदत्र द्विर्वचनकाले ऽपहृतो गुणः पुनः प्रवर्त्तते, ततश्चानादिष्टादचः पूर्व्वत्वेनाभ्यासो इष्ट इति तस्या'भ्यासस्यासवर्णे' इति इयङि कर्त्तव्ये गुणस्य स्थानिवत्त्वाद् असवर्णे इति प्रतिषेधः स्यात्,एवं तर्हि अत एवासवर्णग्रहणसामर्थ्यात् स्थानिवत्त्वं न भविष्यति, । नन्वयमस्ति वचनस्यावकाशोऽर्त्तेलिटि द्विर्वचनेऽर्त्तिपिपर्त्योश्चेति अभ्यासेत्वे इयर्त्ति इयृत इत्यादि । नैतत् । न ह्येकमुदाहरणं योगारम्भं प्रयोजयति । इयति प्रयोजने अभ्यासस्यार्त्ताविन्त्येव ब्रूयात् । उवोणादि तु न प्रयोजनं तस्य छान्दसत्वे तन्वादीनां छन्दस्युपसङ्ख्यानमिति सुवर्गादिवदुवङः सिद्धत्वात् भाषायामामा भाव्यम् । एता । एष्यति । स्वरान्तत्वादनिट्त्वम् । अयतु । आयत् । अयेत् । आशिषि ईयात् । अकृत्सार्वधातुकयोरिति दीर्घः । ऐषीत् । मा भवानेषीत् । ऐष्यत् । कर्म्मणि ईयत इत्यादि । स्यादौ चिण्वदिटि वृद्धौ आयिष्यदित्यादि । ईषिषति । 'अज्झनगमां सनी'ति दीर्घः । 'इको झलि'ति सनः कित्वाच्च गुणः । आययति । मा भवानयियत् । णौ चङि वृद्ध्यायादेशयोर्णौ चङीति ह्रस्वे णिलोपे तस्य स्थानिवत्त्वेन यिशब्दस्य द्विर्वचनम् । इतः । इतवान् । प्रेत्य । ल्यपि 'षत्वतुकोरसिद्ध' इति एकादेशस्यासिद्धत्वाद् ह्रस्वनिबन्धनस्तुक् । किटेति मैत्रेयमतेन न्यासे गतः । कटिश्च वर्षावरणयोः ॥ ३१५ ॥

मडि भूषायाम् ॥ मण्डति । ममण्ड । मण्डितेत्यादि । मण्डते

कन्या स्वयमेव । अमण्डिष्ट कन्या स्वयमेव । भूषाकर्मत्वाद्यक्चिणोर्नि-षेधः । मिमण्डिषति । मामण्ड्यते । अमामन् । मण्डयति । अममण्डत् । मण्डनः । 'क्रुधमण्डार्थेभ्यश्चे'ति युच् । मण्ड इति विभागे गतः ॥ ३१६ ॥

कुडि वैकल्ये ॥ कुण्डतीत्यादि । कुण्डतइति दाहे गतम् । अत्र स्वामी । कुटीति कौशिकदुर्गाविति, शाकटायनः पुनः प्रकरणानुरोधेन डान्तमेवाध्यगीष्ट ॥ ३१७ ॥

मुट प्रमर्दने ॥ मोटति । मुमोट । मोटिता । मुमुटिषति । मुमोटिषति । मुटित्वा । मोटित्वा । रलो व्युपधादिति क्त्वविकल्पः । मुडेति धनपालः । पुडिति पकारादिडान्त इति शाकटायनः । क्षीरस्वामी तु द्वावपीदितौ पपाठ । मैत्रेयस्त्वमुं टान्तमेव पठित्वा मुडि खण्डन-इति चाये पठित्वा पुडि चेत्येकइत्याह । मुट प्रमर्दनाक्षेपयोरिति तुदादौ । मुड संचूर्णनइति चुरादौ ॥ ३१८ ॥

चुडि अल्पीभावे ॥ चुण्डतीत्यादि । चुटेति दुर्गः । चुट छेदन-इति तुदादौ । चुटच्युटी द्वावपि चुरादौ ॥ ३१९ ॥

मुडि खण्डने ॥ मुण्डतीत्यादि । मुण्डः, तं करोतीति मुण्डयति । 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिजि'ति करोत्यर्थे णिचि णाविष्ठवदिति टिलोपः । यवनमुण्डः । काम्बोजमुण्डः । मयूरव्यं-सकादित्वाद्विशेषणस्य परनिपातः । अत्र मैत्रेयः । पुडि चेत्येके । पुण्डति । पुण्डः । पुण्डरीकमिति । डकारवत्पवर्गादिप्रकरणादिहायं निर्दिश्यते मुडि भूषायामित्युकारवच्च भवति इति डकारान्तोप्यकारवत्त्वादादौ निर्दिष्ट इति मैत्रेयः । अत्र शुठि खण्डनप्रमर्द्दनयोरिति क्व चिद्धातुकोशे पठ्यते । मैत्रेयादयस्तु न पठन्ति । तत्राप्यपाठ एव ज्यायान्यदिहैवाये शुठि शोषणइति भविष्यति अस्मिन् हि सति तस्य च रूपाभेदाद् शोषणग्रहणमपीहैव कर्त्तव्यं स्यात् ॥ ३२० ॥

रुठि लुठि स्तेये ॥ रुण्ठति । लुण्ठतीत्यादि । रुठिलुठीत्येकइति क्षीरस्वमी । शाकटायनस्तृतीयान्तौ पपाठ । लोठतीति विलोडने गतम् । लुठ प्रतिघातइति युजादौ । रुठ रोषणइति चुरादौ । तत्र रुठेत्येके ॥ ३२२ ॥

स्फुठिर्विशरणे ॥ अयं पाठो मैत्रेयादीनाम् । स्फोठति । पुस्फोठ । स्फोठिता । पुस्फुठिषति । पुस्फोठिषति । स्फुठित्वा । स्फोठित्वा इत्यादि । इकाररेफयो 'रुपदेशेजनुनासिक इत्' 'हलन्त्य'मितीत्त्वं, तेन लुङि 'इरितो वे'ति परस्मैपदे विधीयमानो ऽङ्विकल्पो भवति । अस्फुटत् । अस्फोटीदिति 'इदितो नुम् धातो'रिति नुम् अन्तेदितो विधानादस्य न भवति । स्फुटति चन्द्रः । अस्याङ् नास्ति । स्वामिकाश्यपौ तु स्फुठि स्फुटिरिति त्रीन् धातून् पठतः । स्फुण्ठति । स्फोटतीत्यादि । स्फुटा । अच् टाप् । स्फुट विकाशनइत्यात्मनेपदिषु टान्तः ॥ ३२३ ॥

पठ व्यक्तायां वाचि ॥ पपाठ । पेठतुः । पठिता । अपाठीत् । पाठयति श्लोकं पुत्रमित्यादि ॥ ३२४ ॥

वठ स्थौल्ये ॥ वठति । ववाठ । वठितेत्यादि । वादित्वादेत्वाभ्यासलोपौ । वठि एकचर्यायामात्मनेपदी गतः ॥ ३२५ ॥

मठ कठ मदनिवासयोः ॥ अयं पाठो मैत्रेयस्य । अन्येषां मठ मदनिवासयोः । कठ कृच्छ्रजीवनइति । मठति । कठति । इत्यादि । कठः । अच् । कठेन प्रोक्तं छन्दः 'कलापिवैशम्पायनान्तेवासिभ्यश्चे'ति वैशम्पायनान्तेवासित्वाण्णिनिः । तस्य 'कठचरकाल्लुगि'ति लुक् । 'छन्दोब्राह्मणानि च तद्विषयाणी'ति नियमा'त्तदधीते तद्वेदे'ति अध्येतृवेदितृप्रत्ययान्त एव प्रयोगार्हः । तस्य चाणः 'प्रोक्तात् लुगि'ति लुक् । तदेव कठेन प्रोक्तं छन्दोऽधीयमानोपि कठः । कठिनम् । औणादिक इन् । वंशकठिने व्यवहरति वांशकठिनिकः । 'कठिनान्तप्रस्तारसंस्थानेषु व्यवहरती'ति कठिनान्तादिभ्यः सप्तम्यन्तेभ्यो व्यवहरतीत्यर्थे ठगिति ठक् । कठोरम् । कठिचकिभ्यामोरजित्योरच् । अनन्तरं मठ गताविति क्वचित्पठ्यते । मैत्रेयादयस्तु न पठन्ति ॥ ३२७ ॥

रठ परिभाषणे ॥ रठतीत्यादि ॥ ३२८ ॥

हठ प्लुतिशठत्वयोः ॥ हठति । जहाठेत्यादि । हठ बलात्कारइति चन्द्रदुर्गौ ॥ ३२९ ॥

रुठ लुठ उठ उपघाते ॥ रोठति । लोठतीत्यादि । अच

मैत्रेयः । उठेत्यप्येकइति । धनपालशाकटायनौ तु रुठलुठेत्येव पेठतुः । क्षीरस्वामी तु उंठं पठित्वा रुठलुठइत्यपि दीर्घा इत्याह । उठति । उवोठ । ऊठतुः । ओठितेत्यादि । पठतिवत्प्रक्रिया । लुठः चाय्यादित्वात् अलूलुठत् । अलुलोठदिति भवति । अयं श्लेषणे तुदादिः । लुठि आलस्ये प्रतिघाते च । रुठि लुठि गतावित्यये इदितौ । लुठ श्लेषणइति तुदादौ । असौ डान्त इत्येकइति मैत्रेयः । तथा च स्वामी लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ इति । लुठ प्रतिघातइति द्युतादौ ॥ ३३२ ॥

पिठ हिंसासंक्लेशनयोः ॥ पेठतीत्यादि । पीठम् । घञ् । 'अन्येषामपि दृश्यत'इति दीर्घः । पीठी । इञन्तात् 'कृदिकारादक्तिन'इति ङीष् ॥ ३३३ ॥

शठ कैतवे च ॥ चकाराद्धिंसासंक्लेशनयोश्च । शठति इत्यादि । स्वाम्यादयः पुनश्चकारं नैव पेठुः । गत्यसंस्कारयोरयं चुरादौ । तत्रैव श्लाघायामात्मनेपदिषु, सम्यगवभाषणे कठादौ ॥ ३३४ ॥

शुठ गतिप्रतिघाते ॥ प्रतिघातइत्येव धनपालः । तथा च कुठिइत्युत्तरधातौ प्रतिहतिमात्रं प्रतीयते इत्यर्थ इति स एवाह । शोठतीत्यादि । शुठीति क्षीरस्वामी । आलापइति चुरादौ शुठि शोषणइत्यत्रैवाये ॥ ३३५ ॥

कुठि च ॥ कुण्ठतीत्यादि । कुण्ठः ॥ ३३६ ॥

लुठ आलस्ये प्रतिघाते च ॥ लुण्ठतीत्यादि । लोठतीत्युपघाते गतम् ॥ ३३७ ॥

शुठि शोषणे ॥ शुण्ठति । शुण्ठः । शुण्ठी । शोठतीति गतिप्रतिघाते गतः ॥ ३३८ ॥

रुठि लुठि गतौ ॥ अर्थभेदात्पुनः पाठो लुण्ठेरित्याहुः । रुण्ठति । लुण्ठन्तीत्यादि ॥ ३४० ॥

चुड्ड भावकरणे ॥ भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । चुड्डितेत्यादि । चुचुड्डिषति । चोचुड्यते । अचोचुत् । अयं दोपधइति संयोगान्तलोपे तकारस्य श्रवणम् । चुड्डयति । अचुचुड्डत् ॥ ३४१ ॥

अड्ड अभियोगे ॥ अयमपि दोपध इति क्विप्यदिति भवति ।

अड्डति । आनड्ड । अड्डिता । अड्डिडिषति । नन्द्रा इति दकारवर्जस्य द्विर्वचनम् । अड्डयति । आड्डिडत् ॥ ३४२ ॥

कड्ड कार्कश्ये ॥ कड्डतीत्यादि । अस्यापि दोपधात्वाद्यङ्लुकि क्विपि च । अचीकत् कद् इति च भवति । कच्च तत् जलं च कज्जलम् ॥ ३४३ ॥

क्रीडृ विहारे ॥ क्रीडति । चिक्रीड । क्रीडिता । चिक्रीडिषति । चेक्रीड्यते । चेक्रीट्टि । अचेक्रीट् । आक्रीडते । 'क्रीडोऽनुसंपरिभ्यश्चे'ति अन्वादिपूर्वाच्चकारादाङ्पूर्वात्तङ्, एवमनुक्रीडतइत्याद्युदाहार्यम् । समासाहचर्यादनोरुपसर्गस्य ग्रहणं तेन 'तृतीयार्थे'इति यदानोः कर्मप्रवचनीयत्वं तदा तङ् न भवतीति माणवकमनुक्रीडतीति, माणवकेन सह क्रीडतीत्यर्थः। 'कर्मप्रवचनीययुक्ते द्वितीये'ति माणवकाद् द्वितीया । संक्रीडन्ति शकटानीत्यत्र समोकूजनइति वक्तव्यमिति उक्तत्वान्न तङ् । कूजन्ति शकटानीति ह्यस्यार्थः । आक्रीडी । संपृचेत्यादिना घिनुण् । चिक्रीडः । क्रजादीनां के द्वे भवत इति कप्रत्यये द्विर्वचनम् ॥ ३४४ ॥

तुडृ तोडने ॥ तोडनं दारणं हिंसनं चेत्युक्तम् । तोडति । तुतोड । तोडितेत्यादि । तड इति स्वामिशाकटायनौ, तुडतइत्यात्मनेपदी गतः ॥ ३४५ ॥

हूडृ हुडृ होडृ गतौ ॥ हूडति । जुहूड । हूडिता । हूडयति । अजुहूडत् । होडति । जुहोड । होडिता । होडयति । अजुहोडदित्यादि । हुडृ हूडृ गताविति धनपालशाकटायनौ । होडतइत्यनादरे गतः ॥ ३४८ ॥

काडृ अनादरे ॥ काडतीत्यादि ॥ ३४९ ॥

रोडृ लोडृ उन्मादे ॥ रोडति । लोडतीत्यादि ॥ ३५१ ॥

अड उद्यमे ॥ अडति । अडो वृश्चिकलाङ्गूलं तेन तैलग्र लक्षते । विशिष्टो ऽडस्तैद्यमस्य व्यडः, तस्यापत्यं व्याडिः । 'अत इञ्' 'स्वागतादीनां चे'ति वृद्धिप्रतिषेधैजागमयोर्निषेधः ॥ ३५२ ॥

लड विलासे ॥ लडतीत्यादि । जिह्वोन्मथने घटादौ । अनन्तरं लल ईप्सायामिति क्वचित्पठ्यते । तत् क्षीरस्वामिपुरुषकारादयो नानुमन्यन्ते,

यत् रलयोर्डलयोश्चैकत्वस्मरणात् ललयति ललनेत्याहुः । लड उपसेवायामिति चुरादौ ॥ ३५३ ॥

कड मदे ॥ कडतीत्यादि । क्षीरस्वामी तु कडीति पठित्वा कडेति दुर्ग इत्याह । अयं तुदादौ च, उभयत्र पाठफलं तत्रैव वक्ष्यते । कण्डतइति गतः ॥ ३५४ ॥

गडि वदनैकदेशे ॥ आगण्डतीत्यादि । अत्र वक्तव्यं दन्त्यादिष्वमुं पठित्वोक्तम् । सौटादय उदात्ता उदात्तेतः तवर्गान्ताः ॥ ३५५ ॥

केचनैधत्यादयो गताः । के चन द्युतादौ वक्ष्यन्ते । इति क्रमप्राप्तानात्मनेपदिनः पवर्गान्तानाह ॥

तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः ॥ एतदादयस्तोभत्यन्ता उदात्ता अनुदात्तेतः । तपिं तिपिं चापीत्यनिट्कारिकासु पाठात् तिपिरेकोऽनुदात्तः ऋदित्पवर्गान्तात्मनेपदित्वसाम्याच्चेह पाठः । क्षीरस्वामिना त्वयं सेडुदाहृतः तत्काश्यपवृत्तिन्यासपदमञ्जर्यादिविरोधात् तपिं तिपिमिति व्याघ्रभूतिवचनविरोधात् चोपेक्ष्यम् । तेपते । तितेपे । तितिपिषे । तितिपिवहे । क्रादिनियमादिट् । तेप्ता । तेप्स्यते । तेपताम् । अतेपत । तेपेत । आशिषि । तिप्सीष्ट । अतिप्त । अतिप्साताम् । झलि सिज्लोपः 'लिङ्सिचावात्मनेपदेष्वि'ति इक्समीपाद्धलः परयोर्झलादी लिङ्सिचोः कित्त्वान्न गुणः । आत्मनेपदेष्विति सिच एव विशेषणं न लिङः, परस्वासम्भवात् । परस्मैपदिषु झलादित्वासम्भवाच्च । तितिप्सते । 'हलन्ताच्चेति' इक्समीपाद्धलादेः सनः कित्त्वान्न गुणः, तेतिप्यते । तेतिपीति । तेतेप्ति । तेपयति । अतितेपत् । ऋदित्त्वाण्णौ चङि ह्रस्वाभावः । तेपते । तितेपे । तेपिता । तेपिष्यते । तेपताम् । अतेपत । तेपेत । तेपिषीष्ट । अतेपिष्ट । तितेपिषते । तेतिप्यते । तेतेपीति । तेतेप्ति । स्तेपते । तिष्टिपे । तिष्टिपाते । अभ्यासे खयः शेषः, स्तेपितेत्यादि । तेपिवत् । तिस्तेपिषते । तिस्तिपिषते, स्तिपित्वा, स्तेपित्वा, । स्तौतिण्योरेवेत्यषत्वम् । रलोव्युपधादिति वा कित्त्वम् । तेष्टिप्यते । तेष्टिपीति । तेष्टेप्ति । तेष्टिप्तः । तिपिवत् ष्टपिः । अभ्यासे खयः शेषो विशेषः । दिपृदेपृ इति च काश्यपः ॥ ३५६ ॥

त्रेपृ कम्पने च ॥ ३६० ॥

ग्लेपृ दैन्ये ॥ ग्लेपत इत्यादि ॥ ३६१ ॥

टुवेपृ कम्पने ॥ वेपते । वेपथुः । 'ट्वितोऽथुजि'त्यथुच् । विपिनम् । वेपितुह्योर्ह्रस्वश्चेतीनचि ह्रस्वः ॥ ३६२ ॥

केपृ गेपृ ग्लेपृ च ॥ चकारात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पन इत्यपेत इत्याह । वेपतिना सहैषामपाठोऽप्रसिद्धत्वज्ञापनायेति तस्याभिप्रायः । ग्लेपेरर्थभेदात्पुनः पाठः । केपत इत्यादि । केपादीनां वेपतेश्चलनार्थत्वात् निगरणचलनेति णौ परस्मैपदमेव । एषामनुदात्तेत्त्वात् चलनशब्दार्थादकर्मकाद्युजिति युचि वेपन इत्युदाहार्यम् ॥ ३६५ ॥

मेपृ रेपृ लेपृ गतौ ॥ अयं पाठः स्वामिनः । मैत्रेयस्तु मेपृ लेपृ सेवने, रेपृ प्लवगतावित्याह । मेपते, रेपते, लेपत इत्यादि । क्वचित्पठ्येते हेपृ धेपृ इति च ॥ ३६८ ॥

त्रपूष् लज्जायाम् ॥ त्रपते । त्रेपे । 'तॄफलभजत्रपश्चे'ति किति लिटि एत्वाभ्यासलोपौ त्रपेस्थलि नास्ति । त्रपिता । त्रप्ता । त्रपिष्यते । त्रप्स्यते । ऊदित्त्वादिड्विकल्पः । त्रपताम् । अत्रपत । त्रपेत । आशिषि त्रपिषीष्ट । त्रप्सीष्ट । अत्रपिष्ट । अत्रप्त । झलि सिचो लोपः । तित्रपिषते । तित्रप्सते । तात्रप्यते । तात्रपीति । तात्रप्ति । त्रपयति । अतित्रपत् । घटादित्वान्मित्त्वम् । त्रपित्वा । त्रप्त्वा । त्रप्तः । त्रप्तवान् । 'यस्य विभाषे'ति निष्ठायामिण्निषेधः । त्राप्यम् । 'आसुयुवपिरपिलपित्रपिचमश्चे'ति भावे ण्यत् 'पोरदुपधादि'ति यतोऽपवादः । त्रपा । 'षिद्भिदादिभ्योऽङि'ति स्त्रियामङ् । अपत्रपिष्णुः । 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुजि'ति ताच्छीलादाविष्णुच् । त्रपु । शस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययः । त्रपुणो विकारस्त्रापुषम् । 'त्रपुजतुनोः षुगि'ति षुगागमोऽण्प्रत्ययश्च ॥ ३६९ ॥

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

(*Continued from page* 604. Vol. V.)

५०३ तदनन्तरमेव महाहविर्भिर्यक्ष्य इति संकल्पयति । आग्नेयो ऽष्टाकपालः पुरोडाशः । सौम्यश्चरुः । सावित्रो द्वादशकपालः । सारस्वतश्चरुः । पौष्णश्चरुः । ऐन्द्राग्न एकादशकपालः । ऐन्द्रश्चरुः । वैश्वकर्मण एककपालः । उपांशुप्रकरणे सावित्रश्चातुर्मास्येष्वित्याश्वलायनसूत्राद् एककपालानां सर्वेषामपि तत्प्रकरणे उपांशुत्वस्योक्तत्वाच्च सावित्रवैश्वकर्मणावुपांशू भवतः । प्रसूमयं बर्हिर्विहाय अन्यः सर्वो वैश्वदेववद्विकारो ऽत्रापि भवति । बर्हिःसंभरणे पञ्च मुष्टयः । वेदकरणानन्तरं पाशुकवेदिमानं वरुणप्रघासवत् । उत्तरपरिग्राहात्पूर्वं वैश्वदेववत्कृत्वा वरुणप्रघासवत् सपरिकराग्निप्रणयनान्ते ब्रह्मणि दक्षिणत उपविष्टे उत्तरपरिग्राहपरिग्रहणादि तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषो वैश्वदेववत् । वरुणप्रघासवदाद्विमानां पञ्चानां यजमानस्यानुमन्त्रणम् । इन्द्रस्येन्द्रियावीति । विश्वकर्मणे विश्वानि कर्माण्यवरुन्धीयेति । अथ सहश्च स्वाहा सहस्यश्च स्वाहा तपश्च स्वाहा तपस्यश्च स्वाहेति मासाहुतयः । सहसइदं सहस्यायेदं तपसइदं तपस्यायेदमिति याजमानम् । आमिक्षाया अभावादत्र न वाजिनयागः । अन्वाहार्यमासाद्य द्वादश गा दक्षिणां ददाति । ब्राह्मणतर्पणान्ता प्रकृतिवत् । इदानीं न व्रतविसर्गः । अध्वर्युर्वरुणप्रघासवदुत्तरवेद्यग्निस-

मारोपणादि पूर्णाहुत्यन्तं करोति । यजमानः पूर्ववत्तस्मै वरं ददाति । अथ पितृयज्ञः । पूर्वगृहीतव्रतस्याविसृष्टत्वात् प्रक्रान्ता एवाग्नय उपयुज्यन्ते । न तु पुनर्विहरणम् । अन्वाहार्यपचनस्य मध्यमशङ्कोरज्जवा दक्षिणतः पुरस्ताद्वा संचरमवशोष्य शङ्कुं निहत्य तस्य दक्षिणतः पुरस्ताद्वा ऽष्टषष्ठ्यङ्गुलमिते देशे शङ्कुः खेयः । सपैतृक्या वेदेर्मध्यं भवति । तस्यानुदिशं वृत्तद्वयं संसर्गेणोत्पाद्याष्टषष्ठ्यङ्गुलमिते देशे शङ्कुं निहन्ति ताः स्रक्तयो भवन्ति । महापितृयज्ञवेदिकोणाः स्रक्तय उच्यन्ते ॥

५०४ अथ पुरस्तात्पक्षस्तु गार्हपत्यमध्यादष्टमप्रक्रमे द्वादशप्रक्रमे वाहवनीयमध्य इत्यस्मिन् पक्षे युज्यते । एवं पुरुषमात्रीं सर्वतश्चतुरस्रां महादिक्षु स्रक्तियुक्तां वेदिं करोति । इयं पैतृकवेदिरित्युच्यते ॥

५०५ अङ्गमन्त्रेषु प्रधानमन्त्रेषु च देवशब्दो यत्र यत्र वर्तते तत्र तत्र तदनन्तरं पितृशब्दः पठनीयः । केवलाङ्गार्थेषु तु देवशब्द एव । केवलप्रधानार्थेषु देवशब्दस्थाने पितृशब्द एव । यजमानस्य ऋत्विजां च दैवं मानुषं च नाम न ग्राह्यम् । यजमानो महापितृयज्ञहविर्भिर्यक्ष्य इति संकल्पयति । सोमाय पितृमते षट्कपाले व्रीहिमयः पुरोडाशः । पितृभ्यो बर्हिषद्भ्यो यवमय्यो धानाः । पितृभ्यो ऽग्निष्वात्तेभ्यो मन्थः । अग्निः कव्यवाहनः स्विष्टकृत् । अपबर्हिषश्चत्वारः प्रयाजाः । अपबर्हिषौ द्वावनुयाजौ । अत्रापशब्दो वर्जने । तथा च बर्हिः पदसहितप्रयाजानुयाजा अपबर्हिष इत्युच्यन्ते ॥

५०६ अथ सर्वमुपांशु । अध्वर्युः प्राचीनावीतं कृत्वा गार्हपत्यदक्षिणाग्न्योरन्वाधानं कृत्वाहवनीयान्वाधानमपि दक्षिणाग्नावेव करोति । तत्रान्वाधानमन्त्राणामङ्गप्रधानोभयार्थत्वाद्देवशब्दानन्तरं पितृशब्दो योजनीयः । यत्र देवशब्दो व्यस्तस्तत्र पितृशब्दो ऽपि देवशब्दोत्तरं विभक्तिसजातीयविभक्त्यन्तः । यत्रान्येन पदेन समस्तस्तत्र तत्समासघटकत्वं पितृशब्दस्यापि । मम देवा विहवे सन्तु सर्वइत्यादिषु मम देवाः पितरो विहवे सन्तु सर्वइत्यादि पठ्यते । इति प्रथमोदाहरणम् । समस्तोदाहरणं वक्ष्यते । दैव्या होतारेति मन्त्रे देवशब्दस्य तद्धितान्तत्वात् पितृशब्दो ऽपि तथा भवति । तथा दैव्याः पित्र्या होतारेति । सर्वं बर्हिरमूलमिति पक्षे ऽसिदादानादि भवति । समूलपक्षे त्वभ्रिमादाय खनति । बर्हिश्छेदनस्थाने प्रकृतौ असिदनिधाने मन्त्रः पठ्यते देवबर्हिर्मात्वेत्यादिः । तत्र देवपितृबर्हिर्मात्वेत्यादिपठनीयम् । इदं समस्तोदाहरणम् । इध्मसंभरणे द्वौ परिधी षट् समिधश्च प्राकृतादिध्मादधिकस्थूला दीर्घाश्च भवन्ति । संभरणमन्त्रे ततस्त्वामह्वये त्र्यहः । दक्षिणाग्नेरुत्तरतः स्थित्वा पाणिसंमर्शनं करोति गार्हपत्यदक्षिणाग्न्योरेव परिस्तरणम् । आहवनीयपवाहवनीयान्वाधानमिति केशवमते तु आहवनीयस्यापि परिस्तरणम् । गार्हपत्यस्योत्तरतस्तृणानि संस्तीर्य तेष्वेकैकशः पात्राणि सादयति । कशिपूपबर्हणे आञ्जनाभ्यञ्जने दर्शां अप्राकृतं स्फ्यमुदकुम्भौ द्वौ चीणि पर्णवृन्तानि परिश्रयणमिति । तदनन्तरमौष्ट्रकाणि सादयति । तत्र स्फ्येन सह षट्कपालानि भर्जनकपालं च

मेक्षणेन सहेक्षुशलाकाम् । भर्जनमेक्षणं च दारुपात्र्या सह द्वे नवे पात्रे यौत्करहितान्यन्यान्यपि सादयतीति विशेषः ॥ दक्षिणाग्नेर्दक्षिणतो ब्रह्मयजमानावुपविशतः । ब्रह्मवरणमन्त्रो ब्रह्माणमिति पदं विहाय पठनीयः । ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति मन्त्रस्थाने अपः प्रणेष्यामि वाचं यच्छेति पठनीयम् । ऋत्विग्यजमानशब्दनिषेधात् । एवमग्रेऽपि सर्वत्र बोध्यम् । दक्षिणाग्नेरुत्तरतः प्रणीतासादनम् । गार्हपत्यमध्यादारभ्य दक्षिणाग्निमध्यपर्यन्तं पृष्ठ्यास्तरणम् । निर्वापे विशेषः । स्फ्योपरि पात्र्यां व्रीहीन् यवांश्च भेदेन निक्षिप्य पूर्वार्धमभिमृशति । अभिमर्शनमन्त्रे त्वं देवानामसीत्यत्र त्वं पितृणामसीति वह्नितमं देवहूतमसित्यत्र वह्नितमं पितृहूतमसीति च देवशब्दस्थाने पितृशब्दः प्रयुज्यते । अस्य मन्त्रस्य केवलप्रधानार्थत्वात् । पुरोडाशीयवीक्षणं शूकनिरसनं च प्रतिधान्यमावर्तते । तन्त्रेणेत्यन्ये । मन्त्रयोस्तु तन्त्रपक्षे हविरर्थकपदानां द्विवचनान्तत्वेनोहः । यज्ञोपवीतं कृत्वा सोमाय पितृमते प्रकृतिवन्निर्वपति । प्रोक्षणवत्त्रेणाग्निहोत्रहवणीं प्रोक्षति । पितृभ्यो बर्हिषद्भ्यो यवान्निर्वपति । पितृभ्योऽग्निष्वात्तेभ्योऽपि यवानेव । निरुप्ताभिमर्शनातिशिष्टाभिमर्शनैकीकरणमन्त्राणां प्रतिधान्यमावृत्तिः । तन्त्रेणेत्यन्ये । तन्मते मन्त्रत्रये ऽपि हविर्वाचकपदानां द्विवचनान्तता । व्रीहियवयोर्भेदेन प्रोक्षणम् । व्रीह्यवघातकाले यवानुपोद्यच्छन्ते । तन्दुलप्रक्षालननिनयनान्ते यवान्मन्त्रेणोलूखले निधायावहन्ति । षट्कपालान्युपदधाति गार्हपत्यस्य दक्षिणार्धे । तदुत्तरत आपितृयज्ञं वहेतिमन्त्रे-

चाङ्गारमानीय तदुपरि ध्रुवमसीतिमन्त्रेण भर्जनकपालमुपधाया-धस्तादङ्गारैः परिचिनोति । अस्मिन् काले यवान् उलूखले तूष्णीं परिक्षुद्य भर्जनकपाले घर्मोऽस्येत्यादिमन्त्रेण प्रक्षिपति । शुक्लकृष्णादिभेदेन बहुरूपा धानाः भर्जनकौशलेन कृत्वा ऽवतार्य वितुषीकृत्य द्विधा विभज्य पितृभ्यो बर्हिषद्भ्यो वः पितृभ्यो-ऽग्निष्वात्तेभ्यो व इति क्रमेण भागद्वयमभिमृशति । ततः कृष्णाजिनावधूननादि कृत्वा धानानां द्वितीयं भागमधिवपति । असंवपन्तीतिप्रैषान्तं प्रकृतिवत्करोति । ततः पुरोडाशीयसंवपनादि प्रथनान्तं प्रकृतिवत्कृत्वा पुरोडाशस्योत्तरतो भस्ममिश्रेष्वङ्गारेषु नवं पात्रमधिश्रित्य तस्मिंस्तिरःपवित्रं लौकिकमाज्यमानीय तस्मिंस्तिरःपवित्रं धानानामर्द्धं प्रथमाभिमृष्टमावपति द्वितीये नवे पात्रे तिरःपवित्रमभिवान्यवत्साया दुग्धमानीय तस्मिंस्तिरःपवित्रं सक्तूनोप्यैकयेषुशलाकया दक्षिणाभिमुखो रज्ज्वादिना व्यतिषज्य मन्थति । स्थालीमुखलग्ना विप्रुषोऽन्तः प्रक्षिप्य धानानामुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रित्याज्यं प्राकृतं तदुत्तरतो निरूह्य हवींषि पर्यग्नि कृत्वा पुरोडाशस्य त्वचं ग्राहयति । अन्ये तु धानानां भागद्वयाभिमर्शनान्ते पुरोडाशीयसंवपनादिधानाप्रथमार्धाधिश्रयणान्तं विधाय द्वितीयधानार्धाधिवपनार्थं कृष्णाजिनावधूननादिमन्थाधिश्रयणान्तमिच्छन्ति । गार्हपत्यस्य पश्चादोप्य निनयनम् । अथ पैतृक्या वेदेर्मध्ये दक्षिणाग्नेरिध्मं प्रणीय दक्षिणतो ब्रह्मयजमानौ उपवेश्य मन्त्रेण वेदमादत्ते । अग्नेः पूर्वार्धात् स्तम्बयजुर्हरति-अन्तर्वेदि बर्हिर्निधानम् । देवस्य सवितुः सवइत्यादिमन्त्रेण

यस्यप्रकृतौ उद्धननं तत् खननरूपमत्र तु आलेखनरूपम् । खननाभावादितस्त्रिर्हरेति प्रैषो न । उत्तरपरिग्राहपरिग्रहो ऽपि न । पत्नीसन्नहनाभावात् प्रोक्षणीरासादयेत्यादिप्रैषे पत्नीसन्नहनोद्देशो न । आज्यग्रहणे विशेषः । जुह्वां प्राकृतमन्त्रेण पञ्चकृत्वः षट्कृत्वो वा गृह्णाति । उपभृति प्राकृतमन्त्रेणैव दशकृत्वो द्वादशकृत्वो वा गृह्णाति । ध्रुवायां तु गृह्यमाणस्याज्यस्य उभयार्थत्वाद्देवपदानन्तरं पितृपदस्यापि प्रयोगः । तथा च तादृशप्राकृतमन्त्रेणैव षट्कृत्वः पञ्चकृत्वो वा गृह्णाति । अनुमन्त्रणे यजमानस्यान्तिममन्त्रावृत्तिः । तूष्णीं प्रस्तरग्रहणम् । बर्हिःसन्नहनान्तरणं दक्षिणवेद्यंसे प्राचीनावीतं कृत्वा दक्षिणांसादारभ्य प्रदक्षिणमग्न्यभिमुखैः सन्निकृष्टैः प्रथममुष्टिदर्भैरग्निमभितः परिस्तृणाति । प्रथममुष्टिदर्भमूलानि द्वितीयमुष्टिदर्भाग्रैः प्रच्छादयंस्तथैव परिस्तृणाति । यज्ञोपवीती त्रिः प्रदक्षिणं परीत्य प्रस्तरपाणिर्द्वौ परिधी परिदधाति । नोत्तरम् । युनज्मि त्वा ब्रह्मणा दैव्येन पित्र्येण हव्यायास्मै इत्यादि प्राकृतमन्त्रेण यजमानो ऽग्निं योगेन युनक्ति । ऊर्ध्वे समिधावग्नावाधायाग्नेः पश्चाद्विधृती सादयित्वा तयोरुपरि तूष्णीं प्रस्तरं न्यस्यति । जुह्वादीन्मन्त्रेण प्रकृतिवत्सादयति । हविरुद्वासने विशेषः । स्योनन्तइति मन्त्रेण पात्र्या सकृदुपस्तीर्य पात्रान्तरे धानार्थमुपस्तृणाति । तन्मन्त्रे धानापरपदानां बहुवचनान्तत्वम् । व्रीहिपदस्थने यवपदं च । पात्रान्तरे करम्भार्थमुपस्तृणाति । मन्त्रे तु यथार्थमूहो बोध्यः । धानानामभिघारणे उद्वासने आज्यसंतर्पणे मन्त्रस्य यथार्थमूहः । एवं करम्भ-

स्यापि । अध्वर्युः सपुरोडाशां दारुपात्रीमाज्यस्थालीं चादायाऽ-
यतो गच्छति । तस्याः पश्चादन्यः कश्चिद्धाना गृहीत्वा ग-
च्छति । करम्भमादाय तथैवान्यः । अध्वर्युर्गार्हपत्यान्वाहा-
र्यपचनयोर्मध्येन गत्वाऽग्नेः पश्चाद्दक्षिणतः पुरोडाशमासाद-
यति । तस्योत्तरतो धानास्तस्योत्तरतः करम्भम् । वेद्या द-
क्षिणतः परिश्रयणं निदधाति । वेद्या दक्षिणेंऽसे स्तीर्णे बर्हि-
षि कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशामप्राकृतं स्फ्यं च नि-
दधाति । वेद्या उत्तरत उदकुम्भो । वेद्या दक्षिणतो
ब्रह्मयजमानावुपविशतः । उत्तरतोऽध्वर्युराग्नीध्रश्च । ततो
यजमान आसन्नान्यभिमन्त्रयते । एतस्मिन् काले प्रतिप्र-
स्थाता पाणी संमृश्य प्राकृतवेद्यां पुरोडाशीयपात्राण्यासाद्य
प्रतिपुरुषमेकातिरिक्तानेककपालान् त्र्यम्बकान्पुरोडाशांस्तूष्णीं
निरूप्योप्य निनयनान्तं करोति । अध्वर्युर्होतारमामन्त्र्य अग्नये
देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति प्रेष्यति । प्रणवे
प्रणवे एकैकां समिधमाधायैकां समिधमवशेषयति । अग्निर्दे-
वो देवान्पितृन्यक्षत्सीदेत्येतावानेव प्रवरः । आज्यभागानन्तरं
प्राचीनावीतिन ऋत्विजो व्यपक्रामन्ति । यजमानोऽग्रेणाग्निं
परीत्योत्तरत उपविशति । अध्वर्युस्तस्य बाह्यतोऽग्रेणाग्निं
परीत्य दक्षिणतस्तिष्ठति । तस्य बाह्यतोऽग्रेणाग्निं परीत्य
गत्वा ब्रह्मोपविशति । आग्नीध्रस्तस्य बाह्यतोऽग्रेणाग्निं परीत्य
दक्षिणतो गत्वा तिष्ठति । इदमुक्तमृत्विजामितस्ततो गमनं व्यप-
क्रमणमित्युच्यते ॥

( शेषमग्रे )

## द्वितीयः परिच्छेदः ।

(*Continued from page* 626. Vol. IV.)

तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम् । तत्र स्वार्थन्तूक्तमेव परार्थन्तु न्यायसाध्यम् । न्यायो नामावयवसमुदायः । अवयवाश्च त्रय एव प्रतिज्ञाहेतूदाहरणरूपाः उदाहरणोपनयनिगमनरूपा वा न तु पञ्च । अवयवत्रयेणैव व्याप्तिपक्षधर्म्मतयोरुपदर्शनसम्भवेनाधिकावयवद्वयस्य व्यर्थत्वात् ।

The process of inference is of two kinds, the one when conducted for oneself, the second kind when used to convince other men. The former has been explained above: the latter is laid down in the form of a syllogism. The syllogism is the aggregate of its members and the members are only three in number, viz., the proposition, reason and example or the example, application and conclusion. * The number is not five; for since three alone are sufficient to show the universal concomitance and the possession by the minor term of an attribute (characterised by such concomitance), the other two members are useless.

एवमनुमाने निरूपिते तस्मात् ब्रह्मभिन्ननिखिलमिथ्यात्वसिद्धिः । तथाहि ब्रह्मभिन्नं सर्व्वं मिथ्या ब्रह्मभिन्नत्वात् यदेवं तदेवं यथाशुक्तिरूप्यम् । न च दृष्टान्तासिद्धिः । तस्य साधितत्वात् । न चाप्रयोजकत्वं शुक्तिरूप्यरज्जुसर्पादीनां मि-

Thus the inferential process has been expounded (and) by means of it the unreality of everything other than Brahma is proved. To explain:—everything different from Brahma is unreal, because different from Brahma. Whatever is thus different is thus unreal, as the silver surmised erroneously in nacre is unreal. The example is not unestablished, for the silver (tasya) is proved to be unreal. Nor is the reason adduced not the essential principle (of the falsity), for it is simpler to maintain that the essential principle,

* c.f. Colebrooke's Essay on the Vedánta.

ष्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात् ।

मिथ्यात्वञ्च स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम् । अभिमतपदंवस्तुतः स्वाश्रयाप्रसिद्धा असम्भववारणाय यावत्पदमर्थान्तरवारणाय । तदुक्तम् ।

सर्व्वेषामपि भावानां स्वाश्रयत्वेन सम्मते । प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता इति ॥

as regards the unreality of silver surmised in nacre and the snake imagined in a rope and like examples, consists in these things being other than Brahma.

And the unreality (of a thing) consists in that thing being the counterentity of an absolute negation' which resides in that only which is supposed to be the substrate (of the unreal thing) * The word *abhimata* is added to exclude the impossibility (of the substrate being, in reality, what it is supposed to be, viz, the substrate of the surmised), since, in reality, there is no substrate of the surmised thing. And the word *yávat* is intended to exclude everything else (except the supposed substrate).

Thus it has been declared :—"The unreality of all things consists in their being the counterentities of the absolute negation (which resides) in that which is supposed to be their substrate." †

* c.f. Hall's translation of Nílakantha Sástri's "Rational refutation of the Hindu philosophical systems," note p. 171.

† Chitsukhí: vide "Pandit," vol: IV.; p 484. A translation of the succeeding lines of this work is here attempted. "To explain :—of such things as pieces of cloth, jars and the like, the threads and parts of the jar, &c., are supposed to be the substrates. The unreality of the cloth, &c., consists in these things being the counterentities of their own non existence, which non-existence (or negation) resides in the threads, &c., regarded as the substrates. For the existence of these things cannot be surmised anywhere but in their substrates (to deny this would be to allow the possibility of a jar being an elephant, for example): and if the existence of these things, in their substrates, cannot be surmised, (and the existence of the cloth, *quâ* piece of cloth, is distinct from that of the threads which compose it), then the unreality

यद्वा अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात् पटान्तरवत् इत्यनुमानं मिथ्यात्वेप्रमाणम् ।

Again, this piece of cloth is the counterentity of its own absolute non-existence, which non-existence resides in its threads, since this cloth possesses the nature of a piece of cloth, as is the case with another piece of cloth :—such is the inference which proves the unreality of things. *

तदुक्तम् । अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः । अंशि-

Thus it has been declared. "Things possessing parts are the counterentities of their own absolute negations which reside in their parts, because these things are possessed of parts, just as is the case with anything

of things is the only conclusion (forced upon us), much in the same way that a man must hang his shoes round his neck, if he will not wear them on his feet. And there is no room for the objection that our definition is non-pervasive, in that this unreality will not apply to those (so-called) eternal things, which are themselves without substrates. For it must be admitted that, the absolute apart, everything is connected with a cause as its substrate, because everything is a product, just as in every day life the erroneously surmised silver or the like is acknowledged to have nacre, &c., as its substrate. Nor is our definition ultra-pervasive, although we (also) maintain that the Absolute Existent Reality is substrate-less; for the very doubt is impossible as to the Absolute being a counterentity of a non-existence residing in something (assumed as) the substrate (of the absolute)."

* The definition of unreality is shown, by an inference, to apply to practical objects. The vyáptijñána would be expressed thus :— यत्र यत्र पटत्वं वर्त्तते तत्रतत्र एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम् and this generalisation would be supported by the instances B. C. D. E., etc., of pieces of cloth, being the counterentities of their own absolute non-existences that reside in the threads, which are the substrate of the piece of cloth, A., at present under discussion (etattantunishṭha, &c.). But this A is a piece of cloth : therefore it is the counterentity of its own absolute non-existence which resides in the threads, which are its substrate (etattantu). Hence the definition applies.

स्वादितरांशीव दिगेषैव गुणादिष्विति ।

न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षेण बाधः अधिष्ठानब्रह्मसत्तायास्तत्र विषयतया घटादेः सत्यत्वासिद्धेः ।

न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञानविषयतेति वाच्यं नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात् । न च नीरूपस्य द्रव्यस्य चक्षुरादययोग्यत्वमिति नियमो मन्मते ब्रह्मणो द्रव्यत्वासिद्धेः । गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वमिति तेऽभिमतं नहि निर्गुणस्य ब्रह्मणो गुणाश्रयता नापि समवायिकारणता समवायासिद्धेः । अस्तु वा द्रव्यत्वं

else that has parts: this same method (of argument) is to be applied to quality (and the other categories) " *

Nor must it be argued that the unreality of jars and the like is contradicted by the immediate presentation of the jar as existent; for the reality of jars &c., cannot be proved, since, in the case of such immediate presentation, the existence of Brahma as the substrate is the object cognised.

Nor must you ask how Brahma, the colourless, can be an object of visible perception: for colour and the like, which are colourless, are objects of immediate presentation. † And you must not argue that there is a restrictive rule to the effect that a colourless substance is not an apposite object of visible perception, for in our (vedantic) doctrine the substantiality of Brahma is not taken as proved. A substance consists, as you (Naiyáyikas) hold, in being the substrate of qualities or in being a cause through the relation termed "intimate"; but Brahma, devoid of qualities is not the substrate of qualities, nor is Brahma a cause through "intimate" relation, for "intimate" relation is not established. Or supposing we grant substantiality to Brahma, yet no contradiction will result

* Chitsukhí: vide "Pandit," vol. IV, p. 485.

† Qualities, according to the Nyáya, are themselves destitute of qualities.

ब्रह्मणस्तथापि नीरूपस्य कालस्येव चाक्षुषादिज्ञानविषयत्वे न विरोधः।

यद्वा त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातिभासिकञ्चेति। तत्र पारमार्थिकं सत्त्वं ब्रह्मणः, व्यावहारिकं सत्त्वमाकाशादेः प्रातिभासिकं सत्त्वं शुक्तिरजतादेः।

तथा च घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम्। अस्मिन् पक्षे घटादेर्ब्रह्मणि निषेधो न स्वरूपेण किन्तु पारमार्थिकत्वेनेति न विरोधः॥

अस्मिन् पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिकत्व

in regarding Brahma as (constituting) a part of the object of visible perception just as time, destitute of colour, is.

Or, (to state another view), * existence is of three kinds :—real, practical and apparent. Brahma's existence is real; the existence of ether and the other elements is practical; the existence of the silver erroneously surmised in nacre and of like instances is apparent. †

And so the immediate presentation in the form :—the jar exists—is trustworthy so far as its object is practical existence. Jars, &c., are not denied in (their substrate) Brahma as jars, &c., but as possessing real existence: thus there is no contradiction in our position (regarding unreality).

And in accordance with this position, an additional qualification is to be made in the definition of unreality, regarding the absolute non-existence (—to the effect that this non-existence

* The definition of unreality is now amended; for, as given above, it was based on the doctrine that all existence is only one, the true, the Brahma (Sattaika-váda).

† "Vyávahárika-sattá and páramárthika-sattá ascribed respectively to the world and God (Brahma) . . . . . . cannot be better rendered and with lesser chance of misunderstanding than by 'relative existence' and 'absolute existence.' The illusive existence (prátibhásika-sattá) of silver in the mother-o'-pearl is distinct from the relative existence of the world, inasmuch as the former is destroyed by the senses themselves, whilst the latter can only cease on our conscious existence merging into the Absolute. The Relative is said to be illusive in the sense that it is not the Absolute, but only a manifestation of the Absolute."—Pramadádása Mittra's "Brahma."

मत्यन्ताभावविशेषणं द्रष्टव्यम् । तस्मादुपपन्नं मिथ्यात्वानुमानमिति ।, इति परिभाषायामनुमानपरिच्छेदः । (शेषमग्रे)

must have) as its counterentity an object (thought) under the determining notion of real existence.* Therefore the inference regarding unreality has been established.

A. V.

* "If we use the language of metaphysical truth, we must say that the existence of the soul and its environment, apart from the Self, is only enough to account for all we seem to be and do and suffer; that it is spurious, fictitious, mere semblance: that it may be negatived by spiritual intuition or ecstasy."—Gough's "Philosophy of the Upanishads" p. 197.

## पञ्चदशी ।

### अथ पञ्चभूतविवेकः ।

*(Continued from page 618. Vol. IV.)*

सदद्वैतं श्रुतं यतत्पञ्चभूतविवेकतः ।
बोद्धुं शक्यं ततो भूतपञ्चकं प्रविविच्यते ॥ १ ॥
शब्दस्पर्शौ रूपरसौ गन्धभूतगुणा इमे ।
एकद्वित्रिचतुःपञ्चगुणा व्योमादिषु क्रमात् ॥ २ ।
प्रतिध्वनिर्वियच्छब्दो वायौ बीसीति शब्दनं ।
अनुष्णाशीतसंस्पर्शो वन्हौ भुगुभुगुध्वनिः ॥ ३ ॥

1. That which is revealed as the existent, one without a second, can be known through an examination of the five gross elements: therefore the five elements are now examined.

2. Sound, touch, colour, taste and smell are the qualities of the elements. Beginning with ether, in order, one quality (viz, sound resides in it); two qualities (sound and touch in air); three (sound, touch and colour reside in fire); four (sound, touch, colour and taste in water); five qualities (sound, touch, colour, taste and smell reside in earth).

3. Echo is the sound belonging to ether. To air (wind) belong the "hissing" sound and the touch which is neither hot nor cold. In fire there are a "puffing" sound, hot touch and colour of light.

उष्णः स्पर्शः प्रभारूपं जले बुलबुलध्वनिः ।
शीतः स्पर्शः शुक्लरूपं रसो माधुर्यमीरितं ॥ ४ ॥
भूमौ कडकडाशब्दः काठिन्यं स्पर्श इष्यते ।
नीलादिकं चित्ररूपं मधुराम्लादिको रसः ॥ ५ ॥
सुरभीतरगन्धौ द्वौ गुणाः सम्यग्विवेचिताः ।
श्रोत्रं त्वक्चक्षुषी जिह्वाघ्राणं चेन्द्रियपञ्चकं ॥ ६ ॥
कर्णादिगोलकस्थं तच्छब्दादिग्राहकं क्रमात् ।
सौक्ष्म्यात्कार्य्यानुमेयं तत् प्रायो धावेद्बहिर्मुखम् ॥ ७ ॥
कदाचित्पिहिते कर्णे श्रूयते शब्द आन्तरः ।
प्राणवायौ जाठराग्नौ जलपाने ऽन्नभक्षणे ॥ ८ ॥
व्यज्यन्ते ह्यान्तरस्पर्शा मीलने चान्तरं तमः ।
उद्गारे रसगन्धौ चेत्यक्षाणामान्तरग्रहः ॥ ९ ॥

4. In water reside a "bubbling" sound and cold touch, its colour is white and its taste is declared to be sweet.

5. In earth there is a "cracking" sound; a hard touch; its colours are various, blue &c.; its taste is sweet, sour &c.; its smell is pleasant or the reverse.

6. Thus the several qualities have been duly set forth. The five organs of sense are those of hearing, touch, sight, taste and smell.

7. This pentad of sense-organs is situated in the region of the (outward) ear, (skin) &c., taken in order, and is cognisant of sound, (touch &c.). Since the pentad is not itself perceptible, on account of its subtility, its existence is inferred from the effects (i. e. from sound &c, which are perceived). The pentad is for the most part concerned with external objects.

8. 9. At times when the ear is closed, an internal sound is heard in the vital air and internal fire. In drinking water and eating food internal touch is manifested: when the eye is closed the internal darkness is seen: in belching internal taste and smell are peceived:—this is internal perception through the sense-organs.

पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः ।
कृषिवाणिज्यसेवाद्याः पञ्चस्वन्तर्भवन्ति हि ॥ १० ॥
वाक्पाणिपादपायूपस्थैरचैस्तत् क्रियाजनिः ।
मुखादिगोलकेष्वास्ते तत्कर्मेन्द्रियपञ्चकम् ॥ ११ ॥
मनो दशेन्द्रियाध्यक्षं हृत्पद्मगोलके स्थितं ।
तच्चान्तःकरणं बाह्येष्वस्वातन्त्र्याद्विनेन्द्रियैः ॥ १२ ॥
अक्षेष्वर्थार्पितेष्वेतद्गुणदोषविचारकम् ।
सत्वं रजस्तमश्चास्य गुणा विक्रियते हि तैः ॥ १३ ॥
वैराग्यं क्षान्तिरौदार्यमित्याद्याः सत्वसम्भवाः ।
कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः ॥ १४ ॥
आलस्यभ्रान्तितन्द्राद्या विकारास्तमसोत्थिताः ।
सात्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः ॥ १५ ॥

10. The five kinds of actions are speaking, grasping (of the hand), motion (by the feet), excretion and sexual intercourse. Ploughing, trading, the duties of servants &c., are included in the five.

11. These actions are effected by organs, viz., the organ of speech, the hand, the foot, the anus and the generative organ. The five organs of action reside in the region of the mouth &c.

12. The mind presides over the (preceding) ten organs and is placed in the lotus of the heart. And it (is called) the internal organ, for it is not free to be exercised on external objects without the aid of the sense-organs.

13. When the sense-organs are exercised upon external objects, the mind takes note of their attributes, good and bad. The qualities—goodness, passion and darkness belong to mind, for it is modified in forms of these qualities.

14. Freedom from passion, forbearance, high-mindedness &c., spring from the goodness quality. From the passion quality come desire, anger, greed, energy and the rest.

15. Idleness, error, lassitude and the other modifications (of mind) spring from the quality of darkness. Merit results from the modifications of the quality of goodness; and demerit from those of the quality of passion.

तामसैर्नोभयं किन्तु वृथायुःक्षपणं भवेत् ।
अत्राहंप्रत्ययीकर्तेत्येवं लोकव्यवस्थितिः ॥ १६ ॥

स्पष्टशब्दादियुक्तेषु भौतिकत्वमतिस्फुटम् ।
अक्षादावपि तच्छास्त्रयुक्तिभ्यामवधार्यताम् ॥ १७ ॥

एकादशेन्द्रियैर्युक्त्याशास्त्रेणाप्यवगम्यते ।
यावत्किञ्चिद्भवेद्देतदिदंशब्दोदितं जगत् ॥ १८ ॥

इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ।
सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः ॥ १९ ॥

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥ २० ॥

16. From the modifications, containing the darkness quality, proceeds neither morit nor demerit but a vain passing of life. The assurance of every day life is expressed in the form :—"I, conscious of self, am the agent of (the internal organ, actions and the rest, atra)."

17. It is very clear that objects, which possess the evident qualities of sound (touch &c.), are products of the elements. It can be proved by revelation and argument that the sense-organs also are products of the elements.

18. Whatever may be apprehended through the eleven organs, by argument and revelation, *i. e.* the world of phenomena, is expressed by the word "this" (idam).

19. Previous to creation, all this was the existent (sat), one only without a second: name and form were not:—this is the declaration of the son of Aruṇa.

20. To a tree belong inherent variety, constituted by (its parts), the leaves, flower, fruit &c.; and specific difference, distinguishing it from any other tree; and class-difference, excluding it from unlike classes, e. g. stones &c.

---

18—19. Chándogya Upanishad VI. 2.

इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्तत्सदेवासीदित्यासीच्छब्देन सम्बध्यते । Śaṅkara, *in loco*.

तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते।
ऐक्यावधारणं द्वैतप्रतिषेधैस्त्रिभिः क्रमात्॥ २१॥
सतो नावयवाः शङ्क्यास्तदंशस्यानिरूपणात्।
नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात्॥ २२॥
नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा।
न तयोरुद्भवस्तस्मान्निरंशं सद्यथा वियत्॥ २३॥
सदन्तरं सजातीयं न वैलक्षण्यवर्जनात्।
नामरूपोपाधिभेदं विना नैव सतो भिदा॥ २४॥
विजातीयमसत्तत्तु न खल्वस्तीति गम्यते।
नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः॥ २५॥
एकमेवाद्वितीयं सत्सिद्धमत्र तु केचन।

21. This three-fold differentiation, recognised above (tathá práptam), is denied of the existent reality, (whose) unity is rendered certain by the three words "one only, secondless", which exclude duality.

22. The doubt that the existent reality may have parts is not to be entertained, for its parts are inconceivable. Name and form are not its parts, for they did not exist in the beginning (i. e. prior to creation).

23. Since creation consists indeed in the production of name and form, these were not produced prior to creation; therefore the existent reality is without parts, like ether.

24. There is no second existent reality belonging to the same species (as the first), because distinctive attributes are excluded (from the one existent reality). There can indeed be no differentiation of the existent reality save through the difference of names and forms as limiting adjuncts.

25. The non-existent is that which is generically different (from the existent); but the non-existent is understood to be "that which certainly is not": therefore the non-existent cannot be a counterentity at all. Much less can the existent reality be thought as distinguisted from that which is generically different from it.

26. Thus the existent reality, one without a second, is

विव्हला असदेवेदं पुरासीदित्यवर्णयन् ॥ २६ ॥
मग्नस्याब्धौ यथाक्षाणि विव्हलानि तथास्य धीः।
अखण्डैकरसं श्रुत्वा निष्प्रचारा बिभेत्यतः ॥ २७ ॥
गौडाचार्य्यानिर्विकल्पे समाधावन्ययोगिनाम्।
साकारब्रह्मनिष्ठानामत्यन्तं भयमूचिरे ॥ २८ ॥
अस्पर्शयोगो नामैषदुर्दर्शः सर्वयोगिभिः।
योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ २९ ॥

proved. But some men with confused minds have explained the revealed text thus:—in the beginning, this was non-existent.

27. As the senses of a man sinking in a flood are confused, so the mind of a man, who has heard that the existent reality is impartite and one in its essence, being unaccustomed thus to regard it, becomes fearful of this existent reality.

28. Gaudapáda Áchárya declared the fear of nirvikalpa-samádhi to be great in those who practise other forms of Yoga and are intent upon the absolute reality as manifested in some particular form (e. g. Vishṇu &c.).

29. "This contemplative union with the absolute termed asparśa, is with difficulty obtained by all who are destitute of a knowledge of Vedánta. For they are afraid of this (form of Yoga) in which there is no cause for fear."

29. Máṇḍúkya: Gauḍapáda's Káriká III, 39.

Asparśayoga is apparently another name for nirvikalpasamádhi or ecstatic union with the Absolute, in which the dualism of subject and object is lost. Thus Śaṅkara, *in loco.*,—अस्पर्शयोगो नामायं सर्व्वसम्बन्धाख्यस्पर्शवर्ज्जितत्वादस्पर्शयोगो नाम वै स्मर्य्यते प्रसिद्ध उपनिषत्सु। And again on Káriká IV, 2;—स्पर्शनं स्पर्शसम्बन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि सो ऽस्पर्शयोगो ब्रह्मस्वभाव एव। ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः। Those, who are ignorant of Vedantic truth, think this pure union with the Absolute consists in self-annihilation and consequently fear it:—सर्व्वयोगिभिर्वेदान्तविज्ञानरहितैः। योगिनो ऽस्मात्सर्व्वभयवर्ज्जितादप्यात्मनाशरूपमिमं योगं मन्यमाना भयं कुर्व्वन्ति ॥ Śaṅkara.

भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून् ।

आहुर्माध्यमिकान् भ्रान्तानचिन्त्येस्मिन्सदात्मनि ॥ ३० ॥

अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तपस्विनः ।

आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३१ ॥

शून्यमासीदिति ब्रूषे सद्योगं वा सदात्मताम् ।

शून्यस्य नतु तद्युक्तमुभयं व्याहतत्वतः ॥ ३२ ॥

न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः ।

सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथं वद ॥ ३३ ॥

वियदादेर्नामरूपे मायया सुविकल्पिते ।

शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम् ॥ ३४ ॥

सतोपि नामरूपे द्वे कल्पिते चेत्तदा वद ।

30. His reverence Śaṅkara Áchárya termed these men Mádhyamikas, who were skilled in dry arguments and erred regarding the unthinkable, existent Self.

31. These Buddhists, ascetics, dishonouring revelation in their folly and looking only to inference, declare that there is no absolute Self.

32. (As a nihilist) you say "there was a blank" (previous to creation); but you must maintain that this blank was either connected with entity (as genus or species), or that it is entity itself. But neither alternative will conform to your blank, for both are destructive of it.

33. The sun is not related to darkness nor does it consist of darkness: explain then how your opinion—"a blank existed"—can stand; for entity and a blank are mutually contradictory.

34. The nature of ether &c., is falsely ascribed (to the existent reality, sat) through Máyá, the inexplicable power. Similarly, if you say that the nature of (your) blank is falsely imputed (to the existent reality), (we are at one) and may you live long!

35. If you reply thatthe nature of the existent reality itself is falsely surmised, then declare in what substrate (kutra) this nature

कुत्रेति निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते ॥ ३५ ॥
सदासीदिति शब्दार्थभेदे द्वैगुण्यमापतेत् ।
अभेदे पुनरुक्तिः स्यान्मैवं लोके तथेक्षणात् ॥ ३६ ॥
कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम् ।
इत्यादिवासनाविष्टं प्रत्यासीत्सदितीरणम् ॥ ३७ ॥
कालाभावे पुरेत्युक्तिः कालवासनया युतम् ।
शिष्यं प्रत्येवतेनाच द्वितीयं नहि शङ्क्यते ॥ ३८ ॥
चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ।
अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥ ३९ ॥
तदा स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ॥ ४० ॥
ननु भूम्यादिकं माभूत्परमाण्वन्तनाशतः ।

resides. For no case of erroneous surmisal has ever been known without some real substrate (supporting the error).

36. If in the revealed sentence, "the existent was," a difference between the two words, "existent" and "was," be maintained, dualism must result (in spite of your Vedantic theory): and if the words be identical in meaning, the fault of tautology succeeds Not so: we reply, as may be seen from the usage of the world.

37. The utterance, "the existent was," holds good for men habituated to the ideas conveyed in such phrases as;—the man does what he ought to do; he speaks a speech, bears a burden &c.

38. The word purá (*formerly*, in the sacred text), although no time is implied, is used merely to instruct the pupil, who is prepossessed of the idea of time. Therefore a second existent reality need not be feared, in this case, (as resulting from the use of the word *formerly*).

39. Dualistic doctrine admits of a question being raised or refuted. Monism admits of neither question nor reply.

40. "Then unmoving, profound, neither light nor darkness, pervading, not to be described in words, not apprehended by the senses—a something, positively existent, remains."

41. 42. If you allow with us that earth &c., are not entities, since the infinitesimal atoms composing them are finally destroyed;

कथं ते वियतोऽसत्त्वं बुद्धिमारोहतीति चेत् ॥ ४१ ॥

अत्यन्तं निर्जगद्व्योम यथा ते बुद्धिमाश्रितम् ।

तथैव सन्निराकारं कुतो नाश्रयते मतिम् ॥ ४२ ॥

निर्जगद्व्योम दृष्टं चेत्प्रकाशतमसी विना ।

क्व दृष्टं किं च ते पक्षे न प्रत्यक्षं वियत्खलु ॥ ४३ ॥

सद्वस्तु शुद्धं त्वस्माभिर्निश्चितैरनुभूयते ।

तूष्णींस्थितौ न शून्यत्वं शून्यबुद्धेश्च वर्जनात् ॥ ४४ ॥

सद्बुद्धिरपि चेन्नास्ति मास्त्वस्य स्वप्रभत्वतः ।

निर्मनस्कत्वसाक्षित्वात्सन्मात्रं सुगमं नृणाम् ॥ ४५ ॥

मनोजृम्भणराहित्ये यथा साक्षी निराकुलः ।

मायाजृम्भणतः पूर्वं सत्तथैव निराकुलम् ॥ ४६ ॥

but, by way of objection, ask us to explain how the idea that ether is not an entity can enter our minds, we reply (by asking you to explain) why the idea of entity as distinct from that of ether does not possess your mind, in the same way that the idea of an infinite ether, distinct from the material world, has already taken possession?

43. If you reply that ether is seen as distinct (from the other elements), we ask:—where is it seen unaccompanied by light or darkness? Moreover, the ether intended by your proposition is certainly no object of sense-perception.

44. The absolute existent Reality is certainly present to our consciousness during silent meditation; but a void is not thus present, for there can be no consciousness of a blank.

45. If you object that you are not conscious of this existent Reality, we reply, well! let us suppose you are not conscious of it, (but this does not argue against the existent Reality), for it is self-luminous. This merely positive entity is readily apprehended by men, for it is the abiding element (witness) in a state (e. g. in samádhi), when the accidental elements of consciousness are lost (nirmanaskatva).

46. Just as the witness abides unmoved in that state which is free from the expansions of the (phenomenal) mind, so the existent Reality abode undisturbed, previous to the unfoldings of that inexplicable power, Máyá. A. V.

*( to be continued )*

